# विद्यावैजयन्तीनिबन्धमाला

प्रथमभाग

दार्शनिकनिबन्धमाला

संस्कृत-हिन्दी

लेखक तथा सम्पादक
केदारनाथ ओझा

प्रकाशक—केदारनाथ ओझा
मुमुक्षुभवन, काशी

माघ विक्रम २०२४ ] [ फरवरी १९७८

## आवश्यक सूचना

उत्तर प्रदेश संस्कृत अकादमी, लखनऊ ने पत्राङ्क २०४७ सं. अ. लखनऊ, दिनांक २८ २.७८ के पत्र से सूचित किया है कि इस पुस्तक के प्रकाशन हेतु विशेष सहायता सात हजार ७०००।- स्वीकृत हुई है, इस सहायता के लिए मैं उसका आभारी हूँ, तथा पाठक भी आभारी हों क्योंकि सहायता द्रव्य मिलने पर इसका मूल्य ३८) अड़तीस रुपया होगा, खरीदने वाले ३१ जुलाई तक अपने खरीद की रसीदों को सुरक्षित रखें।

प्रकाशक

# विद्यावैजयन्तीनिबन्धमाला

## प्रथमभाग

दार्शनिकनिबन्धमाला

संस्कृत-हिन्दी

लेखक तथा सम्पादक

केदारनाथ ओझा



प्रकाशक—केदारनाथ ओझा

मुमुक्षुभवन, काशी

माघ विक्रम २०३४ ] [ फरवरी १९७८

# VIDYĀVAIJAYANTĪ NIBANDHAMĀLĀ

## Part I

## DĀRŚANIKA NIBANDHAMĀLĀ

OR

*Essays on Indian Philosophy*

**[ A collection of research and critical articles ]**

*( In Sanskrit & Hindi Languages )*


KEDARNATH OJHA

*Emeritus Professor*

*Sampurnannda Sanskrit Vishvavidyalaya*

*Varanasi*





MUMUKSHU BHAVANA
ASSI
VARANASI-221005 ( India )

February, 1978

# PREFACE

The present work, Vidyā Vaijayantī Nibandhamālā Vol. I, is a collection of various articles written by Pandit Kedarnath Ojha, Emeritus Professor, Sampurnananda Sanskrit University, Varanasi, on various topics and problems of Indian Philosophy. Most of the articles are originally written in Sanskrit and their Hindi rendition is also provided here. Shri Ojha is one of the foremost traditional oriental scholars, who following the dictum and style of ancient Indian thought, continue to add something in the field critically examining the various positions propounded by ancient thinkers and expose them in a lucid style explaining subtle points in detail in the modern context. The articles collected here reflect the banner of knowledge and so it has been assigned the name 'Vidyā Vaijayantī'.

In the opening article Atomism ( परमाणुवाद ) has been elucidated in detail exploring the various thoughts established according to the tenets of Nyāya Vaiśeṣika School and its critics.

The article on word reality ( शब्दतत्त्वम ) discusses whether it is a matter or quality; does it differ from the seven categories established by Nyāya-Vaiśeṣika thinkers and how it is connected with the knowledge; whether it is eternal or non-eternal. These problems are explained in detail with all the view-points proposed by different Indian schools of thought, taking into consideration the use of modern scientific instruments like radio and gramophone too.

For establishing unanimity ( एकवाक्यता ) in Indian thought explaining its mutual sequence three steps ( भूमिका ) have been enumerated under which all Indian Philosophical Schools following Vedic traditions come. The sequence is of Nyāya-Vaiśeṣika and Pūrva Mīmāṃsā, Sāṃkhya-yoga and Vedānta. Thus according to this view Nyāya-Vaiśeṣika is the first step of the thought development depicting the soul independent of Indriyas as well as body and as a permanent consciousness. The learned author in one of the articles proves this theory to be futile by furnishing various arguments and determines an independent place to Nyāya in the stream of Indian thought. While doing so he takes into consideration the viewpoints putforth by other systems and accords an unique position to Nyāya in this context.

Shri Ojha further discusses in detail the problems of establishing unanimity in different schools of Indian Philosophy in a separate article and substantiates that this tendency is not a new one. He traces its history and brings forward the view propounded by Ācārya Udayana in his well known treatise Ātmatattva-viveka in this concern. He further elucidates that it is one of the oldest illustration of the problem where Vedānta has been demonstrated as a part ( अङ्ग ) of Nyāya. The views expressed by Shri Vijñana Bhikṣu and Gauda Brahmānanda on the subject have been examined in detail in the historical prospect and in the end the author draws the conclusion that all the Indian schools of thought following the Vedic dictum are of independent significance and no one of them is the part of the other. Thus according to the author the very idea of establishing unanimity is unavailing.

One of the articles expounds the परिष्कार ( ornamental ) style of exposition prevalent in schools of Indian thought and explains it with the intention how it can be grasped by an enquirer not well versed in it. It has been introduced here in a most lucid and clear mode in reference to an example of घटसामान्याभाव.

The author has dealt in detail in some of the articles the question of false attribution ( अध्यास ) and subjective idealism ( दृष्टिसृष्टिवाद ) keeping different Indian schools in mind as well as western thinkers like George Berkeley and Gottfried Wilhelm Leibnitz etc. He also expounds the Cārvāka school adding new informations and elaborates the views propounded by Mahāmahopādhyāya Pandita Rāmāvatāra Śarma in his original treatise परमार्थदर्शन with all its niceties. Subjects like birth and manifestation of God ( जन्मावतार ) has been explained fully providing philosophical investigation in the creation of the body, the causes in it and the attribution of the divine faculties of omnipotence. He has proposed that Indian schools of thought help the development in human society and they create no hindrance to it as viewed by some writers. In another article empiricism has been explained in the context of western thinkers like George Berkeley, David Hume, John Locke and Herbert Spencer etc. Here the author opines that we find full glimpse of the thoughts propounded by western thinkers in our own Indian schools. He is so confident that he advances a challenge whether any one is to refute him in this respect.

The doctrine of the validity of knowledge ( प्रामाण्यवाद ); one of the most important subjects of Indian thought, is explained and elucidated here in detail providing views on it from different Indian systems of thought and the article

is a fine example of illustration of difficult and knotty problems of minutest type.

In the end, three articles by other scholars are also included as the author has provided a critical examination of them.

Thus, this collection through its various articles illuminates the magnificence of Indian thought in the history of ideas of highest order. Pandit Kedarnath Ojha, through his deep knowledge of minutest details of the oriental traditional learning, provides a clear picture of the subjects which are obscure even to the special readers. I am sure, such a work of immense value will be of much help to the enquirers engaged in research in different subjects pertaining to Indian thought specially with a comparative tinge as it has come from an oriental Pandit who has devoted his whole life in understanding the traditional Indian learning propounded by our ancient thinkers. I hope that scholars engaged in academic investigations will derive enormous benefits from these articles, which, depicting the various problems reflect the development of Indian thought occurred in past several centuries.

**LAKSHMI NARAYAN TIWARI**
**LIBRARIAN**

Sarasvati Bhavana Library
Sampurnananda Sanskrit Vishvavidyalaya
Varanasi.
28th February.

---

# श्रीविद्यावैजयन्ती–निबन्धमाला–सम्बन्धे किञ्चित्

श्रीविद्यावैजयन्ती विविधविषयभृद्वादमाला पिनद्धा।
श्रीमत्केदारनाथैर्बुधवरमहितैस्तैर्महापण्डितैर्या ॥
ओभोपाह्वैं विचित्रा नव-रसरुचिरा ज्ञानविज्ञानधात्री।
तां वीक्ष्याधीत्य मुग्धश्चकित-चकितधीस्तत्र किंचिद् ब्रुवेऽहम् ॥

अहो ! पाण्डित्यम् अहो ! सर्वदर्शनान्तारहस्य वेदित्वम् अहो ! स्पष्ट-भाषिता अहो ! सुरगवी-गवेषानुरागित्वम् अहो ! संस्कृतभाषान्ते-वासिगण-प्रियता महापण्डितानामेषाम् यदिमे साम्प्रतमपि घोरे कलौ, नास्तिक-बहुले काले, पशुप्रकृतिभाजि मनुज-समाजे यत्र शुचिता सततं शोचति। सदाचारश्चिरं रोदिति। सरलता शीर्णतां याता। संयमो यमलोकान्तरितः। परलोकचिन्ता चूर्णिता। भगवद्भक्तिरुक्तिमात्रावशिष्टा। धर्मः शर्महेतुः इत्युक्तिर्नासिकां संकोचयति लोकलोभकानां लोकनायकानाम्। त्रिभाषा-सूत्र-सन्निवेशेन सप्तसमुद्रीपाराश्रितालवैज्ञानिकलिपिनिबद्धामिङ्लिशभाषा-मिह भारते म्लेच्छभाषेति नाम्ना व्यवहृतां 'नापभाषित वै' 'नापम्लेच्छितवै' इति श्रुतिवचसा निषिद्धामपि प्रधानीकृत्य सुरगवीं भारतप्राणमयीं भारतादेव बहिष्कर्तुं मुद्यतेषु च शासकनामधारिषु नेतृवृन्देषु जाग्रत्सु एव तांस्तिरस्कृत्य महानुभावा इमे प्रत्यक्ष-महापण्डिता महात्मानः तस्यामपि सुरगव्यां भारत-संस्कृतिसंरक्षिकायां सत्ययुगप्रवर्तिकायां नास्तिक्य-निर्वासिकायां पशूनपि पशुपतिं कर्तुं समर्थायां शुचित्वैविध्य-वर्द्धिकायां सदाचार-समर्द्धिकायां सर-लताशिक्षिकायां संयम-समुपासिकायां धर्मः शर्महेतुः' इति प्रतिपदमुच्चै-र्घोषयन्त्याणायां भगवद्भक्तिभरितायामैहलौकिक-पारलौकिकोभयलोक-कल्याणकारिकायां निबद्धां स्वीयामद्भुतां विचित्रां प्राच्य-पाश्चात्यदर्शन-रहस्यमयीं श्रीविद्या-वैजयन्ती-निबन्धमालां विविधवादमयीं रोचक-मृदुल-ललित-मञ्जुल-मसृण-सुरभाषा-पद-विन्यास-रसिकां विरचय्य संस्कृत-विदुषां 'पुरस्तात्' समुपहरन्ति। इति सहसा मे मुखान्निर्गच्छति श्रीहर्षस्य महाकवेः पद्यम –

'वाग्जन्म-वैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत्' इति (नै० ८।३२)।

इह निबन्ध-मालायां सर्वप्रथममिमे न्यायाचार्यमहोदयाः परमाणु-वादमेवाश्रित्य प्रवृत्ताः सर्वथा परमाणुवादं परिचस्करुः। आरम्भत-स्त्रयष्षष्टितमपृष्ठावधि, ततश्च तस्यैव प्रत्यक्षतः प्रत्यङ्गं विवेचितस्य परमाणुवादस्य स्वोपज्ञराष्ट्रभाषायामनुवादमपि कृतवन्तः सन्ति। यतः संस्कृत-विमुखा अपि वराकाः केवलं हिन्दीभाषाज्ञा मानवा जानीयुः कीदृश-ममृतं वर्षति पीयूषवर्षोऽयं कविरिति।

ततः शब्दतत्त्वविवेकः। (मयात्र विशेषविवरणं न क्रियते। ग्रन्थस्य रचयित्रैव विशेषशीर्षकैः सर्वेऽप्यवान्तरभेदा विवेचिता विवरिताश्च सन्तीति पौनरुक्त्यं स्यात् सर्वस्यापि तत्त्वविवेकस्य स्वोपज्ञा राष्ट्रभाषा-प्यस्त्येव मन्ये ग्रन्थावसाने सर्वविषयाणां विस्तीर्णा सूचिकाऽपि दत्तैव स्यादिति)।

महाविदुषोऽस्य न्यायाचार्यस्य परमाणुवाद-निरूपणानन्तरं शब्द-तत्त्वनिरूपणमपि—

'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
प्रवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥' इति।

हरिकारिकाप्रेम्णा महावैयाकरणत्वं व्यञ्जयति। इहापि सप्रत्यङ्गशब्दतत्त्वं विवेचितं विद्यते। बहुलाभप्रदेयं श्रीविद्या-वैजयन्ती-न्याय-व्याकरणोभयान्तेवासिनाम्।

सर्वेषामपि निबन्धानामवसाने राष्ट्रभाषायां हिन्दीभाषायामपि स्वोपज्ञोऽनुवादो विषये चतुश्चंद्रनियोजनमिति 'लोकाभाणकमेवेङ्गयति'। किं बहुना महापण्डितस्यास्य विषय-निरूपणं तेषां क्रमोपन्यासः। तेषामेव स्वोपज्ञराष्ट्रभाषानुवादः। इत्यादिचिन्तया—

'विद्यावतां सकलमेव गिरां दवीयः'

इत्येव सूचयति। पश्यन्तु—इतोऽग्रे—(१९१) एकाङ्कपृष्ठे—आत्मनः शब्दात् साक्षात्कारः, आनन्दतायाः पारिभाषिकता च'

इति निबन्धाधस्तनम्पद्यम्—

'न्यायोऽयं वैदिकक्ष्मापतिरतिविपुलोऽवैदिकारण्य-भञ्जी।

(अवैदिकारण्येतिपाठान्तरम्)

सञ्जीव्यादत्र सर्व-श्रुति-कुल कुशलान्यन्यशास्त्राणि शासत्।
सामन्ताः ब्रह्म-विद्यादय इह भुवने सँल्लसन्तां स्वराज्ये।
सम्राट् तर्कायुधोऽयं विशतु मतिर्तति येन सेनापतिः स्यात्॥'

एतन्निबन्धान्ते चोक्तम् यत्तदपि पश्यन्तु भवन्तस्तत्रभवन्तः—

'गुरो त्वदीये मृदुले सरोज-पादेऽर्पये स्वं कठिनं वचोऽहम्।
छात्रस्य सर्वस्वमिदं विचार्यं श्रद्धार्पितं चारु विचिन्तनीयम्॥

अत्र किं कठिनं दृश्यते। सर्वन्तु सरलतरमेवास्ति। महाविदुषाऽनेन केवलं स्वाहङ्कारपरिहारार्थं गुरुपादपद्मे नम्रतापुष्पार्पणधिया सौजन्योक्तिरियम् प्रदर्शितेति शिवम्।

इतोऽग्रे न्यायाचार्यस्य महाविदुषो न्याय-पक्षपातित्वं प्रशस्यमेव। तथाहि—

'न्यायशास्त्रं स्वतन्त्रं दर्शनम्'

इति शीर्षकं दत्त्वा वदति—

'कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्।
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति॥
तं देवं निरवग्रह स्फुरदभिध्यानानुभावं भवं।
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि॥'

( · उदयनाचार्यस्य )

न्यायदर्शनेऽपि 'अद्भुतमाया + इन्द्र जाल–प्रभृतिपदानां प्रयोगो भवति। न केवलं वेदान्तदर्शन एवेति अवगच्छन्तु। तदर्थमेवेदं मङ्गलत्वेन पुरोऽवकरयम् इत्यभिधाय मध्ये —

वेदान्त-दर्शनमिदं भवति प्रधानं
सूक्ष्मं समर्थयति सद्विषयं दुरूहम्।
न्यायं तु तस्य सरणिं कियतीं प्रदर्श्य (काश्य) इति पाठान्तरम्
कामं तदङ्गमिति, यत् प्रलपन्ति केचित्॥ १॥

ते भारतीय-नय-मार्ग-विरोध-बोधाः
शोधाय मे भवतु वाग् वचसां तु तेषाम्।
वाच्यानि वैदिक-मतानि सुदर्शनानि
पूर्णानि तानि सकलानि सुदृष्टिदानि॥ २॥

शिष्य-प्रशिष्य-रचितोऽखिल-सम्प्रदायः
प्रायः प्रचार-निरतः सुसमैधयत् तत्।
आन्वीक्षिकी तु परिपूर्ण-विवेक-पेयं
मोक्षामृतं दिशति सूक्ष्म-समीक्षितेयम् ॥ ३ ॥

अत एवास्या एषा प्रसिद्धिः—

मिलति नयनमक्षपाद-पाद-
प्रणिपतनेन ललाटसीम्नि यस्य।
विधिरपि पुरुषस्य तस्य भाले
लिखितुमदृष्ट-लिपिं कुतः क्षमेत ॥ इति।

पद्यमयं स्ववक्तव्यं न्यायाभ्यर्हितत्वसूचकम् स्फुटमित्यभिधाय साक्षि-भास्यत्वादिविषयेऽपीमे वदन्तीदम् यत्—

'एवं साक्षि-भास्यत्वादिकं नापूर्वम् अप्यावश्यकीयं च। आत्मानम् आत्मनो योग्यविभुविशेषगुणाँश्च विहायान्ये बाह्याः विषयाः। बाह्यविषय-प्रत्यक्षे च न मनः स्वतन्त्रं कारणमपि तु बहिरिन्द्रियाण्यपेक्ष्यैव बाह्यै विषयै-रिन्द्रियाणि युज्यन्ते। इन्द्रियैश्च मन इति परस्परासम्बन्धः। आन्तर-विषयैस्तु साक्षादेव मनसः सम्बन्धात् साक्षादेव भास्यम् न बहिरिन्द्रियाण्य-पेक्ष्य बहिरिन्द्रियाजन्यलौकिक-प्रत्यक्ष-विषयत्वमेव साक्षिभास्यत्वमस्माकम्। वेदान्तिनस्तु मनस इन्द्रियत्वं न मन्यन्तेऽतः प्रमाणाऽनधीनं साक्षिभास्यं प्रत्यक्षम् इति ब्रुवते अस्माकन्तु मनसोऽपीन्द्रियत्वेन प्रमाणत्वमिति साक्षि-भास्यमपि-प्रमाण-भास्यमेवेति सर्वं समञ्जसम्, अवसाने च इमे तदेव स्व-सौजन्यं दर्शयन्तो ब्रुवन्ति—

यत् सत्यमन्त्रगुरुपाद-रजोविकीर्णं
कीर्णं मदीयदयनीयधियोऽथ दोषात्।
दोषज्ञ हंस चिनुया विरजस्तु पेयं
हेयं विहाय पिब तत् सुकरार्पितं ते ॥' इति।

अत्रभवन्त एव वदन्तु किमत्रेयमपेयमस्ति? सर्वमेव तु पियूषायितं सतृष्णं चेयं पेयञ्च विद्यत इति वाचो वैदग्धीं पश्यन्तु प्रतिपदं ध्वनिध्वन-कस्यास्य महाकवेः।

अस्यापि विस्तीर्णः स्वोपज्ञोऽनुवादोऽस्ति राष्ट्रभाषायाम् संस्कृत-भाषाविमुखानां वराकाणां दयापात्राणां कृते। इतोऽग्रेऽपि

'न्यायात्मनस्तुलनात्मकं किमपि अध्ययनम्'।

इति शीर्षकेणापि न्यायात्मनो मुक्तौ सुखित्वमेव नहि अपि तु सच्चिदानन्दत्वं संसाधयन्त इमे 'नैयायिका मुक्तौ जडात्मानः' इत्युपहासमन्यकृतमुपहसन्तो ब्रुवन्ति—श्रीमन्तं सारस्वत-सार्वभौमं पण्डितराजं भगवादाचार्यं गुर्जरदेशगम्—

'अन्यायबहुले काले न्यायात्मा त्वां प्रसादयेत्।
आत्मनैवार्चयन् स्वामिन् प्रसीदाम्यप्यहं सुखी'॥

इदमपि प्रतिपदं ध्वनिकाव्यच्छटा बिभर्ति। इति शिवम् इतोऽग्रे।

## दर्शनानां समभ्युदयः

इति शीर्षकेऽपि—सप्तम-भूमिकायां न्यायमतस्योपसंहारम् प्रदर्श्य समेषां वैदिकदर्शनानां प्राधान्यम् इत्युपशीर्षकेऽपि न्यायशास्त्रस्य स्वातन्त्र्यं नैवाङ्गता किन्तु अङ्गित्वमेवेति संसाध्याग्रे—

## प्राचीन-दर्शन-समन्वयः

इति शीर्षकेऽपि सप्तभिः भूमिकाभिः दर्शन-समन्वयं न्यायप्रधानम् कुर्वन् 'सर्वाणि वैदिकदर्शनानि प्रधानानि नाङ्गानि इत्युपशीर्षकम् उल्लिख्याग्रे वक्ति—'एवमध्ययनेन मम मानसमेवमुदलहत—किल सर्वाणि वैदिक-दर्शनानि स्वयं प्रधानानि सम्प्रदाये स्वीये अन्य-दर्शनानि स्व-प्राक्तन-भूमिकायां स्थापयन्ति स्वयं च अङ्गीभवद् अन्यानि स्वाङ्गानि विदधाति। तदित्थमेव वेदान्तस्य प्राधान्य-वर्णनं विज्ञान-भिक्षुणा गौडब्रह्मानन्देन च कृतम्। ततश्च प्राचीनोऽयं न्यायस्यास्य प्राधान्यकर्ता उदयन इति निश्चितम्। न्याय-सम्प्रदायस्याभावात्-चिरमात्मतत्त्वविवेक-पुस्तकस्यैव तिरोधानाच्च अस्य वर्णनस्य नाद्यापि तथा प्रचार इति कृत्वैव ममायं प्रयासः। एवमेवान्यद्—'वैदिकानामप्येषां भेदमूलं व्याख्याभेदः' इत्युपशीर्षकं दत्वा लिखति—

'दर्शनानां मूलवाक्यानि परित्यागवाक्यानि यथा सूचितानि तत्र मूल-वाक्यं प्रधानीकृत्य अन्यानि तदनुकूल-वाक्यानि संगृह्य परित्यागवाक्यस्य अर्थान्तर-वर्णनेन विरोधः परिहरणीयः। एवंविधया व्याख्ययैव दर्शन-भेदः व्याख्या-भेदे च बुद्धि-भेदः कारणम् इति प्रसिद्धिरिति दिक्। इत्याद्यभिधानमेषां महापण्डितानाम्—ततोऽग्रे—

'आत्मदर्शनम्'

'जड-प्रकाशयोराध्यासिकः सम्बन्धः' ।

'माया सर्व-दर्शनानुस्यूता ।'

'दृष्टि-सृष्टि-वादः ।'

इति वाद-चतुष्टय-विवेचनानन्तरमिमे महापण्डिताः—

'शिव-ब्रह्माद्वयवादौ ।'

इति शीर्षकेण शिवाद्वय-वादं ब्रह्माद्वय-वादं च विवेचयन्ति । महानुभावा इमे—तत्र दर्शनपथप्रदर्शन-प्रसङ्गे परस्परं दार्शनिकाः स्वमतं प्रधानीकृत्यान्यमतं खण्डयन्तीति स्वोक्तिमनुसृत्य शिवतत्त्व-निरूपणप्रसङ्गे "एवं हि तत् स्फुटीक्रियताम् विमर्शशक्तिः स्वयंप्रकाशा अप्रकाशा वा ?" इत्यारभ्य चतुर्भिः स्फारैर्विविधविकल्पैः शिवतत्त्वस्याहं विमर्शं स्वदृशा पूतोकुष्माण्डीकुर्वन्ति । तत्र भामतीग्रन्थमपि दृष्टान्तयन्ति । इति

अत्राहमेषां सरणिं विहाय केवलं षडर्धशास्त्र-सम्प्रदायमेव दर्शयित्वाऽग्रे गमिष्यामि । तथाहि—

"तत्र संविद्घन एक एव चिदब्धिः परमेश्वरोऽन्तर्बहिः परिपूर्णेन समुच्छलत्तत्तदनन्त-विश्व-लहरीनिर्भरप्रकाशः पूर्णाहंविमर्श-मयचिच्चमत्कारशालिनि स्वमहिम्नि विमर्शरूपे एवावस्थितः, न ततो मनागपि सङ्कोचकलना भिन्नवेद्यवेदकाध्यात्मा त्रैकालिको बाह्यत्वेन समुदेतीति । अथ च स एवानन्दघनतया समुच्छलत्स्वभावः स्वेच्छयैव स्वस्मादेव निरुपादानसहकारिकारणादिसम्भारं विश्व-क्रीडामुद्भिभासयिष्यन् स्व-स्वातन्त्र्येण शुद्धाशुद्धविमिश्ररूपाणि परस्परापोहनेन अत्र भासमानानि मातृ-मेयादीनि तत्सम्बन्धांश्च कार्य-कारणभाव-वैचित्र्यादीन् दर्पण-प्रतिबिम्बवद् अनतिरिक्तान् अपि अतिरिक्ततया स्वात्मन्येव देशकालाद्युपहितान् निर्भासयति । निर्भासितानां च तेषां कालाद्यकलितः स एव पारमार्थिकस्वभाव इति वस्तुतो न किञ्चित् सृज्यते स्थाप्यते संह्रियते वेति । आनन्दघनश्चिदाकाश एव पूर्णं पूर्णतरस्तथा तथाघूर्णमानश्चकास्तीति प्रत्यभिज्ञाशास्त्र-सम्प्रदायः"—

अयमेवार्थो महामहेश्वराचार्येण सप्तभिरेव पद्यैर्विवृतोऽस्ति परमार्थचर्चया श्रीमताऽभिनवगुप्तेन । तथाहि पश्यन्तु—

अर्केन्दुदीपाद्यवभास-भिन्नं नाभात्यतिव्याप्ततया ततश्च ।
प्रकाशरूपं तदियत्प्रकाश्य-प्रकाशताख्या व्यवहार एव ॥ १ ॥
ज्ञानाद् विभिन्नो नहि कश्चिदर्थस्तत्तत्कृतः संविदि नास्ति भेदः ।
स्वयं प्रकाशाच्छतमैकधाम्नि प्रातिस्विकी नापि विभेदिता स्यात् ॥ २ ॥
इत्थं स्वसंविद्धन एक एव शिवः स विश्वस्य परः प्रकाशः ।
तत्रापि भात्येव विचित्रशक्तौ ग्राह्यग्रहीतृप्रविभागभेदः ॥ ३ ॥
भेदः स चायं न ततो विभिन्नः स्वच्छन्दसुस्वच्छतमैकधाम्नः ।
प्रासादहस्त्यश्वपयोदसिन्धुगिर्यादि यद्वन्मणिदर्पणादेः ॥ ४ ॥
आदर्शकुक्षौ प्रतिबिम्बकारि समर्पकं स्याद्यदि मानसिद्धम् ।
सुस्वच्छसंविन्मुकुरान्तराले भावेषु हेत्वन्तरमस्ति नान्यत् ॥ ५ ॥
संविद्धनस्तेन परस्त्वमेव त्वय्येव विश्वानि चकासति द्राक् ।
स्फुरन्ति च त्वन्महसः प्रभावात् त्वमेव चैषां परमेश कर्ता ॥ ६ ॥
इत्थं स्वसंवेदनमादिसिद्धमसाध्यमात्मानमनीशमीशम् ।
स्वशक्तिसम्पूर्णमदेशकालं नित्यं विभुं भैरवनाथमीडे ॥ ७ ॥ इति ।

सद्वृत्तसप्तकमिदं गलितान्यचिन्ताः
सम्यक् स्मरन्ति हृदये परमार्थकामाः ।
ते भैरवीयपरधाम मुहुर्विशन्ति
जानन्ति च त्रिजतीं परमार्थचर्चाम् ॥ ८ ॥

इत्थं हि आगमिकमिदं तत्त्वं नास्त्यत्रावसरः खण्डनमण्डस्य वयमपि सर्वदर्शनानां प्रस्थानभेदं स्वस्वप्रधानमेव विद्मः । सर्वे हि मन्त्रद्रष्टारः ऋषय एव येन यथा दृष्टं तेन तथैव व्यावृत्तं नास्ति क्वापि वैमत्यम् तेषां गम्ये सर्वे स्वतन्त्राः स्वोद्देश्योपलब्धौ साधूक्तं पुष्पदन्तेन—

त्रयी साख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजु-कुटिल-नाना-पथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ इति ।

इति प्रकृतमेव प्रासङ्गिकमभिधायाग्रे समीक्ष्यते ।

'द्वैताद्वैतिनो रहस्यवादः'

'एकः सद्-वादः' ( राष्ट्रभापामयः स्वतन्त्रः ) ततः

'अद्वैत-शुद्धाद्वैतयो र्ब्रह्मवादस्य तुलना'

'चित्राद्वैत-प्रकाश-वादः'

'कालिदास–दर्शनम्'

'सांख्य-सप्ततिः सांख्य-कारिका वा'

'सत्त्वलक्षण-विचारः'

एतदग्रे—'संस्कृतस्य अभिनवः दार्शनिक ग्रन्थः' तथा

'दर्शनेऽभिनव-चिन्तनं परमार्थ-दर्शनम्'

इति शीर्षक-द्वयेन विहाराभिजनस्य महाज्ञानिनः पं० रामावतार-शर्मणः साहित्याचार्यस्य 'एम. ए.' इति विरुदं विभ्रतो विद्वद्वर्यस्य परमार्थ दर्शनं विचित्र-दर्शनमधिकृत्य विहितोऽस्ति विचारो विद्यावैजयन्त्यामस्यां तत्र नास्ति मे बहुवक्तव्यस्य प्रयोजनम् ।

ग्रन्थकृतैव साधु विवृतं परमार्थं-दर्शन-रहस्यम् । मया तु मायिके जगति जनानां या धारणा भवति । ततो विरुद्धमपि ज्ञानिन आचरन्ति । इत्यतो न त उपहास्यास्तेषां वाक्यं तु विमर्शनीयमेव भवति । श्रीमद्भगवद्गीताग्रन्थे भगवता श्रीकृष्णेन युक्तियुक्ततममपि पितृपितामहादिवधनिषेध-वचनमर्जुनस्य ।

> कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ! ।
> इषुभिः प्रति योत्स्यामि पूजार्हावरिसूदनः ॥ २१४ ॥
> गुरूनहत्वा हि महानुभावान्
> श्रेयो भोक्तुं भैक्ष्यमपीह लोके
> हत्वार्थकामांस्तु गुरूनिहैव
> भुञ्जीय भोगान् रुधिर-प्रदिग्धान् ॥ २५५ ॥

इत्यादि सर्वथा तिरस्कृत्य मायिकशास्त्र-विरुद्धमेव ज्ञान पथानाम-चिततमं युद्धमिदमिति संसाध्य तत्रैव प्रवर्तितोऽर्जुनः । स हि स्वयमुक्तवानपि अवसाने—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ( १८।७३ )

किं बहुना, मायिक-शास्त्राद्विरुद्धाभिधानं न हि नास्तिक्यं कथ्यते। रामावतारशर्मा नास्तिक आसीदास्तिको वा आसीदिति को वक्तुमुत्सहेत—

यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः । इति

अन्यच्च – यो निश्चयः पशु-जनस्य जडोऽस्मि कर्म-
सम्पाशितोऽस्मि मलिनोऽस्मि परेरितोऽस्मि ॥
इत्येतदन्य-दृढ-निश्चयलाभ-सिद्ध्या
सद्यः पतिर्भवति विश्ववपुश्चिदात्मा । इति ।

इत्थं हि यत्र विलोमो विधिर्मायिकाऽमायिकयोरपि विदुषोः स्फुटं जागर्ति । तत्रैव महापण्डितस्य नूतन ( नवीन ) दर्शनपथं प्रदर्शयतः वेद-रहस्यविदः संस्कृतवाङ्मयमहार्णवमन्थकस्य परमार्थदृष्टिमेव द्रक्ष्यामि । न हि मायिकानां दम्भाहङ्कारकामक्रोधादिषड्वर्ग-विपन्नानां वचः श्रोष्यामि 'रामावतारशर्मा नास्तिको वाऽस्तिको वेति' ।

अहमपि ग्रन्थकृद्भिरेभिर्महापण्डितैः समन्वितो वच्मि स हि सुधी-रास्तिकशिरोमणि श्छलकपटबहुले जगति विविञ्चन् गन्तुं मार्गमुपदिशति । जीवस्यापि विनाशं वदतीति कथमास्तिकः स इति प्रश्ने यो हि देहात्मानं जीवं वक्ति तस्य जीवः कथं न म्रियते ? किं वासुदेवो भगवान् न वक्ति—

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ ( २।२७ )

सोऽपि तु अभ्युपगमवादेन चार्वाक-मतं समर्थयति । लोकायतं हि तन्मतं 'मनस्यन्यद् वचस्यन्यद्' इति विहाय 'मनस्येकं वचस्येकम्' इति वक्ता पूज्यो भवति नावमान्य इत्यलं बहुना—ततः—

'चार्वाक-दर्शनम्'

'जन्मान्तर-विवेकः'

'भक्तिर्ज्ञानं च'

इति वाक्त्रयं स्पष्टं सर्व-विदितमेवास्ति । तत्र नास्ति बहुवक्तव्य-स्यावसरः केवलं ज्ञानं भक्तिरिति शब्दद्वयमादाय संस्कृतवाङ्मये हिन्दी-

ख

वाङ्मये च बहुविस्तीर्णो विचारः चर्चितोऽस्ति । दर्शनानि सर्वाणि ज्ञान-मार्गमेव तु स्व-स्व-दृष्ट्याऽनुसंदधते सूरदासादयः साधुगणाः प्राक्तनाश्च व्यासादयोऽपि, नवीना अपि उदयनाचार्यादय ईश्वरलीलानुसन्धानम् 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यत्र मननमेव भगवद्गुण-कर्मादिकीर्तनमित्यादयो विविधाः प्रकारा वर्णिता भक्तेः ।

नास्ति तत्रैकमत्यं विदुषां महाविदुषाऽनेनापि ज्ञानसम्बन्धो पूर्वं सर्वमेव निबन्धजातं निबद्धं भक्तिविषयेऽपीह 'भक्तिर्ज्ञानं च' इति शीर्षकेऽभिहितमेव मे केवलमेतदेव भक्तेर्विषये वक्तव्यमस्ति । यद् यद्धि व्यासेन नारदेन शाण्डिल्यादिभिर्भक्ति-स्वरूपमुदीरितं तदपि तु साम्प्रतिका मानवा नानुतिष्ठन्ति । परन्तु—भक्ति-शास्त्रेषु सर्वप्रधाने श्रीमद्भागवते एकादश-स्कन्धे द्वितीयाध्याये ४५ पञ्चचत्वारिंशं पद्यम्—

'सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः' ॥ ११।२।४५ )

इत्थं हि बहुत्र गीयते 'अस्ति चेदीश्वरः कश्चित् फलरूप्यन्यकर्मणाम् कर्तारं भजते सोऽपि नह्यकर्तुः प्रभुर्हि सः ( १०।२४।१४ ) अन्यत्रापि 'अप-हाय निजं कर्म कृष्ण कृष्णेति वादिनः ।

ते हरेर्द्वेषिणः पापाः कर्मार्थं जन्म यद्धरेः इत्यादि बहुत्र शास्त्रेषु बहुधा भक्तिविषयेऽपि सन्ति वाक्यानि । किन्तु अवैधमेव सर्वथा सर्वत्र दृश्यत इत्यलम् अरण्यरोदनेन । ततश्चात्र निबन्धे—

'मानवता ननु भारतीय-दर्शनानां प्रथमं फलम्' ।
भारतीय-दर्शनानि किमु राष्ट्रोन्नतेः प्रतिबन्धकानि ॥

अनयोर्निबन्धयोः सम्यक् परिशीलनीयमुक्तं निबन्धकेन महा-मनीषिणा । अन्तिमे तु अनर्गलप्रलापिनां पाश्चात्यगुणाभासकवितॄणाम् मुखमुद्रणमेव कृतमस्तीति कण्ठेहत्य परिशीलनीयं निबन्धद्वयमिदम् । ततश्च 'सान्वयवादः'

'अनुभववादः'

ततो हि हिन्दीभाषायामेव—

संस्कृत-भाषा का दर्शन और आधुनिक हिन्दी तर्कशास्त्र

इति द्वित्रनिबन्धानुसन्धानानन्तरं पुनर्गम्भीरनिबन्धोल्लेखानुलेखो दृश्यते—

'प्रामाण्यप्रामाण्ययोः स्वतस्त्ववादो नु कस्य दर्शनस्य'

इति प्रधाने शीर्षके—'बौद्धदर्शनस्य प्रामाण्यवादः' इत्युपशीर्षके प्रामाण्याप्रामाण्ययोः 'स्वतस्त्व-परतस्त्व-प्रदर्शन-प्रसङ्गतः सर्वदर्शन-संग्रहस्था या द्विसंख्यायाः कारिकाया उल्लेखो दृश्यते तथाहि—

प्रमाणत्वाप्रमाणत्वे स्वतः-सांख्याः समाश्रिताः ।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः ॥
प्रथमं परतः प्राहुः प्रामाण्यं, वेदवादिनः ।
प्रामाण्यन्तु स्वतः प्राहुः परतश्चाप्रमाणताम् ॥

इत्येवं चतुर्धा प्रामाण्याप्रामाण्ययोः वादःसिध्यति । उभयो स्वतस्त्वम् सांख्य-नये । २ उभयोः परतस्त्वम् न्यायनये । बौद्धानाम् तु ३ स्वतोऽ-प्रामाण्यम् परतः प्रामाण्यमामनन्ति । अस्माकं वेदवादिनां वेदान्तिनान्तु बौद्धपक्षतः सर्वथा विरुद्धानाम् ४ प्रामाण्यं स्वतो भवति अप्रामाण्यमेव परत इति सर्वेऽपीमे वादा ऊहापोहदिशा विस्तृत-विचारेण वादि-प्रतिवादिनां च वाद-प्रतिवाददिशा सम्यग् विवेचिताः सन्ति महाविदुषाऽनेनेहेति करणेहत्य परिशीलनीया इमे वादाः ।

पण्डितप्रवरेणानेन मध्ये मध्ये युक्ति-प्रमाणान्यपि ।

'दोष-ज्ञाने त्वनुत्पन्ने न शक्या निष्प्रमाणता ॥ ६० ॥
एवं त्रिचतुरज्ञान जन्मनो नाधिका मतिः ।
प्रार्थ्यते तावतैवैकं स्वतःप्रामाण्यमश्नुते' ॥

इत्यादि श्लोकवार्तिकादि शास्त्रप्रमाणान्यपि प्रदर्शितानि ।

प्रामाण्याप्रामाण्यलक्षणानि तयोः स्वतस्त्वपरतस्त्वादिकं च सम्यङ्न्यायपरिभाषया मीमांसितानि सन्ति । प्रामाण्यवादस्य दुरूहत्वं तु न्यायशास्त्रमध्येतुं कामेन केनापि कविनैव प्रतिपादितम्—

उपाधिस्तु महाव्याधिः पक्षता प्राण-घातिनी ।
नमः प्रामाण्य-वादाय मत्कवित्वापहारिणे' ॥

इति संक्षेपः । शीर्षकाण्युपशीर्षकाणि संक्षिप्तानि च यथा—

न्यायस्य प्रामाण्यवादः

प्रामाण्यवादस्य सरलःसंक्षिप्तश्च परिचयः

अस्य हिन्दी भाषाऽपि 'प्रामाण्यवाद का संक्षिप्त परिचय' इति शीर्षकेण कृतास्ति निबन्धाऽध्येतॄणां छात्राणां कृते । ततः

प्रामाण्यवाद-समीक्षा

संस्कृत-सरल-पद्धत्या समीक्षां विधाय हिन्दीभाषायामपि अनेनैव शीर्षकेण विचारोऽस्ति । ततः सातकडिमुखोपाध्यायानां नवनालन्दामहाविहाराध्यक्षाणां महाविदुषां १९६१ खीष्टाब्दे वाराणसेयसंस्कृतविश्वविद्यालय-बौद्ध-दर्शनपरिषदि कृतसाध्यक्षीयभाषणस्य—

'भाषण-समीक्षा'

इति शीर्षकेण संस्कृतभाषायां तादृशशीर्षकेण च हिन्दी भाषायामपि समीक्षा विद्यते वादे कथं मल्लप्रतिमल्लता भवतीति दिदृक्षमाणैः पठनीयोऽयं निबन्धो न मयेह स्वनिर्णयो विलिख्यते। इत्यलम् ।

( ८३० ) खाग्निवसुमिते पृष्ठेऽत्र पण्डितराजानां श्रीराजेश्वरशास्त्रि द्राविड-महाभागानां—

'न्यायकुसुमाञ्जलिः

इति शीर्षको लेखः संस्कृत-भाषायां च तेनैव शीर्षकेण मुद्रितोऽस्ति । ततश्चाग्निवेदवसु ( ८४३ ) मितेपृष्ठे—

'पण्डित-राजस्य न्यायकुसुमाञ्जलिलेखे विचारः'

इति शीर्षके महाविदुषोऽस्य प्रतिवादात्मको लेखः । तस्य हिन्दीभाषान्तरं च । ततश्चाप्रतिभात्मके निग्रहस्थाने प्रपतिते गुरौ हरिरामशुक्लः कोऽपि चन्द्ररसाष्टमितपृष्ठे ( ८६१ )—

'न्याय-कुसुमाञ्जलि-लेख-विचार-परीक्षणम्'

इति शीर्षके स्वपरीक्षणं प्रारब्धवान् । परन्तु मे दृष्टौ 'आम्रान् पृष्टः कोविदारान् आचष्टे' इति नयमनुसृत्य प्रकृतमस्पृशन्नेव 'मुखमस्तीति वक्तव्यम् दशहस्ता हरीतकी' इति न्यायमाश्रित्य यद् यद्धि तन्मनसि

समागतं तत्तदुदीरितम् । तस्यापि सहिन्दीभाषान्तरस्य निरीक्षणम् अष्ट-षडष्टनि० पृष्ठे ( ८६८ ) महाविदुषा निबन्धयित्रा—

'न्याय-कुसुमाञ्जलि-विचार-परीक्षण-निरीक्षणम्'

इति शीर्षके सहिन्दीभाषान्तरे यदभिहितम् तत्तु तत्रैव—"अयं विरोधः प्रागपि मया प्रदर्शितः परं समाधानं न पश्यामि" इत्यत आरभ्य "अतः कण्ठ-पाशः सत्यापलापिनामेव कण्ठमभिलषति । न तु वैदिकदर्शनाध्येतॄणाम् । अतः सर्वथा निःसारमेवेदं परीक्षणम् । अलमत्र विशेष-विद्योतनेनेति" अवसानान्तेन लेखेन तदीयेन विमृशन्तु पाठका न वयमत्र किञ्चिद्वदामः । अप्रतिभानिग्रहस्थाने पतितस्य गुरोर्भूमिकां गृहीत्वा समागतस्य शिष्यस्य श्रीहरिरामशुक्लमहोदयस्यापसिद्धान्तनिग्रहस्थाने पातं किं विवृणुमोविवृणमोवेत्यलम् । ततोऽपि शून्याष्टाष्टमितपृष्ठे ( ८८० ) पुनारभमाणः श्रीहरिरामशुक्लमहोदयो मन्ये स्वीयमपसिद्धनिग्रहस्थानं विमिमृक्षुः प्रतिवादिभूमिकामाधाय—

'न्याय-कुसुमाञ्जलि-विचारपरीक्षण-याथार्थ्यानुसन्धानम्'

इति शीर्षके यदुद्गिरति तदपि च वेदाङ्काष्टमित पृष्ठे ( ८९४ )

'न्याय-कुसुमाञ्जलि-विचार-परीक्षण-याथार्थ्यानुसन्धान-समीक्षणम्'

इति शीर्षके महापण्डितैरोझामहोदयैर्यथा पूतिकुष्माण्डीकृतं विद्यते । तथा तेषामेव शब्दैस्तत्र द्रष्टव्यं यथोक्तं संस्कृत-पत्र-सम्पादकेन श्रीकालीप्रसादविदुषेति नास्माभिः स्वशब्देन किञ्चिदुच्यते—निबन्धमालाविषयेऽपि तद्विरचयितृभिर्निबद्धं पद्यमेव—

श्रीविद्यावैजयन्ती गुरुवर-मनसः प्रोद्यता रत्नमाला
सम्पूर्णा दर्शनानामभिनव-कुसुमैः सञ्चितैः सन्निबन्धैः ।
हिन्दी-भाषाविराजा सरस-सुरगवीसूत्र-बद्धा विशाला
दृष्ट्वा-घ्राताऽन्तरङ्गं विशतु लसतु वः शास्त्रसारा रसाला ॥

इति बहुमन्यते । नापरमुच्यते ।

अवसाने सम्प्रति अस्माभिस्तु सर्वमिदं निबन्धजातमधीत्यातिचमत्कृतैर्वोभूय्यते । यन्महाविद्वांस इमेद्य सर्वदर्शनकृतं सायणमाधवमप्यतिशेते । 'तया निबन्धमालया स हि सर्व-दर्शनानां विषयानुवादं व्यधाद् । इमे तु

पूर्व-पक्षोत्तर-पक्षाभ्यां सहृदयैः—परिशीलनीयं सुबुद्धच्छात्रैरध्येलिमं परम-रहस्यं त्रिवृण्वन्तीति श्रद्धया मननीयैषा 'श्रीविद्यावैजयन्ती निबन्धमाला' बहुश्रेयसी मञ्जु-मसृण-सरल-संस्कृत-भाषया राष्ट्रभाषया च तद्विषयानु-वादिन्या सम्वलिता। यत्र परमाणुवादतः प्रारभ्य गहनदुरूह प्रामाण्यवादान्त-वादानां सुस्फुटं विचारः सम्भृतोऽस्ति। "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्य-श्चोपपत्तिभिः" इति स्मृतिरपि सफलीक्रियते—अवसाने चोपहरन्तो वयं बवामः—

पठन्तु सर्वेऽखिल-शास्त्र-वाधिगान्
वैदुष्य-पूर्णान् विविधान् विकल्पितान्।
निबन्धसारान् बहु-विज्ञ-सम्मतान्
महाधिया सूरिवरेण गुम्फितान्॥

इति विरमामो विस्तरात्

विदुषां वशंवदाः डॉ॰ श्रीगोपालशास्त्रिणो ( दर्शनकेशरिणः )
( राष्ट्रपति-सम्मानिताः काशीपण्डित-सभाध्यक्षाः )
डी. ५१।३१ सिगरा, वाराणसी। दूरध्वनिः—६५६६५
सौर दिनाङ्कः २५।१०।२०३४ वैक्रमे.

श्री गुरुचरणेभ्यो नमः



काशी हिन्दूविश्वविद्यालय काशी, संस्कृत महाविद्यालय दर्शन विभागाध्यक्ष गुरुवर पण्डित प्रवर श्री श्रीशङ्कर तर्करत्नभट्टाचार्य महोदय



काशी हिन्दूविश्वविद्यालय संस्कृत महाविद्यालयाध्यक्ष महामहोपाध्याय विद्यावैजयन्ती उद्भावक गुरुवरपण्डित प्रवर श्रीबालकृष्णमिश्र महोदय

# विद्यावैजयन्ती निबन्धमाला

श्रीविद्यावैजयन्ती गुरुवर मनकी ज्ञानधारा प्रवाही
जाता ज्योतिप्रदीपा चरणरतमनोमोहपाशप्रणाशी।
नाना विद्याविलासी जगतिविजयते हर्ष वर्षा उल्लासी
थोड़ीं पूजाप्रसावी बहुत समझि लो प्रीत हो प्रीतिभासी॥

जैसा याद आता है, १९३४ ई० से १९३८ ई० तक का समय होगा, कुछ विद्वानों के परामर्श से मेरे गुरुवर स्व-महामहोपाध्याय पूज्यपाद श्रीबालकृष्णमिश्र-महोदयजी के मनमें सहसा भावना उठी कि विद्यावैजयन्ती संस्कृत मासिक पत्रिका का प्रकाशन हो, उसके लिये संस्कृत में विज्ञापन प्रकाशित हुआ, प्रसारित भी हुआ, मैं तो

अर्थहीन परिवार पोषण के लिये अध्ययन समाप्त नहीं होने पर भी गुरुचरणों के सन्निधान को छोड़कर कुछ पैसे के लिये गुजरात घूमा करता था, इसमें नहीं था, तथा कुछ कर भी नहीं सकता था, पीछे किसी समय आया, गुरुचरणों का नमन किया, और उस विज्ञापन को पाया, उसको किसी पुस्तक में रख दिया, उसके बाद कभी दो एक वर्ष बीतने पर गुरुजी के पास आया, पत्रिका का प्रकाशन नहीं हुआ, गुरुमुख से सुना कि जिन दो समुत्साही परिश्रमी निवेदकों के प्रयास पर विश्वास के साथ विज्ञापन का उपक्रम हुआ था, वे दोनों दूर देश के हैं, घर गये, गृही हैं, अपने व्यवसाय में व्यस्त हो गये, अब विश्वास नहीं आ रहा है कि वैसा होगा, उसके बाद ही चौखम्भा से प्रकाशित वादवारिधि में गुरुवर के कुछ वादों का प्रकाशन हुआ।

उसके बाद बहुत वर्षों के बीतने पर गुरुवर को श्रीविश्वनाथ सायुज्य पा लेने पर कभी पुस्तक में रखा हुआ वह विज्ञापन आँख के सामने पड़ा, गुरु की अनुकम्पा का दुःखद स्मृति हो उठी, और गुरुवर को कुछ पूजा नहीं किया इस खेद को उठाया, तथा शीघ्र ही मानसिक भावना जगाया कि जो कुछ लिखूं उसको इस विद्यावैजयन्ती निबन्धमाला के पुष्परूप से समर्पण करूँ, वह भी दीन असक्त मेरा बड़ा मनोरथ हुआ, जिसमें बड़े से बड़े विघ्न पड़े, एक छोटी पोटरी में व्याकरण और साहित्य के निबन्ध थे, उनमें अधिकतर पत्रपत्रिकाओं में प्रकाशित हुए थे, थोड़े अप्रकाशित भी रहे, पोटरी की ही चोरी हो गई, मनीषा मन ही में विलीन हुई, मैं हताश हुआ, बहुत प्रयास पर प्रकाशितों के पाँच या छह ही कहीं २ मिल पाये।

दार्शनिक निबन्ध तो अलग पोटरी में थे, उस पोटरी की चोरी नहीं हुई, किन्तु कुछ सड़े, कुछ बिखरे, कुछ टुकड़े पत्र वाले पुराने सड़े थे, उनको सज्जाकर हिन्दी अनुवाद के साथ अलग पुस्तकरूप से विद्यावैजयन्ती निबन्धमाला के प्रकाशन की इच्छा हुई, उसको करते हुए चोरी गये हुए मेरे आलङ्कारिक और व्याकरण के निबन्ध अधिकतर मिल गये, उनको भी हिन्दी अनुवाद से सजाया किन्तु रसगङ्गाधर की मेरी रसचन्द्रिका संस्कृत टीका इस प्रसङ्ग से तीस वर्ष पहले से लिखी पड़ी है, पहले उसका प्रकाशन होना चाहिये, यह फिर भी वृद्ध असहाय धनहीन बलविहीन रोगक्षीण मेरा दुःसाध्य मनोरथ हुआ, तो भी आगे प्रयास किया। काशी से बाहर रहते हुए १९७५ ई. के जनवरी में ही काशी के एक विद्वान् के प्रेस में सटीक रसगङ्गाधर का प्रकाशन

सुरू किया, एक मास में एक फरमा छपा, संस्कृत का प्रूफरीडर नहीं मिलता ऐसा कारण बताकर प्रेस ने मुद्रण बन्द कर दिया, फिर ८४ वर्षीय प्राचीन प्रसिद्ध विद्वान् शास्त्र-सेवी मेरे पर सदय हितैषी ब्रह्मर्षि श्रीगोपाल शास्त्रीजी से पत्र द्वारा प्रार्थना किया, वे उपनेत्र को नहीं अपनाते हुए सूक्ष्म अक्षरो के वाचन में बड़ी कठिनाई को सहते हुए भी इस काम को किसी प्रकार शुरू किये, प्रेस की अक्षमता से छ मास में फिर दो ही फर्मा छप पाया। फिर वह प्रेस छोड़ दिया, दूसरा प्रेस मिला नहीं, काम बन्द हो गया; ऐसा हो गया कि काशी में मेरे रहे बिना इसका मुद्रण नहीं हो सकता, फिर श्रीकाशी विश्वनाथ की अनुकम्पा से कुछ विद्वान् मेरे ऊपर दया दृष्टि दिये, सहायक हुए, मैं १९७६ जून में काशी आ गया, मेरी आर्थिक कठिनाई और भी बढ़ गई, परिवार से अलग हुआ, अपनी कठिनाई का स्वयं उत्तरदायी बना। मकान ओषधि नागरिक और विशेष खर्च सवारी पत्नी की कठिनाई की जवाब देही नोकर का खर्च बहुत बढ़ा, तो भी साहस किया, दूसरे प्रेस में काम शुरू किया, किसी प्रकार एक मास में एक चौथा फर्मा छप पाया, जोरों से बीमारी हुई, उसी से काशी से बाहर जाना पड़ा, मुद्रण काम बन्द हुआ, अधिक दुर्बल अवस्था में काशी आया, किसी प्रकार ७६ दिसम्बर से तीसरे प्रेस में पांचवें फर्मे से रसगङ्गाधर का मुद्रण शुरू हुआ। उस समय सोचता था कि यद्यपि बड़ी पुस्तक होगी तो भी खर्चे के संकोच से रसगङ्गाधर के अन्त में विद्या-वैजयन्ती नाम से आलङ्कारिकनिबन्धमाला का मुद्रण तथा प्रकाशन कर दूंगा, उसमें भी बाधा पड़ी कि श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालय के कुछ अधिकारीगण मेरी कठिनाईपर दया करके रसगङ्गाधर का प्रकाशन स्वीकार किये, सामग्री ले लिये, मेरे मुद्रित अंशों का प्रथम भाग करके प्रकाशन भी कर दिये तथा दूसरे भाग के प्रकाशन का पूरा आश्वासन दिये, उनकी स्वीकृति विद्यावैजयन्ती की नहीं थी; दूसरी स्वीकृति मिलने में कठिनाई मालूम पड़ी, इस प्रकार विद्यावैजयन्ती का पृथक् प्रकाशन आवश्यक हो गया, तथा बड़ी कठिनाई में मुद्रण शुरू हुआ, मनोरथ का बाहरी आकार प्रगट हुआ।

गुरुवर का विज्ञापन तो बहुत पुराना खराब कागज वाला अनेक भागों में टुटा हुआ नष्टप्राय है, निवेदकों का नाम भी नहीं बचा है, दृष्ट परिचित कुछ स्थूलकाय प्रायः गुर्जरीय को सर्वथा भूल रहा हूं, द्वितीय का रघुनाथ इतना नाम याद आता है; कृशशरीर श्याम तरुण दाक्षिणात्य थे, वैयाकरण थे, वेदान्त पढ़ते थे, शिरोमणि उनका उपनाम था अथवा व्याकरणशिरोमणि परीक्षा पास किये थे यह ठीक स्मृत नहीं हो पाता, किसी प्रतिष्ठित पद पर अध्यापन करते हों ऐसा संभव है, एक प्रसिद्ध वैयाकरण महामहोपाध्याय तात सुब्रायशास्त्री दाक्षिणात्य वृद्ध विद्वान् थे, मेरी छात्रावस्था में उत्तरभारत के संस्कृत परिषदों के लिये आहूत होते थे, उनकी जीवनी विद्वता यशस्विता के विषय में उत्तर भारतीय किसी संस्कृत पत्रिका में कभी लेख पढ़ा था; उसके

लेखक वही रघुनाथ विद्वान् थे ऐसा आभास हुआ था, शायद पत्रिकाकार लोग जानते हों।

## खण्डित उपलब्ध विज्ञापन स्वरूप

॥ श्रीकृष्ण ॥

॥ विद्ययाऽमृतमश्नुते ॥

॥ संस्कृतविद्यानुरागिणो महानुभावाः ॥

....दितमिदं भवादृशां यत्साम्प्रतम् प्राचीनसंस्कृतनिबन्धानां
...पटलदंशनेन वा निलयानलकीलकवलनेन वा पाथसपृपत
....पातेन वा विलोपः क्रमादवलोक्यते, क्वचन प्रकाशिता अपि ते मूल्य-बाहुल्याद् यावदपेक्षितफलावैकल्याच्च न सन्तोषमुपजनयन्ति मान-सेषु प्रणयिनाम्, अनुपपत्तिसन्ततिमेतादृशीमनुसन्धाय विदूयमानमा-नसैः कतिचरैरसकृदुत्साहिताः हिन्दूविश्वविद्यालये वेदान्तप्रधानाध्या-पकाः ख्यातवैदुष्याः श्रीबालकृष्णमिश्रमहाशयाः पुरोदीरित-त्रुटिविघटनाय विद्यावैजयन्तीसमभिधानाया
मासिकपत्रिकाया विकस्वरानुकम्पाभिः सम्पादनभारं स्वीचक्रुः।
महाभाग्यमिदं यत्सुरसरस्वतीं समुन्नेतुमिमे कार्यविरुद्धसमया अपि
...कराः समभूवन्।
....पि पत्रिकायाः प्रकाशः.........

## दार्शनिक निबन्धों की हिन्दी

यह अभिलाषा है कि इन निबन्धों के सारांश को संस्कृत भाषा में अप्रविष्ट भी हिन्दी भाषा द्वारा समझ सके, इसलिये हिन्दी का संनिवेश किया गया है, अन्यथा संस्कृत की अपेक्षा हिन्दी लिखने में मुझे कठिनाई मालूम पड़ती है, जिससे कमजोरी प्रतीत होती है, किन्तु असंस्कृतज्ञ भी दार्शनिकविचारधारावाले इसको पढ़ें और समझें तो यह सब श्रम सफल हो।

दूसरा यह भी मनोरथ है कि दार्शनिक विश्लेषणों को हिन्दी भाषा में उतारना, जिससे हिन्दी भारती की कुछ सेवा हो, यद्यपि हिन्दी भाषा में चिरकाल से प्राच्य-प्रतीच्य अनेक दर्शन साहित्य उतरे हुए हैं, इतिहास-निबन्ध-अनुवाद आदि अनेक प्रकार की दर्शन चर्चाओं से इस समय हिन्दी भण्डार सुसज्जित है तो भी उससे कुछ अधिक बढ़ने का प्रयास है, मेरे निबन्ध दार्शनिक विश्लेषणों में कुछ आगे बढ़े हैं ? उसके अनुसार कुछ भाषा बढ़ी है, अधिक बढ़ाना तो नहीं किया गया, अभी हिन्दी में प्रचलित

नहीं है ऐसा लिख कर आगे का छोड़ दिया गया, इस समय की हिन्दी बहुत बढ़ी हैं, शब्दकोश उसके बहुत बढ़ गये हैं, प्रान्तीय भाषाओं के शब्द—कुछ विदेशीय शब्द—विभिन्न कार्यालयों के भी अलग २ शब्दकोश हो गये हैं, राजकीय उन-उन विभागों के हिन्दी पत्र दूसरे विभागों के लिये कठिन हो जाते हैं, वे शब्द अभीं पारिभाषिक हो गये हैं, उसी प्रकार कुछ दार्शनिकशब्द प्रचलित हो, तथा दार्शनिक हिन्दी भी कही जा सके तो अच्छा हो, हिन्दी द्वारा दार्शनिक पदार्थों का परिचय कुछ सरल हो जाय।

## परिष्कारभाषा

परिष्कारभाषा परिचय के लिये एक हिन्दी माध्यम से छोटा सा निबन्ध इसमें रखा गया है, बुद्धिमान् विचारक लोग उसको देखें, मनन करें, जिन वस्तुओं के लिये जिन सम्बन्धों के लिये जिन शब्दों की योजना उसमें है उन वस्तुओं को समझें, वे वस्तुयें और वे सम्बन्ध इस संसार में हैं या नहीं ? हैं तो उनके लिये इसके अतिरिक्त कोई शब्द है या नहीं ?, यदि नहीं है तो वहां बताये हुए भेद कैसे सिद्ध होंगे ?, वे पदार्थ यदि संसार में हैं तो उनका व्यवहार करना हो तो कैसे किया जाय ?, इस पर विचार करें। यह ठीक है कि भाषाशास्त्र रोटी धोती नहीं बनाता, उसकी समस्या तो सभी समय किसी भी प्रकार सम्नहित होती हैं, इससे भाषाशास्त्र व्यर्थ नहीं होता।

भारतीय दर्शनों पर हिन्दी में लेख तथा पुस्तकों के पढ़ने का प्रयास किया; उससे अनुभव हुआ कि लेखक शायद विषय समझते भी हों तो भी उनका संस्कृत भाषा में अच्छा प्रवेश नहीं है तो हिन्दी लेख में सफल नहीं हैं, इस पर इस पुस्तक में 'संस्कृत भाषा का दर्शन और तर्कशास्त्र' निबन्ध है, जिसमें पुस्तकों का उद्धरण देकर कुछ दिखाया गया है। यहां इसको छोड़ देता हूँ। किन्तु हिन्दी भाषा को दार्शनिकता के तरफ बढ़ने की आवश्यकता है यह अवश्य समझता हूँ।

भारतीय दार्शनिक विद्वान् दर्शनो में इतना सूक्ष्म विवेचन उतारे कि साधारण संस्कृतभाषा भी नहीं सह प.ई उसमें एक परिष्कारभाषा प्रगट हुई। इस पुस्तक में भी एक प्रामाण्यवाद का बड़ा प्रकरण है, जिस में अधिक संस्कृत के कई लेख हैं, हिन्दी के भी अनेक हैं प्राचीन दार्शनिक संस्कृत लेखकों में महाविद्वान् श्रीवाचस्पतिमिश्र जी स्फुट भाषी भी हैं, न्यायवार्तिक तात्पर्यटीका में न्याय और बौद्धों के 'प्रामाण्यवाद का वर्णन किये गये हैं, उसमें अनेकबार स्वतःप्रमाण शब्द आया है, उसी लेख से प्राचीन उदयनाचार्य परतः प्रमाण स्फुट करते हैं, उसका व्याख्यान चिन्तामणि में भी नव्यन्यायशैली में विस्तृत परतः प्रमाण रूप से किया गया है। जो भी अभी भी व्युत्पन्न प्रामाण्यवाद-गदाधरी आदि को ठीक समझ कर पढ़कर तात्पर्य टीका पढ़ेगा उसको परतः प्रामाण्य ही सुझेगा। तो भी आधुनिक बड़े विद्वान् संस्कृत भाषा के लेखक वक्ता भी कोई २ स्वतः प्रमाण ही समझता और लिखता है।

मुझे छात्र अवस्थाओं में गुरुजनों से सुनने का अवसर मिला कि नव्य न्याय व्युत्पत्ति के बिना भारतीय दर्शनों का सूक्ष्म विवेचन नहीं पा सकता, तथा वेदान्त के नव्य प्राचीन ग्रन्थों के समुचित अध्ययन और परिशीलन से न्याय के प्रमेय स्फुट और परिमार्जित होते हैं, मुझे पीछे वेदान्त के नव्य ग्रन्थों के परिशीलन के बाद ये सुने हुए सर्वथा सत्य निकले, स्वर्गीय पण्डितराज श्री राजेश्वरशास्त्री जी नव्य न्याय व्युत्पति को अधिक जगह उपयुक्त करते थे, प्राचीन भारतीय राजनीतिशास्त्र में पञ्चावयवों के प्रयोग से ही स्फुटता लाने का प्रयास करते थे जब नव्यन्याय विचारधारा दूसरे शास्त्रों को विकसित की है तब अपने घर दर्शनशास्त्रों को कैसे छोड़ेगी ? इसलिए वेदान्त के नव्य ग्रन्थ दूसरे दर्शनों के खण्डन में जब प्रवृत्त हुए तब उनको अपनी अवस्था तथा सिद्धान्तों पर भी भार पड़ा उसके लिये उनको अधिक सूक्ष्म विचारों पर आगे चलना पड़ा, दूसरे दर्शनों पर कुछ कठिनाई छोड़े जिससे दूसरे दर्शनों को भी कुछ आगे बढ़ना पड़ा। अतः जिन विषयों पर मेरा निबन्ध है वह उस विषय के प्राचीन निबन्धों से आगे बढ़ा है अधिक विश्लेषण का प्रयास किया है।

केवल नव्य न्याय की भाषा ही नहीं किन्तु विचार प्रणाली की एक रीति है उससे भी एक दृष्टि बनती है, उसका भी कुछ उपयोग इसमें मिल सकेगा, जैसे कि वेदान्त का अध्यास-दृष्टि सृष्टिवाद-माया का स्थान आदि की दृष्टि भी कुछ व्यापक मिल सकेगी, जो भाषा की कठिनाई को नहीं लेकर भी ग्रन्थों ही पर आधारित न होकर दूसरे दर्शनों में भी लक्ष्यों का अन्वेषण कर सकेगी।

मैं प्रायः विद्वानों की गोष्ठियों में कुछ नूतनता की जिज्ञासा से सर्वदा सम्मिलित होने का प्रयास करता था, तथा अभी भी शास्त्रीय निबन्धों को उत्सुकता से पढ़ता हूँ, गोष्ठियों में और विद्वानों के लेख या भाषण में अधिक एकदेशिता पाता हूँ, संस्कृत पण्डितों के पास ग्रन्थों का ही अपनी भाषा में अधिक वर्णन देखता हूँ, उतने से सन्तोष नहीं होता। नव्यन्याय विचार प्रणाली या उसकी भाषा क्रमशः हिन्दी में उतारी जा सकती है, उसमें यदि सभी ढंग के दार्शनिक भारतीय विद्वानों का ऐकमत्य हो जाय तथा सभी इसमें सहयोग करें, भारतीय दार्शनिकों का दो वर्ग साधारण होता है, एक जो आरम्भ से ही संस्कृत माध्यम से पढ़ते हैं या पढ़ाते हैं, तथा नव्यन्याय की व्युत्पत्ति पाकर वेदान्त आदि भारतीय दर्शनों की नव्य विचार प्रणाली में प्रवीण हैं, दूसरे जो ईङ्लिश माध्यम से पढ़े हैं और पढ़ाते हैं, और संस्कृत भाषा में प्रौढ़ि नहीं रखते तथा भारतीय दर्शनों की भारतीय अध्ययन प्रणाली से परिचित नहीं हैं, इन दोनों वर्गों में अभी बड़ा विभेद है; इनका समन्वय नहीं हो पाता, भारतीयों के समन्वय के लिये हिन्दी भारती ही क्षेत्र है, दोनों हिन्दी में पूरा लिखें और दोनों का दोनों पढ़ें, सो अभी नहीं हो रहा है, दूसरे वर्ग के दार्शनिकों के सम्पर्क में अनेक बार मुझे सुनने का

अवसर मिला है कि अमेरिका के दार्शनिक कहते हैं कि भारतीय नव्यन्याय काव हुत वड़ा साहित्य है, कोई भारतीय विद्वान् उस पर लिखकर हम लोगों को देने के लिये तैयार नहीं होता, १५ वर्ष से कुछ और पहले का समय होगा कि कोई अमेरिका का लोजिक विद्वान् पटना विश्वविद्यालय में आया था, व्याख्यान किया, उसने पूछा कि प्राचीन परम्परा से पढ़ा पढ़ाने वाला कोई गौतम लोजिक का विद्वान् हो तो उसको मिलाईये, मैं उस समय पटना में था, मेरा किसी ने नाम लिया, डा० बाबू राजेन्द्र प्रसादजी पटना यूनिवरसिटी के प्रोफेसर जो अमेरिका से विदेशीय लौजिक का विशेष अध्ययन कर आये थे, भारत में उस विषय के प्रसिद्ध विद्वान् उसी समय हो गये थे, भारतीय दूसरे विश्वविद्यालयों में उसके व्याख्यान के लिये जाया करते थे, कुछ वर्ष के बाद वे कानपुर इन्स्टयूट में चले गये थे, वे ही मुझे अमेरिकन लौजिक विद्वान् के पास ले गये, और मेरी हिन्दी और अमेरिकन की अङ्गरेजी का माध्यम वे ही रहे, उस अमेरिकन की व्युत्पत्ति जो मुझे मालूम पड़ी वह द्वितीय वर्ग के दार्शनिक विद्वानों में मैं आशा नहीं करता, बात बहुत बड़ी नहीं थी, मुक्तावली तक ही में समाप्त थी, शाब्दबोध और उसके कारणों के विषय में चर्चा थी, उनके प्रश्न के अनुसार मुझे सरल ढंग से उत्तर देना था, योग्यता के स्वरूप में मैं वास्तविक को छोपाकर सरलता की दृष्टि से कुछ दूसरा कहा उसपर उसको अनुपपत्ति मालूम पड़ गयी, उसने प्रश्न किया, फिर मैंने वास्तविक कहा तो उसको सन्तोष हो गया। उससे मुझे मालूम पड़ा कि दूसरी भाषाओं में भी ये कुछ विद्यायें हैं और कुछ जानकार हैं, पं. श्रीधीरेन्द्रमोहनदत्तजी जो पटना विश्वविद्यालय के पुराने दार्शनिक प्रोफेसर थे उस समय शान्तिनिकेतन में रहते थे, अच्छे सहृदय विद्याप्रेमी विद्वान् थे, मधुवनी दर्शन परिषद् में आये थे, डा. राजेन्द्र प्रसादजी उनके विद्यार्थी थे, अच्छा गुरुशिष्यभाव दीख पड़ता था, मेरे सामने डा. राजेन्द्रप्रसादजी से कहे कि तुम अमेरिका से शब्दों के विषय में पढ़कर आये हो, भारत में क्या है सो जानों, पं. जी से शब्दशक्ति प्रकाशिका पढ़ो, स्वीकार किये, पटना आकर थोड़ा प्रयास भी किये किन्तु जितने श्रम और समय की अपेक्षा थी उसके लिये समर्थ नहीं हुए छोड़ दिये।

इन वृत्तान्तों से इतना ही प्रकृत में सूचित होता है कि वे डाक्टर महोदय भारतीय लौजिक नहीं जानते अथवा बहुत कम जानते हैं, तो भी शायद वे अपने लोजिक व्याख्यान में कह देते हैं कि भारतीय लौजिक यहां तक नहीं पहुंचता, प्रथम वर्ग के विद्वान् कहते ही हैं कि नव्यन्याय से प्रभावित सूक्ष्म विचारों पर उत्तरे भारतीय दर्शनों का परिज्ञान नव्यविचार भाषा की अवश्य अपेक्षा रखता है, इन कलहों की शान्ति अथवा आपसी समन्वय तभी संभव है जब कि दोनों वर्गों के विचारात्मक विश्लेषणात्मक प्रचुर दार्शनिक साहित्य हिन्दी में आ सके यह संभव है कि आरम्भ में वह हिन्दी

भाषा कठिन होगी, उसको अध्यापक से समझना पड़ेगा, तो भी वह बड़ी कठिनाई न समझी जाय, संस्कृत अथवा इंगलिस में भी पढ़ाने के लिये आवश्यकता पड़ती है; हिन्दी पुस्तक माध्यम से भी दर्शन पढ़ाना पड़े तो क्या हरज है ?।

वैसा हिन्दी दार्शनिक साहित्य कौन करें, यह भी कठिन है, पहला वर्ग नहीं कर सकता, क्योंकि उसके पास आर्थिक कठिनाई है, कुछ थोड़े लोग आधुनिक नवीन अध्यापक वृत्ति पाते हैं, अधिकतर पारिवारिक सज धजों में व्यस्त हो जाते हैं, इसके लिये उनके पास अर्थ नहीं रहता, अभी समाज तथा राज्य में दोनों वर्गों की समता भी पूरी नहीं आई है, मेरी ही जो आर्थिक स्थिति समझता है वह मानता है कि मेरा इतने बड़े खर्चे से इतनी बड़ी पुस्तक छपवाना और प्रकाशन करना जीवन से खेल करना है, तथा मना किया और मना करता है, यदि मेरा ही समाज में अथवा राज्य में कुछ भी विद्वत्ता की अथवा इस कार्य की उपयोगिता की प्रतिष्ठा होती तो अवश्य कोई प्रकाशक प्रकाशित कर देता, आर्थिक उलझन मेरे उपर नहीं आता, तथा प्रकाशन के बाद भी प्रचार या विक्रय चल पाता।

दूसरा वर्ग भी नहीं कर पाता कि आरम्भ से इंगलिस में चिरकाल तक जुटे रहने से हिन्दी में काम करना उनके लिये कठिन होता है, और विश्व में अभी हिन्दी की अपेक्षा अंग्रेजी भाषा का क्षेत्र अधिक लाभ प्रतिष्ठा भी अधिक। अस्तु, इतनी ही मेरी टूटी फुटी हिन्दी सेवा हो, इसके लिये हिन्दी अपनाई गई।

किसी प्रकार भगवत्कृपा तथा विज्ञजनों की सहानुभूति से यह विद्यावैजयन्तीनिबन्ध-माला का प्रथम भाग दार्शनिक निबन्धमाला सामने आ रहा है, दूसरा भाग आलङ्कारिक निबन्ध माला तथा तीसरा भाग व्याकरण निबन्ध माला हिन्दी के साथ तैयार है, उसका क्या होगा ? क्या कहा जाय ? जब की मेरा क्या होगा ? नहीं कहा जा सकता।

अन्त में प्रामाण्यवाद लेख परम्परा अधिक हो गई है, पहले से ही इसकी कठिनता के कारण मेरे अनेक लेख निकले हैं जो सभी इसमें नहीं लिये गये, पुराने वाचस्पति और बौद्धों के लेख में एक तरह की भाषा है, जिससे सिद्धान्त निर्णय में विद्वानों को भ्रम हो गया है फिर उदयनाचार्य के लेख में आधुनिक प्रचलित मार्ग का सूत्रपात हो गया है, तथा और नवीनों के व्याख्यान से न्यायसिद्धान्त में कठिनाई नहीं है तो भी बौद्धों क सिद्धान्त निर्णय में अभी भी कठिनाई है, इसलिये अनेक लेख देने पड़े, पुनरुक्ति खटकेगी किन्तु सभी में कुछ २ विशेष विषय हैं इसलिये दिये गये। महा विद्वान् सातकड़ी मुखर्जी-नालन्दा महाविहार अध्यक्ष का भी लेख है इससे पाठक कौतुकी होंगे।

अन्तिम न्यायकुसुमाञ्जलि लेख से इस पुस्तक का उपसंहार होता है, उसमें भी छ लेख हैं, बड़ा ही है, स्वर्गीय आदरणीय पण्डितराज राजराजेश्वर शास्त्री द्रविडजी का प्रथम लेख है, स्वर्गीय प्रसिद्ध गम्भीर विद्वान् विनयी पं० श्री हरिराम शुक्लजी के दो लेख हैं, इससे पढ़ने की उत्कण्ठा होगी।

कठिनाई भी अन्त में यह आ गई कि पुस्तक बड़ी हो गई, मेरी शारीरिक अशक्ति और वस्तुओं की महर्घता से खर्चा बहुत पड़ गया, पुस्तकविक्रेता भी बहुत महगें हो गये, विक्रय कमीशन अधिक देना पड़ता है, इससे पुस्तक का मूल्य अधिक हो गया, मैं दरिद्र कृपण बिना मूल्य किसी को दे नहीं सकूंगा, विद्वद्वर्ग पुस्तकों के लिये पैसा खर्च करने में संकोच करते हैं तो इसको लोग कैसे पढ़ेंगे ?, छात्रवर्ग धनी माना ही नहीं जाता, तो भी पाठकों से प्रार्थना है कि जो इसको पढ़ना चाहते हैं तथा मूल्य देना नहीं चाहते या किसी कारण नहीं दे पाते वें पढ़कर सुरक्षित लौटाने की शर्त पर हमसे पुस्तक लेने की कृपा करें, और इस प्रार्थना को सत्य माने, क्योंकि दूसरे लोगों के पढ़ने से ही मेरे श्रम की सफलता है।

मेरी आर्थिक कठिनाई प्रबल है, महंगी, भृत्य रखना आदि खर्चों से मेरा काशी-वास दुःसाहस है, सर्वदा सन्देह बना है कि यहां का खर्च न चलने से मेरा काशीवास छुट जाय, खरीद करने वाले लोग यदि दया दृष्टि रखेंगे तो उनके पैसे का सदुपयोग भी संभव है। यदि पैसा हुआ तो दूसरे और तीसरे भाग का प्रकाशन भी संभव है।

मैंने अपनी शक्ति के अनुसार पूरा प्रयास किया, पैसा भी शुद्धता के लिये खर्च किया, तो भी मुद्रण अशुद्धि कुछ रह गई, जिनसे भाव समझने में कठिनाई पड़े ऐसी अशुद्धियाँ आठ दश ही होगीं, तो भी शुद्धिपत्र दे रहा हूं, पाठक कृपाकर इसका उपयोग करें, पहले संशोधन करके पढ़ना अच्छा होगा, कुछ सम्प्रदाय ऐसा भी देखता हूं कि अशुद्धि रहते हुए भी शुद्धिपत्र नहीं देते, लेकिन मुझे वह पसन्द नहीं है।

समादरणीय विद्वन्मणि ब्रह्मर्षि श्री गोपाल शास्त्री दर्शन केसरीजी की अनुकम्पा का मैं विशेष कृतज्ञ हूं, कि करीब नब्बे ९० वर्ष की अवस्था में भी चश्मा के बिना अव्यवधान नेत्रों से मेरे अर्थदारिद्र्य सूचक इन छोटे अक्षरों को मेरी प्रार्थना पर पढ़ने का कष्ट किया, तथा अपनी शुभाशंसा को संस्कृत में लिखकर पुस्तक में दे दिये हैं, जो मेरी प्रशंसा में विशेषणों का आधिक्य किये हैं उसको मैं उनकी शुभभावना व्यञ्जन मानकर सह्य करता हूं तथा वैसा ही पूरा मुद्रित किया जाता है, उसी को संस्कृत लेख मानता हुआ मैं हिन्दी में अपना निवेदन लिखने के लिये अवसर पाता हूं। उनकी स्वाभाविक उदारता बहुत दिनों से मुझे मालूम थी, जिसका ऐसे कामों में तीन वर्ष से उपयोग कर रहा हूं, रसगङ्गाधर रसचन्द्रिका के प्रारम्भिक मुद्रण में भी उनका पूरा प्रयास हुआ था।

इस प्रसङ्ग पर पुराना २० वर्ष का संस्कृत कार्ड पत्र प्रस्तुत करता हूं, पुराने दार्शनिक पं० श्रीमान् धीरेन्द्र मोहन दत्तजी का है, उनकी एक प्रसङ्ग में ऊपर भी चर्चा आई है, ये पटना विश्वविद्यालय दर्शन विभाग का चिरकाल तक अध्यक्ष रहे थे, सेवा-विरत होकर शान्ति निकेतन रहते थे, पटना हिन्दी मासिक पत्र साहित्य में मेरे 'न्याय-शास्त्र परिपूर्ण तथा स्वतन्त्र दर्शन है' लेख को पढ़कर पटना में कार्डपत्र भेजे थे।

(यथार्थ प्रतिलिपी)

शान्ति निकेतन—पश्चिमवंग ११-६-५८

मान्य नैयायिक वरेण्य

भवतां न्यायमण्डकं स्वतन्त्र मनन पूर्णं निबन्धं प्राप्य अनुगृहीतोऽस्मि। यद्यपि इदानीन्तना नैयायिका बहुशः 'इदन्तु कण्टकावृत्तं तत्त्वन्तु बादरायणाद्' इति मन्यमाना न्यायदर्शनस्य परमार्थसाधकतां न तादृशं समाद्रियन्ते, प्राचीननैयायिकानां कृते न्यायदर्शनमपि मोक्षसाधनमासीत् इत्यत्र न कोऽपि संदेहः। आधुनिकेषु अपि महामहोपाध्यायफणिभूषणतर्कवागीशस्य भवादृश एव पक्ष आसीत्।

सर्वेषां दर्शनानाम् एकवाक्यता तु अल्पसंख्यकानां दार्शनिकानामेव प्रयासमात्रम्। नानात्वन्तु सुस्पष्टम्, आधुनिकदृष्ट्या अधिकतरगौरवावहम् च। बहुजनहिताय भवद्भिः दुरूहाणां न्यायतत्त्वानां हिन्दीभाषायाम् आलोचनं क्रियते, एतदहं बहुमन्ये। भवतां हिन्दीलेखनशैली च सरला अक्लिष्टा इति शास्त्रस्य पुनरुज्जीवनाय हिन्दीभाषायाश्च श्रीवर्धनाय प्रभविष्यति। भवतां प्रयत्नः सर्वथा श्लाघनीय एव। अस्मिन् एव मासे पाटलिपुत्रम् आगन्तुम् इच्छामि। भवतां दर्शनं च लभिष्ये इति उत्सुको निवेदकः

धीरेन्द्र मोहनदत्तः ( भूतपूर्वः अध्यापकः )

ऐसी ही दो तीन घटनाओं से मुझे मालूम पड़ा कि मेरी भी हिन्दी कुछ काम कर सकती है।

मेरे ऊपर कृपा रखनेवाले मेरी कठिनाइयों में सहानुभूति वर्तनशील बड़े विद्वान् सम्पूर्णानन्द संस्कृत विश्वविद्यालय ग्रन्थालयाध्यक्ष डा. पण्डित श्रीलक्ष्मीनारायण तिवारीजी ने स्वयं आवश्यकता बताकर संक्षिप्त इङ्लिस में परिचय देकर जो मुझे उपकृत किया है उसके लिये इन पङ्क्तियों से कृतज्ञता प्रकाशन करता हूँ।

अब यह विलक्षण नये तरीके की पुस्तक प्रकाशित हो रही है, श्रीकाशीविश्वनाथ की अनुकम्पा से विज्ञजनों की मेरे ऊपर सहानुभूति सफल हो रही है, अवश्य कुछ अध्ययन सामग्री बढ़ायेगी। इति

विज्ञों का वशंवद

केदारनाथ ओझा

## विद्यावैजयन्ती निबन्धमाला प्रथम भाग दार्शनिक निबन्धमाला

## विषयसूची

| विषय | पृष्ठ |
| --- | --- |

| विषय | पृष्ट | | |
|---|---|---|---|

# विद्यावैजयन्तीनिबन्धमाला

श्रीविद्यावैजयन्ती गुरुवरमनसो ज्ञानधाराप्रवाहाज्
जाता सौगन्ध्यसीमा चरणनतशिरःशिष्यचेतःप्रफुल्ला ।
नानाविद्याविताना जगति विजयते मन्मनोमोदयन्ती
स्वल्पैः पूजापदार्थैर्ममकृतिनुलभैर्मोदतां मञ्जुभावैः ॥

## दार्शनिकनिबन्धमाला–प्रथमो भागः

॥ परमाणुवादः ॥

यत्काये करुणाकरो जनकृताद्दृष्टोरुमायाधरः
संचेष्टां विदधद् विधाय जगतः सृष्टिं विधाताऽभवत् ।
ऐश्वर्याणिमता यतः श्रुतिमता कल्पोऽन्तकालोऽपि यं
नाहतुं परमाणुमत्र विभवस्तं मातुमीहामहे । ४॥

भूयास्तां सुप्रसन्नावणुतमगुरुणि शङ्करो बालकृष्णः
पूज्यौ मे हृद्यदेवौ निखिलविद्गुरू श्रौततर्काब्धिमग्ने ।
मन्दा दृष्टिर्मदीया कथमपि लभतां गाहनं मज्जनं वा
ईशाद्यं कर्म यस्मिन् विलसति परमाणुः क्रियेहासुभासः ॥

## परमाणुलक्षणम्

ननु कोयं करुणाकरस्य परमेश्वरस्य कायभावमापन्नः परमाणुनामा अणिमैश्वर्यरूपेण प्रख्यातो निरूपणीयतां गतः । स हि अणुपरिमाणवान् १–परमत्वविशिष्टाणुपरिमाणवान् वा २–अपकर्षानाश्रयाणुपरिमाणवान् वा ३–उत्कर्षानाश्रयाणुपरिमाणवान् वेति न सम्भवति ।

तथाहि नाद्यः, अणुपरिमाणस्य द्व्यणुके सत्त्वादतिव्याप्तेः । नापि द्वितीयः परमत्वस्यानिरुक्तेः । अपकर्षानाश्रयत्वेन निरुक्तौ तु तृतीयरूपापत्तेः

तृतीयस्यापि न निर्वाहकता, अणुजातीयोत्कर्षस्य सजातीयेऽणुतर एव सम्भवः परमाणोश्चाणुतरमप्रमितमिति परमाणोरेवाणीयस्तरत्वात्, अपकर्षाना-श्रयत्वमिति मतमालम्ब्य समर्थनेऽपि त्रुटिमपेक्ष्यापकर्षस्यापि व्यवहारस्यानु-रोधेनासम्भवापत्तेः। तथैव द्व्यणुकापेक्षयोत्कृष्टः पीलुरिति व्यवहार-प्रामाण्ये उत्कर्षस्यापि कल्पनीयतया चतुर्थपक्षोऽपि क्षयति।

नापि निरवयवत्वं नित्यद्रव्यादावतिव्याप्तेः, महद्भिन्नत्वविशिष्ट-निरवयवत्वस्य परमाणुव्यवहारनियामकत्वं तदितरभेदप्रमापकत्वरूपञ्च लक्षणत्वं सम्भवति परं परमाणोर्मनसोऽपि लक्षणाक्रान्तत्वं निरूपणीय-विषयबाह्यत्वञ्च यतो हि आरम्भवादे पृथ्वीपाथःपावकपवनानां परमाणु-नामेव साधनेन आरम्भवादस्य स्थिरत्वेन तस्यैव निरूपणीयत्वम्। नित्यत्वे सति द्रव्यसमवायिकारणत्वमपि न तादृक् संतोषसाधकम्, शिरोमणिशेमुषी-सिद्धस्य सनातनस्य त्रसरेणोरेव साधनेन कृतकृत्यतापत्तेः। तथापि मनो-भिन्नत्वे सति नित्यत्वे सति अणुपरिमाणवान् स इति निरूप्यते। न च पूर्ववत् कृतकृत्यता, तन्मतीयस्य त्रसरेणोरणुत्वाभावात्। द्व्यणुकवारणाय नित्यत्वमिति।

## विप्रतिपत्तिवाक्यस्य प्रयोजनम्

यद्यपि संशयस्य मानसज्ञानतया न विप्रतिपत्तिवाक्यस्य तत्राह-त्योपयोगः। कोटिद्वयोपस्थितिद्वारा संशयनिर्वाहिकत्वसम्भवेऽपि संशयस्यैव न वादाङ्गत्वम्। निश्चितप्रज्ञस्य वादाहवप्रवृत्तिदर्शनात्। नापि मध्य-स्थस्य संशयित्वमभ्युपेयते तत्त्वव्याघातात्। नाप्यसौ पक्षता घनगर्जनाद्यनु-रोधेन संशयपक्षतायाः खण्डनात्। तथापि सिषाधयिषाविरहसहकृत-सिद्ध्यभावरूपपक्षताकुक्षिनिक्षिप्तसिद्धिविघटनद्वारा पक्षतासम्पादकत्वेन वादिनोर्मध्यस्थस्य च विरोधिस्वकीयपक्षावधानदानाय वा विप्रतिपत्ति-वाक्यप्रयोजनस्य कतिपयविद्वद्भिर्व्याख्यातत्वात् बहुशो ग्रन्थकारशैलि-सिद्धत्वात् विमृश्यपक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इत्यादिशास्त्राभि-प्रेतत्वाच्च परमाणुप्रमितिपरिपन्थीनि कतिपयविप्रतिपत्तिवाक्यानि प्रतिपाद्यन्ते।

## विप्रतिपत्तिवाक्यानि

तथाहि—पृथ्वीत्वं सावयवत्वव्याप्यं न वा १ जलत्वमनित्यत्वव्या-प्यन्न वा२ अणुत्वं महत्त्वव्याप्यन्न वा३ अणुत्वं तारतम्यवन्न वा४ परि-माणविशेषो विश्रान्तिमान्न वा ५ अनित्यलौकिकप्रत्यक्षविषयत्वं तेजस्त्व-

व्यापकत्वं वा ६ अपकर्षाश्रयमहत्त्वं नित्यन्न वा ७ सजातीयोत्कर्षानाश्रयमहत्त्वं नित्यन्न वा ८ महत्त्वे सति लौकिकचाक्षुषप्रत्यक्षविषयोद्भूतरूपावच्छेदेन सावयवत्वन्न वा ९ दृश्यमानद्रव्यावयवत्वावच्छेदेन सावयवत्वं न वेत्यादीनि।

तत्र प्रथमे न विधिकोटिर्नैयायिकानाम्। परमाणुद्व्यणुकानङ्गीकर्तॄणां त्रसरेणावेव विश्राममभ्युपगच्छतां दीधितिकृतां मतेऽपि त्रुटेरेव अनवस्थादुरवस्थाभीतेर्निरवयवताया विश्रान्तेः किन्तु निषेधकोटिरेव प्रसिद्धा, आरम्भवादविरोधिनस्तु, विधिकोटयः सावयवत्वव्याप्तिस्तु घटत्वे प्रसिद्ध्यति। परमाणोर्निरवयवत्वसाध्यनित्यत्वस्य विरोधि सावयवत्वम्। द्वितीयेऽप्येवमेव। केवलं तद्वाक्यं साक्षान्नित्यत्वविरोधितद्विरहोपस्थापकमिति विशेषः।

परमाणुव्यवहारविषयतां महत्वापकर्षप्रयुक्तां त्र्यणुके कल्पयतां कल्पनायां महत्त्वाणुत्वयोः सामानाधिकरण्यात् महत्त्वत्वव्याप्यमेवाणुत्वत्वम् उक्तञ्च तथैव चित्सुखाचार्यैरिति तन्मतानुसारिविधिकोटिकं तृतीयम्, अणुषु तारतम्याभावस्य तत्त्वदीपिकाकारोक्ततया चतुर्थम्। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तमित्यनुमितिप्रयोजकप्रतिज्ञावाक्यादिघटितन्यायप्रतिपाद्यमहत्त्ववदित्युदाहरणविघटकतया पञ्चमम्, षष्ठे विधिकोटिर्विरोधिनाम्। तेजस्त्वव्यापकत्वं द्रव्यत्वे सिद्धम्। चक्षुषि व्यभिचारवारणायोद्भूतरूपत्वमपि देयम्। विधिकोटिकं विरोधिमतमेवाहृत्य सप्तमम्। घटादिमहत्त्वस्यानित्यत्वात्, निषेधकोटिः प्रसिध्यति। विधिकोटौ व्यभिचारादेव अष्टममाहृतम्। अनणुवादिनां त्र्यणुकस्यैव महत्त्वविश्रान्तिधामतया तत्र महत्त्वावधिकोत्कर्षस्याभावात् विधिकोटिः समीचीना। महत्त्वस्यानेकद्रव्यवत्त्वप्रयोज्यत्वात् निरवयवत्वभङ्गभिया नित्यस्यैव महत्त्वस्याङ्गीकारात्। तच्च स्फुटमेव परमाणुसाधनरोधकमितिविशेषात् तस्योपादानम्। त्रसरेणुः सावयव इति द्व्यणुकसाधकन्यायनिरोधकमतीयनिषेधकोटिकं सिद्धान्तीयविधिकोटिकं नवममपि द्व्यणुकविषयविप्रतिपत्तिवाक्यतयाऽऽवश्यकोयमेव। चाक्षुषलौकिकप्रत्यक्षविषयत्वस्य रूपादावपि विद्यमानत्वात् विधिकोटिरक्षायै महत्त्वे सतीति। नयनादौ व्यभिचारवारणाय उद्भूतरूपावच्छिन्नत्वमहत्त्वयोरन्यतरस्यैवोपादाने तात्पर्यम्। द्व्यणुके विश्रान्तिवादिनां निषेधकोटिकं दशममाहेति।

## परमाणुसाधनम्

तथा च प्रत्यक्षादिबहुतरप्रमाणसिद्धावयविनोऽवयवधारायाः विश्रान्तिधाम्न आवश्यकतया यस्य विश्रान्तिधामत्वं तस्यैव परमाणुत्वम्।

अविश्रान्तौ तु अनवस्थापत्तिः। न च बीजाङ्कुरवद् अनवस्थाऽप्यङ्गीकरणीयैवेति वाच्यं ततोभेदात्। तथाहि बीजाङ्कुराणां पूर्वापरभावव्यवस्थायां पौर्वापर्यस्य निर्धारणायासमर्थतया संसारस्यानादितामाश्रित्य गत्यभावात् समाधीयते। अत्र का गतिरिति पृष्टेस्तात्पर्यात्, अवयवानां पूर्वत्वस्य सिद्धतया तथाविधसमाधानस्यासम्भवात्। वस्तुनोऽनन्तावयवित्वापत्तौ तात्पर्यम्, न च इष्टापत्तिः समाधानमलं मेरुसर्षपयोरनन्तावयत्वेन साम्यप्रसङ्गस्यासमाहितत्वात्। ननु दर्शनविषयोविभजनीयश्चोभयवादिविदितो योऽवयवः कश्चित् तादृशानां संख्यातुं शक्यतया यथा सर्षपस्य तादृशाः पञ्च भागा एवं तादृशा एव माषस्य त्रिशतिः भागा इति सर्षपमाषयोरेवाल्पीयसोर्वैधर्म्यस्य सिद्धतया मेरुसर्षपयोः साम्यप्रसङ्गस्याप्रसङ्ग एवेति चेन्न सर्षपावयवधाराभिरपि विश्वस्य व्याप्तत्वात्। तथाहि योऽयमेकःसर्षपस्य भागस्तस्य द्वाववयवौ तयोः द्वौ द्वौ चतुर्णामपि द्वौ द्वौ एवमष्टानामपि भागापादनरीत्या सर्षपावयवपरम्पराभिर्विश्वं विश्वं व्याप्तं भवेत्। तथा चैवमेव सर्षपावयवचिन्ताचिन्तितावयवैः सर्षपस्यानन्तावयवित्वोत्कर्षापेक्षया दुर्गमस्य मेरोरतिशयित्वं साधयितुमशक्नुवन्तः सर्षपसहस्रांशेनापि सुमेरुशतोत्कृष्टस्यापि शिखरिणः साम्यमनुमापयन्तः सर्षपसुमेरुसाम्यशङ्कायामुपहासमर्पिष्यन्ति पण्डिताः। न च निरवधिकाऽप्यवयवसंख्या विशेषाभावात् अविशेषयन्त्यप्यवयविनं परिमाणेन प्रचयेन वा परस्परविशेषवन्तं तं कथमविशेषमापादयेद् इति वाच्यम्, तुल्यपरिमाणैर्द्वित्रैरवयवैरारब्धेऽव्यविनि संख्याप्रयोज्यस्यैव परिमाणादेर्भेदस्याभ्युपगन्तव्यतया कारणसंख्याविशेषाभावे परिमाणप्रचययोरपि विशेषासम्पादकत्वात्। तथा च सर्षपा यदि साक्षात् परम्परासाधारणमेवारम्भकावयवान्यूनावयवा चेत् सुमेरुमहत्त्वापेक्षिकानपकृष्टमहत्त्ववन्तो न स्युरित्यापाद्यापादकभावेन परिमाणभेदोऽपि न स्यात्। ननु त्रसरेणौ विवादाभावात् तस्य च प्रत्यक्षविषयतया सर्षपे कियन्तस्त्रसरेणव इति निर्णेतुं शक्यतया सुमेरौ तदधिकानां त्रसरेणूनां प्रमिततया त्रसरेणूनां भागानन्त्येन साम्यसम्भवेऽपि मेरुसर्षपयोः साम्यं दुरापास्तमिति चेन्न स्वविशिष्टः स्वतुल्यपरिमाणवानिति व्याप्त्या मेरुर्यदि सर्षपविशिष्टः सर्षपतुल्यपरिमाणवान् स्यादित्यापाद्यत्वात्। सर्षपवैशिष्ट्यञ्च मेरौ स्वाश्रयत्व-स्वप्रयोजकावयवत्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसंख्याविभाजकधर्मावृत्तित्वस्वप्रयोजकावयवत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावच्छेदकसंख्याविभाजकधर्मावच्छिन्न-प्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकावयवत्वावच्छिन्नप्रयोजकतानिरूपितप्रयो-

ज्यतावत्त्वेति सम्बन्धत्रयेण। अवृत्तित्वघटकवृत्तित्वञ्च स्वप्रयोजकावयवकूटत्वव्यापकतावच्छेदकत्वसम्बन्धेन। स्वाश्रयत्वञ्च स्वप्रयोजकावयवकूटीयपरिमाणतुल्यपरिमाणवत्त्व-स्ववृत्तित्वेतित्युभाभ्याम्। वृत्तित्वञ्च स्वप्रयोजकावयवसदृशपरिमाणकावयवप्रयोज्यत्वसम्बन्धेनेति। विभिन्नपरिमाणकतन्तुत्रयारब्धपटयोस्तुल्यपरिमाणाभावात् आपाद्यस्य सत्त्वात् आपाद्यापादकयोर्व्यभिचारवारणाय प्रथमः सम्बन्धः, तुल्यपरिमाणैर्द्वित्रतन्तुभिरारब्धपटयोर्व्यभिचारवारणाय द्वितीयः सम्बन्धः।

किञ्च अवयविन आरभ्यत्वे अपकृष्टमहत्वस्य दर्शनात् अपकृष्टमहत्त्वं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन व्यासज्यवृत्तिसंख्यायाः कारणत्वं वाच्यम् महत्त्वस्य नित्येऽपि सत्त्वात् अपकृष्टेत्युक्तम्। तथा च द्व्यणुकं यदि सावयवारब्धं तदा महत्स्यादित्यस्यापि आपाद्यापादकभावस्य जागरूकत्वम्। सावयवसृष्टेषु कलशादिषु आपाद्यापादकयोर्व्याप्तिनिश्चयात्। द्व्यणुकस्य प्रत्यक्षत्वापत्त्या महत्त्वस्येष्टानापत्त्या आपाद्यस्य व्यतिरेकनिश्चयेन व्यापकाभावनिश्चयेन व्याप्यस्य सावयवारब्धत्वस्य व्यतिरेकः सिध्यति तच्च परमाणोर्निरवयत्वे पर्यवस्यति। ननु पक्षस्योभयसिद्धान्तस्यैव सम्प्रदायसिद्धत्वात् द्व्यणुकस्य परसिद्धान्तेनासिद्धत्वात् आश्रयासिद्धिरिति चेन्न परमतसिद्धस्य पक्षतायास्तर्कशास्त्रविरोधिभिश्चित्सुखाचार्यैरुक्तत्वात्। वस्तुतः अवयवावयविधाराप्रवाहमभ्युपयतां त्रसरेणोरवयवस्य नामान्तरेणाप्यवश्यमाश्रयणीयतया तस्यैव पक्षत्वेनापत्तेः सम्भवात्।

तथैव द्व्यणुकत्रसरेण्वोरेव सावयवारब्धत्वेन तुल्यपरिमाणापादनेऽपि परिमाणसाम्यप्रसङ्गस्य तात्पर्यमवसेयम्।

कन्दलीकारस्तु अवयवसंख्याया अविशेषात् परिमाणतारतम्यस्य तदधीनत्वात् सर्वत्रैवावयविषु परिमाणतारतम्यं न प्रतीयेतेति युक्तमापादितवान्।

अवयवसाधनावसरे दृश्यानामवयवधारायाः विश्रान्तिं न मन्वते चेत् एषां निरवयवतां अनन्तावयवतां परमाण्वन्ततां वा अभ्युपयन्ति। प्रथमस्तु सर्वतो बलेन प्रत्यक्षप्रमाणेन पराहतः। दृश्यानामवयवस्य प्रत्यक्षसिद्धत्वात्। द्वितीये तु पूर्वोक्तरीत्यैव अनवस्थासाम्यप्रसङ्गौ। तृतीयस्वीकारे तु परमाणुः सिद्ध्यत्येवेति न्यायमञ्जरीकुड्मलम्।

किरणावलीकारास्तु अवयवावयविप्रसङ्गो निरवधिर्वा प्रलयावधिर्वा विभागावधिर्वेति विकल्प्य प्रथमे कल्पे पूर्ववदेव मेरुसर्षपादीनां साम्यमापादितवन्तः।

द्वितीये प्रलय एवानुपपन्नः। प्रलये द्रव्याणामवस्थितानां निरवयवत्वाङ्गीकारे द्रव्यनाशस्य च अवयवनाशतत्संयोगनाशाभ्यामेव जन्यतया निरवयवस्य तयोरसम्भवात् द्रव्यनाशासम्भवात् प्रलय एव पलायते कुतस्तदानीमवयवधारासमाप्तिः। नापि विभागावधिरवयवधाराया अविश्रान्तौ विभागसन्ततेरप्यापत्तेः। यदि क्वचित् अवयवविभागो विश्राम्यति तदा विभागस्य गुणस्य आश्रयस्यावश्यकीयतया य एव तदाश्रयास्ते निरवयवाः परमाणव इति सिद्धम्। नापि विभागस्यैकाश्रयता किमपि कुतश्चिद्विभज्यते इति सर्वेषां प्रतीतिसाक्षिकत्वात्। यत्र द्विष्ठस्य संयोगस्य विनाशस्तत्रैव विभक्तप्रत्ययस्य प्रमात्वमन्यथा मेरुमलययोर्विभक्तिप्रतीतेः प्रमात्वं प्रसज्येत तथा च विभागस्य द्विष्ठत्वं सिद्धमेव। इति प्रकाशितवन्तः। ( अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ) इति न्यायसूत्रेण प्रलयपर्यन्तमविश्रान्तेरनवस्थायामेव तात्पर्यम्।

इममेव साम्यप्रसङ्गमाश्रित्य परं वा त्रुटेरिति सूत्रे 'अवयविविभागस्यानन्त्यात् त्रुटिरमेयः प्राप्नोति संख्यापरिमाणगुरुत्वैस्तावत्परिमाणस्त्रुटिः, इयदत्र गुरुत्वं वर्तते इयन्तश्च परमाणवः संहताः त्रुटिभावमापद्यन्ते इति नावधारणं युक्तम्। किं कारणम्। यथैवानेकपरमाणुसंघातो हिमवान् संख्यापरिमाणगुरुत्वैरमेयस्तथा त्रुटिरपि भेदस्यानन्त्यात् प्रसज्यते। अथ प्रलयान्तो विभागः? सोपि न युज्यते। विभागस्य विभज्यमानहानानुपपत्तेः न प्रलयान्तो विभागः। सचायं विभागो विभज्यमानाधारो विभज्यमानश्च नास्ति विभागोऽस्तीति व्याघातः। विभज्यमानावयवं परमाणुं प्रतिपद्यमानेन सावयवः परमाणुः प्रतिपत्तव्यः। सावयवत्वे च परमाणुशब्दस्यार्थो वाच्यः किमुक्तं भवति परमाणुरिति। ये च परमाणोरवयवास्ते किं समानपरिमाणा उत विभिन्नपरिमाणा इति?। यदि समानपरिमाणा अवयवावयविभावोऽनुपपादः। न हि वयं समानपरिमाणानां क्वचिदवयवावयविभावं पश्यामः। अथ भिन्नपरिमाणा? न परमाणुः प्रतिषिध्यते कार्यमिदं परमाणुरिति कृत्वा प्रतिषिध्यते। इति वार्तिककृताऽभाणि।

अपरञ्चाणुपरिमाणतारतम्यं क्वचिद्विश्रान्तम्, परिमाणतारतम्यत्वात् महत्त्वपरिमाणतारतम्यवत् इत्याद्यनुमानमपि किरणावलीकन्दलीमुक्तावल्यादिषु दर्शितमस्ति। युक्तञ्चैतदन्यथा अणुपरिमाणमेव नास्ति यद्वा तत्र तारतम्यव्यवहार एव न भवति परिमाणमात्र एव वा तारतम्यव्यवहारो न भवतीति प्रत्यवस्थानं सम्भवति। तत्र न प्रथमः, प्रमाप्रतीतिपथे तिष्ठति। तथाहि अणुरिति प्रतीतिविषयतयैव सिद्धेः। न च नासौ प्रत्ययः

प्रमाणं यतो विषयं साधयेदितिवाच्यम् अलीकस्य कस्या अपि प्रतीतेरा-लम्बनासम्भवात् यत्रैव तादृशी प्रतीतिः प्रामाणिकी तत्रैव प्रतीतेस्तत्र प्रमाण-त्वात्। प्रधानविषयं विना भ्रमायोगात् न हि क्वापि कश्चित् बन्ध्यापुत्रे भ्रमते। न च महत्त्वापकर्षविषयकतया निर्वाहो विकल्पानर्हत्वात्। तथाहि महत्त्वापकर्षो महति वर्तते न वा। तत्र नान्त्यः सम्भवति सजातीयेष्वेवोत्क-र्षापकर्षव्यवहारस्य दृष्टत्वात्। न हि केचन व्यवहारकुशलाः वृषभविदुषो-रुत्कर्षापकर्षाय प्रयतन्ते। किञ्च यत्र महत्त्वापकर्षवति महत्त्वं न वर्तते तत्र द्रव्यत्वेन लिङ्गेन परिमाणस्याभ्युपगन्तव्यतया तस्यैवाणुत्वस्य सिद्धिः। अन्तत्ये प्रथमे अणुमहच्छब्दयोः पर्यायता वा स्यात् महत्त्वत्वाणुत्वत्वयोर्व्याप्य-व्यापकभावो वा स्यात्। नाद्यः अणुमहच्छब्दयोः पर्यायतायाः शब्दार्थ-व्युत्पत्तिशालिनां शेमुष्याऽसिद्धत्वात्। साधारणशेमुषीशालिनोऽपि महच्छ-ब्दार्थविरोधितायामेव अणुप्रयोगं कुर्वन्ति। नाप्यन्त्यं द्वितीय पृथ्वीत्व-घटत्वयोर्व्याप्यव्यापकभावेन घटे उभयोः समावेशस्य प्रमाणसिद्धत्वात् महत्यपि अणुत्वस्य समावेश आपतेत्। न चेष्टापत्तिः नायं महान् किन्त्वणु-रित्यादेः शतशः प्रेक्षावद्भिरनुभूतत्वात्। युगपद् ज्ञानानुत्पत्त्या चेतसोऽणीय-सोऽभ्युपयतोऽणुप्रतीतिविषयस्यापि महत्त्वत्वन्नेति। नापि तत्र तारतम्या-भाव इति द्वितीयः अणुपरिमाणं तारतम्यवत् परिमाणत्वात् महत्त्ववदित्य-नुमानस्यैव तारतम्ये प्रमाणत्वात्। न चानुकूलतर्कविरहः तारतम्यवन्नस्या-त्तर्हि परिमाणन्न स्यात् इत्यापाद्यापादकभावेन परिमाणत्वनिश्चयस्यैव विपक्ष-बाधकत्वात्। नापि तृतीयः महत्त्वं यदि तारतम्यवन्न स्यात्तदा परिमाणन्न-स्यात् इति प्रतिकूलस्यापत्तेः। किञ्च महत्त्वं यदि तारतम्यवन्न स्यादाका-शोऽपि महत्तरो न स्यात्। किम्वा इदमितो महत्तरमिति सर्वं वैयावहारिकं प्रमाणविरुद्धमिवापतेत् तस्मात् परिमाणे तारतम्यमवश्यमङ्गीकर्तव्यम्। अत एव अणु महत् ह्रस्वं दीर्घञ्चेति चतुर्धा परिमाणस्य विभक्तिः सर्वत्रैव दृश्यते। अणोरणीयान् महतो महीयान् इति श्रुत्याऽपि अणीयस्त्वेन व्यप-दिश्यमानस्य परमाणोः सिद्धिः। परिमाणे सामान्ये परिमाणविशेषे अणौ च तारतम्याभावे विरुध्येतेयम्। न च ब्रह्मैवाणुपदेन व्यपदिश्यत इति वाच्यम् महतो महीयानित्यनेन विरुद्धत्वात्। कालभेदेन समाधाने ब्रह्मणः उपचयापचयस्वीकारापत्त्या अनित्यत्वापत्तेः। उपाधिभेदेन समाधाने उपाधितयैवाणीयसः परमाणोः सिद्धिर्भवतु तथापि वस्तु सिध्यति। अस्मा-देव शास्त्रात् परमाणुद्व्यणुकसिद्धिः, एकस्यैवाणोः स्वीकारेऽतिशयार्थक इयसुन् प्रत्ययोऽनुपपन्नः। अणीयोमात्रस्य स्वीकारे अणोरिति तारतम्य-

ज्ञापिकावधित्ववाचिका पञ्चमी पराहता । तस्मादणुरणुतरश्चावश्य-मभ्युपेयः ।

यत्तु चित्सुखाचार्याः अणुपरिमाणेत्यस्य अणुनिष्ठपरिमाणमित्यर्थं विधाय अणोरेवासिद्धतया तत्परिमाणस्याप्यसिद्धिरिति पक्षाप्रसिद्ध्या अणुपरिमाणस्याभावात् अणुतारतम्याभावादित्यादि कृत्वा अनुमानमिदं खण्डितवन्तः । यच्च तदेव मुक्तावलीटीपणीकृद्भिरनूदितम्, तदुभयन्न समीचीनम्, परमतप्रसिद्धस्यापि पक्षत्वसम्भव इति तत्त्वदीपिकायामेवोक्तत्वात् । अणुपरिमाणमात्रस्य पक्षत्वाच्च । अणुपरिमाणसिद्धौ तारतम्यसिद्धौ च प्रमाणान्यभिहितान्येव ।

पृथ्वीत्वं नित्यवृत्ति घटवृत्तिजातित्वे सति पटवृत्तिजातित्वात् सत्तावत् इत्याद्यनुमानेन परमाणुसिद्धिं विना अनुपपद्यमाना नित्यवृत्तिता सिद्धासती परमाणुं प्रमापयेत् । वृत्तित्वमात्रसाधने सिद्धसाधनमतो नित्यपदम् । नित्य-वृत्तित्वन्तु जातित्वे विशेषे रूपत्वे च प्रमाणसिद्धम् । घटवृत्तिजातित्वस्य घटत्वेऽपि सत्त्वात् तत्र नित्यवृत्तित्वाभावात् व्यभिचारवारणाय पटवृत्ति-जातित्वेति । तथैव पटत्वे व्यभिचारवारणाय घटवृत्तिजातित्वेति । घटवृत्ति-त्वे सति पटवृत्तित्वस्य अनित्यवृत्तिसंयोगे सत्त्वात् जातिरिति । कालिकसम्ब-न्धेनोभयत्र वृत्तेर्घटत्वपटत्वयोर्व्यभिचारतादवस्थ्यमिति समवायेन वृत्तित्वं विवक्षितम् । सत्तायाश्च जलीयरूपादौ सत्त्वात् दृष्टान्तत्वं संगच्छते । न च सत्त्वादौ नित्यवृत्तित्वव्यापकस्य पृथ्वीत्वे पटघटवृत्तिजातित्वरूपसाधनाव्याप-कस्य पृथिवीव्यतिरिक्ताधेयत्वस्योपाधितया हेतोर्व्याप्यत्वासिद्धत्वमिति वाच्यम्, नित्यवृत्तित्वपृथिवीव्यतिरिक्ताधेयत्वयोः नित्यवृत्तित्वमस्तु पृथिवी-व्यतिरिक्ताधेयत्वम्मास्त्विति विपक्षबाधकस्याभावात् व्याप्यव्यापकभाव ग्रहेऽनुकूलतर्काभावात् । सिद्धान्तिपक्षे तु यदि नित्यवृत्तिर्न स्यात् तदा परस्पर-विरोधिद्रव्यत्वव्याप्यजातिद्वयसामानाधिकरण्यन्न स्यात् दधित्वादिवत् । वर्तते च पृथिवीत्वादेस्तादृशघटत्वपटत्वसामानाधिकरण्यमिति आपाद्य-बाधात् आपादकस्य नित्यवृत्तित्वाभावस्य व्यतिरेकः सिध्यति ।

नापि वेदान्तिभिः सत्तायाः नित्यवृत्तित्वानङ्गीकारमात्रेण साध्य-विकलो दृष्टान्तः नित्येष्वपि सदिति प्रतीतेः सत्ताया नित्यवृत्तित्वसिद्धेः । सत्ता यदि नित्यवृत्तिर्न स्यात् जगदिदमसदुपादानकं स्यादित्यनिष्ठापादकतर्क-बलात् सत्तायास्तथात्वं सिद्ध्यति । तथाहि अनवस्थादिदोषदुःस्थतया सर्वै-रेवास्तिकदार्शनिकैर्मूलकारणस्य नित्यत्वमभ्युपगतम् । मूलकारणस्य सत्त्वन्तु सदेव सोम्येदमग्र आसीदित्यादिः श्रुतिर्भगवती भाषते । न च ब्रह्मणः

सत उपादानत्वेन नासावापत्तिरनभ्युपगतेऽपि परमाणाविति वाच्यम्, ब्रह्मणो जगदुपादानत्वे प्रमाणाभावः श्रुत्यादिविरुद्धत्वञ्चेति वर्णायिष्यत उपरिष्ठात्।

यत्तु कथमप्यद्वैतसिद्धान्तरक्षादक्षैः 'पृथिवीत्वमनित्यमात्रवृत्ति पृथिवीमात्रवृत्तित्वात् घटत्ववत् इति विपरीतानुमानं प्रदर्शितं तत्तु नानुमितिप्रथितानां नैयायिकानां कृते व्यामोहोत्सर्जि तर्कायुधेन विच्छिन्नत्वात्। तथाहि यदि पृथिवित्वावच्छेदेन वृत्तित्वं हेतुस्तदा पृथिव्या नित्यायाः संदेहात् व्यभिचारसंदेहः। व्यभिचारसन्देहे च अनुकूलतर्कं विना कोऽन्योऽविनाभावं प्रतिष्ठापयेत्?। अत्र विषयेऽनुकूलतर्कश्च तर्ककुशलैर्न विलोक्यते। न च पृथिवीमात्रस्यानित्यत्वं साधितमेवेतिवाच्यम्, तर्हि किमर्थमयमायासः? सत्प्रतिपक्षितत्वोत्सारणायेति चेत् तर्हि सम्प्रतिपक्षसत्त्वेऽपि पृथिवीमात्रस्यानित्यत्वं साधितमिति समीचीनं ब्रूषे। किञ्च पृथिवीमात्रस्यानित्यत्वे सिद्धेऽथवा व्यभिचारवारणाय विशेषणप्रक्षेपेऽनित्यमात्रवृत्तित्वस्य हेतुत्वं फलितम्। तथा च साध्यहेत्वोरैक्यात् सिद्धसाधनापत्तेः। सत्ताद्रव्यत्वादीनां नित्यवृत्तित्वस्य साधितत्वाद् अनित्यमात्रवृत्तित्वव्यापकतया पृथिवीत्वे व्यभिचारात् पृथिवीमात्रवृत्तित्वाव्यापकस्य पृथिवीनिष्ठात्यन्ताभावाप्रतियोगिजात्यन्यत्वस्योपाधित्वसम्भवे दोषासम्भवाच्च। तस्मादिदं सर्वदेवाचार्यकृतमनुमानं समीचीनमेव।

अपरञ्च अयं घट एतदतिरिक्तानित्यमूर्तान्यमूर्तान्यः प्रमेयत्वात् पटवदिति प्रयोगसम्भवः। अत्र अयं घटो मूर्तान्य एतावन्मात्रोक्तौ व्यभिचारबाधौ। मूर्तान्यमूर्तान्य इत्युक्तौ व्याघातात् साध्याप्रसिद्धिरसिद्धिविशेषः। अन्यमूर्तान्य इत्युक्तौ तु सिद्धसाधनम् अन्यान्य इत्यस्यैव पर्याप्तत्वात् व्यर्थविशेषणञ्च साध्यम्। अनित्यमूर्तान्यमूर्तान्य इत्युक्तौ तु प्रमेयत्वहेतोर्नित्यमूर्तेऽपि सत्त्वात् व्यभिचारः। किम्वा परमाणोरसिद्धत्वेन अनित्यमूर्तान्यमूर्तस्याप्रसिद्धत्वात् साध्याप्रसिद्धिः। तस्मादेतदतिरिक्तत्वं प्रदत्तम्। तथा च एतदतिरिक्तानित्यमूर्तान्यमूर्तत्वमत्रैव घटे प्रसिद्ध्यतीति न दोषः। पक्षेऽस्मिन् घटे तद्घटभेदस्यासत्त्वात् परमाणुद्वारैव साध्यं स्थास्यतीत्यर्थात्परमाणुसिद्धिः। द्वितीयमूर्तस्य मनोऽन्यत्वं विशेषणं देयं तेन मन आदाय न साध्यपर्यवसानादिः।

यत्त्वत्र न्यायनयञ्जर्यां चित्सुखाचार्यैः (अयं घट एतदतिरिक्तानित्यसावयवान्यसावयवान्यः प्रमेयत्वात् घटवद् इत्यनुमानेन पक्षे साध्यसिद्धिविधयाऽपि सावयवस्यैव सिद्धिर्न निरवयवस्येत्यादिना सत्प्रतिपक्षिता दर्शिता तदपि साम्प्रदायिकब्रह्मोपादानताऽऽग्रहादेव। तथाहि। एतद्

घटातिरिक्तानित्यसावयवातिरिक्तसावयवोऽयमेव घटः। नित्यत्वसावयवत्व-विरोधात्। द्रव्यसमवायिकारणत्वं विहाय अन्यादृशस्यावयवत्वस्य दुर्निर्वचत्वात् सावयवत्वं ससमवायिकारणकत्वमेव सम्भवति तच्चानित्यत्व-व्याप्यमेव। नहि क्वचिदपि पदार्थे वेदान्तिमतसिद्धे ब्रह्मणि वा सावयवत्वं स्वीकृतम्। तथा च नित्यसावयवस्याप्रसिद्धया सावयवपदेनानित्योऽपावेव घटो धर्तव्य इति तद्भेदस्य पक्षेऽसत्त्वाद् बाधः। एतद्घटातिरिक्तत्वे सति अनित्यसावयवातिरिक्तो यः सावयव इत्यर्थश्चेत् अनित्यभिन्नोऽनित्य इति वद् व्याहृतः। सावयवस्यानित्यस्यैव सम्भवात् व्यर्थविशेषणकं साध्यञ्च। सोऽपि निग्रहस्थानविशेषो दोष एव। सावयवत्वमत्र द्रव्यत्वे सति द्रव्य-समवेतत्वमेवेति नानित्यत्वस्य गन्धलेशोपीत्यभिनयन्ती नयनप्रसादिन्यपि नयनयोरेव प्रसादिनी चेतसश्च दूषणीति स्फुटमेव भवति, नहि क्वापि द्रव्यत्वे सति द्रव्यसमवेतत्वमनित्यत्वं व्यभिचरति। नित्यद्रव्याणां निराश्रयत्वस्यैव सर्वसिद्धान्तत्वात्। वेदान्तिमते केवलं ब्रह्मैव नित्यं न तदपि क्वचित् समवेतमित्यतिरोहितमेव। नित्यत्वे सति द्रव्यं यदि द्रव्यसमवेतं स्यात्तर्हि नित्य-मेव न स्यात् द्रव्यं यदि द्रव्यसमवेतं स्यात् तर्हि नित्यन्न स्यादिति द्विविधस्य तर्कस्य जागरूकत्वात्। घटपटयोरयुतसिद्धत्वाभावात्, अवयवावयविनोरेवायुतसिद्धत्वात्, अवयवस्य च समवायिकारणत्वात् कार्यस्यैव द्रव्यस्य द्रव्य-समवेतत्वमिति सिद्धमेव। अपकृष्टपरिमाणवत्त्वरूपस्य क्रियावत्त्वस्य च मूर्तत्वस्य नानित्यत्वव्याप्यत्वं मनसि तादृशस्य मूर्तत्वस्याङ्गीकारात् लाघवादि-सहकृतत कंवलेन मनःसाधकप्रमाणेनैव तस्य नित्यत्वमभ्युपेयते। किञ्च यदि निरवयवः सिध्येत्, तदापि धर्मिग्राहकप्रमाणबलेनैवासौ निराश्रयो भवेत्, तत्र द्रव्यत्वे सति द्रव्यसमवेतत्वरूपं सावयवत्वं नावतिष्ठेदिति न तस्य नित्य-साधारणताऽनुमानप्रयोगस्येति अनित्यपदं व्याहतमेव। नित्ये निरवयविनि सिद्धेऽपि पूर्वोक्तमूर्तत्वस्य सत्त्वात् नित्यसाधारणता सिद्धान्तिनोऽनुमान-स्येति नित्यत्वाभावनिवेशो न व्याहन्ति। तथा नयनप्रसादिन्यैवाभिनीतानि 'अयं घट एतद्घटत्वे सति एतदतिरिक्तानित्यमूर्तत्वानधिकरणमूर्तान्यो न भवति मेयत्वात् पटवदिति, प्रकरणसमता। तथात्वद्धेतुः स्वस्वेतरवृत्ति-त्वानधिकरणसमस्तहेतुदोषाधिकरणधर्मवान् मेयत्वात्। तथा नित्यत्वं स्वस्वेतरवृत्तित्वानधिकरणमूर्तनिष्ठत्वरहितनिष्ठधर्माधिकरणं प्रमेयत्वादि-त्यादीनि अनुमानवचनानि साम्प्रतिकचित्रफलकदर्शनानीव नयनप्रसादीनि।

तथाहि तद्घटत्वे सतीत्यस्य वैयर्थ्याद् निग्रहस्थानविशेषो दोषः। किञ्च एतदतिरिक्तानित्यमूर्तत्वानधिकरणमूर्तान्य इत्यत्र एतदतिरिक्ता-

नित्यमूर्तत्वानधिकरणमूर्तत्वमन्यत्र क्वचित् प्रसिद्धं केवलमेतस्मिन्नेव घटे वा। आद्ये तद्भेदस्य सत्त्वाद् बाधः। द्वितीये तु तर्हि अयं घट एतद्-घटातिरिक्तान्य इत्येव फलितन्तथा च सिद्धसाधनम्। व्यर्थविशेषणत्वं साध्यञ्च। नित्यमूर्तत्वस्यानङ्गीकारात् अनित्यपदस्वारस्याभावश्च।

अन्त्ययोरनुमानयोस्तु वाच्यत्वादिताद्दशधर्मस्याङ्गीकारात् सिद्ध-साधनम्। साध्यविशेषणसार्थक्यचिन्तायां पूर्ववदवस्थानाभावात् तत एव नित्यमूर्तस्य परमाणोः सिद्धत्वात् मनसोमूर्तत्वं नित्यत्वमविज्ञातमिवानुमान-प्रवृत्तेश्च।

ननु अणुपरिमाणतारतम्यानुपाने तारतम्यं संख्या वा जातिर्वा अभावो वा, नाद्यः गुणे गुणानङ्गीकारस्य द्रव्यत्वापत्तिभिया सिद्धत्वात् परिमाणे संख्याया अभावात्। नापि द्वितीयः सजातीयेष्वेव तारतम्य-व्यवहारस्य दर्शनात् पूर्वमुक्तत्वाच्च, विभिन्नजातिसत्त्वे तारतम्याभाव-सत्त्वप्रसङ्गात्। अणुत्वमहत्त्वयोश्च परस्परासमानाधिकरणत्वात् तयो-स्तारतम्यभावस्यादर्शनाच्च। नापि तृतीयः अभावस्य विशेषणं विना केवलान्वयित्वाद् विशेषणप्रक्षेपे तु तत्रैव विकल्पापत्तेरिति न वाच्यम्, मतभेदेन द्वे रूपे त्रयो रसा इत्यादिप्रतीत्यनुरोधेन सामानाधिकरण्य-सम्बन्धेन द्रव्यवृत्तिसंख्याया एव गुणेऽङ्गीकाराद् अपेक्षाबुद्धिविषयत्व-संख्यायास्तत्र भाने स्वीकारे वा बाधाभावात्।

वस्तुतः सजातीयोत्कर्षापकर्ष एव प्रकृते तारतम्यमस्तु का क्षतिः। ताद्दशोत्कर्षापकर्षव्यवहारस्तु कारणगतसंख्याधीन इति न परिमाणा-धीनतयाऽन्योन्याश्रयापादनम्।

## परमाणुसाधनम्

ननु विश्राम्यतां परिमाणतारतम्यमवयवावयविप्रसङ्गश्च। तथापि महति त्रसरेणावेव। तस्यैव च नित्यत्वाभ्युपगमात्! तत्रैव नित्ये पृथिवीत्वादेर्वृत्तित्वं तस्यैव नित्यमूर्तत्वाभिधानात् नान्तिमानुमानविरोधः न च महत्त्वाभ्युपगमे तदुत्पादनाय स्वसमवेतसमवेतत्वसम्बन्धेन अनेक-द्रव्यवत्त्वस्य आवश्यकीयत्वात् तस्य सावयवत्वं सिद्धमिति वाच्यम्, त्रसरेणु-महत्त्वस्य नित्यत्वाभ्युपगमेन तस्यापि समाहितत्वात्।

किञ्च त्रसरेणुमहत्त्वं नित्यं महत्त्वे सति सजातीयोत्कर्षापकर्षो-भयानाधारत्वात् गगनादिमहत्त्ववदिति मितिबलेनापि प्रमितत्वम्। तथाहि गगनादिमहत्त्वमुभयमतेऽपि नित्यम्, तत्रोत्कर्षापकर्षोभयस्य सजातीयस्य

अभावः, सजातीयापकर्षाभावप्रयुक्तस्तथैव त्रसरेणौ सजातीयापकर्षसत्त्वेऽपि सजातीयोत्कर्षाभावप्रयुक्तस्य सजातीयोत्कर्षापकर्षोभयाभावस्य सत्त्वात् द्व्यणुकादीनाञ्चानभ्युपगमात् न स्वरूपासिद्धिव्यभिचारादयः।

न च पूर्वोक्तरीत्या अणुव्यवहारस्य प्रामाणिकत्वे अणुपरिमाणाश्रयस्य कस्यचिद्द्रव्यस्यावश्यकत्वमिति वाच्यम् अपकृष्टमहत्त्वस्यैवाणुव्यवहारगोचरत्वात्।

अत एव चित्सुखाचार्या अपि अर्थान्तरत्वादाद्यस्य चरमस्योपाधिमत्त्वतः। अन्यस्याभासतुल्यत्वात ॥ १ ॥ इत्यत्रार्थान्तरशब्देनोक्तवन्तः।

तथान्येऽपि विद्वच्छिरोमणयः त्रुटौ द्रव्यस्य विश्रामात् द्व्यणुकादेरलीकता इति कारिकया संक्षेपतः संगृह्य प्रत्यक्षविषयद्रव्यं महत्त्वशून्यासमवेतं जात्यन्यत्वे सति बाह्यप्रत्यक्षविषयत्वात् घटपटादितदीयगुणपवनस्पर्शशब्दादिवत्। अतीन्द्रियद्रव्यस्यापि पक्षान्तर्गतत्वात् तत्र च हेतोरभावात् स्वरूपासिद्धेः, परमते परमाणुष्वपि पक्षताया वारणाय च पक्षे प्रत्यक्षविषयत्वप्रवेशः। साध्येऽसमवेतत्वमात्रोक्तौ घटादौ व्यभिचारबाधौ। महत्त्वशून्यावृत्तित्वमात्रोक्तौ महत्त्वशून्ये मनसि दैशिककालिकविशेषणतया व्यभिचारादिसम्बन्धेन वा नित्यज्ञाने विषयितया वृत्तिनि व्यभिचारबाधाविति तत्तत्प्रवेशः।

इत्यनुमानेन त्रसरेणूनां सावयवत्वाभावसाधनेन न द्व्यणुकादिसिद्धिः। न च पक्षकुक्षिनिक्षेपाभावात् पवनपरमाणुसिद्धौ बाधाभावः तस्यापि प्रत्यक्षाङ्गीकारात्। अनङ्गीकारे वा द्रव्यं महत्त्वशून्यासमवेतं परिमाणवत्त्वादित्यनुमानपथेन तत्रापि पक्षताया निक्षेपणमित्याहुः।

तत्र न तावत् त्रसरेणुमहत्त्वस्य नित्यत्वसाधकमनुमानं बलवत्तरनियमप्रयुक्तम्, महत्त्वे सति सजातीयोत्कर्षापकर्षोभयानाधारत्वमस्तु नित्यत्वं मास्तु इति विपक्षबाधकानुकूलतर्कस्याभावात् महत्त्वेत्यादिसत्यन्तनिवेशस्य स्फुटतरफलानवगमाच्च। न च नित्यमहत्त्वं प्रति महत्त्वविशिष्टसजातीयोत्कर्षापकर्षोभयानाधारत्वस्य प्रयोजकत्वात् त्रसरेणुमहत्त्वं यदि नित्यं न स्यात घटादिमहत्त्ववदुभयाधार एव स्यादिति तर्कस्यानुकूलत्वं कलनीयम्। लाघवरूपबलवत्तरतर्कमूलत्वात् महत्त्वगतनित्यत्वं प्रति अपकर्षानाश्रयमहत्त्वस्यैव प्रयोजकत्वात्। तादृशहेतावुत्कर्षानाश्रयत्वस्य व्यर्थत्वेन हेतोर्व्याप्यत्वासिद्धिविशेषात्। अपकर्षानाश्रयमहत्त्वत्वेनैव गगनादिमहत्त्वे नित्यत्वसिद्धेश्च। प्रकृते चापकर्षानाश्रयमहत्त्वत्वस्य हेतुत्वे तु कपालादिमहत्त्वापेक्षयाऽपकर्षस्यैव त्रसरेणुपरिमाणे सत्त्वात् स्वरूपासिद्धिप्रसङ्गात्।

किञ्च गगनं विभु अपकर्षानाश्रयमहत्त्ववत्त्वादित्याद्यनुमानेन गगनस्य विभुत्वे सिद्धे गगनं नित्यं विभुत्वादिति युक्त्या नित्यत्वे सिद्धे नित्याश्रयकस्य परिमाणस्य नित्यत्वात् गगनादेर्महत्त्वे नित्यत्वं सिद्ध्यति। प्रकृते च त्रुटिः परिच्छिन्ना अपकर्षमहत्त्वाश्रयत्वात्। प्रत्यक्षविषयपरिच्छिन्ना च विभज्यमानेतिरीत्या त्रसरेणोः सावयवत्वसिद्धेः। अन्यच्चोक्तहेतुः साध्यव्यापकत्वे सति साधनाव्यापकस्यापकर्षानाश्रयमहत्त्ववत्त्वस्य उपाधित्वात् व्याप्यत्वासिद्धिः। किमुत त्रसरेणुरनित्यः सावयवो वा चाक्षुषप्रत्यक्षविषयत्वे सति महत्त्वाद घटवदित्यनुमानेन सावयवत्वं नित्यत्वाभावो वा सिद्ध्यति। केवलमहत्त्वस्यात्रोपादाने आकाशादौ व्यभिचारः, चाक्षुषप्रत्यक्षविषयत्वस्य हेतुत्वे तादृशे रूपादौ व्यभिचारः, चाक्षुषत्वानुपादाने जीवे व्यभिचार इति तद्वारणाय तादृशस्य हेतुत्वकथनम्।

ननु चाक्षुषत्वविशिष्टमहत्त्वमस्तु सावयवत्वमनित्यत्वं वा मास्तु इत्यत्र विपक्षबाधकस्तर्को नास्ति येन व्यभिचारसंशयापसारणेन व्याप्तिनिश्चयः स्थानं लभेतेतिवाच्यम्, यदि चाक्षुषे महति सावयवत्वन्न स्यात्तर्हि महत्त्वयोः, चाक्षुषन्न स्यात्, अथवा चाक्षुषं नानाद्रव्यजन्यं न स्यात्; इत्यापाद्यापादकभावनिर्णयेन त्रसरेणोश्चाक्षुषस्य चाक्षुषे नानाद्रव्यवत्त्वजन्यत्वस्य च आपाद्याभावस्य निश्चयात् आपादकाभावस्य सावयवत्वस्य सिद्धिः समापतति। न च कारणतावच्छेदकधर्मसंबन्धयोर्लाघवेन पञ्चमान्यथासिद्धिदूषितत्वाद् अनेकद्रव्यवत्त्वस्य चाक्षुषे कारणत्वमेव नास्ति किन्तु तादृशदूषणाभावभूषितस्य महत्त्वस्यैवेति वाच्यम्, भवतु नाम अन्यथा—सिद्ध्यन्यत्वघटितं जनकत्वं महत्त्वस्यैव परं तदघटितस्य प्रयोज्यप्रयोजकभावस्य केन वारणम्?। न च सर्वतो वलीयोऽस्त्रं लघीयस्त्वमेरण्डशिशपयोः कुठार इव मृदुन्यपि प्रयोज्यप्रयोजकभावे प्रवर्तताम्, का क्षतिरिति वाच्यम्, व्यभिचारनिश्चयासहकृतान्वयव्यतिरेकनिश्चयस्य प्रयोज्यप्रयोजकभावनिर्णयशरण्यस्य अपकृष्टमहत्त्वानेकद्रव्यवत्त्वयोरुभयोः सत्त्वात् प्रयोज्यप्रयोजकभावसंशये त्रसरेणोर्नित्यत्वस्यापि संशय एवावतिष्ठेत्। वस्तुतः पञ्चभिः षड्भिश्च पृथगारब्धयोरवयवपरिमाणसाम्येऽपि महत्त्वोत्कर्षापकर्षयोः संख्यायाः प्रयोज्यकत्वनिर्णयः। अवयवसंख्यासाम्येऽपि तूलयोः शिथिलाख्यसंयोगेन तादृशोत्कर्षापकर्षः। समानसंख्याकैर्विभिन्नपरिमाणैस्तन्तुभिः आरब्धयोः पटयोस्तस्य महत्त्वप्रयोज्यतया च अपकृष्टमहत्त्वं प्रति अवयवसंख्या-प्रचय-महत्त्वान्यतमस्यान्वयव्यतिरेकितया प्रयोजकत्वं सिद्धम्, तथा च अपकृष्टमहत्त्वं यदि नित्यं स्यात् तदाऽपकृष्टमहत्त्ववत्वा-

वच्छिन्नं प्रति ताद्दशान्यतमस्य प्रयोजकता न सिद्धयेदिति–आपत्तेः सुलभाया दुर्निवारत्वापत्तेः। किञ्च समानद्रव्ययोरुत्कृष्टापकृष्टमहतोः सतोश्चाक्षुषोत्कर्षापकर्षौ विषयतामायातावनुभवस्य कार्योत्कर्षस्य च कारणोत्कर्षाधीनस्य दृष्टचरत्वात्।

तथा च चाक्षुषोत्कर्षप्रयोजकतया महत्त्वोत्कर्षस्य चाक्षुषं प्रत्यपकृष्टमहत्त्वस्य कारणत्वमावश्यकीयम्। अपकृष्टमहत्त्वापकर्षस्य च अवयवसंख्याऽपीयस्त्वप्रयोज्यतयाऽङ्गीकरणीयस्य त्रसरेणुनिष्ठस्यापि अवयवसंख्याऽल्पीयस्त्वस्य प्रयोजकत्वं वाच्यम् इति सावयवत्वं सिद्धयति त्रुटेः।

एतेन—"महत्त्वानाश्रयस्पर्शवदन्यपरिमाणतः।
प्रत्यक्षं जायते सर्वं महत्त्वादेव तन्न तु॥"

अयं भावः। प्रत्यक्षसामान्यं प्रति महत्वानाश्रया ये स्पर्शवन्तोऽवच्छेदकतासम्बन्धेन तद्भेदवत्परिमाणं कारणम्, तथा च द्वयणुकादीनां महत्त्वशून्यस्पर्शवत्त्वस्यैव सत्त्वात् न प्रत्यक्षाभावेन व्यभिचारः। मनसि च तस्य जीवत्ववादिनाम्, इष्टत्वात् स्पर्शवत्त्वस्य निवेशः।

परमाणौ स्पर्शवत्त्वसत्त्वेऽपि व्यासज्यवृत्तिधर्मावच्छेदेन एको गच्छति न द्वौ इत्यादि प्रतीतिवत् महत्त्वानाश्रयत्वविशिष्टस्पर्शवतो भेदस्यापि व्यासज्यवृत्तिधर्मावच्छेदेन सत्त्वात् कार्यकारणभावो व्यभिचरेदिति हेतोस्ताद्दशभेदत्वेन लघुनापि कारणत्वमपहाय गुरुणा ताद्दशभेदवत् परिमाणत्वेन जनकत्वमिष्टीकृतम्।

न चावच्छेदकतासम्बन्धेन यथा ताद्दशभेदः परमाणौ तथा एकत्वेऽपि वर्तते तस्मान्महत्वानाश्रयस्पर्शवतो भेदादेकत्वत्वजातिमत्त्वेनापि कारणतायां क्षत्यभावात् विनिगमनाविरह इति वाच्यम् महत्त्वरूपनिखिलपरिमाणेषु कारणतायाः सर्वेषां मते क्लृप्ततया तेषु अन्यथासिद्धिशून्यत्वं सर्वैरादिपक्षीयम्। एकत्वस्य च ताद्दशस्य कारणतायामन्यथासिद्धिशून्यत्वमक्लृप्तकल्पनमिति लाघवस्वरसात् तेन रूपेण कारणताङ्गीकारकरणम्। किञ्च एकं द्रव्यमेको गुणः एका क्रियाऽभाव एक इत्यादिप्रतीतिषु एकत्वावगाहित्वस्य तुल्यतया द्रव्ये वैकत्वं न गुणेषु इत्यत्र विनिगमकाभावात् गुणादिष्वप्येकत्वस्य स्वीकारावश्यकत्वेन सर्ववृत्तिएकत्वापेक्षया द्रव्यमात्रवृत्तिपरिमाणत्वेन कारणताया लाघवम्। किञ्च युक्तिविरहात् प्रोक्तानुमानेन तदभावनिर्णयात् दीधितिकारादिसाम्प्रदायिकशिरोमणिभिः शिरोमणिभिः सानन्दमादृतस्य परमाण्वादीनामस्वीकारस्य।

पक्षे आत्मत्वेनाभिमतस्य मनसश्च प्रत्यक्षस्येष्टतया प्रत्यक्षे महत्त्वस्य कारणतैव नास्तीत्यादयो व्युत्सारिता वेदितव्याः। चाक्षुषप्रत्यक्षोत्कर्षापकर्षस्य अपकृष्टमहत्त्वोत्कर्षाधीनस्यानुभवसिद्धत्वेन महत्त्वस्य कारणतायाः दुर्निवारत्वात्। परिमाणे सामान्ये तु नोत्कर्षापकर्षौ सम्भवतः सजातीयेष्वेव तयोर्दर्शनात्। किञ्चोक्तकारणतायां परिमाणस्य परिचायकतयैव निवेशः। अपरञ्च परिमाणमात्रे चाक्षुषाभावाद् अपकृष्टमहन्मात्र एव चाक्षुषस्य सत्त्वाच्च न चाक्षुषस्य प्रयोजकत्वं परिमाणमात्रस्येति चाक्षुषेऽपकृष्टमहत्वस्य कारणतोचितैव।

महत्त्वानाश्रयत्वस्य महत्त्वत्वावच्छिन्नानाश्रयपर्यन्तानुधावनस्यावश्यकतया तदपेक्षया महत्त्वत्वजात्यवच्छिन्नत्वेन कारणतायां मेरुसर्षपयोरिव गुरुलघुभावो भासत एव। विनिगमककल्पनमपि नानुसन्धानपथे प्रयाति। तथाहि महत्त्वेषु अन्यथासिद्धिशून्यत्वस्य क्लृप्तत्वे परिमाणत्वावच्छेदेन तत्कल्पना नैवोत्तिष्ठेत्। अक्लृप्तत्वे तु कथं तमादाय विनिगमनाविचारः नापि परिमाणस्य अल्पीयस्त्वशङ्का गुणादिष्वप्येकत्वप्रतीतेः सत्त्वेऽपि गुणस्य द्रव्यत्वापत्तिभिया गुणे गुणानङ्गीकारस्य न्यायवैशेषिकयोः प्रसिद्धतया गुणादिषु गुणभिन्नानामेवैकत्वादीनामङ्गीकर्तव्यतया गुणैकत्वादिषु परिमाणापेक्षयाऽधिकसंख्यायाः अनङ्गीकारात्। एकत्वादिवत् अन्येषामप्यूह्यम्। परमाणुसिद्धिः। पूर्वोक्तानुमानविचारस्तु पुरस्तात्प्रस्तोष्यत इति।

किञ्च त्रसरेणुः सावयवः क्रियावत्वात् घटवदित्यनुमानस्य सावयवकत्वसाधनत्वं संभवति। न च मनसि व्यभिचारः सिद्धे परमाणौ तुल्यरीत्या तत्रापि प्रसक्तिश्चेति वाच्यम्, महत्त्वे सतीति विशेषणदानेनादोषात्।

अर्थान्तरत्वादाद्यस्येति दोषा वारिताः तथाहि त्रसरेणौ सावयवत्वसाधनेनार्थान्तरत्वमपाकृतम्। पृथिवीत्वं नित्यवृत्ति, इत्यत्रोपाधिविपरीतसाधनयोः पूर्वमेव वारणम्।

अयं घट इत्याद्यनुमानस्य सदनुमानत्वव्यवस्थापनेनानुमानाभावोऽपि परिहृत एव।

ननु परमाणूनामपि योगिप्रत्यक्षाभ्युपगमात् तस्य च निरवयवत्वात् चाक्षुषद्रव्यत्वं सावयवत्वस्यानैकान्तिकम्। न चास्मदादीति चाक्षुषे विशेषणदानेन निर्वाहः प्रतिवादिमतेऽणूनामस्वीकृततया तद्व्यावृत्यर्थमस्मदादिविशेषणस्य व्याप्यत्वासिद्धिसम्पादकत्वात्। वादिप्रतिवादिनोः साध्य

एव विवदमानयोः पक्षहेत्वोरुभयमतसिद्धयोरेवोचितत्वात्। एवमेव महत्त्वे सति क्रियावत्त्वादित्यत्र विशेषणस्य च सार्थक्याभावः, इति चेन्न योगिप्रत्यक्षस्य योगजन्यधर्मजन्यतयाऽलौकिकत्वात्, लौकिकत्वेन चाक्षुषस्य विशेषणीयत्वात्। विप्रतिपत्तिविषयपरमाणूनां व्यावृत्तये दीयमानस्य तस्यापि सार्थक्यं नोभयमतिप्रमितमिति चेन्न निरवयवातीन्द्रियाणामाकाशादीनामप्यलौकिकप्रत्यक्षत्वात् तत्रानैकान्तिकत्ववारणायैव तस्य निवेशात्। महत्त्वे सति क्रियावत्त्वादित्यादौ महत्त्वे सतीतिविशेषणस्य युगपत् ज्ञानानुत्पत्तिर्मनसो लिङ्गम् इत्यादिप्रमाणैः साधितस्य धर्मिग्राहकमानादेवाणीयसश्च मनसो वारणाय सार्थक्यसंभवः।

तथा च कणादसूत्रम् (तस्य कार्य्यं लिङ्गम्) अयं भावः-यत्र च द्रव्ये चाक्षुषं तत्र सर्वत्रैव सावयवत्वस्य प्रमानुभूतेः, तेन च कार्य्यत्वस्य स्फुटतया कार्य्येण द्रव्येण समवायिकारणस्यानुमानं कर्तव्यम्। सर्वेषामेव कार्यत्वस्वीकारेऽनवस्थापत्या यत्र चाक्षुषप्रत्यक्षादिकं गमकं नावगम्यते तत्र सावयवत्वस्य कार्यत्वस्य परिमाणापकर्षस्य च विश्रमो विधेय इति परमाणुसिद्धिः।

एतदभिप्रायकमेव। व्यक्तात् व्यक्तानां प्रत्यक्षप्रामाण्यात्, इति गोतमसूत्रम्। उत्पत्तिरिति शेषः। व्यक्तत्वात्, भूतसमाख्यातात् पृथिव्यादितः परमसूक्ष्मान्नित्याद् व्यक्तं शरीरेन्द्रियविषयकरणाधारं प्रज्ञानद्रव्यमुत्पद्यते इति तद्व्याख्याता वात्स्यायनाचार्य्यः। अत्र च परमसूक्ष्मपदेन परमाणुरभिधीयतेनित्यत्वन्तु शब्दत एव उक्तम्। अत्र कार्यकारणयोः सामान्यं व्यक्तत्वन्तु "रूपादिगुणयोगः" इत्यादिना भगवता भाष्यकृतैवाभिहितम्। प्रत्यक्षप्रामाण्यात् इतिशब्देन सजातीयात् सजातीयोत्पत्तिरेव व्याख्याता।

तस्मान्नात्र व्यक्तशब्देन महत्त्वमादाय प्रत्यवस्थेयम्। वार्तिकतात्पर्यटीकायाञ्च तथैव व्याख्यातम्।

## परमाणुव्यवस्थापनम्

किरणावलीकारा अपि यदि हि द्रव्यस्य चाक्षुषता महत्त्वमन्तरेण स्यात् दूरदूरतरादौ न महत्परिमाणप्रकर्षमनुविदध्यात्। यदि च सा अनेकद्रव्यतां नाद्रियेत महत्त्वमपि नाद्रियेत्।

तदव्यावृत्तौ तस्यापि व्यावृत्तेस्तस्य तत्कारणत्वात्। अन्यथा तत्प्रकर्षम् महत्त्वप्रकर्षो नानुविदध्यात्। तस्माद्विवादाध्यासितस्त्रसरेणुर्महाननेक-

द्रव्यवांश्च, अस्मदादिचाक्षुषद्रव्यत्वात् घटवत् इत्युक्त्वा अणुपरिमाणतारतम्यमिति द्वितीयानुमाने परस्पराश्रयदोषसमुद्धरणाय यदि नासौ (त्रसरेणुः) परमाणुः सन्तु तर्हि तदवयवा एव कार्यानुमिताः परमाणवः। न तेऽपि महान्तो रूपविशेषवतां महतां चाक्षुषत्वप्रसङ्गात् तथा च तेषाञ्च कार्यत्वे प्रमाणानवक्लृप्तौ तदवयवानुमानात्। यद्यपि चाणुत्वान्निरवयवत्वाच्च तेषां महत्परिमाणारम्भे न कारणं महत्त्वप्रचयौ स्तः तथापि बहुत्वसंख्याऽस्तीति सर्वं समञ्जसम्। अवश्यं हि त्रसरेणोरवयवैरनेकद्रव्यैर्भवितव्यम्। तस्य महत्त्वात् कार्यमहत्त्वं प्रति अवयवगतस्यानेकद्रव्यत्वस्यापि कारणत्वात्। अन्यथा महत्त्वस्य तत्प्रकर्षानुविधानानुपपत्तेः। तस्मात् त्रसरेणोरवयवाः सावयवा इत्येतावत्पर्यन्तमुक्तवन्तः। ततः स्पष्टमेव त्रसरेणोरवयवाः सिद्ध्यन्ति।

("साध्यत्वादवयविनि संदेहः" न्या० २-१-३ ; सूत्रेऽवयवातिरिक्तत्वमवयविनः साधयन्तो वार्तिककाराः परमाणूनामतीन्द्रियत्वात् अभिन्नस्यावयविनः प्रत्यक्षं न स्यादिति, समाहिते त्रुटौ विश्रामवादिनां मतमर्दनाय "एके तु वातायनच्छिद्रदृश्यं त्रुटिं परमाणुं वर्णयन्ति तन्न युक्तम् तस्य भेद्यत्वात् अभेद्यः परमाणुर्भिद्यते त्रुटिरिति। कथमवगम्यते भिद्यते त्रुटिरिति द्रव्यत्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वात् घटवदिति। कथञ्चान्यथा अभेद्यः परमाणुरित्युच्यते। अनित्यत्वाच्च (अनित्यत्वाच्च (त्रुटिः) न परमाणुः सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वाच्च। तस्मान्नैन्द्रियकाः परमाणव इति तेषामतीन्द्रियत्वात् यत्प्रत्यक्षं तदन्यदिति विरुद्धो हेतुः, इति सुस्पष्टमाख्यातवन्तः।

नन्ववयवत्वस्य दृश्यत्वव्याप्यतायाः प्रत्यक्षसिद्धतया त्रसरेणोरवयवैरपि दृश्यैर्भाव्यं स च प्रत्यक्षानुपलम्भबाधित एवेति त्रसरेणोर्निरवयवत्वं सिद्धम् इति चेन्न तेजसि व्यभिचारेण व्याप्तेरभावात्। तथाहि भर्जनकपाले सैकते वा पूर्वं प्रत्यक्षतोऽननुभूयमाना वह्नेरवयवाः पश्चाद्भाविभिर्दृश्यवह्निभिरनुमीयमाना अदृश्या अपि दृश्यतेजसः समारम्भका इति दृष्टचरम्।

## परमाणुसाधनम्

न च कपालादधस्तनस्येन्धनदहनस्य दृश्यस्य दृश्या एवावयवा विच्छिन्नत्वात् स्फुटमनवगम्यमानाः सम्मिलिता दृश्यमवयविनमारभन्ते तस्मान्नादृश्यस्य दृश्योपादानकत्वम् आयातमिति वाच्यम् उक्तव्याप्तौ

प्रयोजकस्यानुकूलतर्कस्य विरहात् । तथाहि दृश्यत्वन्न अवयवत्वनिबन्धनम्, अद्रव्यरूपादौ तदभावात्, नाप्याकस्मिकम् अदृश्यचक्षुरादेरपि क्वचिद्दृश्यत्व-प्रसङ्गात्, किन्तु महत्त्वोद्भूतरूपप्रयोज्यमिति सिद्धम्, तथा च दृश्यावयत्व-सत्त्वेऽपि महत्त्वादेर्दृश्यत्वप्रयोजकस्य परमाण्वादौ विरहात् दृश्यत्वाभावे का क्षतिः। न च तथापि महदारब्धत्वस्य प्रत्यक्षविषयत्वविशिष्टसावयव-द्रव्यत्वव्यापकतया त्रसरेणुर्यदि सावयवस्स्यात् महदारब्धस्स्यात् इति प्रतिकूलतर्केण महदारब्धत्वाभावात् सावयवत्वाभावो भवेदिति वाच्यम् उक्तव्याप्तेरप्यप्रयोजकत्वात् तथाहि यथा कथञ्चित् साहचर्येण व्याप्ति सिद्धौ प्रचुराणां हुविर्भुजामुद्भूतरूपवत्तामेवोपलम्भात् अनुद्भूतरूपकं चक्षुरादि तैजसं न सिद्ध्येत् किन्तु व्यभिचारसंशयवारकानुकूलतर्कसह-कारेण, तथा च महदारम्भकत्वस्य महत्त्वप्रयोजकत्वाभावात् परमाणुर्यदि महदारम्भकस्यात् महान् स्यादित्यापत्तेरसम्भवात् परमाण्वारब्धेऽपि त्रसरेणौ न क्षतिः, एवं त्रसरेणोः सावयवत्वे सिद्धे त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वादित्यनुमानेन तदवयवा अपि सिद्ध्यन्ति । त एव परमाणवः, न चाप्रयोजकत्वं शङ्क्यम् पूर्वोक्तकिरणावल्याद्युक्तदिशा अपकृष्ट-महत्वं प्रत्यनेकद्रव्यवत्त्वस्य प्रयोजकतायाः सिद्धतया अवयवसावयवाभावे तदनुपपत्तेः ।

अपकृष्टमहत्त्वस्य प्रयोजकं न महदारम्भकत्व-महदारब्धत्व-सावयवत्व-दृश्यावयवत्वादिकम् सर्वत्रानुगतमहत्त्वप्रचयाख्यसंयोगबहुत्वसंख्याऽन्यतमस्य प्रयोजकत्वेनोपपत्तौ तेषां व्यभिचारावारकत्वाद् गौरवाद् व्यर्थत्वाच्च ।

ननु परमाणुः सावयवो महदारम्भकारम्भकत्वात् कपालिकावदिति दृष्टान्तेन तस्यापि सावयवत्वं स्यादिति चेन्न त्रसरेणुमहत्त्वप्रयोजकस्य अनेकद्रव्यवत्त्वस्य द्व्यणुकावयवत्वसाधनेनैव सम्पत्त्या परमाणोः सावयवत्व-साधने अनुकूलतर्कविरहात् । प्रत्युत अनवस्थापत्तेः पूर्वोक्तमेरुसर्षपसाम्य-प्रसङ्गस्य च प्रतिकूलतर्कत्वेनोक्तानुमानस्य पराहतत्वात् ।

ननु गगनस्य सर्वगतत्वमङ्गीकृतं गौतमीयैरपीति सर्वान्तर्गतपरमाणु-गतत्वमवश्यमायातमिति सावयवत्वं परमाणूनामर्थात्सिद्धम् । प्रतिपादि-तञ्चैवमेव अक्षपादपादैरपि (आकाशव्यतिभेदात् तदनुपपत्तिः) (आकाशा-सर्वगतत्वम्वा ) इति ४-२-१८-१९ सूत्राभ्याम् ।

किञ्च ये त्रिकोणं चतुरस्रमित्यादिव्यपदेशभाजो भवन्ति मूर्तिमन्त-स्तेषां सावयवत्वं दृष्टं प्रसिद्धिश्च परमाणोः पारिमाण्डल्यस्येति परमाणुः

सावयवः संस्थानवत्त्वात् घटादिवत् । परमाणुः सावयवः आरम्भकत्वे सति मूर्तत्वात्, मनसि व्यभिचारवारणाय सत्यन्तनिवेशः कपालादिश्च दृष्टान्त इत्यपि प्रतिपादितं तैरपि ( मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ) इति न्या० ४–२–२३ सूत्रेण । इति चेन्न सूत्रयोः पूर्वपक्षसम्वलनरूपत्वात् युक्तीनाञ्चाभासत्वात् । तथाहि । आकाशव्यतिभेदेन सावयवत्वं समादधद्भिः किन्नाम आकाशव्यतिभेदत्वमिति स्फोरणीयम्, स हि परमाण्वाकाशसम्बन्धो वा संयोगो वा परमाण्वन्तःसंयोगो वेति त्रयोऽपि न विचारपथे समायान्ति । यदि परमाण्वाकाशसम्बन्धः सावयवत्वसाधकत्वेनोपन्यस्तश्चेत कालादिषु व्यभिचारीति कथं तत्साधयेत् । किञ्च विभोराकाशस्य सम्बन्धस्य सर्वत्र सत्त्वात् आकाशीयत्वस्याव्यावर्तकतया नीलधूमादिहेताविव व्यर्थविशेषणकत्वात् व्याप्यत्वासिद्धिविशेषः । नापि व्यतिभेदार्थः संयोगः ( संयोगोपपत्तेश्च ) इति न्या० ४–२–२४ सूत्रेण स्पष्टन्तस्योक्तेः पुनरुक्ततापत्तेः । नाप्यन्तिमोऽन्तशब्दस्यावयववाचककत्वात् नित्ये परमाणौ स्वरूपासिद्धत्वात् ।

अन्तर्बहिःशब्देन कार्यद्रव्यस्यावयवा एव व्यपदिश्यन्ते । उक्तमपि गौतमगुरुणैव (अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः) इति न्या० ४-२-२० सूत्रेण । नापि परमाण्ववयवसम्बन्धो व्यतिभेदार्थस्तत एव । किञ्च अवयविनोध्वंसप्रागभावान्यतरदशायां यस्य अवयवा विभक्ता उपलभ्यन्ते त एव सावयवा अभ्युपगम्यन्तेऽवयवविच्छेदस्याप्रामाणिकत्वे सावयवत्वे प्रमाणाभावात् । तथा च यदि तुष्यतु दुर्जन इति न्यायेन अभ्युपगमसिद्धान्तेन वा परमाणोरवयवाः स्वीक्रियेरन् तदाऽपि तस्य विभागे कारणाभाव इति सावयवत्वाभावे पर्यवस्यति । न तस्य आकाशः कारणम् विभागस्य कर्मजस्य स्वीकारात् । आकाशस्य विभागकारणत्वे तु सर्वदैव विभागप्रसङ्गात् न केचनावयविनोऽवतिष्ठेरन् । नापि क्रियासहकारितायां तस्य प्रमाणभावः । नैव चान्तः सुषिरं व्यतिभेदः । सर्वतोऽव्यवहितस्य यस्य मध्येऽवयवाः न सन्ति तत्सुषिरमुच्यते । न च परमाणोरवयवाः सन्ति तस्मात् पूर्वंदेवेति व्यतिभेद इति हेतुरहेतुरेव ।

न च गगनस्य परमाण्वन्तर्गतत्वाभावे सर्वगतत्वं व्याहतमिति वाच्यम्? सर्वमूर्तसंयोगित्वस्यैव सर्वगतत्वात् । तच्च परमाणोः संयोगमात्रेण सिद्धम् । न च तन्मध्यं किमप्यास्ते निरवयवत्वात् येन तदसंयोगेन विभुत्वं व्याहन्येत । किञ्च सर्वदेशावच्छेदेन शब्दाश्रयत्वम् अस्पर्शवत्त्वप्रयुक्ताश्च अव्यूहादयो

धर्मा आकाशस्येति ( सर्वसंयोगशब्दविभवाच्च सर्वगतम् ) अव्यूहाविष्टम्भ-विभुत्वानि चाकाशधर्मा इति ४-२-२१-२२ न्यायसूत्राभ्याममभाणि ।

यश्च विभागाश्रयावयवकः स न परमाणुरिति बाधश्च । तथाहि अवयवावयविप्रवाहपरम्परायां यत्र विश्रान्तिः । यतो नाल्पीयः किमपि स एव परमाणुनाम्नाऽम्नायते । तथा च तस्याकार्यत्वात् कारणविनाशादव-यवविभागाद् वा नाशासम्भवेन सावयवत्वं न सिध्यति ।

नापि संस्थानवत्त्वादिति हेतुः साधीयान् । तथाहि सामान्यतः संयोग-स्योक्त सूत्रेणोक्तत्वादवयवसंयोग एव संस्थान शब्दार्थः प्रतिपत्तव्यः । मूर्तिश्च परिच्छिन्नपरिमाणवत्त्वमाकाशादिव्यावृत्तं मूर्तिश्चाव्यापि द्रव्यस्य षड्विधं परिमाणम् अणुमहद्दीर्घं ह्रस्वं परमह्रस्वं परमाण्विति वार्तिकोक्तत्वात् । तथा च अवयवसंयोगरूपसंस्थानवत्त्वादिकन्तु नित्ये निरवयविनि परमाणौ स्वरूपा-सिद्धम् । नापि मूर्तत्वादिति सावयवत्वे प्रमाणम् ? यतोऽनवस्थाभियाऽन्ततो निरवयवस्य परमाण्वयवस्यावश्यमभ्युपगमनीयतया तत्रैव हेतोरनैकान्ति-कत्वात् । न च तस्याप्यवयवाः सिद्ध्यन्तु पूर्वोक्तानवस्थामेरुसर्षपसाम्य-प्रसगरूपापत्तेः सुस्थिरत्वात् । किञ्च परमाणुशब्देनैवार्थान्निरवयवत्वस्य पर्यवसिततया परमाणुः सावयवश्चेति व्याहतार्थकम् । अवयवशब्देन समवायिकारणत्वस्यैवोक्ततया सावयवत्वस्य च समवेतकार्यरूपतया नित्यस्य परमाणोः कार्यत्वाभावात् । ननु परमाणुशब्दाभिधेयश्च यतो नाल्पीयान् कश्चित् स एव । तथा च एकपरमाणुजन्यत्वाङ्गीकारेऽपि सर्वतोऽल्पीयस्त्वस्य सिद्धतया सावयवत्वस्य कार्यत्वस्य च स्फुटतया न व्याहतार्थकं प्रतिज्ञावाक्यमिति चेन्न अवयविन एकावयवकत्वासम्भवात् सावयवपदघटितवाक्यस्य व्याहतार्थत्वात् । किमुतावयविनः ? न कस्य-चित् कार्यस्यापि एककारणकत्वं दृष्टं यत् दृष्टान्ततयोपन्यस्येत ।

प्रतियोगिमात्रजन्यत्वमङ्गीकुर्वतां क्षणिकवादिनां विवादस्तु परि-हरिष्यते पश्चात् । तथा परमाणोर्नित्यैकपरमाणुपूर्वकत्वे कारणस्य सततं सत्त्वात् सामग्र्या अनपेक्षणात् परमाणोः प्रागभावाभावेन आरम्भोऽपि न स्यादिति विनायकं प्रकुर्वतः मर्कटसम्पत्तिरिव नित्यत्वमेव सिद्ध्येत् । नापि शब्दस्योत्तरस्य पूर्वशब्दमात्रकारणकत्वं विश्वसनीयम् आश्रयस्य कुड्यादेः प्रतिबन्धकस्याभावादेरपि कारणत्वस्य प्रसिद्धत्वात् । किञ्च अव-यवेन सहितः सावयव इति व्युत्पत्त्या अवयवकार्ययोरुभयोर्विद्यमानताया-मेव सावयवत्वव्यवहारः प्रामाणिकः ।

परमाणोश्च कार्यस्य समये नावयवः कारणं वर्तते यतोऽयमवयवी अयञ्चावयव इति व्यवहारश्च स्यात् । न चैकस्य स्वनिरूपितमेवाऽवयवत्व-मवयवित्वञ्च दृष्टचरम् । संस्थानत्वात् इति हेतोस्तु सावयवत्वपर्यव-सिततया साध्यहेत्वोरैक्यापत्तिः ।

यदि संस्थानशब्देन अविभुद्रव्यस्य परिमाणमुच्यते चेत् मूर्तत्वादित्यने-नैवायातमिति पुनरुक्तताऽपतेत् । ननु संयोगस्याव्याप्यवृत्तित्वस्य सिद्धतया द्व्यणुकारम्भकसंयोगस्य परमाणोः किञ्चिद् देशावच्छेदेन वक्तव्यतया अर्थात् परमाणोः सावयवत्वं सिद्ध्यति । उक्तञ्चेदमेव संयोगोपपत्तेश्च इति न्यायसूत्रेण । अथवा संयोगित्वसावयवत्वयोः संयोगित्वं यदि सावयव-त्वव्यभिचारि स्यात् अव्याप्यवृत्ति न स्यात्, इति तर्कबलात् व्याप्य-व्यापकभावग्रहणे तेनैव सावयवत्वं सिद्ध्येदिति । किञ्च चतुर्षु दिग्भागेषु उपर्यधः प्रदेशयोश्च षड्भिः परमाण्वन्तरैः संयुज्यमानः परमाणुः षडंशो घटादिवत् प्राप्नोति ।

यदि षण्णामपि संयोगानां समानदेशतास्वीक्रियेत प्रचयाभावात् पिण्ड आरम्भमाणोऽपि परमाणुपरिमाणक एवापद्येत, गीतञ्चेदमेव ।

षट्केन युगपद्योगात् परमाणोः षडंशता ।
षण्णां समानदेशत्वे सिद्धः स्यादणुमात्रकः ॥

इति कारिकयेति चेन्न संयोगिभ्योऽतिरिक्तस्य संयोगस्य चित्सुखा-द्याचार्यैः खण्डितत्वात् स्वीकारे सिद्धान्तभङ्गात्, भेदास्वीकारे संयोगस्य परमाणुस्वरूपत्वात् हेतोः परमाणुत्वे पर्यवसानात्पक्षतावच्छेदकहेतोरैक्या-पत्तेः । अपरञ्च संयोगो भिन्नदेशोऽभिन्नदेशो वेति विकल्पः परमाणुद्वय-संयोगमधिकृत्य चेत् भिन्नदेश इत्युच्यते । यदि षण्णां संयोगानेकपरमाणु-वर्तिनोऽधिकृत्याक्षेपश्चेत् समानदेशा इति समाधीयते का क्षतिः । वस्तुतः समानदेशविभिन्नदेशवृत्तित्वस्य निर्देशे परमाणुवृतिसंयोगे विकल्प एव व्याघा-तान्न भविष्यति ।

न च द्रव्याणां समानदेशतया विरोधात् षण्णां समानदेशाः संयोगा इति व्याहतार्थम् इति वाच्यं कार्यकारणयोरेकाधिकरणवृत्तितयोक्तनियमा-नादरात् । विद्यन्ते शिखरे कियन्तो द्रव्यविशेषाः, वस्तुतो द्रव्याणां मूर्तानां समवायेनैव समानदेशताविरोध एककालावच्छेदेनाङ्गीक्रियते, संयोगे न तु समानदेशावच्छिन्नत्वमेव अविरुध्यतया समानदेशवर्तिनः समवायिन

एवं रूपादयः स्थौल्यानारम्भका दृष्टाः इति, द्रव्याण्यपि समवायेन स्थौल्यविरोधीनि, संयोगेन न तेषां स्थौल्यारम्भकत्वे बाधकम् इति।

नापि संयोगस्याव्याप्यवृत्तितया दोषदानं सम्यक्, व्याप्यवृत्त्यव्याप्यवृत्तिजातीयतयोर्विरोधे मानाभावाद् परमाणौ व्याप्यवृत्तेरेव संयोगस्याङ्गीकारे बाधाभावात्। कालिकमव्याप्यवृत्तित्वमपि स्वोत्पत्तिपूर्वकालावच्छेदेन सिद्धमेव। श्रु.ति.युक्तिसिद्धतयाऽनवस्थापरिहाराय परमाणोर्विलक्षणसंयोगस्वीकारे बाधाभावः। फलमुखगौरवस्यादोषत्वात्, वस्तुतस्तु दिगवच्छेदेनापि तस्याव्याप्यवृत्तित्वं निर्वहतीति न किञ्चिद् दूषणम्।

नापि संयोगित्वव्यापकत्वं सावयवत्वस्य, आत्ममनसोर्निरवयवयोः संयोगिनोर्व्यभिचारात्। नित्यानां संयोगानङ्गीकारे ज्ञानादौ आत्ममनसोः संयोगस्य कारणत्वमेव न स्यात्। अव्याप्यवृत्तित्वस्य सावयवत्वमात्रप्रयोज्यताया अभावावन्यथासिद्धत्वाच्चोक्ततर्केऽप्यनुकूलताया अभावात्।

यत्पुनः षड्भिर्दिग्भिः सम्बन्धात् षडंशताऽऽपादिता परमाणूनां तत्तु न वास्तविकं दिश एव वस्तुत एकत्वात्, उपाधिकल्पितैर्देशैश्चेत्सम्बन्धो व्यावहारिकोऽस्तु मुख्यतश्चैकस्या दिशः सम्बन्धोऽस्तीति सा न बाधिका। नैकपरमाणुसम्बन्ध इव अनेकदेशसम्बन्धोऽप्यस्तु का क्षतिः? नहि संयोगस्य अवयवावच्छिन्नत्वनियमः नित्यस्यापि परिच्छिन्नस्य परमाणोर्दिगुपाधित्वमस्तु। तथैव तस्य देशस्यच्छायावृत्ती सम्पत्स्येते। वस्तुन आवरणे देशस्य नापेक्ष्यकता किन्तु मूर्तिमत्स्पर्शवत्त्वस्य, मूर्तिमत् स्पर्शवद्द्रव्यं हि स्वसम्बन्धेन तादृशपरद्रव्यस्य तस्मिन् स्थाने सम्बन्धप्रतिषेधरूपमावरणं विदधातीति स्पष्टं वार्तिके।

एवमेव विरलतेजःसम्बन्धप्रयुक्ता छायाऽपि सिद्ध्यति। न च तस्यैव तमस्त्वमाशंकनीयम् सर्वतो व्यावृत्तप्रौढप्रकाशकतेजःसम्बन्धस्यैवतन्निमित्तत्वात्। नैव च छायायां देशस्य कारणता, मूर्तिमता स्पर्शवता च परमाणुना तेजःपरमाणुसम्बन्धस्य वारणात् आवरणच्छाये सम्पत्स्येते।

एवमेव परमाणोः सावयवत्वसाधकाः क्रियावत्त्वात् स्पर्शवत्त्वात् द्रव्यारम्भकत्वात् परत्वापरत्वाश्रयत्वात् इत्यादयो हेतवः पूर्वोक्तप माणुपदस्य व्याख्यानात् व्याहतार्थप्रक्रियावाक्यत्वाद् अनेकान्तिकत्वादप्रयोजकत्वाद् आश्रयासिद्धेः धर्मिग्राहकप्रमाणेनैव परमाणोः सिद्धेः अनवस्थादिदोषदुस्स्थत्वाच्च पराहता वेदितव्याः। किञ्च ये क्रियावत्त्वादिहेतुं प्रयोजयन्ति ते प्रष्टव्याः हेतवोऽनित्यत्वस्य कारकाः ज्ञापका वा? नाद्य उत्पादस्य

नाशस्य वा फलतोऽनित्यत्वस्य करणम्। तत्रापि यद्याद्यम् अनुत्पन्ने क्रियावत्त्वं क्व तिष्ठेत् नाप्यन्त्यम् अवयवक्रिया एव अवयविनो नाशिका न तु तत् क्रियैवेति दर्शनम्। अथ जन्मवत्त्वं क्रिया चेत् स्वरूपासिद्धः। जन्मन एवासिद्धत्वात्। ज्ञापकत्वे तु न तदनित्यत्वोत्पादकं लभ्यम् इति तदेवान्वेषणीयम्। एनान् सर्वान् अविद्यामूलान् हेतुप्रयोगान् प्रदर्शयन् भगवान् कणभुगाह (अविद्या) इति।

यस्तु ज्योतिर्विदा ये केचन मूर्ताः सन्ति तेषां सर्वेषामपि वर्गमूलं भवति। वर्गमूलमपि तस्मादल्पीयः। एवमेकस्यापि मूलं तृतीयांशोभवत्येव तथैव परमाणुरपि मूर्तस्तस्यापि नानांऽशाः सेत्स्यन्त्येव ? किन्तु शून्यस्य वर्गमूलं शून्यमेवायातीति शून्यान्नाल्पीयःकिमपि तस्मात् जगतः सूक्ष्मावस्थाशून्यमेव, शून्यादेव सर्ग इति शून्योपादानवादः द्वयोर्द्विःकरणे चत्वारो भवन्तीत्यत्र यथा न प्रमाणान्तरमपेक्ष्यते तथैव प्रमाणान्तरानपेक्षेण स्वतन्त्रेण गणितेन प्रमाणेन प्रमाणित इति प्रतिपादितस्तत्र शून्यस्यापि विभागो भवत्वित्यापादिते नासावंशीन तस्मादल्पीयः किमपीति तैरुत्तरे दत्ते तथैव परमाणुरित्युत्तरन्।

## तथा च शब्दः प्रमाणम्

छान्दोग्योपनिषदि अणुरुपादानं जगत इति पुत्रं बोधयित्वा पित्रा पुत्रः (आसां वटधानानां मध्ये एकं भिन्धि) इत्युक्तः। भिन्ना भगव इत्युवाच पुत्रः। किमत्र पश्यसीति पित्रोक्ते न किमपीति पुत्र उत्तरितवान्। पुनः पित्रा अणिमानं न पश्यसीत्युक्तम्। अनेन सन्दर्भेण स्थूलानां प्रत्यक्षविषयाणां महतामवयवविभागपरम्परायां परमाणवोऽवयवा न दृश्यन्त इति सूचितम्। त्रसरेणुपर्यन्तस्य प्रत्यक्षतया द्व्यणुकमात्रे विश्रामाङ्गीकारे (अणुं न पश्यसि) इत्येव पर्याप्तं स्यादतिशयं इमनिचो वैयर्थ्यात् परमाणुपर्यन्तं तात्पर्यम्। किञ्चात्र वटपदोपन्यासेन यथा महान्तोऽपि वृक्षाः परमाप्रकृष्टात् बीजात् समुद्भवन्ति तथैव इयन्तोऽपि स्थूलाः पृथिव्यादयः सूक्ष्मं परमाणुं समवयन्ति' इति परमाण्वारब्धत्वे भगवतस्तात्पर्यमन्यथा आम्रबीजादय एवोदाह्रियेरन्। एवमेवैतत्प्रकरणस्य बहूनां (अणोरणीयान्) इति श्रुतीनां परमाणुद्व्यणुकयोस्तात्पर्यम्। तथैव गवाक्षविवरप्रसृतेषु सप्तसप्तिप्रकाशेषु योऽणीयान् भागो दृश्यते स त्रसरेणुस्ततोऽल्पीयान् परमाणुरिति।

जालान्तरगते भानौ योऽणीयो दृश्यते रजः ।
परं तत्परमाणूनां परिमाणं प्रचक्षते ॥

ब्रह्मपुराणे प्रतिपादितम् ।

एवमेवैकवाक्यत्वाय—

जालसूर्यमरीचिस्थं यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुरिति स्मृतः ॥

अस्मिन् पद्ये महत् परिमाणानां प्राथम्यं त्रसरेणुपरिमाणे व्याख्येयम् । अन्यथा त्रसरेणुपदस्य केवलरूढत्वे मानाभावः प्रसज्येत् कुशलमण्डपादिपदानामपि बहुभिर्योगरूढित्वेन व्याख्यातत्वात् । एवमेव—

तस्य षष्ठतमो भागः परमाणुर्निगद्यते ॥

इति पाठेन न प्रतिकूलता ।

## द्व्यणुकसाधनोपक्रमः

"जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोर्ह्रासदर्शनतो ह्रासः सम्प्रदायस्यमीयताम्" इत्यादिकुसुमाञ्जलिप्रदत्तश्रुतियुक्तिभिः प्रमाणिते प्रशस्तपादपादप्रतिपादितप्रक्रियया सञ्जाते प्रलयेऽनन्तरम् वर्षादिवद्भूवोपाधिवृत्तिरोधः सुषुप्तिवत् । उद्भिद्वृश्चिकवद्वर्णाः मायावत् समयादयः । इति कुसुमाञ्जलिप्रकारेण सृष्टेरादिकालीनाया अनुपपत्तेः परिहारात् 'तत्तेजोऽसृजत' प्राणानसृजत, आत्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः, इत्यादिश्रुतिभिः कार्यत्वेन हेतुना आदिमत्त्वानुमानाच्च प्रमापितस्य सर्गस्य वैशेषिकभाष्यभूषितपथेन उपक्रमणे परमेश्वरचिकीर्षावशात् परमाणुकर्मणा परमाणुद्वयसंयोगेन द्व्यणुकोत्पत्तिः ।

ननु ( न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति ) इत्यादिश्रुतिभिः न हि कश्चिन् प्रेक्षावान् मन्दोपक्रमामपि प्रवृत्तिमफलेषु स्वानुपयोगिषु जलताडनादिषु करोतीति प्रत्यक्षेण च प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वव्याप्यतया निष्प्रयोजनं प्रवर्तमान ईश्वरोऽप्रेक्षावान् स्यात् प्रयोजनवान् वा स्यात् । तदुभयमपि सर्वज्ञत्वश्रुतेराप्तकामत्वश्रुतेश्च विरुद्धं याति इति सृष्ट्युपक्रमो न प्रामाणिक इति चेन्न प्रेक्षावतोऽपि राजामात्यादेः कौतुकवशादेव परिश्रमसाध्येऽपि क्रीडादिषु प्रवृत्तेः प्रयोजनमननुसन्धायापि श्वासप्रश्वासप्रचलनात् उक्तनियमानादरात् । स्पष्टञ्चेदं ( लोकवत्तु लीलाकैवल्यम् ) इति ब्रह्मसूत्रशांकरभाष्ययोः । नैयायिकानान्तु-

जीवनयोनिप्रयत्नस्य प्रयोजनमनपेक्षमाणस्य प्रकृते दृष्टान्तत्वम्। वस्तुतो नैयायिकानां धर्मिग्राहकादीश्वरसाधकप्रमाणादेव महेश्वरचिकीर्षायाः कृतेश्च लाघवात् नित्यत्वसिद्धौ प्रवृत्तौ कारणापेक्षैव नास्तीति सुगमः पन्थाः।

न च नित्यसृष्टिप्रवृत्तिदोषो लब्धवृत्तीनां प्राण्यदृष्टानां सहकारस्वीकारात्। अत एव वैषम्यनैर्घृण्ये समाहिते। यथाहि पर्जन्यो व्रीहियवादौ कारणं भवन् समानमेव सर्वेषु वर्षन् बीजविशेषादेव कार्यविशेषं सम्पादयति।

तथैव परमेश्वरोऽपि प्राणिनां पुण्यपापान्यनुरुध्य कार्यविशेषं सम्पादयति। भगवान् ब्रह्मसूत्रविधाताऽपि ( वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ) इति सूत्रितवानेतद्विषयकम्। ब्रह्मणः कर्मापेक्षत्वे। एषह्येवासाधुकर्म कारयति तं यमधो निनीषते, कौषीतकीब्राह्मणे ३-८-७७ पुण्यो वैपुण्येन कर्मणा भवति पापः पापेन बृहदारण्यके ३-२-१३ इति श्रुतयः ( ये यथा मां प्रपद्यन्ते तां तथैव भजाम्यहम्, गीता, ) इति स्मृतयश्च प्रमाणभूताः।

न च सर्गस्य कर्म्मापेक्षकत्वे कर्मणामपि सृष्टिमन्तरा असम्भवात् सर्गापेक्षकत्वे परस्पराश्रयत्वं दोष इति चेन्न बीजाङ्कुरवत्तस्यादोषत्वात्। न च सृष्टौ वैचित्र्याभावः शंकनीयः सर्गप्रलयस्याऽनादित्वात् कर्मणामेव विचित्राणां प्रवाहात्। आदिमत्वे निमित्तमन्तरोत्पत्तिस्वीकारे विमुक्त्यनन्तरमपि बन्धनं प्रसज्येत। कार्यकारणभावस्यानादित्वं साधयता श्रीमता कुसुमाञ्जलिकृतापि प्रवाहो नादिमानेषः। इत्यादिकारिकया संसारप्रवाहस्यानादित्वमाविष्कृतमेव। अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, इत्यादिश्रुतयोऽपि आत्मनः शरीरापेक्षिकजीवत्वमुद्घोषयन्त्यः सर्गमनादि प्रमाणयन्ति। सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्। इति ऋक् संहिता १०-१९०-३० ( न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्नच संप्रतिष्ठा ) ५-३ इति गीता चैवमेवानुकूला।

यत्तु वेदान्तविद्यावशमापन्नः निरवयवयोः संयोग एव न भविष्यति सावयवत्वसंयोगित्वयोर्व्याप्यव्यापकभावग्रहात्, परमाणुपक्षानङ्गीकारेऽपि संयोगित्वं सावयवमात्रवृत्ति संयोगिमात्रवृत्तित्वात् घटत्ववदित्याद्यनुमानाच्चेत्याह तत्तु साम्प्रदायिकानामेव तोषावहम्। तथाहि श्रुतियुक्तिसिद्धत्वात् नित्यानामपि संयोगाङ्गीकारात् पूर्वोक्तव्याप्तौ व्यभिचारात्। परमाणुपक्षकसंयोगित्वसाधने धर्मिग्राहकमानात् परमाणुः सिद्धः। परमाणुपक्ष-

काभावेऽपि संयोगो निरवयवद्रव्यसमवेतः द्रव्यमात्रवृत्तिकत्वात् द्रव्यत्ववत्, इत्यनुमानेन परमाणौ संयोगस्य सिद्धेः निरवयवद्रव्यञ्चोभयमते ब्रह्मैव ।

न च सावयववृत्तित्वमुपाधिः परमेश्वरस्यापि विभुत्वेन संयोगस्वीकारात् तद्वृत्तिधर्मे उपाधित्वासमन्वयाच्च नापि द्वितीयमनुमानं सावयवत्वसंयोगित्वयोस्तन्मते समव्यावृततया साध्यहेत्वोरैक्यात् । द्रव्यवृत्तित्वेन संयोगिमात्रवृत्तित्वेन व्याप्तौ विरोधाभावात्, संयोगित्वं द्रव्यमात्रवृत्ति, इत्यनुमानप्रयोगे बाधकाभावात्, संयोगित्वस्यापि संयोगिमात्रवृत्तित्वात् फलतः सिद्धसाधनपर्यवसानात् । इत्यलमपरनिरीक्षणेन । ननु परमाणव एव त्रिप्रभृतयः साक्षात् त्रसरेणोरारम्भकाः भवन्तु त्रित्वसंख्याबलादेव महत्त्वोत्पत्तेः द्वचणुककल्पनं व्यर्थमेवेति चेन्न परमाणवो न साक्षात् स्थूलारम्भकाः परमाणुत्वे सति बहुत्वात् घटोपगृहीतपरमाणुवत् । घटोपगृहीताश्च परमाणवो यथा न साक्षात् स्थूलारम्भकाः, किन्तु त्रसरेणुकपालिकाकपालक्रमेणैव । अन्यथा घटध्वंसे कपालिकाः कपालादयोवयवा नोपलभ्येरन् । तेषां तदवयवत्वाभावात् । उपलभ्यन्ते चेति तत्क्रमेणैव तेषां सृष्टिः । द्वचणुकमपि न साक्षात् त्रसरेणोरारम्भकं स्यादणुत्वादिति परमपदम् । परमाणुद्वयमपि स्वापेक्षया स्थूलद्वचणुकमारभत इति बहुत्वादित्युक्तम् । परमाणूनामपि द्वचणुकादिपरम्परया स्थूलारम्भत्वदर्शनात् साक्षादिति पदप्रवेशः, तस्मात्परमाणुद्वयादेव द्वचणुकोत्पत्तिः । न त्रिप्रभृतिभिर्बहुभिः परमाणुभिः कस्यचिद् द्रव्यस्योत्पत्तिः । द्वचणुकञ्च बहुत्वविशिष्टाजन्यत्वात् महत्त्वाभाववत् ईश्वरीयापेक्षाबुद्धिजन्यपरमाणुगतद्वित्वसंख्याजन्यपरमाण्वापेक्षिकविलक्षणाणुपरिमाणवच्चेति द्वचणुकसिद्धिः । क्रियावतोर्द्वयोः परमाण्वोः आरम्भकसंयोगाभावे प्रमाणाभावादपि द्वयणुकसिद्धिः । त्रिभिः परमाणुभिः द्वाभ्यां द्वयणुकाभ्याञ्चारब्धस्य अणुविशेषस्य भोगविशेषजनने प्रमाणाभावाद् व्यर्थत्वान्न तयोः सृष्टिः ।

## त्रसरेणुसिद्धिः

'त्रिवृत्तं करवाणि, इति श्रुतेर्द्वयणुकत्रयादेव द्रव्यारम्भनियमाद् द्रव्यस्य द्वयणुकद्वयारब्धस्याप्रसिद्धत्वात् द्वयणुकद्वयस्यारम्भकत्वमप्रसिद्धम् । वेदान्तिमतीयपञ्चीकरणप्रक्रियायान्तूक्तश्रुतेरुपलक्षणपरतया व्याख्याने न तादृक् प्रामाण्यं यथा नैयायिकमते संगच्छते । तस्मात्द्वयणुकत्रयात् त्रसरेणुसिद्धिः ।

ननु द्वयणुकसिद्धयनुमानवद् द्वयणुकानि न साक्षात् महदारम्भकाणि द्वयणुकत्वे सति बहुत्वादित्यनुमानेन द्वयणुकद्रव्येणापि द्वयेन किमप्यवश्यमा-

रब्धत्वमन्यथाऽप्रयोजकत्वे द्वयणुकसिद्धिरेव पराहता स्यादिति चेन्न घटोपगृहीतद्वयणुकवदिति दृष्टान्तबलाद् विशेषरूपेणैव व्याप्तेः प्रामाण्याद् द्वयणुकानि नाहृत्य विनाशानन्तरोपलभ्यमानावयवकमहदारम्भकाणि द्वयणुकत्वे सति बहुत्वाद् घटोपगृहीतद्वयणुकवदित्यनुमानस्यैव उक्तत्वात्। घटोपगृहीतद्वयणुकेषु प्रत्यक्षविषयकपालकपालिकाद्यारम्भकत्वं साक्षात्सिद्धम्। त्रसरेणुसाधकत्वाभावे प्रमाणाभावात्, घटस्य शनैः सूक्ष्मरूपेण विभागकरणे त्रुटेः प्रत्यक्षविषयकत्वेन प्रमाणसिद्धत्वात्। त्रसरेणोरुपलभ्यमानावयवकत्वाभावादेव तदारम्भेऽपि न दोषः।

नन्वेवं परमाणुपक्षकानुमानेऽपि प्रत्यक्षसिद्धतादृशव्याप्तिबलेन तदेव साध्यं प्रविशेत्, तथा च त्रिप्रभृतिभिः परमाणुभिरेव महतस्त्रसरेणोरुत्पत्तिसम्भवे द्वयणुकमप्रामाणिकं स्यादिति न शङ्कनीयं प्रकारान्तरेण परमाणुद्वयस्यारम्भकत्वस्यावश्यमुपेयत्वात्। तथाहि घटकपालकपालिकादिषु अवयविनोऽपेक्षया गुरुत्वापकर्षोऽवयवेषु सर्वमतसिद्धः। गुरुत्वोत्कर्षापकर्षौ तु तन्मूलभूतपरमाणूत्कर्षापकर्षाधीनौ। परमाणूत्कर्षापकर्षौ च तद्वृत्तिसंख्याया न्यूनत्वाधिकत्वे, सा संख्या च आरम्भिकैव ग्राह्या, अनारम्भकसंख्यायाः पदार्थान्तरमादायोभयत्र तुल्यत्वात् गुणस्य साक्षाद् द्रव्यारम्भकत्वविरहाद् असमवायिकारणसंयोगविशेषारम्भकावयवेषु पर्याप्तिसम्बन्धेनावच्छेदकतयैव सख्यानामारम्भकता, तत्रैकत्वसंख्याया असमवायिकारणसंयोगविशिष्टत्वासम्भवः। एकस्य संयोगानङ्गीकारादनारम्भकत्वाच्च। त्रित्वादेश्च तादृशत्वेऽपि अवयवगतत्रित्वापेक्षया अवयवगतद्वित्वस्य अधिकस्थले सम्भवात् तस्य गुरुत्वोत्कर्षापकर्षप्रयोजकत्वसंभवः। सर्वाभ्य आरम्भकसंख्याभ्यो न्यूनाद्वित्वसंख्यैव गुरुत्वोत्कर्षापकर्षप्रयोजिकेति व्यवस्थेयम्। परमाणुद्वयसंयोगस्यानारम्भकत्वे परमाणुगतद्वित्वस्य आरम्भकत्वमसिद्धमेव। एवं परमाणुगतद्वित्वस्य आरम्भकत्वाय परमाणुद्वयसंयोगस्य आरम्भकत्वे द्वयणुकसिद्धिरप्रत्यूहैव। द्वयणुकद्वयारब्धस्य महत्त्वाभावात्पूर्वोक्तरीत्या व्यर्थतैवायादिति त्रसरेणुसिद्धिः। इमान् परमाणून् अन्ये दार्शनिकास्तन्मात्राशब्देन व्यवहरन्ति। यतो नाल्पीयः सूक्ष्मं निरवयवञ्चेति तेषामपि मान्यता। गुणगुणिनोरभेदवादिनस्ते गन्धतन्मात्रारसतन्मात्रेत्यादिशब्दैः परिभाषन्ते। गन्धरसादेरुद्भूतत्वापेक्षया नैयायिका अपि तथा व्यवहर्तुं शक्नुयुः। आकाशस्यानित्यत्ववादिनोऽपरे शब्दतन्मात्रामपि गणयन्ति। न तथा न्यायनये। स्थूलभूतभौतिकेषु ते न्यूनाधिकभावेन पञ्चोपादानतां मन्यन्ते। न्यायनये एकोपादानकत्वमेव अन्येषां निमित्तत्वमिति।

न च सर्वेषां क्षणिकत्वस्य जागरूकतया परमाणोर्नित्यत्वं खपुष्पायते। न च क्षणिकत्ववादिनये ध्वंसप्रागभावयोरप्यनाद्यनन्तत्वयोरस्वीकारात् ध्वंसाप्रतियोगित्वरूपस्य नित्यत्वस्यासत्त्वात् कथं तेन विरोध इति वाच्यम् ध्वंसाप्रतियोगित्वस्य अलीके प्रसिद्धत्वात् इति वाच्यम् तस्य क्षोदक्षेमानर्हत्वात्।

## तथाहि विप्रतिपत्तिः

न तावत् "नैयायिकस्य विधिकोटिकं सौगतस्य च निषेधकोटिकं सत्वातिरिक्तधर्मो ध्वंसनिरूपितजनकतावच्छेदको न वेति विप्रतिपत्तिः, परनये निखिलप्रतियोगिनां ध्वंसजनकत्वात् अनुगततया प्रतियोगिमात्रवृत्तिसत्वमेव जनकतावच्छेदकमिति न निषेधकोटिरप्रसिद्धा शब्दतः क्षणिकत्वस्याभानेऽप्यन्ततः प्रतियोग्यतिरिक्तस्य ध्वंसं प्रति कारणतायाः खण्डनेन पदार्थात्मलाभानन्तरमेव ध्वंसस्य गले पतिततया क्षणिकत्वस्य सिद्धेः, इति युक्तम्, सत्वसमनियतस्य प्रमेयत्वादेः जनकतावच्छेदकत्वे बाधाभावात् निषेधपक्षे बाधात्। किञ्च क्षणिकत्वनयिनां 'यत् यत् सत् तत् क्षणिकमि'त्येव न्यायवाक्यन्न तु यत् सत्वातिरिक्तं तत् ध्वंसजनकतावच्छेदकत्वाभाववदिति, एवं विप्रतिपित्सूनां तद्विरुध्येत। वस्तुतो घटव्यक्त्यभावेऽपि पटध्वंसोत्पत्त्या व्यभिचारवारणाय तद्व्यक्तित्वेन कार्यताकारणता चावश्यमगत्योपेयेति बाधस्तदवस्थ एव।

साक्षात् क्षणिकत्वस्यापर्यवसानादेव 'सत्त्वमुत्पत्तिव्याप्यन्न वा यत्र काले सत्त्वं तत्र तत्रोत्पत्तिरित्युदाहरणबलेन द्वितीयक्षणे प्रलयोत्पत्तिः सिध्यति' इति न समीचीनम्।

अतः शब्दादिः क्षणिको न वेति वाक्यफलिता प्रमेयत्वं क्षणिकत्वव्याप्यन्न वेति विप्रतिपत्तिः। विधिकोटिः शाक्यस्य, तस्य च सत्त्वे प्रसिद्धिः। निषेधकोटिः सिद्धान्तिनां सा च अन्तिमशब्दवृत्तितद्व्यक्तित्व इति।

पूर्वोक्तं न्यायप्रयोगमपश्यतः स्वाधिकरणक्षणोत्तरत्वं स्वध्वंसव्याप्यन्न वेति विप्रतिपत्तिरपि संभवति। यत्तु 'एतत् क्षणवृत्तयः एतत् क्षणानधिकरणसमयवृत्तयो न वेति तत्तु सौगतमते निषेधप्रतियोगिनोऽप्रसिद्धेर्हेयमेव। यदि च प्रत्येकं पदार्थानां प्रसिद्धया वाक्यार्थप्रसिद्धिरपि सिद्धा प्रतियोगितावच्छेदक-वृत्तिहेतुमत्ताज्ञानादेव अप्रसिद्धस्याप्यभावस्यानुमितिसम्भव इति विभाव्यते चेत् तदेदमपि पूर्ववदेव।

ननु किन्नाम क्षणिकत्वम् न तावत् क्षण वृत्तित्वं घटादौ सिद्धसाधनापत्तेः। अत एव न क्षणसम्बन्धित्वं नित्यानामपि काले कालिकविशेषणतायाः स्वीकारात्। नापि स्वतादात्म्यस्वोत्पत्त्यव्यवहितोत्तरवृत्तिध्वंसप्रतियोगित्वोभाभ्यां सम्बन्धाभ्यां स्वविशिष्टत्वं तच्च अन्त्यशब्दे प्रसिद्धम्, अव्यवहितोत्तरत्वञ्च स्वाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वाधिकरणसमयध्वंसाधिकरणत्वम्। अधिकरणता च सर्वत्र कालिकविशेषणतयेति लक्षणं युक्तम्। नैयायिकनयेऽपि क्षणस्य क्षणिकतत्तत्पदार्थरूपतया अनुगतस्य अव्यवहितोत्तरत्वस्य दुर्निर्वचत्वं सार्वभौमपक्षतायामुक्तम्। नव्यनैयायिकमतेऽन्त्यशब्दस्यापि क्षणद्वयावस्थायित्वाच्च। तथापि स्वतादात्म्यस्वाधिकरणक्षणवृत्ति ध्वंसप्रतियोगिक्षणवृत्तिभिन्नत्वोभाभ्यां स्वविशिष्टत्वं तत्त्वम्। स्वतादात्म्यस्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगिक्षणवृत्तित्वाभ्यां स्वविशिष्टभिन्नत्वन्तु न युक्तम्, सौगतमते स्वविशिष्टस्याप्रसिद्धेः। नैयायिकमते तु पूर्वोक्तं महाप्रलये प्रसिद्धम्। विषयित्वव्यभिचारादिसम्बन्धेन स्वाधिकरणभाविज्ञानवृत्तिध्वंसप्रतियोगिक्षणवृत्तित्वात् स्वाधिकरणत्वं कालिकेन बोध्यम्। एवमेव वृत्तिताद्वयी च। अन्यथा ध्वंसविषयकवर्त्तमानज्ञानवृत्तिध्वंसप्रतियोगिक्षणवृत्तित्वात् स्वाधिकरणक्षणविषयकस्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगिनि ज्ञाने विषयितया वृत्तित्वात् अप्रसिद्धिप्रसङ्गात् सौगते मते तु स्वाधिकरणध्वंसात्मकस्थूलकालवृत्तिध्वंसप्रतियोगिक्षणे वर्तमानत्वात् बाधवारणाय क्षणत्वेन प्रवेशः। क्षणत्वञ्चात्र न स्पन्दत्वं शाक्यमते चतुःक्षणावस्थायिनः स्पन्दस्याभावेऽपि क्षणत्वेनोपादानव्यावर्त्यस्य महाकालस्यासत्त्वात् व्यावर्त्याप्रसिद्धेः। भावस्वरूपं क्षणत्वन्तु निवेश्यं सिद्धान्तिनये स्वाधिकरणमहाकालात्मकभाववृत्ति ध्वंसप्रतियोगिक्षणवृत्तिनि प्रलये प्रसिद्धिः। स्वाधिकरणस्थूलदण्डाद्यात्मकं कालमादाय बौद्धनये बाधो नाशङ्कनीयः, तत्र तादृशस्य कालस्यास्वीकारात्। वस्तुतो ध्वंसस्यापि स्थिरस्य प्रतिपक्षिपक्षेऽभावात् मतान्तरे सार्थकं क्षणपदं मतेऽस्मिन् उपरञ्जकतयैवोपादत्तमित्यत्र बाधाभाव इति। यत्तु पूर्ववत् कालिकविशेषणतया वृत्तिताऽधिकरणतायुतं स्वविशिष्टत्वं क्षणिकत्वम्। वैशिष्ट्यस्यञ्च स्वतादात्म्यस्वप्रागभावाधिकरणक्षणवृत्तिभिन्नत्वेति सम्बन्धद्वयेन। इति तन्न महाप्रलयाव्यवहितप्राक्तृतीयक्षणोत्पन्नद्विक्षणस्थायिनि भावे सिद्धसाधनस्य नैयायिकानां सम्पत्तेः। न च पक्षतावच्छेदकावच्छेदेनानुमितेरुद्देश्यतया तत्सामानाधिकरण्येन सिद्धिर्नानुमितिप्रतिबन्धिकेति वाच्यम्, सामानाधिकरण्येन सिद्धसाधनवारकस्य प्रतिज्ञावाक्यघटकस्य

पक्षविशेषणस्य विवादाध्यासितेतिपदस्य बहुधा प्रसिद्धस्य वैयर्थ्यापत्तेः। न च स्वाधिकरणद्वितीयक्षणप्रागभाववति प्रथमे क्षणे विद्यमानतया सिद्धसाधनानवकाशः स्वाधिकरणद्वितीयक्षणस्यापि विनश्यदवस्थस्पन्दव्यक्तिरूपतया तत्प्रागभाववति तस्यावृत्तेः नापि स्वाधिकरणं ध्वंसात्मकं द्वितीयक्षणमादाय तत्प्रतियोगिरूपप्रागभाववति प्रथमक्षणे वृत्तेर्वारणम, भावत्वाभावत्वयोर्विरोधेन प्रतियोगिनो भावस्वरूपत्वे प्रागभावत्वविरहात्। ध्वंसत्वेनोपादाने सिद्धसाधनविरहेऽपि तार्किककोटेर्महाप्रलये प्रसिध्यसम्भवः। यदि भावाभावसाधारणं प्रागभावत्वं निवेश्यते तदापि तादृशप्रागभावत्वस्याप्रसिद्धेर्न कुशलम्। नापि कादाचित्कत्वेनाभावावनुगमय्य प्रवेशो युक्तः स्ववृत्तित्वस्ववृत्त्यभावप्रतियोगित्वोभाभ्यां कालविशिष्टत्वस्यैव तत्त्वात् तस्य स्थूलकालास्वीकर्तृमतेऽप्रसिद्धेरिति।

## अथ तेषां युक्तयः

सर्वं क्षणिकं सत्त्वात शरीरवत्। शरीरञ्च प्रतिक्षणमन्यच्चान्यच्च बाह्यप्रत्ययाभेदे सति अन्ते विशेषदर्शनात्। पच्यमानभूमिपाकजवत् इत्यन्वयि अपच्यमानभूमिपाकजवच्चेति व्यतिरेक्युदाहरणम्। अवयववाक्यत्रयम्। अयं भावः यथा अन्तर्भौमाग्निभिः पच्यमाना अपि भूमिभागाः इषद्विशेषवन्तः सूक्ष्मतया न लक्ष्यन्ते रूपादिपरावृत्तिमन्तः सन्तः स्फुटमवगम्यन्ते। ते च तत्रत्य विशेषाः प्रतीतिक्षणे एव न सम्पन्नाः किन्तु पूर्वपूर्वक्रमेणेति नैय यिका अप्यभ्युपगच्छन्ति। तथा औदरानलेन पच्यमाना आहाराः प्रतिक्षणं रसद्रव्यमुपचयापचयहेतुमुत्पादयन्ति। तौ चोपचयापचयौ प्रतीतिविषयतां प्रतीक्षणमप्राप्तवन्तावपि वत्सरेण प्रतीयमानौ प्रतिक्षणमुत्पद्यते इति साध्यते। तौ चोपचयापचयौ पूर्वारम्भकसंयोगनाशानन्तरं पुनः कर्मान्तरजन्यारम्भकावयवसंयोगं विनाऽसम्भवन्तौ पूर्वोक्तविभागसंयोगौ प्रत्याययन्तौ अवयविन्या व्यक्तेरुत्पादविनाशावनुमापयतः। एवमेव यत्र बाह्यप्रत्ययाभेदेऽपि कदाचित् विशेषदर्शनमन्ते वा विशेषदर्शनं वर्तते तत्रापि प्रतिक्षणं विशेषवत्तानुमेयेति सिद्धं सत्त्वस्य क्षणिकत्वव्याप्यत्वम्। यथा स्फटिके। तथा च ( स्फटिकेऽपि परापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः, ( अ० ३–आ० २–सू० १० ) इति पूर्वपक्षीयं न्यायसूत्रम्। कुङ्कुमकलितः पटोऽन्ते विशेषरक्ततया प्रतीयमान इति न तत्रारुणिमा प्रतिक्षणं भावीति हेतौ बाह्यप्रत्ययाऽभेदे सतीत्युक्तम्। प्रत्ययपदस्य कारणमर्थः। तथा च शरीरोपचयहेतुरन्नपानादिप्रचयः प्रतिदिनमभिन्नो-

पयुज्यमानो लक्ष्यते। कुङ्कुमाक्ते पटे तु बाह्यः कुङ्कुमो हेतुर्भेदेव प्रतीयमानः साम्प्रतिक इति विशेषः।

यथा वा स्फटिको दृष्टान्तः तथाहि स्फटिकः प्रतिक्षणं परस्पर-भेदवान् शीतोष्णादिप्रतिक्षणविरुद्धधर्मज्ञानात् तेजोजलवत्।

अयम्भावः अग्नौ जले च परस्परविरुद्धतयोपलभ्यमानौ शीतोष्मणौ अग्निजलयोर्भेदं साधयतः। विरुद्धधर्माध्यासं विनाऽपि भेदस्वीकारेऽति-प्रसङ्गापत्तेः। विरुद्धधर्मसत्त्वेऽपि भेदाङ्गीकारेऽद्वैतापत्तेः। तथैव विरुद्धौ शीतोष्माणौ स्फटिकेप्युपलभ्यमानौ स्फटिकस्यापि भिन्नत्वमनुमापयत इति प्रतिक्षणभेदसिद्धौ क्षणिकोत्पादविनाशौविनाऽनुपपन्नायां तद्द्वाराक्षणिकत्व-सिद्धिः।

अथवा प्रतिक्षणभिन्नत्वात् स्फटिकोऽयुगपत्कालप्रत्ययानामालम्बनं भवतीति प्रतिज्ञार्थः। इदं हृदयम्। यथा हि दीपः प्रतिक्षणभिन्नो यः पूर्वज्ञान-विषयः स एव नोत्तरेण ज्ञानेनालभ्यते पूर्वव्यक्तेरसत्त्वात् तथा स्फटि-कोऽपि पूर्वं रक्तनया शीतादितयाऽनुभूतः पुनः श्वेततयोष्णादितया चानु-भूयमानः स एव न भवति। विभिन्नाकारकावगाहनविषयत्वेऽपि भेद-विरहेऽद्वैतापत्तेः। किम्वा एकाकारविज्ञानविषयोऽपि प्रदीपो यथा भिन्न-स्तथा स एवायं स्फटिक इति मितिविषयस्यापि स्फटिकस्य भेदः। समाना-धिकरणविज्ञानभेदेन वस्तूनां भेदस्वीकारात्।

तथैव दर्शनादर्शनादिति हेतुः। इदमस्य बुद्धिविजृम्भितम्। अनुत्प-द्यमानो घटादिर्नश्यमानो वा नावलोक्यते उत्पद्यमानश्च प्रत्यक्षीक्रियते। ततो दर्शने सति व्यक्तेरुत्पादः अदर्शने च निरोध इति सिद्धम्। एवमेव प्रदीपादेर्देशान्तर उत्पादो देशान्तरे च निरोधस्तद्धेतुके दर्शनादर्शनेऽस्य। तथैव देशान्तरे गच्छतो देवदत्तादेरपि इति सर्वेषां भावानां क्षणिकत्व-सिद्धिः।

किञ्च विनाशहेत्वाभावात् स्फटिकानामपि विनाशात् सर्वे भावा उत्पन्नप्रध्वंसिन इति क्षणकत्वसिद्धिः। इयन्तेषां विचारप्रणाली। स्वकारणेनान्वयव्यतिरेकसिद्धेन उत्पद्यमानानां भावानां स्वभावा अपि स्वकारणादेव जायन्ते नहि स्वकारणेभ्य उत्पन्नस्य नीलस्य नीलत्वाय हेत्वन्तरमपेक्षन्ते प्रेक्षावन्तः। तथा च स्वकारणेभ्य उत्पद्यमाना भावा विनश्वरस्वभावा विपरीता वा भवन्तु उभयथाऽपि न कारणान्तरापेक्षा नाशस्य सिद्ध्यति। यथात्मानं लभमानन्नीलं नीलत्वाय न स्वसामग्रीतोऽन्यद-पेक्षते तथा विनश्वरस्वभावा भावा अपि नाशाय न स्वकारणेभ्योऽन्यद्

अपेक्षन्ते। यदि अविनश्वरस्वभावा एव स्वकारणात्सम्पन्नास्तदाऽपि तथैव तिष्ठेरन् न नश्वरतां गच्छेयुर्यथा नीलं कारणशतैरपि सर्वज्ञोऽपि अनीलं कर्तुं न प्रभवति। किञ्च भावानां विनश्वरता कारणैः क्रियमाणाऽपि भावाद्भिन्ना अभिन्नेति वा विकल्पं न सहते तृतीयकल्पस्य अभावात्। तथाहि अभिन्नश्चेद्विनाशो भावात् तदा प्रतियोगिरूपो भाव एवासौ प्रतियोगिवत् उपलब्ध्यर्थक्रिये कुर्यात्। किम्वा भिन्नाभिः सामग्रीभिः सम्पाद्यमानो भेदविरहमाप्नुत इति वार्तमात्रम्। वर्तते च प्रतियोगिनः पटादेस्तन्तुसंयोगभेदाः विनाशस्य च तन्तुविभागविशेषाः कारणमिति सामग्रीभेदः। नापि द्वितीयः पक्षः। पटादत्यन्तभिन्नेभ्य उत्पन्नेभ्यो घटेभ्यो यथा पटो न निरुध्यते तथा अत्यन्तभिन्नेन विनाशेन भिन्नस्य प्रतियोगिनो भावस्य निरोधः काकदन्तपरीक्षैव। निरोधस्थानीयतिरोधानवादेऽपि तिरोधानं भावानां भावेभ्यो भिन्नं न वा। भिन्नपक्षे पूर्ववत् तिरोधानेन भावस्य किमायातम्। अभिन्नपक्षे पूर्ववदेव प्रतियोगिवद् उपलब्ध्यर्थक्रिये आपद्येताम्।

अपि च भावानां नश्वरता ध्रुवभाविनी अध्रुवभाविनी वा, एतावता किमिति चेत् भावानां ध्वंसिता ध्रुवभाविनी चेत् न हेत्वन्तरमपेक्षेत। यत् येषां ध्रुवभाविनतदर्थन्तद्धेत्वन्तरमपेक्षते यथाऽदर्शस्य काचमयत्वे इति सहचारग्रहात् ध्रुवभावित्वव्यापकत्वस्य हेत्वन्तरानपेक्षायां सिद्धेः। तथा च हेत्वन्तरानपेक्षितां स्वव्यापिकामुपस्थापयन्ती ध्रुवभाविता हेत्वन्तरापेक्षितां प्रतिक्षिपतीति न विनाशस्य सहेतुकत्वसिद्धिः। किञ्च ये यदर्थं हेत्वन्तरमपेक्षन्ते न तेषां तद् ध्रुवभावि यथा वाससोरागाय हेत्वन्तरं कौसुम्भादिसंयोगमपेक्षते तस्मान्न वाससोरक्तताध्रौव्येतिव्यतिरेकसहचारेण ध्रुवभावित्वाभावहेत्वन्तरापेक्षित्वयोर्व्याप्यव्यापकभावग्रहेण ध्रुवभावित्वाभावाभावस्य विनाशे ग्रहणेन हेत्वन्तरापेक्षित्वाभावः सिद्ध्यति। तस्माद् भावभेदाभेदादिसर्वोपाख्यारहितस्य कल्पनामात्रविषयस्य अभावस्य अनुपाख्येयत्वमेव अनुपाख्येयस्य क्रियावत्वाभावात् अभावं करोतीत्यस्य भावं न करोतीतिविषयः। यथाह न तस्य किञ्चिद्भवति न भवत्येव केवलमिति। किन्तु उत्तरकालीनो भाव एव पूर्ववर्तिभावस्य विनाशः। तथा च नाशस्य सहेतुकत्वासिद्धेरात्मलाभानन्तरमेव अनपेक्षो भावानां विनाशो ध्रुवभावीति भावानां क्षणिकत्वं सिद्धतरमेव।

अन्यच्च एवं क्षणिकं सत्त्वात् लोष्टवत् इति दृष्टान्तः। लोष्टञ्च क्षणिकं तुल्यगुरुत्ववत्त्वेऽपि अतुल्यपातवत्त्वात्। तथाहि लोष्ठद्वयी तुल्यगुरुत्ववती गगनात् पातिता एकलोष्टमचिरेण धरां संयुनक्ति अपरञ्च

चिरेण। तत्र पतनापादकगुरुत्वसाम्येऽपि चिराचिरपातयोः कारणमपश्यताऽगत्याऽभिधेयं यत् क्षणिका भावा इति काश्चन सन्तानान्तःपातिन्यः अवस्थाः शीघ्रपातिन्यः काश्चन चिरपातिन्य इति सिद्धं क्षणिकत्वम्।

अपरञ्च घण्टायां तत्तया प्रतीयमानः संस्कारः कदाचित् मृदु रावयति कदाचित् तीव्रमिति तत्रापि मार्दवतैव्रयोः कारणकल्पनाश्रान्ताः संस्कारसंतताना एव केचन मृदु राविणः केचन पटुस्वना इति संस्कारस्य क्षणिकतामादाय शममालभमाना भविष्यन्तीति सोऽपि दृष्टान्तः। किञ्च सत्त्वस्य क्षणिकत्वव्याप्यत्वे बाधकाभावः। तथाहि न तावत् सत्तासामान्ये प्रमाणं कार्यत्वकारणत्वान्यतरानवच्छेदकत्वात्, नापि अनुगतप्रतीत्या सन्मात्रेऽनुगतप्रतीतेरभावात्। सत्तासमवायाभावेऽपि सामान्यविशेषसमवायेषु सत्त्वप्रतीतेश्च। येन केनापि सम्बन्धेन वृत्तित्वमादाय निर्वाहे व्यावर्त्याभावाज् जातित्वासिद्धेः, अभावेऽपि सत्प्रतीत्यापत्तेश्च। तस्मादर्थक्रियाकारित्वमेव सत्त्वमभ्युपेयम्। यत्तु प्रामाणिकत्वं सत्त्वम्। तदपि अर्थक्रियाकारित्व एव पर्यवसन्नम्। तथाहि प्रामाणिकत्वन्नाम प्रमाणजन्योपलब्धिविषयत्वम् उपलब्धिविषयतायाञ्च उपलब्धिरूपार्थक्रियाकारित्वमायातमेव न कश्चित् सन् भावोऽर्थक्रियां न करोति येन सत्त्वलक्षणमर्थक्रियाकारित्वरूपमव्याप्नोत्। तथाहि सन् कश्चिदपि भावः सर्वज्ञस्य विज्ञानस्यालम्बनविषयो भवति न वा। न भवति चेत् तस्य विद्यमानत्वे सर्वज्ञस्य विज्ञानस्य सर्वविषयकत्वे वा प्रमाणाभावः। तस्यैव सतोऽज्ञानात्। यदि भवति तदा कथन्नोपलब्धिरूपामप्यर्थक्रियां करोति तस्मात् सत्वलक्षणमर्थक्रियाकारित्वरूपं युक्तमेव।

तच्च सत्त्वं क्रमाक्रमाभ्यां व्याप्तम्। सर्वेषां भावानां स्वीयासु तासु तासु अर्थक्रियासु क्रमाक्रमौ परस्परपरिहारेण दृश्येते। तस्मात्तृतीय प्रकारविरहः। अन्यथा क्रमाक्रमोभयात्मके प्रकारान्तरतया स्वीक्रियमाणे तृतीये यदि एतादृशावेवानुभूतावसितौ परस्परपरिहारप्रतीतिविषयभूतौ सतृजाते तदा परस्परसंकरस्यैकत्र सिद्धौ दृश्यमानोऽपि क्रमः क्वचिदक्रमो भवेत् अक्रमो वा क्रमो भवेत्। न च तथा कुत्रचिदृश्यत इति प्रकारान्तरे प्रमाणबाधः। तस्मात् प्रत्यक्षीभूतोऽनयोः परिहारः सर्वत्र भाविनं संकरं प्रतिक्षिपति। अन्यथा क्वचिदप्यनयोस्तादात्म्ये संकीर्णाविव क्रमाक्रमौ गृह्येताम्, न गृह्येते तस्मान्न संकरः। न च प्रत्यक्षानुभूतेन परिहारेण प्रत्यक्षस्यैव संकरस्य प्रतिक्षेपः अदृश्यस्य सतः संकरस्य किं जातमिति वाच्यम् ? दृश्यमानेन स्तम्भतादात्म्येन दृश्यं मर्कटादितादात्म्यमिव अदृश्यं पिशाचतादात्म्यमपि प्रतिपि-

ध्यते यथा तथा दृश्यत्वविशिष्टेन परिहारेण दृश्यादृश्यक्रमाक्रमयोस्तादात्म्य-प्रतिक्षेपः सम्भवत्येव । यत्र क्रमयौगपद्ये एवं प्रत्यक्षसिद्धस्य क्रमयौगपद्यस्य व्यतिरेकस्तस्य क्रमयौगपद्यत्वे मानाभावः । न च शब्दैक्येन तत्राप्येतदेव क्रमयौगपद्यत्वं गोशब्दसाम्येऽपि वृषभ इव वाचामपि विषाणित्वप्रसङ्गात् ।

नन्वास्तामाभ्यामन्य एव प्रकारो यमाश्रित्य स्थिरा अपि भावाः सहकारिसमवधानवशात् अर्थक्रियां कुर्वन्ति । अर्थक्रियाश्च प्रत्यक्षा एव न मदीयप्रकारान्तरवत् ता अपि पिशाचायमाना इति न क्षणिकता सिद्धेति वाच्यम् । सत्यमर्थक्रियाः प्रत्यक्षसिद्धाः परं प्रत्यक्षानुभूतावसितान्योन्यासं-कीर्णक्रमाक्रमप्रकारद्वयमात्रसमालिङ्गिता एव न क्वचिदपि प्रकारान्तरसमा-लिङ्गिता अनुभूता इति तादृशानुभूतावसितक्रमयौगपद्यार्थक्रिययोः व्याप्य-व्यापकभावग्रहेण व्याप्याः प्रत्यक्षतोऽनुभूयमाना अर्थक्रियाः स्वव्यापकं प्रत्यक्षावसितं क्रमयौगपद्यमुपस्थापयन्ति येन प्रकारान्तरस्य प्रतिक्षेपः सिध्यति ।

किञ्च परस्परविरुद्धप्रकारयोरन्यतरनिषेधे यत्रान्यतरव्यवस्थाया व्याप्तिस्तत्र न प्रकारान्तरसम्भवः । यथा परस्परविरुद्धयोर्नीलानीलयो-र्नीलनिषेधे पीतेऽनील एव तथाऽनीलनिषेधे नीले नील एव न प्रकारान्तर-सम्भवस्तथा परस्परव्यावृत्तयोः क्रमनिषेधेऽक्रम एव अक्रमनिषेधे च क्रम एवेति न प्रकारान्तरसम्भवः । तथा च अर्थक्रियायां क्रमाक्रमयोर्व्याप्तिः सिद्धा । यथा व्यापकस्य वृक्षत्वस्याभावेन एकशिलामये भूभृत्कटके व्याप्यस्य सरलत्वस्याभावः सिद्धयति तथा स्थिरे व्यापकाभावेन क्रमयौगपद्यविरहेण व्याप्यस्य अर्थक्रियावत्वस्याभावः सिद्धयतीति स्थिरमसत् । क्षणिके च क्रमयौगपद्यप्रकारस्य सत्त्वात् तत्रार्थक्रियावत्त्वेन सत्त्वं क्षणिकत्वञ्चेति क्षणिकत्वसत्त्वयोर्व्याप्तिः । भावाः स्वस्वाभाविकेन स्वरूपेण अर्थक्रियाया-मुपयुज्यन्त इति प्रत्यक्षसिद्धम् । यथा दण्डो दण्डत्वेन घटे उपयुज्यते । यद्वस्तुनो येन कार्येण सह गृहीतान्वयव्यतिरेकित्वं तद्वस्तु तत्कार्योत्पत्ति-समर्थम् । तथा तद्वस्तुनो येन स्वभावेन कार्यंनिरूपित गृहीतान्वयव्यतिरेकिता तद्रूपमपि समर्थम् । यथा घटे कपालस्य सामर्थ्यं तच्च कपालत्वेन तत्र कपालत्वमेव समर्थम् । तच्च कपालत्वं दण्डत्वं वा स्थिरं प्रथमक्षणे इव द्वितीयादिक्षणेऽपि सदेवेति प्रथमक्षणोत्पन्नं कार्यं द्वितीयादिक्षणेऽपि कुर्यात् । तथा द्वितीयादिक्षण इव प्रथमक्षणेऽपि सदिति द्वितीयादिक्षणो-त्पन्नान् भावान् प्रथमक्षण एव कथन्नोत्पादयेत् । समर्थस्य क्षेपायोगात् । असमर्थं कालान्तरेऽपि न कुर्यादिति स्थिरे क्रमासम्भवः । ननु समर्था अपि

भावाः क्रमवत् सहकारिवशात् क्रमेण कुर्वन्ति इति वाच्यम्, विकल्पा-सहत्वात्। तथाहि सहकारिभिः कारणस्य कश्चित्संस्कार आधेयो न वा। आधीयमानोऽपि संस्कारः संस्कार्यात् भावाद्भिन्नः अभिन्नो वा। नाद्यः संस्कारेण सहान्वयव्यतिरेकात् संस्कारस्यैव कारणत्वं स्यात् संस्कारवतो भावस्य व्यभिचारेण कारणत्वं न स्यात्। न च संस्कारसहकृतस्य भाव-स्याप्यन्वयव्यतिरेकित्वं न केवलं संस्कारस्येति भावस्य कारणत्वं दृष्टमेवेति चेत् उपकारस्य उपकारान्तरजननेऽनवस्थापातात्। उपकारान्तराजनने सहकारित्वानापत्तेः। अनुपकारिणोऽपि सहकारित्वे द्वितीयकल्पापत्तेः। यद्युपकारो भावादभिन्न आधीयत इति प्रथमस्य द्वितीयस्तदा भाव एव जनक इत्यायातम्। स च प्रथमक्षणेऽप्यासीदिति पश्चाद्भाविनो भावान् तदानीमेव कथन्नोत्पादयाञ्चकारेति पूर्वोक्तापत्तेस्तादवस्थ्यात्। अनुपकारिणः सह-कारिण इति द्वितीयविकल्पे तु मुख्येन भावकारणेन सहकारिणो नापेक्ष्येरन् तथा च निरपेक्षो भावः कारणमात्मलाभानन्तरमेव सर्वान् जनयेत् अन्वय-व्यतिरेकेण तस्य सामर्थ्यावधारणात् अपेक्षणीयान्तराभावात्।

समर्थस्य कालक्षेपायोगात्, न हि सामग्रीसमवहिते मनागपि विलम्बं सहते नैयायिकोऽपि कार्योत्पत्तौ। यदि नैव समर्थः पश्चादपि शक्रशापशतेनापि न कुर्यात्। नहि नीलं सर्वज्ञोऽपि कालवशेन पीतं कर्तुं प्रभवेत्।

ननु विकल्प आस्ताम् कार्यकारणभावनिर्णयसमर्थस्य अन्वयव्यतिरेकि-त्वस्य सहकारिसहितस्यैव भावस्य वर्तते न केवलस्येति तत्सहितस्यैव कारणत्वं सिद्धम्। तथा च भावेन सहकारिणो नापेक्ष्यन्त इति न युक्तम्, तैः सहकारिभिर्विना केवलेन भावेन कार्यानुत्पत्तेः, इति वाच्यम्। भावाः सहकारिसमवहिता अपि स्वेन रूपेण कार्योत्पत्तौ समर्था उत सहकारिरूपेण। यद्याद्यम्, भावस्वरूपस्य सहकारिणामसमवधानेऽपि सत्त्वात् तदानीमर्थक्रिया आपद्येरन्। नैव सहकारिणः स्वरूपसम्पादकाः। नैवानीलं कंश्चिदपि सहकारिभिः समवहितं नीलं भवति। यदि सहकारिरूपेण तदा यत्स्वरूपेण कारणता तत्स्वरूपवतामेव सामर्थ्यमिति नियमेन सहकारिणामेव कारणता न मुख्यकारणस्य भावस्येति विनायकं प्रकुर्वतः कपिसम्पत्तिरिव विपरीतमा-पद्यते। ननु भवतु केषामपि तदापि स्थिराणामेवेति न संतोषस्थानं तेषामपि पूर्वोक्तरीत्या विकल्पासहत्वेन स्थिरे क्रमानुत्पत्तेः। ननु कारणतासमर्थकस्य अन्वयव्यतिरेकित्वस्य उभयत्रैव सत्त्वात् बलादेवोभयोः कारणत्वम्, प्रत्येक-सत्त्वे च कार्यानुत्पत्त्या व्यभिचारेण न कारणत्वमिति वाच्यं तर्हि केवलभाव-सत्त्वे कार्यानुत्पत्त्या व्यभिचारेण भावस्य कारणत्वासिद्धिः। चरमभाव-

निमित्तसहकारिसमवधाने सति कार्योत्पत्त्या व्यभिचाराभावेन चरमसमवधानस्यैव कारणत्वं स्यात् समवहितानां कारणताया: विलयापत्तेः।

यदपि स्वकारणाज्जातस्य पार्थिवस्वभावस्य घटस्य कदाप्यपार्थिवत्वं न भवति तथा स्वकारणाद् विलम्बकारिस्वभावो भावो जात इति न उत्पत्त्यनन्तरमेव कार्योत्पत्तिप्रसङ्गः इति तदपि विचारासहम्।

तथाहि स्वकारणादुत्पन्ना भावानां विलम्बकारिता सहकारिसमवधानकालेऽपि वर्तते न वा। वर्तते चेत् सहकारिसमवधानविरहवत् समवधानेऽपि न कुर्यात्। अथ नास्ति स्वभाविनो नाशं विना स्वभावनाशानुत्पत्तेः, स्वभावनाशे स्वभाविनो भावस्य नाश इत्यनिच्छतोऽप्यङ्गीकुर्वतो भावस्य कारणत्वं कथङ्कारमवतिष्ठेत् ? तस्मात् भावस्य न विलम्बकारितास्वभावः। तेन च स्थिरपक्षे सहकारिणामसमवधानकालेऽपि आत्मलाभानन्तरमेव अर्थक्रिया आपतन्ति। तथा च न भावानां क्रमेण अर्थक्रियाः। नापि अक्रमेण इति स्थिरान्निवर्तमानाभ्यां क्रमाक्रमाभ्यां व्यापकाभ्यां व्याप्तं सत्त्वं क्षणिकत्वं व्याप्नोति।

किञ्च स्थिरपक्षे प्रथमादिक्षणे सम्पादितं सर्वं द्वितीयादिक्षणेऽपि भावः कुर्यादित्यापत्तिः। न च प्रथमक्षणे यद्जातं तद्जातमेव द्वितीयादिक्षणे ये उत्पद्यन्ते ते प्रथमक्षणोत्पन्नेभ्योऽन्य एवेति क्रमा एवावर्तन्ते इति पक्षेऽपि च द्वितीयादिक्षणोत्पन्नान् पदार्थान् प्रथमक्षण एव कुर्यादिति दोष उक्तः। अपरञ्च प्रथमक्षणे सर्वं सम्पादयतो भावस्य द्वितीयादिक्षणे कर्तव्याभावात् द्वितीयादिक्षणे नार्थक्रिया इति तदानीं भावस्यासत्त्वमेव। इति सत्त्वक्षणिकत्वयोः प्रतिबन्धसिद्धिः।

ननु बौद्धमतेऽपि प्रथमक्षणेऽर्थक्रियायाः सत्त्वात् द्वितीयादिक्षणे भावानामसत्त्वमेवेति कथं क्रमयौगपद्याभावोपलब्धिः। अन्यथा भावधर्मिको यदि क्रमयौगपद्याभावोपलब्धिस्तदा द्वितीयादिक्षणेऽपि भावानां सत्त्वात् स्थिरसिद्धिः। यदि तद्धर्मिको नोपलभ्यते तदा अन्यधर्मिकक्रमयौगपद्यविरहोपलब्धेरन्यस्य किमायातमिति तदापि स्थिरसिद्धिरित्युभयपाशारज्जुरिति वाच्यम्, वस्तुतः क्षणिको भाव एवानुभूतावसितः स्थिरव्यसनेन आरोपिता क्षणिकभावः क्षणिक इति तत्स्वरूपोपलब्धिरेव तद्वृत्त्यभावोपलब्धिः। सर्वोपाख्यापरिहृतोऽभाव एव नास्ति सौगते नये। केवलस्य भूतलस्वरूपस्योपलम्भ एव कल्पितदृश्यतावतो घटस्यानुपलम्भः। तस्मान्नानुपपत्तिः। नैव कश्चिदाकारोऽभावस्य येन प्रतिपत्तिगोचरः स्यात्। व्यवहर्तव्यस्तु भावरूप एवास्त्विति न क्षतिः।

न च भवतां मतेऽपि अस्थिरः क्षणिको भावोऽर्थक्रियाजनकस्वभावो न वा, न चेत् न तत्र सत्त्वमिति स्वरूपासिद्धिः। यदि अर्थक्रिया जननस्वभावता वर्तते तर्हि सहकारिणोऽनपेक्ष्यापि केवलात् भावात् अर्थक्रियाया आपत्तेः। तथा अनपेक्ष्यापि पृथ्वीपवनपाथांसि बीजमात्रादेव अङ्कुरजननापत्तेः। तच्चानुभवविरुद्धमिति वाच्यं सहकारिसमवहितो निरपेक्षः समर्थो बीजक्षणो जनयत्येवाङ्कुरमित्यभ्युपगमात्। न च समर्थस्य बीजक्षणस्य कुत उत्पत्तिरिति न विस्मयनीयं पूर्वपूर्वबीजक्षणस्य उत्तरोत्तरबीजक्षणान् प्रति कारणत्वात् पूर्वस्माद्बीजादेव उत्तरबीजस्य सन्तान इति सौगतसिद्धान्तात्। ननु सर्वेषां सन्तानान्तःपातिनां बीजक्षणानां बीजस्वभावाऽविशेषाद् अन्त्यबीजक्षणस्यैव अङ्कुरोत्पत्तौ सामर्थ्यात्, तथा च कुसुमानन्तरमात्मानं लभमान एवबीजक्षणोऽङ्कुरजननव्यसनी स्यादिति न वाच्यं पूर्वपूर्वसन्तानान्तःपातिनां पृथ्वीपवनपाथःक्षणानां समवधानेन कश्चिदतिशयः सम्पद्यते। तादृशातिशयवतां पृथ्वीपवनपाथोबीजक्षणानां परम्परायां लब्धजन्माऽन्त्यबीजक्षणः समर्थः स च समर्थैर्धरणीपवनपाथःक्षणैः समवहितोऽप्यनपेक्ष एवाङ्कुरं जनयतीति सिद्धान्तात्। न च यदि अनपेक्षो बीजक्षणः समर्थस्तदा क्षित्यादिक्षणसहभूरेव करोतीति कथं नियमस्तैर्विनापि कुर्यादित्यापद्येतेतिवाच्यं परस्परसमवधानेनोत्पन्नातिशयवद्भिः पृथ्वीपवनपाथःक्षणैः समुत्पाद्यमानक्षित्यादिबीजक्षणसन्तानान्तःपातिनः सर्वे क्षित्यादिबीजक्षणाः समानसामग्र्यधीना इति क्षित्यादिक्षणासमवहितस्य बीजक्षणस्य समर्थस्यासम्भवात्। ननु तर्हि समायातः सहकारिवादो यतः क्षित्यादिक्षणसहकृत एव बीजक्षणः करोत्यङ्कुरमिति न शंक्यं सम्मीलितैः सर्वैः क्षित्यादिक्षणबीजक्षणैः सहैवाङ्कुरस्य जननात्। कस्य मुख्यकारणत्वं कस्य सहकारित्वमिति निर्णेतुमशक्यत्वात्। कारणता तु सिद्ध्यति यतः कारणतानिबन्धनं कार्योत्पत्तेर्नियमतः पूर्वभावः। तस्मादेव बीजस्यापि कारणत्वं तच्च क्षित्यादिक्षणानामपि तुल्यम्। ननु यदि सर्वे निरपेक्षा अर्थक्रियाकारिणस्तदा प्रत्येकं कार्यारम्भणेन युगपत् कार्योत्पत्तिप्रसङ्ग इति चेन्न यतोऽन्वयव्यतिरेकिण एव कार्यस्य सामग्रीसत्त्वे आपादनमन्यथा घटसामग्रीसत्त्वे पटोत्पत्तिरापाद्या स्यात् तथा तैः सर्वैरपि एकस्याङ्कुरस्यैव जननस्य दर्शनात् तन्मात्र एव तेषां सामर्थ्यावधारणात्। ननु एकेनैव कृतत्वात् इतरेषामक्रियैव भवेदिति वाच्यं सहैव कुर्वन्ति कार्यमित्युक्तत्वात् इतरेषां क्रियां विना सहकृतमित्यस्यासम्भवात्। किञ्च स्वकारणात् सिद्धसमवधानाः कृतकृत्यतायामपि कस्तानुत्सारयेत्। नापि ते चेतनाः प्रेक्षावन्तो येन अस्मास्वेकेनैव कार्यं कर्तुं शक्यं यथाऽस्माकं सर्वेषां

सन्निधानमिति प्रेक्ष्य निर्वर्तितुमीशताम्। ननु क्षितिक्षणस्य क्षितिं प्रत्यपि सामर्थ्यं पवनक्षणस्यापि पवनं प्रत्येवमप्रेऽपीति कार्यभेदप्रसङ्ग इति न वाच्यम्, न कारणभेदः कार्यविशेषसम्पादकः किन्तु सामग्रीभेदोऽन्यथा तार्किकाणामपि विविधानेककारणकस्थले कार्यभेदप्रसङ्गः। तथा च तुल्याऽत्र सामग्रीति न कार्यभेदप्रसङ्गः। परस्परसमवधानस्त्वपसर्पणप्रत्ययेभ्यः क्षित्यादीनामिति। ननु क्षणस्थायिनो भावा भावान्तरेभ्यः संगन्तुमपि न प्रभवेयुः कुतस्तेभ्यः परस्परविमर्दजन्मार्थक्रियादिरिति हेतोरसाधारणता। साध्यधर्मिणि शब्दादौ हेत्वभावे प्रतिबन्धासिद्धिः, साध्यहेत्वोः सहचारग्रहे तु तत्र साध्यस्य सिद्धत्वात् सिद्धसाधनम्। किञ्च दृश्यमात्रे व्याप्तिदर्शनञ्चेत् दृश्यादृश्यसर्वोपसंहारवती व्याप्तिर्न सिध्येत्। तेनाशङ्क्येतापि दृश्यभिन्नेषु क्षणिकत्वसत्त्वयोर्व्यभिचारः तस्मात् यत्किमपि दृश्यमदृश्यम्वा तत्सर्वं क्षणिकमिति सर्वोपसंहारवती व्याप्तिर्दर्शनीया। नन्वास्तां सर्वोपसंहारवती व्याप्तिः। शब्दादौ सहचार-ग्रहाय क्षणिकत्वग्रहस्यावश्यकतया सिद्धसाधनत्वं हेतोस्तदवस्थमेवेति न शक्यं सत्यां सर्वोपसंहारवत्यां व्याप्तावपि असति शशविषाणादौ क्षणिकत्वं यथा न याति तथा व्याप्तिसिद्धिविषया साध्यं न सिध्येदिति तत्साधनाय सत्त्वस्य हेतुता दर्शनीयैव।

अपि च स्वकार्योत्पत्तौ भावेन सहकारिणोऽपेक्ष्यन्त इति सहकारिवादे केयमपेक्षा नाम। किं सहकारिभिः सहैव करोतीति अन्वयबलपर्यवसन्नः स्वभावभेदः?। अथवा सहकारिणो विना न करोतीति व्यतिरेकनिष्ठं भावस्य स्वरूपमेव। किम्वा सहकारिभिरुपकृत एव करोतीत्युपकारविशेषः तत्र न प्रथमः नहि सहकारिणान्वये स्वभावोऽन्वेति सहकारिव्यावृत्तौ वा व्यावर्तते स्वभावस्य स्वकारणबलात् सिद्धत्वात्। ननु सहकारिव्यावृतौ न व्यावर्तते स्वभावः स च गुण एव अन्यथा स्वभावव्यावृतिश्चेत् सहकारिणो विनापि कुर्याद् इति वाच्यं स तर्हि स्वभावभेदः सहकारिसाकल्ये यथा करोति तथा सहकारिणामसमवधानेऽपि पलायमानानपि सहकारिणो गले पाशैर्बध्वानयेत्। यदि न आनयेत् तर्हि न कुर्यात् तदा सहकारिभिः सहकरोत्येवेति स्वभावं जह्यात्। तथैव सहकारिभिर्विना न करोतीति द्वितीयः स्वभावः। तथाहि सहकारिविरहेऽकर्तृस्वभाव। स च कालान्तरे समवदधतः सहकारिणः पराणुद न कुर्यात्। यदि कुर्यात् तर्हि तैर्विना न करोतीति स्वभावं विजह्यात्। ननु सहकारिसमवधाने सति कर्तृस्वभावः तदसमवधाने तु अकर्तृस्वभाव इति वाच्यं तर्हि अकर्तृकर्तृस्वभावयोर्विरुद्ध-योर्धर्मयोरध्यासेन भावानां भेदात् क्षणिकत्वे पर्यवसानात्। न च कालभेदेन

विरोधपरिहारेण समाधानं कालभेदेऽपि धर्मिणो भेदाभावेन विरुद्धधर्माध्यासस्य सिद्धत्वात्। तृतीयस्तू प्रकारपक्षोऽनवस्थादुःस्थतया खण्डित इति सिद्धा व्याप्तिः।

## ॥ क्षणिकवादखण्डनम् ॥

तत्र न शरीरमात्रस्य प्रतिक्षणमुपचयापचयदर्शनेन भावमात्रस्य क्षणिकत्वकल्पनं युक्तम्। नहि अर्कलतायां कटुकिमानमुपलभ्य निवृत्ताः प्रेक्षावन्तो मृणालगुणादपि विभ्यति। तथा च यत्र दर्शनन्तत्रास्तु क्षणिकत्वमन्येषां स्फटिकादीनां स्थिरतादर्शनानुकुलं स्थिरत्वमेव। ननु शरीरे विशेषदर्शनेन भेदं साधयन् अन्यत्रापि भेदं साधयति बौद्ध इति चेत्तदपि यत्र विशेषदर्शनन्तत्रास्तु भेद इति यथा दर्शनमभ्यनुज्ञेयम्। तथा च (नियमहेत्वभावात् यथादर्शनमभ्यनुज्ञा इति अ० ३-आ० २-सू० ११ सूत्रं न्यायदर्शनस्य।

वस्तुतो विशेषदर्शनमन्यत्वे एव हेतुर्न तु क्षणिकत्वे। यतः पूर्वतनाः-शरीरावयवाः स्थिरा एव आहारपक्तिनिर्मितावयवैः सहिताः पूर्वव्यूहपरित्यागेन स्थूलं दीर्घं व्यूहान्तरमारभन्त न तु क्षणिकत्वात्। ननु अवयवान्तरसाहित्येन पूर्वव्यूहं परित्यजन्ति न क्षणिकत्वादित्यत्र किं विनिगमकमिति न वाच्यम्, मास्तु विनिगमकं न मया आहारावयवोपचितापचितस्य शरीरस्यान्यत्वं साध्यते यत्र सन्दिग्धा सिद्धिर्बाधिका भवेत्। भवतु क्षणिकत्वं साधनीयं साधना च व्याप्तिसंशयेन न सम्भविष्यति व्यभिचारसंशयात्। तत्रैव मया शरीरेऽन्यत्वं न क्षणिकत्वनिमित्तं किन्तु भोजनावयवसमवधानेन उपचयापचयनिमित्तमिति प्रदर्श्य केवलमन्यत्वदर्शनेन क्षणिकत्वं न सिद्ध्यतीति प्रतिपाद्यते। किञ्च शरीरोपचयापचयदर्शनेन शरीरे क्षणिकत्वसाधनं मन्मुखे रसना न विद्यत इतिवद् भवति। तथाहि पूर्वावस्थिता एव पदार्थाः द्रव्यान्तरसंयोगेनोपचिता इत्युच्यन्ते पूर्वावस्थिता एव च कतीनाञ्चित् अवयवानां नाशे सत्यपचिता इत्युच्यन्ते। न च निरन्वयविनष्टानि वस्तून्यपचितानीति व्यवह्रियन्ते। यथोपचिता गौः अपचिता वा। न तत्र विनष्टा इति केषाञ्चित् प्रेक्षावतां भ्रमामूलो व्यवहारः।

तथा च न्यायसूत्रम् (नोत्पत्तिविनाशकारणोपलब्धेः) भावानां क्षणिकत्वन्न उत्पत्तिविनाशकारणयोरुपचयापचययोरुपलब्धेरितिसूत्रार्थः।

ननु यथा क्षीरविनाशे दध्युत्पत्तौ च कारणमपश्यतापि तस्योत्पादविनाशौ स्वीक्रियते तथा स्फटिकादीनामपि विनाशहेतुमनासादयमाना अपि विनाशमङ्गीकुर्वन्तु नैयायिका इति वाच्यं तत्र क्षीरस्य विनाशो दध्नश्चोत्पत्तिर्दृश्यते ततो हेतुरनुमीयते स्फटिकादीनान्तूत्पत्तिविनाशावेव न पश्यामः कथमसौ दृष्टान्तो भवेत्।

## परिणामवादालोचना

यत्तु साङ्ख्याः परिणामवादेनेदं समादधुः। तथाहि कार्याणामुत्पत्ति-विनाशौ न भवतः किन्तु आविर्भावतिरोभावौ, उत्पत्तिस्वीकारे पूर्वमसतः कथं सत्त्वं भवेत्। अभावात् भावस्यानुत्पत्तेः। अतएव सदेवेदमग्र आसीदिति श्रुतिः समन्वेति। नापि निरन्वयनाशो भावस्याभावत्वायोगात्। प्रत्यक्षन्तु तिरोभावान्न भवति। सन्नेव तिले स्नेहो मर्दनेनाविर्भवति। अन्यथा बालुकाया अपि कथन्न भवति। तथैव पयसि पूर्वमपि तिरोभूतं दधि अम्लादिद्रव्य-सम्बन्धेन परिणामेनाविर्भवति। तथा च पयसां दध्नां स्फटिकादीनां नाश-स्यैवाभावात् न स्फटिको दृष्टान्तः। क्षीरविनाशे क्षीरावयवैरेव यदि गुण-परावृत्तिमन्तरा दध्न उत्पत्तिश्चेत् दध्न्यपि क्षीररसोऽनुभूयेत। यदि पर-माणुपर्यन्तविभागे परमाणौ पाकेन दधिरसानुगुणो गुणः समुत्पद्यते तद् गुणिभिश्च परमाणुभिः क्रमशो द्रव्यारम्भकसंयोगेन दध्न आरम्भे दध्न एव दध्युत्पाद इति नियमेन परमाणावपि दधित्वं स्यात्। तथा च क्षीरैर्दधि-सम्पदिति सार्वजनीनः प्रत्ययो विलीयेत। तथाह्यनुमानम्। दधित्वं परमाणु-वृत्ति अवयवावयविवृत्तिजातित्वात् पृथ्वीत्ववत्। न च पटावयवे अंश्यवय-विनि च वृत्तेस्तन्तुत्वे व्यभिचारः तदवयविवृत्तित्वे सति तदवयववृत्तिजाति-त्वात्। अथवा द्व्यणुकवृतिजातित्वस्य हेतुत्वम्। न च दधित्वन्न परमाणु-वृति पृथ्वीत्वव्याप्यजातित्वात् पटत्ववदित्यनेन सत्प्रतिपक्ष इति वाच्यं पटत्वाभिव्यक्तेरवयवसंस्थानाधीनत्वेन परमाणौ अवयवसंस्थानानाम-भावात् पटत्वाभिव्यक्तिर्न भवति तस्मात् परमाणुवृत्तित्वाभावव्यापक-पृथ्वीत्वव्याप्यजातित्वाव्यापकतत्तज्जात्यभिव्यञ्जकाभावस्योपाधित्वात्। दध्नश्च जातिव्यञ्जको रसविशेषो वर्तत एव तत्र। न च दधित्वव्यञ्जकमपि न रसविशेषवत्त्वं किन्तु रसविशेषवदवयवित्वमेवेति व्यञ्जकाभावात न परमाणौ दधित्वसिद्धिरिति वाच्यम्, लाघवाद् रसविशेषमात्रस्य व्यञ्जक-त्वात्। कथमन्यथा गन्धवदवयवित्वस्य पृथ्वीत्वव्यञ्जकत्वमङ्गीकृत्य पर-माणौ तस्या अपि वृत्तिता विरहेत्। यद्वा दधिद्व्यणुकं दध्युपादानजन्यं जन्यत्वे सति दधित्वात् स्थूलदधिवदिति। अथवा दधिद्व्यणुकोपादानम्वा न क्षीरा-रम्भकं दध्यवयवत्वात् दध्यारम्भकदध्यवयववत्। इत्यादि।

तन्न समीचीनं सतः कार्यस्य सामग्र्यधीनत्वविरोधात्। न केषाञ्चित् हस्तामलकवतां बुद्धिपूर्वकं तत्प्राप्तये सामग्र्यर्थमायासः। न चाविर्भावाया-यास इति वाच्यम् आविर्भूतेरपि सत्याः कारणव्यापारस्यानावश्यकत्वात्।

तस्याः असत्त्वे तस्या एवासत्या उत्पत्तेः सिद्धान्तविरोधात्। न चाविर्भूतेरप्याविर्भावान्तराय कारणव्यापार इति वाच्यं तस्याप्येवमिति रीत्याऽनवस्थापत्तेः। क्वचिद् विश्रान्तौ च तत्रैवासत उत्पत्त्या असतः सर्वत्रोत्पत्तिस्वीकारे बाधाभावात्। न चापूर्वोत्पादेऽपि उत्पत्तिर्यदि सिद्धा कारणव्यापारवैयर्थ्यम। नास्ति चेत् उत्पत्तेरप्युत्पत्त्यन्तरमिति रीत्याऽनवस्थाप्रसङ्गः, आद्यक्षणसम्बन्धस्योत्पत्तिरूपत्वात् कारणव्यापारात् पूर्वं तस्यासत्त्वात् तत्सम्बन्धस्य सम्बन्धान्तरमेवोत्पत्त्यन्तरं वाच्यन्तच्च सम्बन्धस्य सम्बन्धान्तरास्वीकरणमनवस्थाभयात् सर्वमते सिद्धम्। संयोगस्य तु गुणत्वात् तस्य सम्बन्धान्तरं स्वीकुर्वते। यदि साङ्ख्यमतेऽप्याविर्भावो भावस्य क्षणसम्बन्धरूपश्चेत् आविर्भूतेः पूर्वं क्षणसम्बन्धाभावात् असत्त्वमेवापतेत् कार्याणाम्। अलीकव्यावृत्तस्य कालवृत्तित्वस्य कालसम्बन्धित्वस्यैव वा सत्त्वम्। आविर्भावात्प्राक् कालासम्बन्धित्वेऽपि सत्त्वमित्यत्र श्रद्धाविरहः। श्रुतिस्तु अभावात् भावोत्पत्तिं वारयति न तूत्पत्तिमेवेति न विरोधः।

किञ्च साक्षादनुभूयमानेन पूर्वव्यूहात् व्यूहान्तरेण पूर्वव्यूहनिरोधस्यानुमानं भवति समानोपादानकस्य युगपन्मूर्तद्रव्यस्य विरोधात्। तथा च सूत्रम् ( व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ) तथा कुण्डलव्यूहात् कटकरचनां सुवर्णे पश्यता कुण्डलाकृतेर्नाश इत्यनुमीयते तथैव दध्याकृतिदर्शनेन क्षीराकृतेर्विनाश इत्यनुमीयते। ननु पुनरपि तस्मिन्नेव कार्तस्वरे कुण्डलाकृतिः कटकाकृतेस्तिरोभावान्तरमनुभूयते निरन्वयनाशे कथन्तत्र अनुभव इति चेत् हन्त कार्याणां स्वरूपयोग्योपादानतां पश्यन् कार्यमस्तीति ब्रवीषि। कुण्डलस्वरूपयोग्यतायाः सुवर्णमात्रे तिष्ठन्त्याः कटकसुवर्णेऽपि सत्त्वात्।

किञ्च क्षीरपरमाणनामावश्यकत्वात् ये एव क्षीरावयवाः परमाणवस्ते विशेषपाकजगुणवशात् दधि आरम्भन्ते न परमाणुषु दधित्वसिद्धिः। परमाणुषु पृथ्वीत्वव्याप्यजातेरभावेऽपि परमाणव एव विशेषपाकजगुणवन्तो विभिन्नं पृथ्वीरूपं द्रव्यमारभन्ते। परमाणूनां विशेषास्वीकारे कथं केचन परमाणवः कलमं केचन यवं केचन गोधूममारम्भेरन्। किन्तु यवेषु कलमत्वं कलमेऽपि यवत्वमित्यादि सांकर्यं भवेत्। पूर्वोक्तानुमाने च अनुकूलतर्काभावः। तथा हि पृथ्वीत्वव्याप्यजातिः परमाणुवृत्तिः स्यात्तदा पटवृत्तिः स्यादिति विपरीततर्कापत्तिश्च। तथा दध्यारम्भकाः परमाणवो न दधित्वाश्रयाः नित्यपार्थिवत्वात् पटारम्भकपरमाणुवदिति विपरीतानुमानस्य सत्त्वात्। न च व्यञ्जकासत्त्वस्योपाधित्वेन व्याप्यत्वासिद्धिः शक्या

पूर्वोक्तेन दधित्वं यदि परमाणुवृत्ति स्यात् पटवृत्ति स्यादिति प्रतिकूलतर्केण रसविशेषवदवयवित्वस्यैव दधित्वव्यञ्जकत्वात् ।

किञ्च यथा सर्वत्रोपादानोत्कर्षेण उपादेयोत्कर्षः प्रतीयते तथा दुग्धोत्कर्षापकर्षाभ्यां दध्युत्कर्षापकर्षौ प्रतीयेते । तच्च पयसामुपादानत्वाभावे विरुध्येत । न चेन्धनोत्कर्षापकर्षाभ्यां वह्नेस्तौ दृष्टचरौ तस्माद् उपादेयोत्कर्षादिनं उपादानोत्कर्षव्याप्य इति चेत् यस्योद्भूतरूपस्योत्कर्षार्थं तद्वृत्तिद्रव्यत्वव्याप्यजातीयं यदुपादीयते तत् तदुपादानोपादेयम् इति व्याप्तेः स्वरूपत्वात् । इन्धने तु न तद्वृत्तिद्रव्यत्वव्याप्यजातेस्तेजस्त्वस्य भावस्तस्मान्न व्यभिचारः । उद्भूतरूपस्येतिविशेषणाद् अनुद्भूतरूपवह्न्युत्कर्षार्थं समासादितवह्न्युत्कर्षे न व्यभिचारः । उपादेयता च साक्षात्परम्परासाधारणी बोध्या । अत एव पटोत्कर्षाय उपात्ते तन्तूत्कर्षे न व्यभिचारः । न च यद् दधि तन्न दुग्धारभ्यमिति व्याप्तेः स्थूले दर्शनात् दधिद्व्यणुकन्न दुग्धत्वाश्रयपरमाणूपादेयं दधित्वात् इत्यनेन न दुग्धारम्भकत्वं परमाणाविति वाच्यं द्व्यणुकारम्भकाः परमाणवो यद्यपि पयसोऽवयवास्तथापि परमाणुषु दुग्धत्वन्नाङ्गीक्रियते । सत्तायास्तथा द्रव्यत्वस्य द्रव्यत्वसाक्षाद् व्याप्यजातेरेव परमाणौ वृत्तित्वनियमात् । क्षीरपरमाणूपादानकत्वे दध्नः क्षीरावयवैः सहान्येऽपि परमाणवोऽदृष्टाकृष्टाः कथन्नारम्भका इति चेन्न पूर्वोक्तनियमेन क्षीरभिन्नानां परमाणूनां दध्युत्कर्षानाधायकत्वात् दध्युपादानत्वविरहात् । अत एव सर्वत्र दध्युत्कर्षाय दुग्धोपादानमेव सर्वेऽन्वेषयन्ति ।

किञ्च यद् द्रव्यं यद् द्रव्यध्वंसजन्यं तद् द्रव्यं तद्द्रव्योपादानोपादेयमिति व्याप्तेः क्षीरध्वंसजन्यत्वेन दध्नः क्षीरोपादानोपादेयत्वं सिद्ध्यति । साक्षात् परम्परासाधारण्यत्रोपादेयता निविष्टा । तेन परमाणूनां क्षीरानवयवत्वेऽपि स्थूलदुग्धध्वंसजन्ये दधिनि न व्यभिचारः ।

रत्नकोषकृतस्तु दुग्धत्वादेर्द्रव्यवृत्तित्वेऽपि तद्व्यञ्जकस्य रसविशेषस्यावश्यकत्वात् द्रव्यत्वसामानाधिकरण्यबुद्धेश्च परम्परासम्बन्धविषयकत्वं वर्णयन्तो रसविशेषवृत्तिरेव दुग्धत्वादिजातिरितिवदन्तीत्यलं प्रसङ्गपतितस्य विस्तरेण । यत्त्वत्र मुक्तकच्छानां क्षीरविनाशदधिन्यायेन स्फटिकादीनामुत्पादविनाशयोर्निष्कारणकत्वसाधनम्, तत्तु घटादीनामुत्पादविनाशयोः सकारणकत्वसाधनेन व्यभिचरितम् । स्फटिकादीनामुत्पादविनाशौ क्षीरदधिविनाशोत्पादाविव निष्कारणौ किम्वा घटादीनामुत्पादविनाशौ प्रत्यक्षसिद्धसकारणकाविव सहेतुकाविति संदिग्धासिद्धिश्च । वस्तुतः स्फटिकादीनामुत्पादविनाशौ निर्हेतुकाविति प्रतिज्ञैवासिद्धा । धर्मिणस्तादृशोत्पादविनाश-

स्यैवासिद्धेः प्रत्यक्षबाधितञ्चेति न तत्पक्षकसाध्यस्य सिद्धिः। तस्माद-युक्तमेतत्।

किञ्च अन्ते विशेषदर्शनादिति हेतुरसिद्धो विरुद्धश्च। तथाहि यो हि भवतां क्षणिक एको भावस्तत्रापि विशेषदर्शनञ्चेत् विशेषदर्शनेऽप्येकत्वात् न तेन भेदः सिध्येत्। यदि स्थिरे विशेषदर्शनञ्चेत् पक्षकुक्षिनिक्षिप्ततया स्थिर-त्वमङ्गीकरणीयं भवेत्। यदि पक्षे न हेतुश्चेत् स्वरूपासिद्धिः।

किञ्च विशेषदर्शनेन सह प्रतिक्षणभेदस्यान्वयो व्यतिरेको वा सहचारो दैशिको वा कालिको वा स्थिरमनङ्गीकुर्वाणेन न दर्शयितुं शक्य इति विशेष-दर्शनेन स्थिरत्वं व्याप्तं क्षणिकत्वन्तु विरुद्धमेव। किञ्च हेत्वन्तर्गतान्तपदस्य विशेषतः कोर्थं इति क्षणिकपक्षे नायाति। कतिचित्क्षणस्थितेषु भावेषु अन्तिमो भावानां क्षणोऽन्तशब्दवाच्यः। स च क्षणिकत्वाग्रहिणां क्षण इव विलीयेत। नापि अन्तिमो भावोऽन्तशब्दाभिधेयस्तस्मिन् विशेषदर्शनाभावात् विशेषदर्शनन्तु स्थिरे वस्तुनि कस्यचिद् गुणस्य धर्मस्य वा परिवर्तने भवति क्षणिकत्वन्त्वाकस्मिकमेव स्यात्। यदि निरर्थकमेव चेत् व्यर्थविशेषणवत्वाद् धेत्वसिद्धिविशेषः।

यत्तु स्फटिके शीतोष्णदर्शनाद् भेदसाधनन्तत्तु न विचारसहम्। यतस्तेषु शीतोष्णगुणादेर्भेदो न क्षणिकोत्पादात् किन्तु निमित्तान्तरात्। तथाहि पार्थिवा अनुष्णाशीतवन्तोऽपि अपां संयोगाच्छीतास्तेजसाञ्च संयोगादुष्णा जायन्ते तथैव स्फटिकेऽप्यपां सम्बन्धात् शीतता तेजसाञ्च सम्बन्धादुष्णता प्रतीयते न तु स्फटिकान्तरोत्पादाद् इति गुणग्रहणस्य भेदेऽपि धर्मिणः स्फटिकस्य न भेदसिद्धिः। नन्वपां संयोगादेव शीततायाम् आशुशुक्षणिसम्पर्कादेवोष्ण-तायां तेषां सर्वेषु स्पर्शिद्रव्येषु तुल्यसम्बन्धात् हेमन्ते प्रासादोपरि पर्युषितानां काष्ठभूम्यश्मलोहानां मध्ये नैकविधं शैत्यमनुभवन्ति तुल्यं तेषां जलतेजसां सम्पर्कं पश्यन्तोऽपि। एवमेव ललाटंतपे मध्यन्दिन उष्मरश्मौ सर्वेषां कृते तुल्ये सत्यपि शीतवत् काष्ठभूम्यश्मलोहेषु क्रमश उत्तरोत्तरेण उष्णप्रकर्षः प्रत्यक्षीक्रियते। तत्र विशेषहेतुमन्विष्यालभमानाः प्रतिक्षणं भावानामु-त्पादविनाशसन्तान्तःपातिषु केचन काष्ठादयोऽल्पशीतादिस्वभावा भावा आत्मानं लभन्ते केचन तु तीक्ष्णोष्णशालिन इत्यत्रैव निवर्त्स्यन्त इति न शक्यं भूतस्वभावस्योभयपक्षसाम्यात् भूतस्वभावा न निवर्तन्त इत्यङ्गीकारात यद्येवं न चेत् स्वभावनियताधीनं विना क्षणिकपक्षेऽपि न निर्वाहः। तथाहि तत्सन्तानान्तर्वर्तिन्यः काष्ठानां भूम्यादीनां वा व्यक्तयस्तुल्या एव भवन्तु तेषां विशेषे कारणाभावो यतस्तेषां समानः सन्तानः समा सामग्री। यदि भेद

आकस्मिकस्तर्हि काष्ठक्षणानां काष्ठक्षणेभ्योऽपि भेदोऽवतिष्ठेत। तथा च काष्ठक्षणानां भूम्यादिक्षणेभ्य एव भेदो न काष्ठक्षणेभ्य इत्यत्र नियतस्वभावाधीनं विना समाधिविरहे स्थिरपक्षेऽपि नियतस्वभावादेव शीतोष्णादीनामुत्कर्षापकर्षतुल्येऽप्यवादीनां संयोग इति न क्षणिकत्वसिद्धिः।

यदि न जलतेजोऽवयवानुप्रवेशं मन्यसे तदा नियतस्वभावाधीनं पृथ्वीपाथःपावकपवनानां क्रमशः खरस्नेहोष्णेरणात्मकानि भूतानीति कथितं बुद्धस्य लक्षणं व्याहन्येत। यतो भवतामेतादृश्या प्रक्रियया कठिनमपि पार्थिवं कदाचिच्छीतं कदाचिदुष्णमिति द्विस्वभावास्त्रिस्वभावा वा भावाः प्राप्नुवन्ति। यस्य पुनरवयवानुप्रवेशो मतं तस्य न दोषः। नियतगुणसत्त्वेऽप्यागन्तुकानां संयुक्तसमवायेन प्रतीतौ बाधकाभावात्।

किञ्च एकस्मिन् काले एकत्र कठिनमुष्णं गच्छतीति स्वभावत्रयाङ्गीकारे विशेषदर्शनादिति हेतुर्विरुद्धः, एकस्मिन्नपि विशेषदर्शनस्वीकारात्। विशेषदर्शनेन भेदसाधनतत्पराणां सिद्धान्तविरोधः। अथ न त्वयं केवलविशेषदर्शनेनान्यत्वं साधयाम इति चेन्न न मया तावन्मात्रस्य हेतुत्वे दोषा उच्यन्ते किन्तु विरुद्धद्वयदर्शनादेव खरस्नेहोष्णेरणात्मकानि भूतानि इति लक्षणं ब्रुवता खरादीनां विरोधिताऽवश्यमङ्गीकार्या अन्यथा लक्षणानां परस्परसांकर्ये लक्षणप्रयोजनस्येतरव्यावृत्तेरसिद्धेः। तथा व्यवहारोऽपि न प्रमात्वमावहेत्। तथाहि यत् कठिनं कदाचिच्छीतं कदाचिदुष्णन्तत् किमभिधीयते, न तावत् खरलक्षणा पृथ्वी शीतोष्णादेरपि सत्त्वात्। न जलं शीतस्वभावकं काठिन्योष्णयोरपि सत्त्वादिति रीत्या वायुरपि व्याख्यातः। सोऽयं हेतुर्बोधिकृतं भूतलक्षणं बाधते। नापि नानात्वं साधयतीति व्यर्थः। अवयवानुप्रवेशे जले तेजोऽवयवानामनुप्रवेशे उष्णस्पर्शवत् शुक्लभास्वरं कथन्न गृह्यते? न तावदभिभवात् सजातीयेन सवितुः प्रकाशेन उल्काप्रकाशस्य सजातीयस्याभिभवदर्शनात् इति वाच्यम्। किञ्चित् तेज उद्भूतरूपस्पर्शं यथा सवितुः प्रकाशः। किञ्चित् अनुद्भूतरूपस्पर्शं यथा चाक्षुषम्। किमपि उद्भूतरूपमनुद्भूतस्पर्शञ्च दीपप्रकाशो यथा। तथैव उद्भूतस्पर्शमनुद्भूतरूपं ग्रीष्मे तादृगेव जले इति न्यायसिद्धान्तात्। किञ्च स्फटिके भेदसाधिका प्रतिज्ञा तु विचारे तेजसा हिममिव विलीयते। यदि चास्या भेदमात्रं विषयः सिद्धसाधनं यतः कुम्भादिभ्योऽन्यः स्फटिक इति सर्वेषां मतम्। स्फटिकान्तरात् स्फटिकान्तरे भेद इति चेत् तदपि तादृगेव व्यक्तित्वावच्छिन्नभेदस्य सत्त्वात्। यदि पूर्वस्फटिकादुत्तरस्फटिके भेदो विषयस्तस्य कोऽर्थः? यदि पूर्वकालीनस्फटिकादिरयर्थस्तत्तु पूर्ववदेव।

यदि एक एव वर्तमानक्षणविशिष्टः पूर्वक्षणविशिष्टो न भवतीति चेत् विशेषणभेदस्य वास्तवत्वाद्विशिष्टे प्रतीयतेऽन्यथा एक इति कथं संभवेत्? न च पूर्वकालीनः कश्चिदपरः स्फटिक उभयपक्षपरीक्षितो यतो भेदं सिषाधयिषुर्भवान्। उभयसम्मतिसम्पन्नेष्वेव रूपादिपदार्थेषु घटादेर्भेद-सिषाधयिषा युक्ता। यदि अतीतं स्फटिकान्तरं पक्षीकृत्य वर्तमानात् भेदः साध्यते चेत् शीतोष्णस्पर्शविशेषस्य तत्रासत्त्वात् स्वरूपासिद्धिः। किञ्च वर्तमानात् स्फटिकादतीतमन्यदिति को नाम नाभ्युपैतीति कं प्रति साध्यत इति सिद्धसाधनम्। यदि स एवान्यदिति विषयं पश्येत् व्याघातः। यद्यन्य-स्तदा स एवेति पक्षासिद्धिः। यदि स एवेति पक्षो न सिद्धश्चेत् भेदानुमितेर-सम्भवात् क्षणिकत्वासिद्धेः। योऽप्ययं स्फटिकोऽयुगपत्कालप्रत्ययाना-मालम्बनं न भवतीति प्रतिज्ञार्थस्तत्र प्रदीपस्य दृष्टान्तत्वासम्भवात् न युक्तः। तथाहि न केचन भावा नैयायिकमते क्षणमात्रस्थायिनः प्रदीप-स्यापि क्षणप्रक्रियया कतिचित् क्षणस्थायित्वात्। तथाहि प्रदीप उत्पद्य-मान इन्द्रियेण संयुज्यते निर्विकल्पिका प्रदीपत्वस्य प्रत्यक्षानुभूतिस्तदनन्तरं प्रदीपावयवे कर्म। कर्मणा विभागस्तेन पूर्वसंयोगनाशस्ततो द्रव्यनाशः। इतिरीत्याऽनेकक्षणावस्थायित्वात्। एवमेव सर्वे भावाः विनश्यन्ति। न किमपि कार्यं निष्कारणं भवतीति विभागे पूर्वसंयोगनाशादौ कारणस्या-पेक्षायाः सिद्धत्वात्। विनश्यतोऽपि द्रव्यस्य चिरेण विनाशात्। अत एव आश्रयनाशस्य कार्यनाशं प्रति हेतुत्वम्। गुणनाशस्य च विरोधि गुणा-न्तरेणापि सम्भवः। ननु मास्तु प्रदीपो दृष्टान्तः विनश्यदवस्थे द्रव्ये संयातस्य कर्मणो दृष्टान्तत्वम्। तस्याश्रयनाशेन तदानीमेव नाशात् इति वाच्यम्, कर्म-विरोधिनां बौद्धानां मते कर्मणो दृष्टान्तत्वासम्भवः। अन्यथा सहकारिवादे स्थिरपक्षेऽपि कर्मवशात् भावानां क्रमयोगपद्यसंभवात् क्षणिकत्वाग्रहस्य त्यागापत्तेः। किञ्च न मया क्षणमात्रवृत्ति तदपि कर्म स्वीक्रियते किन्तु क्षण-द्वयावस्थायि। तथाहि न द्रव्यनाशकाले कर्मापत्ति र्मानाभावात्। किन्तु नाश-पूर्वक्षण एव, समवायिकारणस्य कार्यकालवृत्तित्वेन हेतुत्वात्। द्वितीयक्षणे तु न कर्मनाशस्तद्द्रव्यनाशापेक्षकत्वात्। योऽप्ययं हेतुः दर्शनादर्शनादिति तदप्यन्यथासिद्धम्। तथाहि प्रदीपस्य देवदत्तादेर्वा दर्शनादर्शने नोत्पादविनाश-हेतुके किन्तु देशान्तरसंयोगविभागजन्ये। यत्र देशे संयोगो भावस्य तत्र दर्शनं यस्माच्च विभागस्तत्रादर्शनमिति नानेन भावानां क्षणिकत्वं कल्प-नीयम्। स्थिरपक्षेऽपि तत्तद्देशसंयोगविभागाभ्यां दर्शनादर्शनयोरुपपत्तेः। संयोग एव च ( इह ) बुद्धेर्निमित्तम्।

किञ्च प्रदीपस्य पक्षेऽस्मिन् दृष्टान्तत्वमेव न समन्वेति । तथाहि देशकालादीननपेक्ष्य यदि प्रदीपस्य क्षणसन्तानमात्रप्रभवत्वं तदा प्रदीपक्षणसन्तानाः सर्वत्रैव देशे प्रदीपक्षणानुत्पादयेयुः । यदि यद्देशे संस्कृतः क्षणसन्तानस्तत्रैव प्रदीपोत्पत्तिरिति चेत् देशान्तरे पुनरुत्पत्तिरसिद्धा । न च तद्देशे कृतसंस्कारोऽपि उपसर्पणप्रत्ययवशात् देशान्तरेऽपि कार्यमुत्पादयेदिति वाच्यम् उपसर्पणप्रत्ययः प्रदीपे कञ्चिदुपकारमाधत्ते न वा । न तावदाधानं सम्भवति सन्तानान्तःपातिनः सर्वे क्षणाः समाना इति कुत्रोपकार आधेयः कुत्र नेति विशेषासम्प्रत्ययात् । उपकारानाधाने तु सहकारित्वमेव नेति बौद्धसिद्धान्तात् । न च सहकारिभिर्विशिष्टक्षणजननमेवोपकार इति वाच्यम् विशिष्टप्रदीपक्षणानामपि पूर्वस्मात् सन्तानादेवोत्पत्तेः सहकार्यनपेक्षणात् । नापि तत्कारणस्याप्युपकारकाः सहकारिणः विशिष्टप्रदीपक्षण इव तत्पूर्वेऽपि सर्वे क्षणाः स्वपूर्वक्षणसन्तानसम्पन्ना इति सहकारित्वमुपसर्पणप्रत्ययस्य असिद्धमेव । यदि पुनरनुपकारिणोऽपि सहकारिणोऽन्वयव्यतिरेकितया क्षणिकेन प्रदीपेन कार्यक्रियां प्रत्यपेक्ष्यन्ते इति सिद्धान्तश्चेत् स्थिरपक्षेऽपि तथैव सहकारिणोऽपेक्ष्येरन्निति कुतः क्षणिकत्वसिद्धिः ।

यदपि विनाशस्य सहेतुकत्वाभावादित्यादिहेतुदर्शनन्तदपि न समीचीनम् विकल्पानुपपत्तेः । विनाशहेतुं निषेधतास्फोरणीयं यत् किमकारणत्वात् विनाशोऽसन् । अथवाऽकारणवत्त्वात् नित्यः । भवतां मते द्विधाऽकारणवत्त्वस्य दर्शनात् । मन्मते तु नित्यमेव तुच्छस्याभावात् । यदि कारणाभावात् नित्यो विनाशस्तर्हि कार्याणामुत्पादो न प्राप्नोति । किञ्च विनाशस्य नित्यत्वात् भावानां विनाशेन सहावस्थानप्रसङ्गः । ततश्च भावाभावयोः परस्परविरोधाभावात् सर्वदा उभयोः सत्त्वप्रसङ्ग इति किमापतितम् ? । यदि विनाशोऽसन् तदापि स तुच्छ एवेति भावानां विनाशासम्भवात् निरोधासम्भवात् भावानां नित्यत्वापत्तेः साधु क्षणिकत्वं समर्थितं भवेत् । यस्तु भवान् विचारप्रणाल्यां भावाः स्वकारणेभ्यो विनश्वराः अविनश्वरा वा जायन्त इति विकल्पितवान् तत्र किं नाम विनश्वरत्वं भवतामभिमतम् । यदि विनाशस्वभावत्वम् तच्च नोपपद्यते परस्परविरुद्धतयोपलभ्यमानयोस्तादात्म्यानुपपत्तेः । उपपत्तौ वा पूर्ववत् तयोः परिहारासम्भवेन विनाशवद् भावोऽपि द्वितीयादिक्षणेऽवतिष्ठेतेति सदातनत्वप्रसङ्गात् क्षणिकत्वं साधयतो नित्यत्वं सिद्धमिति विनायकं प्रकुर्वतो मर्कट आपतितः । तथा भावसमयेऽभावात्मा विनाशोऽप्यवतिष्ठेतेति भावानामत्यन्ताभावस्य

सत्त्वात् भावानां भावत्वं विहन्येत। न च क्षणमात्रस्थितिमन्तो भावा द्वितीयादिक्षणे तद्विनाशोऽवतिष्ठतामिति वाच्यमेवं तर्हि तयोर्विरुद्धाधर्माध्यासेन भेदसिद्धेर्भावानां विनाशस्वभावत्वासिद्धिः। अतो विनश्वरत्वं विनाशार्हत्वं तच्च विनाशनिरूपितस्वरूपयोग्यतारूपजनकत्वम्। न च तर्हि विनाशार्हाश्चेत् भावाः कारणेभ्यः समायातास्तर्हि आत्मोदयानन्तरमेवापवृज्येरन् इत्यापादनं सम्भवति न हि तद्योग्याः सामग्रीसन्निधानरहिता अपि तत् संपादयन्ति। नहि तण्डुलाः पचेलिमाः इति जननोऽनन्तरमेव पयःपावकसंयोगादि विनैव पक्वतामायान्ति। एवं भिदेलिमानि काष्ठानि। तथा विनाशार्हा अपि पटादयस्तन्तुनाशात् तन्तुसंयोगनाशाद्विनश्यन्तीति प्रत्यक्षसिद्धं किमनुपपन्नं नाम ?।

विनाशस्यासत्त्वे च विनश्यतीति प्रतीतेः को विषयः। न हि गतावसत्यां गच्छतीति प्रत्ययः। तस्माद् विनाशो भावानां सन्नेव। यस्तु विकल्पो भावादभिन्नो भिन्नो वा विनाश इति तन्न चारु यतोऽभावस्योत्पादे भावस्य परा निवृत्तिर्न किंत्वभावोत्पाद एव भावस्य विरोधः। तस्मादन्यस्याभावस्योत्पादे भावस्य कथन्निवृत्तिरिति वचनं विरुद्धम् अभावोत्पादस्यैव भावनिरोधरूपत्वाद्! ननु पटोत्पादो यथा न घटनिवृत्तिस्तथाऽभावोत्पादो भावस्य निवृत्तिर्न भवेदिति शंका संजायत इति चेत् स्वतोऽत्यन्तभिन्नस्याङ्कुरस्य यथा न वह्निः कारणं तथा स्वतो भिन्नत्वाविशेषात् उभयपक्षेऽपि भस्मनोऽपि कारणन्न स्यादिति कथन्नाशङ्कसे। आशङ्क इति चेत् जिज्ञासुर्भव स्वीकुरु अक्षपाददीक्षां भजस्व भावभेदेन समाधानमन्त्रम्। अतः स्वतोऽत्यन्तभेदानां सत्त्वेऽपि केषुचिदेव कार्येषु कियन्ति कारणानि भवन्ति अन्वयव्यतिरेकबलात् न सर्वैः सहान्वयव्यतिरेकौ स्वभावभेदात् तथा घटविनाशोत्पादादेव घटनिरोधस्य दृष्टतया तदानीमेव घटनिरोधो न तु पटोत्पाद इति!

नाप्यसम्भवो भिन्नस्य स्वाभावस्य सत्त्वाद्। तदङ्गीकारे तु स्थिरपक्षेऽपि सामञ्जस्यसम्भवे क्षणिकत्वं न सिध्यति। अत एव अखिलसामर्थ्यरहितस्यापि प्रागभावस्य किञ्चिदकुर्वन्तोपि बीजादयोऽङ्कुरं कुर्वाणाः प्रागभावं निवर्तयन्ति अङ्कुरोत्पादस्यैव अङ्कुरप्रागभावनिवृत्तिरूपत्वाद्।

अतोऽभावस्य किञ्चिदकुर्वन्तोऽप्यभावहेतवो भावं निवर्तयन्ति सिद्धम्। नन्वेवं चेत् भावः पूर्ववदर्थक्रिये कथं न करोतीति चेदुत्पत्तेः पूर्वमसत्त्वाद् अकुर्वाण आसीद् भावः, साम्प्रतं कथं करोति इत्यपि संदेहः,

असत्त्वान्नाकार्षीत् सत्त्वात् करोति यदि समाहितञ्चेत् तुल्यमत्रापि पूर्वं सत्त्वादकार्षीत् विनाशेऽसत्त्वाद् न करोतीति ।

ननु उपजनापायधर्मतया भावाभावयोस्तुल्यत्वात् संसारे सच्चासच्चेति द्वैराश्यं न भवेदिति वाच्यं को नामोपजनो भावानां स्वकारणसमवायो वा सत्तासमवायो वा उभयमपि अभावे नास्ति । यदि स्वरूपप्रतिलम्भ एवाऽसौ तदास्तु तावन्मात्रसाम्यम् अवान्तरभेदेन द्वैर इयं विश्वस्य सेत्स्यति । यथा द्रव्याण्यभिन्नान्यपि अवान्तरभेदेन भिन्नानि भवन्ति । तथा भावाभावयोरपि सत्तातद्विरहाभ्यां भेदः । अन्यच्च विनश्वरतायां ध्रुवभावितया वस्त्वन्तरानपेक्षकत्वसिद्धायां हेतुमात्रनिषेधासम्भव इतरनिषेधस्य शेषाभ्यनुज्ञाफलत्वात् ।

## ध्वंसस्य ध्रुवभावित्वखण्डनम्

अपि च ध्रुवभावित्वमसिद्धमनैकान्तिकञ्च, तथा हि सजाजात् घटसन्तानात् कपालसन्ततिर्ध्रुवभाविनी न वा । न चेत् न घटस्य विनाशोऽपि ध्रुवभावी । घटावयवविभागक्षणोत्पादमन्तरेण घटविनाशादर्शनात् । अथ कपालसन्ततिर्ध्रुवभाविनी चेत् तस्मिन्नेव तर्हि विभागसन्ताने ध्रुवभाविनि मुद्गरादिपातस्य हेत्वन्तरस्य दर्शनात् अनेकान्तिको हेतुर्ध्रुवभावित्वस्वरूपः । किञ्च अकारणो विनाश इति मन्वानैः विनाशस्य विनाशः कथन्नाङ्गीक्रियते ? । न च विनष्टानां पुनरुत्पत्तिभियेति वाच्यं कार्याणां विनाशाभावस्वरूपानङ्गीकारात् । कारणाधीनाः भावाः सामग्रीकालयुत्पद्यरेन् न विनाशनाश इति सिद्धान्तात् । वस्तुतो ध्वंसो न विनश्यति सादित्वे सति संसर्गाभावत्वात् । यन्नैवं तन्नैवं यथा प्रागभाव इत्यादि युक्त्या विनाशस्य विनाशित्वाभावः, न च कार्यत्वात् विनाशित्वसिद्धिः कार्यत्वहेतोर्भावत्वोपाधिमत्त्वात् । अत एव अकार्योऽपि प्रागभावो विनश्यति ।

ननु यदि विनाशः सहेतुकस्तर्हि जनकस्यापि विनाशकत्वप्रसङ्गः । तथाहि ये एवाग्निसंयोगाः पाकजगुणान्तरोत्पादकास्ते एव पूर्वगुणानामुच्छेत्तार इति वाच्यम् अन्येऽग्निसंयोगाः पूर्वगुणानां नाशका अन्ये च पाकजगुणान्तराणामुत्पादका इति न जनकस्य विनाशकत्वप्रसङ्ग इति काश्यपीदर्शनदष्टेः । न च तेऽपि संयोगाः सजातीया इति जनकसजातीयस्य विनाशकत्वप्रसङ्गेऽभिप्राय इति वाच्यम्—असिद्धेः । नहि विनाशजनकतावच्छेदकोत्पत्तिजनकतावच्छेदकजात्योर्विरोधः सिद्धः । यत्पुनर् अवादि सयोगेनैव अङ्कुरस्योत्पादः अवादीनां संयोगेनैव तेषां कार्य्याणां नाश इति सांकर्यं

दृष्टम् । न हि प्रत्यक्षदृष्टे काप्यनुपपत्तिर्नाम । किञ्च क्षणिकत्वाग्रहिभिः क्षणिकशब्दार्थो वाच्यः ।

तथाहि न क्षणिका इत्यस्य विनाशिन इत्यर्थः सिद्धसाधनापत्तेः । अथाशुविनाशिन इति चेत् सिद्धसाधनाभावेऽपि तव मते चिरविनाशिनोऽभावात् आशुरिति विशेषणस्य वैय्यर्थ्यापत्तेः । अथोत्पन्नप्रध्वंसिनः सोऽपि उत्पन्नः । प्रध्वंसिनश्चेदित्यभिप्रायस्तदापूर्ववत् सिद्धसाधनम् । यदि उत्पत्तिविनाशयोरेककालः इति चेत् यथा अनुत्पन्नस्योत्पादस्तथा अनुत्पन्नस्य विनाश इति प्राप्नोति । अथापि उत्पन्नमेव विनश्यतीतिवाच्यम् विनाशस्य सकारणकत्वसिद्धेः । तथा च यथोत्पत्तिः क्रियात्वात् सकारणा तथा विनाशोऽपीति सिद्धम्, यश्चाऽयं क्षणिकशब्दे ( अत इनठनौ ) इति पाणिनीयसूत्रेण मतुवर्थे ठन् सोप्यनुपपन्नः ।

यदि क्षणशब्देन क्षयः उच्यते तदा क्षयोऽस्यास्तीति विग्रहः। तदा कस्य क्षयः ? यदि प्रतियोगिनस्तदा क्षयस्याभावात् । नापि अनन्तरेण विनाशेन विशिष्टो भाव एव क्षणिक इति तयोर्विभिन्नकालत्वात् सम्बन्धित्वानुपपत्तेः । यदपि क्षणस्थितिकालाः क्षणिका इति तदपि न युक्तम् । संज्ञाशब्दस्य सत्त्वेऽपि विशेषणत्वानुपपत्तेः ।

यदपि लोष्टादेर्दृष्टान्तदानं तदपि तुल्यगुरुत्ववन्तोऽपि सहकारिणां गुरुत्वानन्तरप्रयत्नप्रक्षेपाणां समवधानवशात् चिराचिरनिपातवन्तो भावा इति अन्यथासिद्धम् । घण्टायामपि सहकारिसमवधानवशात एव ध्वनिषु तीव्रत्वमन्दत्वयोरुपपत्त्या संस्कारस्य क्षणिकत्वे दृष्टान्तत्वासम्भवः ।

यश्चायं सत्त्वक्षणिकत्वयोर्व्याप्तिग्रहाय अर्थक्रियाकारित्वरूपसत्त्वोपपादनाय सत्तायाः खण्डनप्रकारः स तु विचारासहः । तथाहि प्रतियोगित्वसम्बन्धावच्छिन्नध्वंसत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्न - भाववृत्तिकारणताया अवच्छेदकतया सत्ताजातेः सिद्धेः । न च तस्या भावमात्रे वृत्तित्वानुपपत्तिः सन्निति प्रतीत्यनुरोधेन समवायतद्घटितसामानाधिकरण्यान्यतरस्य स्वीकारात् । बौद्धेन भावमात्रस्य विनाशस्वीकारात् ।

किञ्च सत्त्वं हेतुः स्थिरान्निवर्तमानञ्चेत् असाधारणम्, तथाहि सत्त्वं सापेक्षानपेक्षत्वाभ्यां व्याप्तम्, यानि क्षितिजलपवनतेजोवीजान्यन्त्यक्षणप्राप्तानि उत्तरेषां क्षितिजलतेजःपवनबीजाङ्कुराणामुत्पादकानि बौद्धाभिमतानि परस्परापेक्षाणि निरपेक्षाणि वा जनकानि, यदि निरपेक्षाणीति चेत्

तदन्तर्गतबीजक्षणोऽपि समर्थो बीजक्षणोत्पादने निरपेक्ष एव समर्थः स्यात् तथा च सर्वे एव बीजक्षणाः निरपेक्षा समर्था भवेयुः कृतं सहकारिभिः।

ननूक्तं प्रेक्षावत्त्वाभावात् समवधानविरोधाभाव इति चेत्, तत् किं कृषीवला अपि न प्रेक्षावन्तो येन सेचनार्थं भूमेः कर्षणाय दुःखं सहन्ते ?।

ननु क्षित्यादिसहभुव एव बीजक्षणस्य समर्थत्वात् तेषां श्रम इति चेत् किमयं स्वसन्तानमात्रप्रभवो बीजक्षणः क्षित्यादिसन्तानान्तरन्नापेक्षते ? ननु स्वोत्पादेऽपेक्षते न तु स्वकार्ये इति चेत् समर्थबीजक्षणाश्च सर्वे निरपेक्षा भवेयुः समर्थबीजक्षणस्यापि स्वसन्तानीयपूर्वबीजक्षणाधीनत्वात् तेभ्य एव तस्योत्पादे कुशूलस्थ एव बीजे कृतिनः कृषीवला भवेयुः, यदापि सापेक्षाणि तदापि बीजेनापेक्ष्यमाणाः क्षित्यादिक्षणाः येन रूपेणाङ्कुरं जनयन्ति तेन रूपेणैव तदितराण्यपि जनयन्ति भिन्नरूपेण वा ?।

न तावदाद्यः क्षित्यादीनामपि अङ्कुरस्वाभाव्यापत्तेः। यदि भिन्नरूपेण तदा सामग्रीभेदात् कार्यभेदापादनं तदवस्थमेव, किञ्च सर्वेषां क्षित्यादिक्षणानामङ्कुरं प्रत्युपादानता सहकारिता वा ?

कस्यचिदुपादानता कस्यचित्सहकारिता वा।

नाद्यः पूर्ववत् कार्यस्य भावस्यैक्यापत्तेः। नापि द्वितीय उपादानाभावे सहकारित्वस्य दुर्निर्वचत्वात्।

तृतीयपक्षे सहकारितोपादानते अभिन्ने भिन्ने वा ?।

आद्ये रूपान्तरेण जनकत्वानुपपत्तिर्द्वितीये कारणात् ते भिन्ने अभिन्ने वा।

आद्ये तयोरेव कारणत्वापत्त्या बीजस्याकारणत्वापातात्। द्वितीये बीजानां भेदप्रसङ्गः।

यत्तु तैरपेक्षाविकल्पे सहकारिभिः सहैव करोतीति सहकारिवादे पलायमानानपि सहकारिणो गले पाशैर्बध्वाऽनयेदित्याद्युक्तं तत्तु स्वमुखनिरीक्षणं विनैव। तथाहि तवाऽपि मते यदि सहकारिणामपेक्षा नास्ति परं सहकारिणोऽभावे कार्यानुत्पत्त्या तैर्विना न करोतीति व्यतिरेकस्वभावः स्वीकरणीय एव। तथा च स्वकारणात् सन्निदधतोऽपि सहकारिण उत्सार्य नैव कुर्यात्। यतस्तैर्विना न करोतीति स्वभावः। यदि तैः सहैव करोतीति स्वभावोऽपि चेत् विरोधः स्पष्ट एव। किञ्च विरुद्धधर्माध्यासेनापि न क्षणिकत्वसिद्धिः तस्यासिद्धेः। न च समर्थश्चेत् कुर्यात् न करोति तस्मान्न

समर्थः। एवं स-.र्थभिन्नश्चेत् क्षित्यादौ अपि न कुर्यात् करोति चेत् समर्थं इति प्रसङ्गविपर्ययाभ्यां सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासः सिध्यतीति वाच्यम्। सामर्थ्यं फलोपहितत्वरूपं स्वरूपयोग्यत्वरूपं वेति विकल्पानर्हत्वात्। न तावदाद्यः आद्यस्यापि तद्रूपतया आपाद्यापादकयोरभेदप्रसङ्गात्। नाप्य-भावयोर्भेदेनानयोर्भेदः प्रतियोगिनोर्विरोध एवाभावविरोधात्। प्रतियोगि-नोश्च आपाद्यापादकयोः सामर्थ्यकरणयोर्भेदः व्यावर्त्यप्रतिक्षेपात् गोत्वाश्व-त्ववत् स्यात्। व्याप्यव्यापकभावेन वृक्षत्वशिंशपात्वयोरिव कार्यत्वा-नित्यत्वयोरिवोपाधिभेदो वा?। ज्ञानभेदो वा। नाद्य एकस्य स्वीकारेऽन्या-भावनियतत्वात् बाधस्वरूपासिद्धिप्रसङ्गात्। नापि द्वितीयः व्याप्यव्यापक-भावानभ्युपगमात्। अभ्युपगमे क्वचित् समर्थस्याप्यकरणं समर्थभिन्नस्य च करणमिति प्रसङ्गात्। तृतीयस्तु उपाधेरभावादयुक्तः। न च शब्दमात्र-मुपाधिः पर्यायशब्दोच्छेदप्रसङ्गात्। चतुर्थपक्षे तु विषयभेदात् ज्ञानभेदस्य ज्ञानभेदेन विषयभेदस्वीकारेऽन्योन्याश्रयप्रसङ्गात्। नापि निर्निमित्तः सर्वत्र भेदप्रसङ्गात् नापि स्वरूपयोग्यतारूपम् तद्धि सहकारिसाकल्यं आ सकलकारण-व्यक्तिव्याप्तोपाधिविशेषो वा?। नाद्यः सिद्धसाधनात्। नान्त्यः सोपि बीजत्वादिरूपः, कुर्वत्त्वादिरूपः सहकारिवैकल्यप्रयुक्तकार्याभाववत्वं वा?।

न तावदाद्यः अकुर्वतोऽपि बीजजातीयस्य सर्वमतसिद्धत्वादापाद-कत्वायोगात्। न द्वितीयः, उभयमतसिद्धत्वाभावात् आपादकस्योभयपक्ष-परिक्षितत्वावश्यकत्वात्, न च प्रमाणं तत्र। तथाहि न तत् प्रत्यक्षेणानु-भूयतेऽनुव्यवस्याभावात् नापि अनुमानेन हेत्वाभावात्। न च योऽयं सहकारि-मध्यमधिशयानो भावो यदि अक्षेपकरणस्वभावश्चेत् पूर्वमपि तदेव तदानी-मपि कुर्यादिति प्रसङ्गेनानुमेयमिति वाच्यम् भावस्याक्षेपकरणस्वभावा-सिद्धेः। प्रसङ्गविपर्ययाभ्यां तत्साधने त्वन्योन्याश्रयः। यदि च तृतीयनङ्गी-करोषि तदा सत्यमसि भगवतो बुद्धस्य शिष्यो जीव वर्षशतम्। पालयाऽ-हिंसां मा कुरु स्थिराणामपि प्रतिक्षणं हिंसाम्। अथवा विरुद्धधर्म्माध्यासेन क्षणिकत्वं साधयतां क्षणिकेऽपि विरुद्धधर्माध्यास आपतति। तथाहि क्षणिकोऽपि भावः स्वकालकृतामर्थक्रियां कालान्तरेऽपि कथं न करोति? असत्वादिति चेत् किमस्य सत्त्वेन, नास्य सत्त्वप्रयुक्तमर्थक्रियाकारित्वम्, तथा चेत् सन् भावो देशान्तरेऽप्यर्थक्रियां कथं न कुर्यात्?। देशान्तरस्प्रत्य-सत्त्वमिति चेत् सत्त्वासत्त्वयोर्विरुद्धयोरध्यासः। कालान्तरे असामर्थ्यात् नार्थक्रिया भवतीति वाच्यम् तर्हि सामर्थ्यासामर्थ्ययोरेव धर्मयोरध्यासः। किञ्च सत्त्वस्य भावाद्भिन्नतायाः अस्वीकारात् भावरूपमेव सत्त्वं बौद्धानां

तदा स एव भावः इदानीमस्ति कालान्तरे नास्तीति अस्तित्वनास्तित्वयोर्विरुद्धयोरध्यासः । यदि कालभेदेन नास्ति विरोध इति चेत् ममापि सामर्थ्यासामर्थ्ययोरेवमस्तु ।

## स्थिरत्वसाधनम्

तथाहि स्थिरतासाधकान्यनुमानानि । कार्यकारणे समानकाले आधाराधेयभावरूपत्वात् कुण्डक्षीरवत् । न च क्षणिकत्वपक्षे आधाराधेयभावो भविष्यति कारणविनाशक्षणे कार्योत्पत्तेः । न च भिन्नकालयोराधाराधेयभावो दृष्टः । न च बौद्धमतसिद्धो दृष्टान्तो न वर्तते इति वाच्यम् रूपस्य स्पर्श आश्रय इति तद्दर्शनप्रसिद्धिः ।

किञ्च विप्रतिपन्नाः अयुगपत्कालाः प्रत्ययाः एकविषयाः अव्युत्थापिततत्प्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यत्वात् वर्तमानैकक्षणानेकपुरुषप्रत्ययवत् । यथाहि क्षणिकभावविषयकाः अपि प्रत्यया अनेकपुरुषकर्तृकाः समानकालीना एकविषया इति पक्षद्वयसम्मतम् । तथैव समानशब्दवाच्या भ्रमभिन्ना अपि विप्रतिपन्नाः प्रत्यया इति समानविषयकत्वं सिद्धम् ।

अपरञ्च । परस्परानुसन्धानपुरःसरा अयुगपत्कालाः प्रत्ययाः प्रत्यात्मं नानेककर्तृकाः अप्रतिसन्धानप्रसङ्गात् देवदत्तज्ञानस्य यज्ञदत्तेनाप्रतिसन्धानवत् । इत्यप्यनुमानम् ।

अन्ये तु प्रतिसन्धीयमानाः रूपरसगन्धशब्दादिनानाविषयाः प्रत्ययाः एककर्तृकानेकविषयाः मयेति प्रतिसन्धानात् कृतसमयानां बहूनां वर्तमानैकक्षणानेकज्ञानवत्, इत्याद्यनुमानैः कर्तुः विषयस्य च स्थिरतायाः सिद्धत्वात्, सत्त्वक्षणिकत्वयोर्व्यापकभावविरहोऽन्यथा यथा देवदत्तेन गृह्यमाणमन्यो यज्ञदत्तो न प्रतिसन्धत्ते तथा सर्वेषां क्षणिकत्वपक्षे आत्मनोऽपि क्षणिकत्वात् पूर्वानुभूतं पश्चान्न स्मर्येतेति भावः ।

एवमेव श्वस्तनाद्यतनविज्ञानानि एकसन्ततौ एकानेकनिमित्तानि मयेति प्रतिसन्धानात् दृष्टान्तः पूर्ववत् ।

तथा शास्त्रार्थप्रत्यया एकानेकनिमित्ताः प्रतिसन्धानादित्यादीनि लिङ्गानि स्थिरपक्षे नेयानि ।

तथा च क्षणिकत्वपक्षस्य स्थिरताविरोधिनोऽस्थिरत्वात् परमाणोर्नित्यत्वं तिष्ठतीति ध्येयम् । इति निबन्धवृद्धिभिया संक्षेप इति क्षणिकवादखण्डनम् ।

ननु वेदान्तिरीत्या ब्रह्मण उपादानत्वसम्भवे परमाणोरुपादानत्वे मानाभावः। उपादानत्वेऽपि तन्मूलकनिरवयत्वनित्यत्वे न सिध्येते, निरवयवनित्यस्य ब्रह्मणो मूलकारणस्य सत्त्वात्, अनवस्थाद्यनापातात् इति वाच्यन्तथाहि तन्मतम्।

## ब्रह्मण उपादानत्वम्

'उततमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' छान्दोग्ये 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' मुण्डके 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विदितम् बृहदारण्यके इत्यादिभिः श्रुतिभिर्ब्रह्मविषयके प्रश्ने समाधाने वा ब्रह्मणो ज्ञानात् सर्वस्य जगतो ज्ञानं भवतीति प्रतिज्ञायते। तच्च ब्रह्मण उपादानत्व एव संगच्छते। तथाहि उपादानोपादेययोरभेदात् उपादानज्ञान उपादेयज्ञानं सम्भवति न तु निमित्तज्ञाने नैमितिकस्य ज्ञानं सम्भवि कुलालज्ञानेन घटस्य यथा। तथा 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचाऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात। एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्, छान्दोग्ये, यथा पृथ्व्यामोषधयः सम्भवन्ति, मुण्डके 'स यथा दुन्दुभेर्हन्यमानस्य न वाह्यान् शब्दान् शक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत इति' बृहदारण्यके, इत्यादि दृष्टान्तश्रुतिभिरुपादानज्ञानेनोपादेयज्ञानं समर्थ्यते यथा मृत्पिण्डेन ज्ञातेन सर्वेषां मृन्मयानां विज्ञानात् तथैकेन लोहमणिना विज्ञातेन सर्वेषां लोहमयानां विज्ञानं भवतीति। उपादानज्ञानेनोपादेयज्ञानानुपपत्त्या च उपादानोपादेययोस्तादात्म्यमङ्गीक्रियते। किञ्च मृत्तिकेत्येव सत्यमित्यनेन विकारस्य वाग्भिर्व्यवहारमात्रं सत्यमुपादानमेवेति सूचितम्। सत्यकारणज्ञानाद् विकारज्ञानं युक्तम्।

किञ्च यतो वा इमानि भूतानि जायन्ते येन जातानीत्यादौ ब्रह्मप्रतिपादकयच्छब्दोत्तरं जनिः कर्तुः प्रकृतिरिति सूत्रेण प्रकृत्यर्थिका पञ्चमी। तथा च श्रुत्यैव प्रकृतित्वरूपमुपादानत्वं ब्रह्मण इति सिद्धम्। तथा च सूत्रम् (प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्। अ० १-४-७-२३। किञ्च १-४-७-२४ अभिध्योपदेशाच्च, सूत्रेण अनागतेच्छासंकल्परूपाया अभिध्यायाः ब्रह्मणयेव सम्भवात् जगतो ब्रह्मोपादानकत्वसाधनम्। तथा च एकोऽहं बहुस्यां प्रजायेय, इति श्रुत्या अहं प्रतिपाद्यब्रह्मणो बहुभवनाभिध्यानं संगच्छते। किञ्च यतो वा इमानि भूतानि जातानि येन जातानि जीवन्ति

यत्प्रत्यभिसंविशन्ति, सर्वाणि ह वा भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति । इत्यादिश्रुतिभिः सृष्टेरुत्पादप्रलयौ ब्रह्मण्येव व्यपदिश्येते । घटादीनाञ्च उपादाने कपाले एव विनाशस्य दृष्टतया कार्याणां ध्वंस उपादान एवेति नियमेन ब्रह्मणि जगतो लयाभिधानेन ब्रह्मण उपादानत्वमावश्यकीयम् । किञ्च ( सच्च त्यच्चाभवत् ) इत्यादिवाक्यैः ब्रह्मणः परिणामित्वं सिध्यति । परिणामश्च प्रकृतेरेव विकारात्मनेति ब्रह्मणः प्रकृतित्वम् । किमुत साक्षादुपादानवाचकेन योनिशब्देनापि ब्रह्मणः ( कर्तारमीशं पुरुषं ब्रह्मयोनिम् ) इति मुण्डके यद्भूतयोनिं परिपश्यन्ति धीरा इति मुण्डके, श्रुतेन व्यवह्रियते । न च योनिष्ट इन्द्र निषदे अकारि, इति ऋक्संहितायां स्थानवाचकोऽपि योनिशब्दो दृष्ट इति वाच्यम् ( यथोर्णनाभिः सृजते गृह्णते च ) इति वाक्यशेषात् ऊर्णनाभिदृष्टान्तेन उपादानवाचकस्यैव योनिशब्दस्यात्र पाठात् ।

## ब्रह्मोपादानत्वखण्डनम्

तत्र आपाततः श्रुत्यर्थविचारात् । तथाहि अश्रुतं श्रुतं भवतीत्यादौ शक्तिः लक्षणा वा । नाद्या अश्रुतश्रुतयोर्विरोधात् । न हि वेदाज्ञाशतेनापि नीलमनीलं भवेत् । अश्रुतश्रुतादिपदानां पूर्वकालिकाश्रवणोत्तरकालिकश्रवणयोस्तात्पर्ये तदनुपपत्त्या लक्षणाया अङ्गीकारात । अत एव पद्मवाचकस्यापि कमलपदस्य सौरभविशिष्टकमलत्वेन बोधे लक्षणामाक्षिपन्ति वागर्थव्युत्पत्तिशालिनः । नापि पूर्वोत्तरपदयोराक्षेपात् अभिधया निर्वाहः तथा सति सर्वत्र लक्षणाया उच्छेदापत्तेः । नाप्यभीष्टसिद्धिः पूर्वमज्ञातस्यापि कालान्तरे साधनान्तरेण ज्ञातस्य सिद्धतया श्रुतेरनुवादकत्वप्रसङ्गात् ।

ननु भवतु नामेष्टेऽर्थे लक्षणैव सर्वोपास्यमानावृत्तिस्तथैव ब्रह्मोपादानत्वं सिध्यति जगत इति न वाच्यं विकल्पानर्हत्वात् । तथाहि ब्रह्मज्ञानेन सर्वेषां वस्तूनां ज्ञानं सामान्यरूपेण विशेषरूपेण वा । आद्ये सामान्यरूपं प्रमेयत्वं ब्रह्मत्वं वा ।

नाद्यः सिद्धसाधनात् । प्रमेयत्वेन रूपेण सामान्यलक्षणया सर्वेषां प्रत्यक्षस्य सिद्धत्वात् । न च सामान्यलक्षणाऽनङ्गीकारे न स्यादिति वाच्यम् वेदान्तिनयेऽपि तदापत्तेः सत्त्वात् । न च ब्रह्मज्ञानेन भविष्यति श्रुत्युक्तत्वाद् इतिवाच्यं श्रुतिर्हि उपायप्रदर्शिका न कार्योत्पादिकेति सर्वजनसिद्धत्वात् । सर्वविषयकज्ञाने ब्रह्मज्ञानमुपायं विदधती श्रुतिर्न सर्वविषयकं ज्ञानमुत्पादयेत् । न च तत्प्रामाण्यान्यथानुपपत्त्या ब्रह्मज्ञानेन सर्वं विज्ञेयमिति

कल्प्यत इति वाच्यम् , सर्वविषयकज्ञानोत्पादनतया ब्रह्मज्ञाने श्रुतेः प्रामाण्यसिद्धौ तदनुपपत्त्या ब्रह्मज्ञानेन सर्वज्ञानकल्पनं तत्कल्पनायाञ्च व्याहतार्थप्रतिषेधिकायां सत्यां श्रुतेः पूर्वोक्ते प्रामाण्यमित्यन्योन्याश्रयात् । नापि व्याहतेऽर्थे वेदान्तिभिरपि प्रामाण्यमङ्गीक्रियतेऽन्यथा ( असद्वा इदमग्र आसीत् ) इति श्रुत्या असदुपादानत्वमपि जगतः स्वीक्रियेत । सामान्यलक्षणाङ्गीकाराभावेऽपि श्रुतिस्थसर्वपदेन सर्वेषां शाब्दबोधस्य सिद्धत्वात् । न च ब्रह्मज्ञानेन प्रत्यक्षत्वम्, तद्धि बाह्यं मानसं वा । नाद्यम् सर्वेषामिन्द्रियसन्निकर्षाभावात्, तद्विरहेऽपि प्रत्यक्षाङ्गीकारे सिद्धसाधनापत्तेर्विरोधाच्च । नापि मानसं तद्धि लौकिकमलौकिकं वा नाद्यम् आत्मधर्मिणामेव लौकिकमानसाङ्गीकारात् । नापि द्वितीयम्, तद्विषयकज्ञानस्य सन्निकर्षस्य सत्त्व एव तदङ्गीकारात्। न च सर्वविषयकज्ञाने ब्रह्मज्ञानं सन्निकर्षः। स्मृतेश्च पूर्वानुभूतेरपेक्षायाः । नापि ब्रह्मत्वरूपं सामान्यम् तस्यासिद्धिः । सर्वेषु समानेषु वृत्तिर्हि सामान्यमुच्यते । न च व्यापकत्वात् सर्ववृत्तित्वं व्यापकत्वस्य विभुत्वरूपतया वृत्तित्वविरहात् । न च समानसम्बन्धित्वमेव सामान्यमिति वाच्यम् येन सम्बन्धेन सामान्यस्य ज्ञानं तेन सम्बन्धेन सामान्यवतां ज्ञानमित्यनुभवसिद्धम् तथा ब्रह्मसम्बन्धिनः सर्वे इत्येव ज्ञानं स्यात् तथा चापि सिद्धसाधनम्।

तस्य ब्रह्मणि व्यापकत्वज्ञानाधीनत्वात् । ब्रह्मणो विभुत्वे ज्ञातेऽर्थात् तादृशज्ञानोत्पत्तेः सिद्धत्वात् । नापि विशेषरूपेणेति द्वितीयः कल्पः । तथाहि विशेषरूपेण भावानां ज्ञानं प्रत्यक्षमनुमितिरूपमिति शाब्दः स्मृतिर्वा । नाद्यः सर्वज्ञं विना विशेषरूपेण ज्ञातुरभावात् । नापि तत्र ब्रह्मज्ञानस्योपयोगः प्रत्यक्षे हि विशेषणज्ञानस्योपयोगः ब्रह्मज्ञानस्य चाविशेषणज्ञानत्वात् । नापि अनुमितिः सर्वविषयकानुमितौ ब्रह्मज्ञानस्य व्याप्तित्वाभावात् । नापि सादृश्यज्ञानन्तद् अत एव नोपमितिः । शाब्दज्ञानमपि न तावतां शब्दानामज्ञानात् ब्रह्मज्ञानस्य तत्रानुपयोगात् । सर्वविषयकत्वाभावात् ब्रह्मज्ञानस्य न स्मृतिरपि । ननु ब्रह्मविषयकं ज्ञानं सर्वविषयकमिति वाच्यम् । तद्धि सामान्यरूपेण विशेषसर्वविषयकं विशेषरूपेण सर्वविषयकं वा । नाद्यः ब्रह्मत्वस्य सामान्यत्वाभावस्योक्तत्वात् । रूपान्तरसामान्यज्ञाने ब्रह्मज्ञानस्यानुपयोगात् सामान्यनिष्ठप्रकारतायाः सत्त्वेऽपि विशेष्यतायाः सामान्यवद्विशेषव्यक्तिविश्रान्ततया सर्वविषयकत्वस्य दुर्निर्वचत्वापत्तेश्च । किञ्च येन रूपेणानुभवस्तेनैव रूपेण स्मृतिरनुभवसिद्धा । अन्यथा प्रमेयत्वेनरूपेणानुभवस्य सत्त्वात् विशेषरूपेण स्मृत्यैव कृत्यकृततया श्रुतेरपूर्वबोधकत्वानापत्तेः विशेषरूपेण सर्वविषयकं ज्ञानन्तु प्रागसिद्धमेव ।

नाप्यभ्युपगमसिद्धान्तेनाप्युपादानज्ञानेन ब्रह्मविषयकेन उपादेयानां जगतां सर्वेषां ज्ञानं सम्भवति, उपादानज्ञानेनोपादेयज्ञानस्यासिद्धत्वात्। न कुत्रचित् कपालज्ञानेन घटानां ज्ञानमनुभूतम्। न च कपालकार्यत्वेन रूपेण घटस्य ज्ञानं यथा जायते तथा ब्रह्मोपादानकत्वेन रूपेण जगतां ज्ञानं सेत्स्यतीति वाच्यम् विशेषरूपेणैव सर्वज्ञानस्याभिप्रेतस्य तेन रूपेणासिद्धेः। प्रमेयत्वादिसामान्यरूपेण ज्ञानस्य सिद्धत्वात् ब्रह्मोपादानकत्वस्य जगति ज्ञान एव तादृशस्यापि ज्ञानस्य सिद्धिर्नतु ब्रह्मज्ञानमात्रेण। न चोपादानोपादेययोरभेदात् तत्सिद्धिरित्यूह्यम् तदसिद्धेः। न चैकमनेकेषामुपादानं दृष्टं मृत्तिकाया अपि प्रत्युपादेयं भिन्नत्वात्। कार्यनानात्वस्य दृष्टत्वात् ब्रह्मणोऽपि नानात्वापत्तेः। न च मृत्तिकात्वेन मृत्तिकैवेति वाच्यं हन्त किमनेनेष्टव्यम् किमनेन ब्रह्मत्वेनैकं ब्रह्म, सिद्धान्तविरोधात्। नानाकार्येण तादात्म्याङ्गीकारे ब्रह्मणोऽपि नानात्वापत्तेः। किञ्च तादात्म्याङ्गीकारे घटपटयोरनुत्पादविनाशयोः कपालतन्तवो नावतिष्ठेरन्। दृश्यते चोपादेयविरहेऽपि उपादानमवतिष्ठते। न च न भावानां नाशः किन्तु तिरोधानमत उपादानकाले तिरोहितमुपादेयं वर्तत एवेति वाच्यं तर्हि कारणतिरोधानमपि युक्तम्। तथाहि तिरोधानातिरोधाने विरुद्धे न वा। अविरुद्धे चेत् अतिरोधानवत् तिरोधानेऽपि वस्तून्यनुभूयेरन्। तिरोधानवदतिरोधानेऽपि वा न दृश्येरन्। विरुद्धे चेत् तर्हि समकालीने कार्यकारणयोरतिरोधानतिरोधाने कार्यकारणयोर्भेदं साधयतः। नापि भेदाभेदस्तादात्म्यमितिमतेन समाधानम् अविरोधिनोर्भेदाभेदयोः स्वीकारेऽपि सर्वत्र तादात्म्यापत्तेः। विरोधिनोरपि समावेशस्वीकारे अर्हन्मतदीक्षाया इवापत्तेः। तस्मादभेद एव तादात्म्यन्न तु भेदघटितोऽपीति। न चाभेद एव ब्रह्मणः सर्वैः सहेति वाच्यं तर्हि घटज्ञानेनापि ब्रह्मज्ञानस्य सिद्धतया कृतकृत्यतापत्तेः। न च घटत्वेन ज्ञातमपि ब्रह्म निर्धर्मिकतया ज्ञानं मोक्षोपयोगीति वाच्यम् उपादेयतादात्म्यस्योक्तत्वात् तादात्म्यरूपधर्मस्य सिद्धे निर्धर्मिकत्वस्य ब्रह्मण्यसिद्धत्वात्। न च भेदाभावस्तादात्म्यं तस्यापि धर्मत्वात्। नन्वभावोऽधिकरणस्वरूप इति चेत् स्वरूपस्यापि धर्मत्वात्। तथा च निर्धर्मिकत्वेन ब्रह्मज्ञानं न तत्त्वज्ञानम्। न चोपादानव्यतिरिक्तस्यासत्त्वादेव ब्रह्मज्ञानेन सर्वं ज्ञायते इति युक्तम् उपादेयानामसत्त्वादुपादानज्ञानेन उपादेयज्ञानमिति विरुद्धमसतो ज्ञानस्यासम्भवात्। असतोऽपि ज्ञानमिति चेत् तस्योपादानाभावात् उपादानज्ञानं विनाप्युपादेयज्ञानापत्तेः। ननु वैयावहारिकी सत्ता तत्राप्युपेयत इति वाच्यमेवमपि वैयावहारिकप्रातिभासिकयोरुपादानज्ञानेन बाध्यत्वमेवाङ्गीक्रियते वेदान्तिभिर्न तु

तेषां ज्ञानम् । किञ्च श्रुतावेव ब्रह्मपदं सर्वपदञ्च तुल्यम् । ब्रह्मणः पारमार्थिकता सर्वेषां वैयावहारिकतेति कुत आयातमिति चेत् प्रकरणान्तरेऽसत्त्वोक्त्येति वाच्यम् विकल्पः कथं नेति चेत् असम्भवात्, कुतोऽसम्भव इत्यप्यनुयुक्ते तर्कशरणे सति स्वस्थ इति चेत् गृहाण तर्ककवचं वेदविचारेऽपि उद्घोषय च तर्कानुकूलमेव श्रुताविति सम्पन्ना तव भक्तिः । तस्मात् यथा यथा विचारे निकष इव कृष्यते एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा तथा तथा रङ्ग इव विलयमेति । तत्र च भगवत्या उपनिषदस्तात्पर्यवर्णनं कलङ्ककलनमेव । किञ्च तमेव विदित्वेत्यादिना आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिश्रुत्यन्तरेभ्यः आत्मज्ञानस्य मोक्षोपयोगिताया उक्तत्वात् किमर्थमयं सर्वविषयकज्ञानार्जनायायासः श्रुतेरिति न समाहितं भवति । किञ्चोपक्रमोपसंहारबलेन औपनिषदं पृच्छामीत्यादिवाक्येन च केवलं ब्रह्मसिद्धौ तज्ज्ञाने च श्रुतेस्तात्पर्यन्न तु सर्वस्मिन् ज्ञाने । तथा च कस्य पदार्थस्य ज्ञानं विशेषतो मोक्षोपयोगीति पञ्चकोशादिवाक्येन कुत्रचिदन्नस्य कुत्रचित् लिङ्गशरीरस्य कुत्रचित् प्राणस्य एवमोंकारस्य चक्षुषस्तेजसः सूर्यस्य, तथा न्यायस्मृत्या षोडशपदार्थानां काणादस्मृत्या च षण्णां साधर्म्यवैधर्म्ययोर्ज्ञानस्य विहिततया मुमुक्षूणां संशये प्रतिज्ञात्वेनाभिमताः श्रुतयो ब्रह्मज्ञानं विशेषतो साक्षादुपयोगीति विदधति । न चान्यासां श्रुतीनां स्मृतिमूलिकानां च का गतिरिति चेत् ब्रह्मणि ज्ञाते सर्वेषां ज्ञानस्य फलं प्रतीकोपासनादि विहितम् मोक्षरूपायां सर्वं सिद्ध्यति । तस्मादन्येऽविज्ञाता अपि ज्ञानफलस्य सिद्धतया विज्ञाता इव भवन्तीत्यत्र श्रुतेस्तात्पर्यं वर्णनीयम् । यथाऽद्याऽपि व्यवहरन्त्येव मुख्ये विषये ज्ञाते तदङ्गिनोऽन्येऽपि ज्ञाता भवन्तीत्यादि ।

ननु सर्वेषां वेदान्तवाक्यानामद्वैते ब्रह्मणि तात्पर्यात् सर्वं ब्रह्ममयं जगदित्यादिश्रुतिभिः सर्वेषां ब्रह्मरूपत्वात् सर्वेषां ज्ञानं ब्रह्मज्ञानमेवेति वाच्यम् । तत्राद्वैत इत्यस्य सजातीयद्वितीयराहित्ये तात्पर्यात् । ब्रह्ममयमित्यनेन ब्रह्मणो व्यापकत्वम् । अन्यथा मयटः, प्रचुरार्थत्वे ब्रह्मणो नानात्वं विकारार्थकत्वे विकारित्वमापतेत् । पारमार्थिकदशायामेकमेव सर्वमिति वाच्यम् । वैयावहारिकेषु प्रामाण्यं वर्तते न वा ? । वर्तते चेत् वैयावहारिकभेदस्य प्रमाणसिद्धत्वात् द्वैतम् । न चेत् वेदान्तिनः स्वमतं वादिभ्यः सभ्येभ्यश्च बोधयितुं शक्ता न वा । यदि शक्तास्तर्हि वादस्य व्यवहारदशायामेव सत्त्वात् वैयावहारिकस्य प्रामाण्यमायातम् । अप्रमाणमुपविशामीति स्वयमुक्तवतो वचसि कः श्रद्धधीत ? ।

न स्थापयितुं समाधिश्चेत् मूकवदन्तर्गुडगुडायमाना वादबहिष्कृता भवेयुः। एवञ्चेत् यदि वेदान्तिनो वितण्डावादमङ्गीकृत्य वाद्युपस्थापितं जगतः पारमार्थिकसत्त्वं केवलं निषेधयेयुस्तदा तुल्ययुक्त्या ब्रह्मणोऽप्यसत्त्वं सिध्येत्। यदि स्वमतस्थापनाय जल्पमावदीरन् तदा ब्रह्मेव जगदपि सत्यं भवेदित्यलं वादनिर्णयेन।

न च दृष्टान्तेन उपादानज्ञानेनोपादेयज्ञानमेव समर्थितन्तच्च तर्कमते विरुध्येतेति वाच्यम् श्रुतौ सर्वेषां तर्कानुकूलानामेवोल्लेख इत्यस्माभिरुक्तत्वात्। तथाहि एकेन मृत्पिण्डेन ज्ञातेन सर्वमृत्पिण्डज्ञाने श्रुतेस्तात्पर्याभावः असिद्धत्वात्। कथं सर्वप्रमाणशिरोमणिर्भगवती श्रुतिः प्रमाणान्तरासिद्धं दृष्टान्तमुपाददीत ?। न वानुभवः प्रेक्षावतामेकेन मृत्पिण्डेन ज्ञातेन सर्वमृत्पिण्डानां ज्ञाने। किन्तु सर्वेषु मृत्पिण्डेष्वनुगततया मृत्तिकैव प्रधानम्। तस्या एकस्या एव ज्ञाने विशेषतो विशेषाभावात् एवमेव अन्ये मृन्मया इति सामान्यतोऽनुमाय विशेषज्ञाने फलाभावात् ज्ञानानि वाऽन्यान् मृत्पिण्डान् विहाय निवर्तन्ते जनाः। तथैव सर्वेषां मूलभूतमीश्वरं विज्ञाय न किमप्यवशिष्यते विज्ञातुमिति दृष्टान्तेन श्रुतेः समर्थनम्। तत्र मृत्पिण्डेषु अनुगततया मृत्तिकायाः प्राधान्यमेव दर्शयितुमाह विकारो नामधेयम् मृत्तिकेत्येव सत्यम्।

किञ्च समाधेयया प्रतिज्ञयापि श्रुतेन स्फुटमेव निमित्तासमवायिकारणयोर्ज्ञानेन कार्यज्ञानं प्रतीयते। शब्दं प्रति दुन्दुभेर्निमित्तकारणत्वात् दुन्दुभ्याघातस्य च समवायिकारणत्वात्। किञ्च सर्वेषां यदि ब्रह्मैवोपादानन्तदा मृत्पिण्डेष्वपि तस्यैव उपादानत्वं कथम्मृत्तिकायाः दृष्टान्तत्वम्। किञ्च सत्यज्ञानेनासतो ज्ञानमसिद्धम्। न तु ब्रह्मज्ञानेन कस्यापि शशशृङ्गज्ञानमभिमतम्, शुक्तिज्ञानेन अपि तव मतेनापि रजतोच्छेद एव। तथा च असतः कार्यस्य सत्यब्रह्मज्ञानेन ज्ञानमाकस्मिकमेव। किञ्च ब्रह्मणः साक्षात् घटादिरूपेण परिणामे विकारित्वापत्तिः। परिणामित्वविकारित्वयोः व्याप्यव्यापकभावग्रहात्। अन्यथा मृदोऽपि निर्विकारत्वापत्तेः।

न च मायाया एव साक्षात्परिणामात् ब्रह्मणो न विकारित्वमिति वाच्यम्। तर्हि ब्रह्मण उपादानत्वासिद्धिः न च मायाया उपादानत्वेन ब्रह्मणो जगतोऽपि परम्परयोपादानत्वमिति चेद् अविद्यारूपा माया सादिरनादिर्वा। नाद्यः तस्या एव ब्रह्मोपादानत्वे ब्रह्मणो विकारित्वापत्तेः। अविद्यायाः पूर्वमसंसारापत्तेः। तस्याः सत्त्वे द्वैतापत्तेः सत्त्वाभावे जगतः सदुपादानकत्वमसिद्धम्। असत उपादानत्वायोगात्। परस्परपरिहारेण सिद्धाभ्यान्तृतीयकल्पस्याभावात्। अत एव न रथा न रथयोगा न पन्थानो

भवन्ति, इत्यादिना स्वाप्निकसृष्टेर्निषेधः। अनादिश्चेत् तस्या एव ब्रह्मोपादानत्वाभावाद् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानानुपपत्तेः। अनादेरपि सोपादानकत्वस्वीकारे श्रद्धाविरहः। अतएवाधिकरणान्तरेषु गगनस्यापि ब्रह्मजन्यत्व.ाधनं वेदान्तिनाम्। यत्तु न दधिक्षीरवत् ब्रह्मजगतोः परिणामः किन्तु रज्जुसर्पयोरिव विवर्तशब्दस्याभिधेयस्तथा च न ब्रह्मणो विकारित्वमिति तत्तु न समीचीनं सर्पस्योत्पादस्वीकारे सर्पस्य सत्त्वात् सर्पज्ञानस्य भ्रमत्वानापत्तेः। सर्वमते तदभाववति तत्प्रकारकत्वस्यैव भ्रमत्वात्। अतएव मध्यस्थर्षेर्मिथ्याज्ञानमतद्रूपप्रतिष्ठम् इत्यादिलक्षणस्य स्वीकारात्। किञ्चोपादानज्ञानेन उपादेयस्य निवृत्तिरेव वेदान्तिनयेऽपि सिद्धान्तो न तु कार्यज्ञानमित्यलं प्रपञ्चविरोधिनः प्रपञ्चेन।

नापि पञ्चम्या उपादानत्वं श्रुतम्, प्रकृतिशब्देन प्रधानस्यादिकारणस्याभिधानम्। अत एव मौढ्याद्दुःखिनो जाताः बलात् भाग्याद्वा विजयी जात इत्यादौ उपादानत्वाभावेऽपि पञ्चम्याविशेषतो व्यवहाराः विदुषामपि। न च तत्र हेतौ पञ्चमीति वाच्यम् आस्तां तर्हि अत्रापि का क्षतिः ब्रह्मणो जगद्धेतुत्वस्वीकारात् अत एव येन जातानीत्यत्र तृतीययाऽनुवादः। किम्वा धूमादग्निमान् इत्यादिवत् जन्यत्वे पञ्चमी यज्जन्यजनिमन्ति भूतानीत्याद्यर्थात्। अथवा सप्तम्यर्थे सर्वविभक्त्यर्थकस्तसिः। अनुपादानाद् धिमालयाद् यथा गङ्गायाः प्रथमः प्रकाशस्तथा परमात्मयत्नेन जगतः प्रथमं सर्जनम्, व्याससूत्रमपि जन्माद्यस्य यत इत्यत्र हेतुत्वेन निर्दिशति। अभिध्याया अपि इच्छायाः कर्तर्येव दृष्टत्वात् कर्तृत्वमेव ब्रह्मणो युक्तम्। न क्वचिदुपादाने इच्छाया आवश्यकताऽवलोकिता। तथा च ब्रह्म जगत्कर्तृ श्रुत्युपदिष्टाभिध्यावत्त्वात् यो हि अभिध्यावान् स कर्ता दृष्टो यथा कुलाल इति युक्त्या ब्रह्मणः कर्तृत्वम्। नाप्यहमेको बहुस्यामित्यादिना स्वोपादानं बहु भवनमभिध्यायते, एकस्यानेकतादात्म्यायोगात्। किन्तु स्वनिमित्तकमेवाभिध्यानम्। लोकेऽपि प्रजाः सृजेयमेवमेवाभिध्यानम्। नैव पुत्रात्मनि पितुरुपादानत्वमात्मनः ( नायं हन्ति न हन्यते ) इत्यादिप्रमाणैर्नित्यत्वबोधनात्, नापि शरीरे अवयविनं प्रत्यवयवस्यैवोपादानत्वात्। नायं पितुर्देहः पुत्रशरीरावयवतयोपलभ्यते। उपादाननाशे उपादेयनाशस्य सर्वमतसिद्धतया पितुर्नाशे पुत्रोज्जीवनं दुष्करं भवेत्। तस्माद्यथा लोके पितृणामभिध्यानपूर्वकं सर्जनं नोपादानतापोषकं तथा ब्रह्मण्यपीति भावः।

किञ्च वेदान्तिनये सर्पोपादानभूताया रज्ज्ववच्छिन्नाविद्याया नाशेन सर्पनाशस्वीकारेण नैयायिकनयेऽपि तन्तुनाशेन पटनाशस्य दृष्टत्वात् उपादान-

नाशेन कार्यनाशस्य स्वीकृतत्वात्, कारणनाशस्य कार्यनाशं प्रति हेतुत्वात् कार्यनाशात् क्षणैकपूर्वमेवोपादाननाशसम्भवेन क्व कार्यनाशस्य उपादान-देशनियमः। तथा च कार्यनाशाधिष्ठानतयोपादानत्ववर्णनमयुक्तमेव। अत एव नैयायिका अपि मुद्गरप्रहारजन्यकपालसंयोगनाशजन्यघटनाशस्य कपाले वृत्तित्वं स्वीकुर्वन्तोऽपि कपालनाशजन्यघटनाशस्य वृत्तिता काले देशे वा व्यापके गगने वा मतभेदेनाङ्गीकुर्वन्ति। तस्माद् ब्रह्मणो निमित्तत्वेऽपि सर्वत्र व्यापकतया कार्यनाशं प्रत्यधिष्ठानत्वं सम्भवत्येवेति न तत उपादानत्व-कल्पना युक्ता। अत एव श्रुत्यन्तरे आकाशशब्देनाभिधानम्। तथा च ब्रह्मणो निःस्पर्शत्वात् नीरूपत्वात् च अवकाशदानत्वसम्भवाद् आकाशशब्दाभिधे-यत्वम्। सर्वव्यापकतया चोत्पादप्रलययोरधिष्ठानत्वम्। तस्माद् ब्रह्मणो व्यापकत्वसाधिकेयं श्रुतिरिति भावः। नापि परिणामात् परिणामस्य पूर्वमेव खण्डितत्वात्। किञ्च ब्रह्म कार्त्स्न्येन परिणमतेंऽशेन वा। नाद्यः सर्वांशेन परिणामे तत्त्वविघातादनित्यत्वापत्तेः। अंशत्वेन परिणामेंऽशित्वापत्तेः तथा च ब्रह्म विनाशि अंशित्वात् पटवदित्याद्यनुमानेनानित्यत्वापत्तेः। अथ तत्त्वेनानुगतस्य परिणामः तच्च ब्रह्मेति वाच्यन्न तर्हि ब्रह्मणः परिणामः। न च निर्भागस्यैकस्य स्वसंवेदनप्रत्यक्षस्य विपरीतज्ञानगोचरत्वसम्भवः। शुक्तिकादौ च सामान्यतो दृष्टे विशेषरूपेणाग्रहे च तदन्यरूपारोपेण भ्रमो भवति यथा शुक्त्या। न तु जातु शुक्तिरूपं विद्वान् रजतमिति विपर्यस्यति। न च निरंशे स्वसंवेदनप्रत्यक्षे ब्रह्मणि तत्स्वरूपाग्रहः सामान्यरूपग्रहो वा भवति। तस्मादीश्वरो जगद्रूपेण विवर्तत इत्युक्तम्। निमित्तत्वे तु न किमपि बाधकम्।

किञ्च योनिशब्दोऽपि निमित्तकारणवाचक एव मातुर्योनेरपि संतति-शरीरं प्रत्युपादानत्वाभावात्, यदि उपादानं स्यात्तदा एकस्या योनेरनेक-संसृतेरसम्भवः स्यात्। न हि पटनाशं विना तस्मादेव तन्तुसमुदायात् पटान्त-रोत्पत्तिः संभाविता। किञ्चोपादेयात् पृथगुपादानं न गृह्यते। पूर्ववदुपादान-नाशे कार्यनाशापत्तिश्च। तथा च श्रुतौ योनिशब्देन निमित्तकारणाभिधान-मेव सम्यग्। अथवा ऋक्संहितानुसारं ब्रह्मणो व्यापकत्वात् स्थानवाचक-त्वेऽपि योनिशब्दस्य न क्षतिः। यथोर्णनाभिः सृजते गृह्णते चेत्यादिदृष्टान्ते-नापि नोपादानत्वसिद्धिः, ऊर्णनाभेः पृथगूर्णाया उपलम्भात् ऊर्णनाभेरपि ऊर्णां प्रत्युपादानत्वाभावात्।

तस्माद्व्याससूत्राणि ईश्वरसिद्धिपराणि जन्माद्यस्य यत इति प्रक्रमात्। आत्मकृतेः परिणामादिति सूत्रस्यापि ईश्वरकृतेः फलं जगत्

तस्मादीश्वरोऽस्तीति भावः। आत्मनः परिणामाद् इत्यर्थकत्वे कृतिपद-वैयर्थ्यं स्यात्।

किञ्च साक्षात् कर्तृत्वबोधकं (स ईक्षांचक्रे, स प्राणानसृजत) इत्यादि श्रुतिवाक्यम्। न च तेन ईक्षायाः प्राणानां वा कर्तृत्वं सिध्यतु सर्वकर्तृत्वं कुत आयातमिति वाच्यम् ईश्वरः कर्ता ईक्षापूर्वककृतिकत्वात् कुलालवत्। ईश्वरः कर्ता सर्जकत्वात् कुलालवत्। इत्याद्यनुमानेन कर्तृत्वसिद्धेः। न च ईश्वरत्वस्यासिद्धेराश्रयासिद्धिः श्रुतिसिद्धत्वेन पक्षतायां श्रुत्योपादानत्वेन सिद्धतया तदङ्गीकारापत्तेरिति भामतीभाषणं दूषणं श्रुतेरभिधया साक्षादुपादानप्रतिपादकत्वाभावस्योक्तत्वात्। लक्षणया बोधने तात्पर्याभावस्य साधितत्वात्, आगमसिद्धत्वेनेश्वरत्वेन पक्षतायां दोषाभावात्। अन्यत्रेश्वरत्वस्य साधितत्वात्। किञ्च श्रुतिस्थब्रह्मपदप्रतिपाद्यः कर्ता ईश्वरत्वात्। अस्य प्रशासने गार्गिसूर्याचन्द्रमसौ तिष्ठतः इत्यादिशास्त्रैरीश्वरत्वस्य सिद्धत्वात् राजवैवस्वतवत्। इति॥

## जगतोऽसदुपादानकत्वखण्डनम्

ननु असत एवोत्पादात् स्थूलानां समवायिकारणपरमाणुकल्पनायां मानाभावः। आह च भगवती श्रुतिः-असदेवेदमग्र आसीत्। इत्यादि। अतएव न बीजादङ्कुरा जायन्ते किन्तु बीजविनाशादेव। तथाहि पूर्वपक्षीयम् ( अभावात् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ) इति न्यायसूत्रम्। इदानीमपि सर्वत्रैव असत एवोत्पादो दृश्यते अन्यथा सत उत्पत्तिविरोधात्। कारणव्यापारवैयर्थ्यञ्च। तच्चाभावस्य कारणत्वे एव संगच्छते, तन्न युक्तम् नानुपमृद्य प्रादुर्भावाद् इति वाक्यस्य व्याघातार्थकत्वात्। तथाहि पूर्वं सत एवोपमर्दः असत उपमर्दाभावः। प्रादुर्भावस्तु असत एव। पूर्वं सन् उपमृद्नाति नासौ प्रादुर्भवति। यश्च प्रादुर्भविष्यन् असन्नङ्कुरः स नोपमृद्नाति बीजस्योपमर्दात्। उक्तवांश्च भगवानक्षपादः ( व्याघातप्रयोगः ) इति सूत्रेण। न च अतीतानागतयोरपि कारकशब्दा भाक्ताः प्रयुज्यन्ते। यथा भिन्नं कुम्भमनुशोचति भिन्नस्य कुम्भस्य कपालानि अभूत् कुम्भ इत्याद्यतीते, जनिष्यते पुत्रो जनिष्यमाणं पुत्रमभिनन्दति जनिष्यमाणस्य वा नाम करोतीत्यादिप्रयोगः। न च नेयमनुचिता भक्तिरुदेति आनन्तर्यस्य बोधनेन सप्रयोजनाया एव सत्त्वे बाधकाभावात्। पूर्वबीजोपमर्दनान्तरम् अङ्कुरस्य प्रादुर्भावः इति वाच्यम् व्याघातस्य तादवस्थ्यात्। भाक्ताः प्रयोगाः कामं भवन्तु नाम किन्तु अभावात् भावोत्पत्तिं मन्वानैरुच्यते नानुप-

मृद्य प्रादुर्भावात् इति तत्र प्रादुर्भविष्यतोऽङ्कुरस्य पूर्वमसत्त्वात् न तेन बीजोपमर्दस्तथाऽसतो बीजाभावात् कथमङ्कुर उत्पद्येत। न च बीजनाशाऽङ्कुरोत्पादयोः कार्यकारणभावः सनर्थकस्यैव पौर्वापर्यनियमस्यान्यनिमित्तकत्वात्। तथा हि अङ्कुरोत्पत्तिः पूर्वव्यूहनिरोधं विना न भवतीति बीजस्य पूर्वव्यूहस्य अङ्कुरोत्पत्तिप्रतिबन्धकत्वं कल्प्यते, अथवा बीजव्यूहान्तरस्य कारणत्वं स्वीक्रियते ? व्यूहान्तरञ्च पूर्वव्यूहनिरोधं विनाऽसम्भवीति पूर्वव्यूहनाशानन्तरं बीजावयवानां व्यूहान्तरमुत्पद्येत, तस्मादङ्कुरोत्पत्तेः। न च प्रेक्षावन्तः कृषीवन्तः अङ्कुराभिलाषिणो बीजाय प्रयतमाना भवन्तीति बीजस्यैव कारणत्वं युक्तमिति चेत् बीजावयवैः पद्यव्युत्पद्यमानोऽङ्कुरः परबीजमन्तरायातमिति तस्यैव कारणत्वेन तदुपादानं युक्तमेव। सूत्रेऽप्याह 'न विनष्टेभ्योऽनिष्पत्तेः, यदि बीजविनाशः अङ्कुरकारणञ्चेत् बीजेषु चूर्णितेषु बीजावयवानां विच्छेदेन व्यूहान्तराप्तावपि अङ्कुरोत्पत्तिः स्यात् अभावस्य विनाशस्याविशेषात् तस्मान्नासीद् बीजविनाशोऽङ्कुरं प्रति कारणमिति सिद्धम्। तस्मादभावस्योपादानत्वे मानाभावः।

किञ्च बीजविनाशस्य कारणत्वसाधको हेतुः यो हि तयोः पौर्वापर्यनियमः स च बीजस्य कारणतायामपि व्यूहान्तरसम्पत्तिद्वारा समन्वेतीति व्यभिचरितः; न चानन्तर्यस्य तुल्यत्वे बीजविनाशयोः कारणतायां विनिगमकाभावश्चिन्तनीयः, चूर्णितेभ्योऽपि बीजेभ्योऽङ्कुरानुत्पादरूपविनिगमकस्य दत्तत्वात्। अपरञ्च सर्वेषाम् विनाशानाम् अनुपाख्येयानां तुल्यत्वात् कलमबीजनाशे कलमत्वान्वितकलमबीजविनाशात् कलमत्वान्वितान्येव कार्याणि, शालिबीजविनाशात् शालित्वान्वितान्येवेति नियमो न स्याद् किन्तु सर्वस्मात् बीजविनाशात् सर्वेषामङ्कुराणामुत्पादसम्भवेन यवेऽपि कलमत्वं सस्येऽपि गोधूमत्वम् इति जातिसाङ्कर्यं स्यात्। परस्परव्यावृत्तजातीनां परस्परव्यावृत्तकारणतावच्छेदकजातिप्रयोजितत्वात्। यदप्यसत उत्पादादेव, अभावस्य कारणत्वसाधनं तदप्यनेनैव प्रत्युक्तम्। न च शक्तिभेदात् कार्याणां भेद इति समाधानम्, शक्तिशक्तिमतोरभेदे तथैवापत्तेः। भेदे शक्तिमतामपि भेदप्रसङ्गः विनाशस्य च भेदस्वीकारेऽनुपाख्यत्वं न स्यात्। प्रागभावानामपि न सामन्यतो भेदः। घटप्रागभावत्वविशिष्टेन भेदस्वीकारात्। किञ्च तस्यैव कारणत्वे तस्यानादित्वेन कार्याणामप्यनादित्वप्रसङ्गः। अभावस्य सहकारित्वन्तु कुसुमाञ्जल्युक्तदिशा स्वीकारोत्येव नैयायिकोऽपि। यतस्तेषां तुच्छत्वास्वीकारात्। अत एव पाकजरूपाद्यन्तरोत्पादे पूर्वरूपादेर्ध्वंसस्य कारणत्वं मन्यते। पूर्वोक्ता श्रुतिस्तु पूर्वपक्षीया

अत एव कथमसतः सज्जायेतेत्यादिना तदसम्भवं प्रतिपाद्य सदेव सोम्येद-मग्र आसीत् इत्यादिना सिद्धान्तितम् ।

तदेवम् असद् उपादानत्वासम्भवेन अनित्यानां भूतभौतिकानामुपादानं सद् भूतम् एकब्रह्मोपादानतानिरासेन अनेकं विचित्रं परिणामपराभूत्या आरम्भकमेण सर्वक्षणिकत्वप्रतिक्षेपेण नित्यं परमाणुस्वरूपं कृतिसाक्षाज्-जन्यक्रियाशालितया चेष्टाश्रयं परमात्मशरीरं समुपासितम् । अत एव विदेशीयदर्शनेषु चेतनपरमाणुपुञ्जवादोऽपि प्रसृत इति ।

गुरुचरणरजोभिः शार्करैर्मिष्टमिष्टम् ।
ममपतिगतदोषैस्तिक्ततामेति दूष्याम् ॥
निजहृदयरसं स्वं मेलयित्वा स्वदध्वम् ।
विदलितनयमार्गे दुर्लभः स्वच्छन्यायः ॥

सिवाने नवे मण्डले गम्हरीया निवेजाह्वयः काश्यपोविप्रवंशः ।
स केदारनाथस्तदंशो निबन्धं व्यधादार्पयत् पितृतोषे निवापम् ॥



श्री गणेशाय नमः

# परमाणुवाद

बाल कृष्ण शङ्कर गुरु चरण हृदय करी माह,
परमाणु परिशीलना कठिन पदारथ चाह।
लोभी मन शुचि न्यायपथ कर्कशतर्क समुद्र,
डुबेना कुछ करि सके माने नहीं ए क्षुद्र ॥

## परमाणु लक्षण

करुणाकर परमात्मा का शरीर बना हुआ परमाणु नाम का अणिमा ऐश्वर्यरूप से प्रसिद्ध जिसका निरूपण प्रस्तुत है वह क्या है? १—अणुपरिमाणवाला, २—परम अणुपरिमाणवाला, ३—अपकर्ष (छोटाई) से रहित अणु परिमाण वाला, अथवा उत्कर्ष (बड़प्पन) से रहित अणु परिमाणवाला, इन चारों प्रकार का नहीं संभव है, पहला अणुपरिमाण द्व्यणुक में अतिव्याप्ति दोष वाला है, दूसरे लक्षण में परमत्व का अर्थ वर्णन करना पड़े। यदि अपकर्ष से रहित को परम कहें तो तीसरा का ही रूप दूसरे का हो जायेगा। अणु द्व्यणुक की अपेक्षा छोटा होने से अपकर्ष वाला ही परमाणु का परिमाण हुआ अतः अव्याप्ति तीसरे लक्षण की होगी। सजातीय में ही उत्कर्ष या अपकर्ष होता है, तब द्व्यणुक के अणु परिमाण से अणुतर परमाणु का परिमाण उत्कृष्ट होगा अपकर्ष रहित होगा इस प्रकार तीसरे लक्षण का समर्थन किया जा सकता है, तो भी द्व्यणुक की अपेक्षा परमाणु अपकृष्ट है ऐसा यदि व्यवहार प्रामाणिक हो तब अपकर्षवाला परिमाण हो जायेगा अव्याप्ति होगी या असम्भव होगा। अणुतर होने से द्व्यणुक की अपेक्षा परमाणु उत्कृष्ट है ऐसा मानने पर उत्कर्ष वाले परमाणु में चौथा लक्षण भी नहीं जायेगा। उत्कृष्ट अणुतर परिमाण तो परमाणुसिद्धि बिना असिद्ध है इसलिये वैसे लक्षण ठीक नहीं होंगे।

साधारण रूप से अवयवरहित होना रूप आदि गुणों में अतिव्याप्त होगा, निरवयव द्रव्यलक्षण आकाश आदि नित्यद्रव्यों में अतिव्याप्त है। महद् से भिन्न

निरवयव द्रव्य लक्षण करने पर भी मन में अतिव्याप्ति होगी और उसका निरूपण नहीं करना है, क्योंकि पृथ्वी–जल–तेज–वायु के परमाणु की सिद्धि से ही आरम्भवाद सिद्धान्त का समर्थन हो जाता है, नित्य हो तथा द्रव्य का समवायी कारण हो ऐसा लक्षण करने पर मन में नहीं जायेगा क्योंकि मन किसी द्रव्य का अवयव नहीं है अतः द्रव्य समवायी कारण नहीं है, परमाणु द्व्यणुक का समवायि कारण है। तो भी रघुनाथ शिरोमणि त्र्यणुक को ही निरवयव नित्य प्रत्यक्ष और द्रव्य समवायी कारण पसन्द करते हैं, वे द्व्यणुक परमाणु तक नहीं जाते, त्र्यणुक प्रत्यक्ष है इसलिये उसका महत्त्व भी मान लेते हैं, इस निबन्ध को परमाणु तक जाना है, इसलिये मन से भिन्न नित्य अणु परिमाण वाला ऐसा निरूपणीय परमाणु का लक्षण मानना चाहिये। त्र्यणुक में अणुत्व नहीं, द्व्यणुक में नित्यत्व नहीं इसलिये अतिव्याप्ति नहीं होगी।

## विप्रत्तिपत्ति वाक्य का प्रयोजन

संशय मानस ज्ञान है शाब्दबोध नहीं इसलिये विप्रतिपत्ति वाक्य का संशय में साक्षात् कोई उपयोग नहीं है, संशय की दो कोटिओं की उपस्थिति द्वारा किसी प्रकार संशय का उपयोगी विप्रतिपत्ति वाक्य हो सकता है तो भी संशय का ही कथा का अङ्ग होना निश्चित नहीं है। निश्चित बुद्धि वाले भी जल्पयुद्ध में प्रवृत्त देखे जाते हैं। मध्यस्थ को सन्दिग्ध माना नहीं जा सकता क्योंकि संशय मध्यस्थता का विरोधी है, अनुमानप्रमाण का अङ्ग पक्षता भी संशय नहीं है। क्योंकि विना संशय गर्जन से मेघ का अनुमान हो जाता है, इसीसे संशय पक्षता का खण्डन है।

तो भी 'सिषाधयिषा के विरह से युक्त जो सिद्धि उसके अभाव को' सिद्धान्त-पक्षता माना गया है, उसकी कुक्षि में सिद्धि आई है, उसके विघटन के लिये संशय का उपयोग संभव है, तथा विप्रतिपत्ति वाक्य से वादी और प्रतिवादी अपने-अपने पक्ष को ठीक समझ कर सावधान हो जाते हैं, वैसे ही मध्यस्थ भी पक्ष और प्रतिपक्ष का शुद्ध स्वरूप पर सावधान होकर अधिक-न्यून आदि निग्रहण स्थानों के निर्णय में समर्थ हो पाते हैं. इस प्रकार कुछ विद्वान् विप्रतिपत्ति वाक्य के प्रयोजन का व्याख्यान किये हैं। किन्हीं ग्रन्थों की कुछ शैली भी देखी जाती है। 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः' यह आचार्य का सूत्र भी संशय को निर्णय का उपयोगी मानता है, इसलिये

परमाणु प्रमा के विरोधी कुछ विप्रतिपत्ति वाक्यों का यहाँ भी प्रतिपादन किया जाता है।

## विप्रतिपतिवाक्य

(१) पृथिवीत्व सावयवत्व व्याप्य है या नहीं, इसका भाव है कि पृथिवीत्व सावयव ही में रहता है या नहीं? जो परमाणु को नहीं मानते उनके यहाँ नित्य पृथिवी नहीं है सभी पृथिवी सावयव ही हैं? उनका कहना है कि पृथिवीत्व सावयव में ही रहता है तथा सावयवत्व का व्याप्य है, परमाणु मानने वाले के यहाँ निरवयव नित्य परमाणु में पृथिवीत्व रहता है इसलिये पृथिवीत्व सावयव ही में नहीं रहता सावयवत्व का व्याप्य नहीं है।

(२) जलत्व अनित्यत्व का व्याप्य है या नहीं? अथवा जलत्व अनित्य ही में रहता है या नहीं? परमाणु के विरोधियों के यहाँ सभी जल अनित्य ही हैं, इसलिये जलत्व अनित्य ही में रहने वाला है तथा अनित्यत्व का व्याप्य है, परमाणु मानने वाले नित्य परमाणु में जलत्व को मानकर उसका निषेध करते है, निषेधपक्षको निषेध कोटि कहते हैं, और पहला परमाणु विरोधियों का पक्ष विधिकोटि कहा जाता है।

(३) अणुत्वत्व महत्त्वत्व का व्याप्य है कि नहीं? अणु-महत् द्रव्य होते हैं, उनमें अणुत्व-महत्त्व परिमाण हैं, उनमें क्रमश रहने वाली अणुत्वत्व महत्त्वत्व जाति हैं। भाव होगा कि अणुत्व परिमाण महत्त्व का ही अवान्तर विशेष है? अथवा महत्त्व से भिन्न एक परिमाणविशेष है। जो परमाणु द्वयणुक मानते हैं उनको महत् नहीं मानते उनके यहाँ महत्त्व से भिन्न एक परिमाणविशेष अणुत्व है जो परमाणु द्वयणुक में रहता है, परमाणु द्वयणुक के विरोधियों के यहाँ महत्व ही का विशेष अणुत्व है, तथा अणुत्वत्व महत्वत्व का व्याप्य होता है।

(४) अणु परिमाण तारतम्य वाला है या नहीं? एक ही प्रकार का अणुत्व परिमाण है अथवा अणुतरत्व अणुतमत्व आदि उसका विशेष भेद है या नहीं? यह सरलार्थ है। परमाणु मानने वाले के मत में द्वयणुक से परमाणु अणुतर है इसलिये अणुतरत्व भी परिमाण है तथा तारतम्य है? परमाणु नहीं मानने वालों के मत में द्वयणुक अणु है अणुतर कोई नहीं है इसलिये तारतम्य नहीं है।

(५) परिमाणविशेष विश्रान्ति वाला है या नहीं ? महत् महत्तर-महत्तम इत्यादि रीति से कोई ऐसा द्रव्य हो जो सबसे बड़ा हो उससे बड़ा कोई नहीं हो, यह महत्त्व परिमाण की विश्रान्ति होगी, उसी प्रकार अणु-अणुतर अणुतम इत्यादिरीति से परम अणु परमाणु माना जायेगा, उससे छोटा कोई नहीं यह अणुत्व परमाण की विश्रान्ति हुई जिससे परमाणु सिद्ध होगा।

(६) अनित्य लौकिक प्रत्यक्ष का विषयत्व तेजस्त्व का व्यापक है या नहीं ? सभी तेजों का अनित्य लौकिक प्रत्यक्ष होता है या नहीं ? भावार्थ हुआ। परमाणुवाद में तेज के परमाणु का प्रत्यक्ष नहीं होता। इसलिये अनित्यलौकिक प्रत्यक्ष विषयत्व तेजस्त्व का व्यापक नहीं है।

(७) अपकर्ष का आश्रय महत्त्व नित्य है या नहीं ? जो त्र्यणुक को ही नित्य निरवयव मानते हो, द्व्यणुक परमाणु तक नहीं जाते। उनके त्र्यणुक का महत्त्व नित्य है। और वह अपकर्ष वाला है, त्र्यणुक को सावयव अनित्य मानने वालों के मत में उसका महत्त्व अनित्य है।

(८) सजातीय उत्कर्ष से रहित महत्त्व नित्य है या नहीं ? प्रायः सातवें के ऐसा ही है, किसी महान् की अपेक्षा बड़ा न होना सजातीय उत्कर्ष से रहित होगा।

(९) महत्त्व के साथ लौकिक चाक्षुष प्रत्यक्ष का विषय उद्भूत रूप जहाँ जहाँ है वहां सावयवत्व है या नहीं ? त्र्यणुक को नित्य न मानने पर सभी महत् उद्भूतरूप वाले सावयव ही हैं। उसको नित्य मानने पर उसमें महत्त्व-उद्भूत रूप है और सावयवत्व नहीं है।

(१०) दीख पड़ने वाले सभी द्रव्यों के अवयव सावयव है या नहीं ? दृश्यमान द्रव्य का अवयव त्रसरेणु है वह परमाणुवादी के मत में सावयव है। परमाणु को न मानकर त्रसरेणुको ही नित्य मानने पर उसमें सावयवत्व नहीं है।

पहले में निषेध कोटि नैयायिकों की है, क्योंकि वे नित्य पृथिवी मानते हैं और उसमे सावयत्व नहीं रहता, विधिकोटि आरम्भवाद के विरोधी दार्शनिकों का है। सावयवत्व की व्याप्ति घटत्व में प्रसिद्ध है। परमाणु में निरवयवत्व हेतु से नित्यत्व सिद्ध किया जाता है, उस नित्यत्व का विरोधी सावयवत्व है। दूसरा भी प्रायः पहले ऐसा है, केवल नित्यत्व और नित्यत्वाभाव की उससे साक्षाद् उपस्थिति हो जाती है।

श्री चित्सुखाचार्य जी कल्पना करते हैं कि त्रसरेणु में परम अणु ऐसा व्यवहार महत्त्व के अपकर्ष के कारण हो जायेगा, त्रसरेणु में महत्त्व अणुत्व दोनों हैं, उनकी विधिकोटि वाली तीसरी विप्रतिपत्ति है। चौथी भी उन्हीं के अनुसार है, अणुपरिमाण में तारतम्य नहीं होता ऐसा तत्त्वदीपिका में आया है। अणुत्व परिमाण कहीं विश्रान्त है इत्यादि न्यायवाक्य के प्रयोग में जो महत्त्व दृष्टान्त दिया जाता है, उस दृष्टान्त का विरोधी पांचवा विप्रतिपत्ति वाक्य है, परिमाण के तारतम्य की विश्रान्ति न होने पर महत्त्व की भी कहीं विश्रान्ति नहीं होगी तो महत्त्व दृष्टान्त नहीं होगा।

छठे विप्रतिपत्ति वाक्य में विरोधी कोटि परमाणु विरोधिओं का है, तेजस्त्व का व्यापकत्व द्रव्यत्व में प्रसिद्ध है। चक्षु में व्यभिचारवारण के लिये उद्भूत रूप का प्रवेश है। परमाणु विरोधिओं का विधिकोटि मानकर सातवां विप्रतिपत्ति वाक्य है। घट आदि का महत्त्व अनित्य होने से निषेधकोटि प्रसिद्ध है।

सातवें की विधि कोटि में व्यभिचार के सन्देह से आठवे का आदर किया गया। अणु नहीं मानने वाले त्रसरेणु में ही महत्त्व की विश्रान्ति मानते हैं, वहां महत्त्व का उत्कर्ष नही होने से विधि कोटि ठीक है। महत्त्व अनेक द्रव्य प्रयोज्य होने से निरवयत्व नहीं सिद्ध होगा इस लिये नित्य ही महत्त्व माना जाता है। वह परमाणुसाधन का स्फुट विरोधी है, इसी विशेष से उसका कथन है।

नववां द्यणुक के लिये विप्रतिपत्ति वाक्य है–इस लिये आवश्यक ही है। द्व्यणुक सिद्धि के विरोधिओं की उसमें निषेध कोटि है, नैयायिकों की विधिकोटि है। लौकिक चाक्षुष प्रत्यक्ष का विषयत्व रूप आदि में भी है इस लिये महत्त्व दिया गया, आंख आदि में न जाने के लिये चाक्षुष इत्यादि दिया गया है। उद्भूत रूप या महत्व एक के देने से भी काम चल सकता है। द्व्यणुक में विश्रान्ति मानने वालों की निषेधकोटि वाला दशवां विप्रतिपत्ति वाक्य है।

## परमाणुसाधन

प्रत्यक्ष आदि अनेक प्रमाणों से अवयवी की सिद्धि है, उस अवयवी की अवयवधारा का कहीं विश्राम आवश्यक है। जहां अवयवधारा की विश्रान्ति है वह निरवय नित्य परमाणु है, अवयवधारा की विश्रान्ति नहीं करने पर अनवस्था होगी, बीज अङ्कुरों

में जो अनवस्था है उसके जैसी यह भी अनवस्था रहे सो ठीक नहीं उससे भेद है। वहाँ बीज पहले है या अङ्कुर ? इस प्रश्न पर निर्णय न हो सकने के कारण संसार को अनादि मान कर किसी प्रकार समाधान किया जाता है, यहाँ तो अवयवी से अवयव पूर्व है यह सिद्ध है। यहां क्या गति होगी ? यही पूछने का अभिप्राय है। वास्तव में अनन्त अवयव की आपत्ति में तात्पर्य है। इसको इष्ट नहीं किया जा सकता, मेरु का अनन्त अवयव और सरसों का भी अनन्त अवयव, दोनों में समानता की आपत्ति होगी, ऐसा कहें कि दीखने वाला दोनों पक्ष की राय से एक अवयव का स्वरूप कायम करेंगे, सरसों के यदि वैसे पाँच हिस्से होंगे तो उरद के वीस हिस्से होंगे, इस प्रकार सरसों उरद में ही फरक हो सकेगा तव सरसों मेरू के साम्य का प्रसङ्ग कैसे आ सकता है, सो ठीक नहीं, सरसो के अनन्त अवयवों से सम्पूर्ण संसार व्याप्त हो जायेगा, एक का दो भाग, दो का चार भाग, चार का आठ इस प्रकार अनन्त हो जायेगा, सरसों के अनन्त अवयवी होंगे, सरसों के अनन्त अवयवों की चिन्ता से थके हुए लोग दुर्गम मेरू के अवयव-अवयवी की धारा में नहीं जायेंगे, सरसों के शतांश से भी सैकड़ों मेरू के वरावर पर्वत के साम्य का अनुमान करने लगेंगे। और मेरू सर्षव के साम्य शङ्का पर उपहास करेंगे, विना अवधि की अवयवसंख्या कुछ विशेपता नहीं रखती, अवयवी का भी भेद नहीं कर सकेगी। अवयविओं का परिमाण अथवा प्रचय से ही विशेप वनेगा, उन विशेप अवयविओं में अविशेप अवयवसंख्या विशेपता कैसे लायेगी ? यह भी कहना ठीक नहीं होगा। क्योंकि समान अवयवों से दो तीन से बने अवयवी के परिमाण में भेद देखा जाता है, इसलिये अवयवी के परिमाण की प्रयोजक संख्या अवश्य माननी है। अवयव संख्याओं में भेद के विना परिमाण या प्रचय से अवयवी के परिमाण का भेद नहीं हो सकता। इस प्रकार सरसों यदि साक्षात् परम्परा साधारण मेरू के आरम्भक अवयवों से कम नहीं ऐसे अवयवों से आरब्ध होगा तो मेरू के महत्त्व से छोटा महत्त्व वाला नहीं होगा, ऐसे आपाद्य आपादक भाव से परिमाण भेद भी नहीं होगा। त्रसरेणु प्रत्यक्ष सिद्ध है उसमें विवाद नहीं है, सरसों में कितने त्रसरेणु हैं इसका निर्णय हो सकता है, सरसों के त्रसरेणुओं से सुमेरू में अधिक त्रसरेणु हैं ऐसा प्रमा ज्ञान हो सकता है, तव त्रसरेणु के अनन्त भागों से भले ही साम्यप्रसङ्ग हो किन्तु मेरू सरसों का साम्य असंगत ही है ऐसा कहना भी गतिहीन है, मेरू यदि सरसों से विशिष्ट होगा तो सरसों

के तुल्य परिमाण वाला होगा, जो जो अपने से विशिष्ट होता है वह अपने से तुल्य परिमाण वाला होता है जैसे समान परिमाण वाले तीन-तीन सूतों से बनाये गये दो कपड़े समान परिमाण के होते हैं, इस प्रकार का आपाद्य आपादकभाव बन सकता है। सरसों के भी समान परिमाणवाले अनन्त अवयव और मेरु के भी वैसे ही अनन्त अवयव होंगे, यदि अवयवधारा का कहीं विश्राम नहीं होगा तो सरसों और मेरु के अवयवों का संख्या या परिमाण से किसी प्रकार भेद नहीं होगा। १ पहला सम्बन्ध अपने में रहना है। २ दूसरा अपने का प्रयोजक अवयवों में जिस संख्या का अभाव है उस संख्या में नहीं रहना। ३ तीसरे का तात्पर्य है कि अपने जितने अवयवों से बना है उतने ही अवयवों से बना हुआ होगा। दूसरे सम्बन्ध में जो नहीं रहना आया है वहाँ किस सम्बन्ध से रहना इस लिये जो सम्बन्ध है उसका तात्पर्य है कि वह संख्या अपने प्रयोजक जो अवयव उनके कूटत्व का व्यापक हो। पहले अपने में रहने का अर्थ है कि अपना प्रयोजक जो अवयवकूट उसके परिमाण के तुल्य परिमाण वाला होना, और अपने में रहना इन दो सम्बन्ध से। इस अपने में रहने का मतलब हुआ कि अपने प्रयोजक जो अवयव उनके सदृश परिमाण वाले जो अवयव उनसे प्रयोज्य होना। भिन्न परिमाण वाले तीन सूतों से बने हुए पटों में तुल्य परिमाण न होने से आपाद्य रह जायेगा उससे व्यभिचार होगा। उसके वारण के लिये पहला सम्बन्ध रखा गया। तुल्य परिमाण वाले सूतों से एक कपड़ा दो सूत का तथा दूसरा तीन सूत का बना उनमें व्यभिचारवारण के लिये दूसरा सम्बन्ध है।

और भी अवयवी के आरम्भ में अवयवी का अपकृष्ट महत्व देखा जाता है। इसलिये अपकृष्ट महत्व के प्रति अवयव की व्यासज्यवृत्ति संख्या स्वाश्रयसमवेतत्व सम्बन्ध के कारण होती है, नित्य के महत्व के वारण के लिये अपकृष्ट कहा गया है, उस प्रकार जो जो सावयव से आरब्ध है वह महत् है जैसे कपाल से आरब्ध कलश आदि, द्वयणुक यदि सावयव से आरब्ध होगा तो महत् हो जायेगा। ऐसा आपाद्य आपादक भाव बनेगा, द्वयणुक का प्रत्यक्ष न होने से महत्व का बाध है, उससे सावयव द्वारा आरब्धत्व का अभाव सिद्ध होगा, वह आरम्भक निरवयव परमाणु को लेकर विश्राम करेगा।

द्वयणुक वादिप्रतिवादी दोनों मत से सिद्ध नहीं है। इसलिये पक्ष नहीं हो सकता इत्यादि सन्देह ठीक नहीं है। न्यायशास्त्र के विरोधी भी चित्सुखाचार्य दूसरे मत से

सिद्ध को भी पक्ष होना कहे हैं, इसलिये आश्रयासिद्धि दोष नहीं है। द्वयणुकत्वरूप से द्वयणुक की उभयमत सिद्धि न होने पर भी त्रसरेणु के अवयवरूप से सिद्धि और पक्ष होने में कोई बाधक नहीं दीखता उसी प्रकार द्वयणुक और त्र्यणुक दोनों सावयव से प्रारब्ध होते हुए अनन्त अवयव वाले होंगे, अनन्त अवयव समानता से दोनों में सदृश परिमाण की आपत्ति में तात्पर्य लगाया जा सकता है।

कम सूतों से बने कपड़े की अपेक्षा अधिक सूतों से बने कपड़े में उत्कृष्ट महत्व देखा जाता है। इस प्रकार अपकृष्ट महत्त्व के अवान्तर महत्त्वों में तारतम्य अनुभवसिद्ध है, उस तारतम्य का प्रयोजक अवयव संख्याओं को माना जाता है, अवयवधारा की विश्रान्ति न मानने पर अवयवसंख्याओं में विशेष नहीं होता, सभी अनन्त रूप से अभिन्न या सदृश होकर अवयवी के परिमाणों में फरक नहीं कर पायेंगे। इसलिये परिमाणों का तारतम्य नहीं होगा, अनुभव का विरोध होगा इसलिये अवयवधारा की विश्रान्ति माननी चाहिये ऐसा कन्दलीकार आपत्ति बनाते हैं।

अवयवसिद्धि के अवसर पर दृश्य अवयवों की अवयवधारा की विश्रान्ति नहीं मानते तो क्या मानेंगे ? अवयवों को निरवयव मानेंगे ? १ या अनन्त अवयव मानेंगे ? २ अथवा परमाणु पर्यन्त अवयव मानेंगे ? ३ पहला तो कपालिका सूत आदि में प्रत्यक्ष विरुद्ध होगा। दूसरे पक्ष में अनवस्था और साम्य प्रसङ्ग कहा ही गया है। तीसरे में परमाणु सिद्ध ही हो जाता है। ऐसा न्यायमञ्जरी कुड्मल समझना चाहिये।

किरणावलीकार तो तीन विकल्प करके व्याख्यान करते हैं। १ अवयवीकी अवयव धारा बिना अवधि का है या २ प्रलय अवधि है अथवा विभाग अवधि तक है ? ३ पहले कल्प में पहले के ऐसा अनवस्था और साम्य प्रसङ्ग दोष है। दूसरे में प्रलय नहीं बनेगा, प्रलय में अवयव धारा नहीं मानेंगे, प्रलय में ये द्रव्य निरवयव हो जायेंगे तथा उनका नाश नहीं होगा, क्योंकि अवयवी का नाश समवायीकारण अवयव नाश से असमवायीकारण अवयव संयोग नाश से होता है, प्रलय में अवयव धारा नहीं होगी। तीसरे कल्प में अवयव की धारा के ऐसा विभाग का भी सन्तान आपड़ेगा। कहीं पर विभाग की विश्रान्ति माने तो वहीं जो विभक्त होगा वह निरवयव परमाणु सिद्ध हो जायेगा। क्योंकि विभाग गुण है उसका आश्रय द्रव्य होगा, विभाग की विश्रान्ति से

उसका विभाजन होने से वह निरवयव होगा। विभाग को एक में रहने वाला एकाश्रयं नहीं मान सकते क्योंकि कोई किसी से विभक्त होता है ऐसी प्रतीति साक्षी है जहाँ दो में रहने वाले संयोग का नाश होता है वहीं विभक्त प्रतीति प्रमा होती है। अन्यथा मेरु और मलय में विभक्त प्रतीति प्रमा हो जायेगी, इसलिये विभाग दो में ही रहता है ऐसा किरणावलीकार का व्याख्यान है।

'अवयवावयविप्रसङ्गश्चैवमाप्रलयात्' इस न्यायसूत्र का प्रलयपर्यन्त अवयव-धारा की विश्रान्ति न मानने पर अनवस्था में तात्पर्य है।

इसी साम्यप्रसङ्ग को लेकर 'परं त्रुटेः' इस सूत्र पर वार्तिककार कहते हैं, अवयवी के अवयवविभाग की अनन्तता होने से त्रसरेणु परिमाण करने लायक नहीं होगा, अमेय हो जायेगा। संख्यापरिमाण और गुरुत्वों से कुछ परिमित नापवाला त्र्यणुक है। इसमें इतना गुरुत्व है, इतने परमाणु संघात होकर त्रुटि बनते हैं, यह निर्णय नहीं युक्त होगा, इसका क्या कारण ? जैसे ही अनेक परमाणु का संघात हिमालय संख्या परिमाण और गुरुत्व से अमेय है वैसे त्रुटि भी अनन्त अवयव होने से अमेय हो जायेगी। यदि प्रलय तक अवयवों का विभाग मानें तो वह भी ठीक नहीं, विभाग की विश्रान्ति मानने पर जिनका विभाग होगा वे विभज्यमान नष्ट नहीं होंगे। इसलिये प्रलय तक विभाग पक्ष ठीक नहीं है। और यह विभाग गुण विभक्त होने वालों में रहने वाला है, विभक्त होने वाला नहीं है और विभाग है यह विरुद्ध है। विभक्त अवयव वाला परमाणु को मानने वाला परमाणु को सावयव मानेगा, सावयव मानने पर परमाणु शब्द का अर्थ बताना चाहिये, परम अणु यह क्या कहा गया ?, परमाणु के अवयव परमाणु के बराबर हैं ? या परमाणु से छोटे हैं ?। यदि समान बराबर हैं तो अवयवीभाव नहीं होगा, बराबरी वालों में हम लोग कहीं अवयव अवयवीभाव नहीं देखते। यदि छोटा मानते हो तो उसका अवयव ही परम अणु हो गया, तब परमाणु मान ही लिया, परमाणु का प्रतिषेध नहीं करते हो, जिसका अवयव सिद्ध करते हो उसको कार्य अनित्य मानकर उसका निषेध करते हो, जिसका अवयव सिद्ध नहीं किया उसको निरवयव नित्य परम अणु मान ही लिया। इति।

और दूसरा-अणु परिमाण का तारतम्य कहीं विश्रान्त है, परिमाण तारतम्य होने से विभु द्रव्यों में महत्त्व परिमाण तारतम्य के ऐसा, इत्यादि अनुमान भी किरणावली

कन्दली-मुक्तावली आदि में दिखाया गया है, यह युक्त भी है; अन्यथा इसके विरोध में क्या कहेंगे ?, १—अणु परिमाण ही नहीं है ? २—या अणु परिमाण में तारतम्य व्यवहार ही नहीं होता ?, ३—अथवा सभी परिमाणों में तारतम्य व्यवहार नहीं होता ? उनमें पहला प्रामाणिक नहीं होता, क्योंकि अणु ऐसी सबकी अबाधित प्रतीति से ही अणुपरिमाण सिद्ध है।

वह प्रतीति प्रमाण नहीं है ऐसा कहने से भी काम नहीं चलता अलीक किसी प्रतीति का विषय नहीं होता। जहाँ कहीं भी अणु की प्रतीति प्रमा होगी उसी से अणु परिमाण सिद्ध हो जायेगा। प्रधान विषय के विना कही भ्रम नहीं हो सकता, कहीं किसी को वन्ध्या पुत्र का भ्रम नहीं होता, यदि कहें कि अपकृष्ट महत्त्व ही अणु प्रतीति का विषय है एक दूसरा अणु परिमाण नहीं सिद्ध होता, ऐसा कहने पर पूछा जायेगा कि इसका क्या अभिप्राय है ? महत्त्व का अपकर्ष महान् में है या नहीं ?, नहीं कहना ठीक नहीं, सजातीय में ही उत्कर्ष और अपकर्ष का व्यवहार होता है इस सिद्धान्त से विरुद्ध होगा, कोई भी व्यवहार कुशल बैल और विद्वान् में उत्कर्ष अपकर्ष के लिये प्रयास नहीं करते, और भी जिस महत्त्व अपकर्ष वाले में महत्त्व नहीं है, वहाँ भी द्रव्य होने से कोई परिमाण माना जायेगा, वही अणु परिमाण सिद्ध हो जायेगा। यदि महत्त्व के अपकर्ष वाले में महत्त्व है तब उसका क्या अभिप्राय होगा ? १—क्या अणु और महत् शब्द पर्याय होगा ? २—या महत्त्वत्व अणुत्वत्व का व्याप्य-व्यापक भाव है ?, पहला पक्ष ठीक नहीं, अणु और महत् का पर्याय होगा शब्दार्थ व्युत्पत्ति शाली शेमुपी से असिद्ध है, साधारण व्यवहार में भी महत् से विपरीत ही अर्थ में अणुशब्द का प्रयोग किया जाता है, इसमें दूसरा पक्ष भी ठीक नहीं, व्याप्य-व्यापक भाव मानने पर घट में पृथिवीत्व घटत्व के समावेश के ऐसे महान् में भी अणुत्व का समावेश हो जायेगा, इष्टापत्ति नहीं की जा सकती, यह महान् नहीं है किन्तु अणु है ऐसा सैकड़ों बुद्धमानों का विरोध में अनुभव है। जो लोग एक क्षण में अनेक ज्ञान न होने से मनको अणु मानते हैं वे लोग अणु में महत्त्व नहीं मानते, अन्यथा महान् मन से युगपद् ज्ञान की अनुत्पत्ति का उपपादन नहीं होगा। अणु परिमाणु में तारतम्य नहीं होता ऐसा द्वितीय पक्ष नहीं हो सकता, अणु परिमाए तारतम्य वाला है परिमाण होने से महत्त्व परिमाण के ऐसा, इस अनुमान से तारतम्य सिद्ध हो

जाता है। अनुकूल तर्क न होना नहीं कहा जा सकता, तारतम्य वाला नहीं होगा तो परिमाण ही नहीं होगा ऐसे आपाद्य आपादक भाव से परिमाणत्व का निश्चय हो विपक्ष का बाधक हो जायेगा। इसी प्रकार तृतीय पक्ष भी खण्डित है, महत्त्व यदि तारतम्य वाला नहीं होगा तो परिमाण नहीं होगा, ऐसा प्रतिकूल तर्क होगा, और भी महत्त्व यदि तारतम्य वाला न हो तो आकाश भी महत्तर नहीं होगा, और क्या ? यह इससे महत्तर है ऐसा सभी का व्यवहार विरुद्ध हो जायेगा, इसलिये परिमाण में तारतम्य अवश्य मानना चाहिए। इसीसे अणु महत् ह्रस्व दीर्घ ऐसा चार प्रकार से परिमाण का विभाग सभी जगह देखा जाता है। अणु से अणीय और महत् से महीय इत्यादि श्रुतियां भी अणीय रूप से जिसका संकेत करती हैं वैसे परमाणु की सिद्धि होती है। परिमाण सामान्य तथा परिमाणविशेष अणु में तारतम्य न मानने में ये श्रुतियाँ विरोध करती हैं। ब्रह्म ही अणुपद से व्यवहृत होता है ऐसा नहीं कह सकते। बड़े से भी बड़ा इससे विरोध होगा, समय के भेद से समाधान करने पर ब्रह्म में उपचय अपचय की आपत्ति द्वारा अनित्यता की आपत्ति आ जायेगी। उपाधि-भेद से समाधान में तत्पर होने पर उपाधि रूप से ही अणु और अणुतर परमाणु की सिद्धि हो जायेगी, तो भी वस्तु की सिद्धि हो ही गई। ऐसी ही श्रुतियों से अणु द्व्यणुक और अणुतर परमाणु की सिद्धि होती है, एक ही अणु मानने पर अतिशय अर्थ में इयसुन् प्रत्यय अनुपपन्न होगा, अणीय मात्र को स्वीकार करने पर तारतम्य का ज्ञापक अवधित्व का वाचक अणुशब्द से पञ्चमी अनुपपन्न होगी। इसलिये अणु, अणुतर श्रुति सिद्ध पदार्थ हैं।

चित्सुखाचार्य जी ने जो लिखा कि अणु परिमाण का अर्थ है अणु में रहने वाला परिमाण, अणु असिद्ध होने से उसका परिमाण भी असिद्ध है, इसलिये पक्ष अप्रसिद्ध है, अणु परिमाण न होने से अणु परिमाण का तारतम्य भी नहीं है, ऐसा करके इस अनुमान का खण्डन है, उसीको जो मुक्तावली टिप्पणीकार अनुसरण किये हैं ये दोनों उपेक्षणीय हैं, परमत सिद्ध की भी पक्षता तत्त्वदीपिका में कही गई है, अणु परिमाण मात्र को भी पक्ष बना सकते हैं, अणु परिमाण तथा उसके तारतम्य की सिद्धि में प्रमाण कह दिये गये हैं।

बताया जाता है, यह अनुचित भक्ति नहीं है सप्रयोजना है, उसमें बाधक नहीं है। आनन्तर्य में भक्ति है, पूर्वबीज के उपमर्द के अनन्तर अङ्कुर का प्रादुर्भाव है, ऐसा करने से व्याघात नहीं है ऐसा नहीं समझें, तो भी व्याघात है, क्योंकि अभाव से भाव की उत्पत्ति मानते हैं और कहते हैं कि विना उपमर्दन किये हुए अङ्कुर पैदा नहीं होता, आगे पैदा होने वाला अङ्कुर असत् है, उससे उपमर्द नहीं हो सकता, और असत् बीजा-भाव से अङ्कुर कैसे होगा। बीज विनाश और अङ्कुर उत्पाद के साथ कार्यकारण भाव नहीं कर सकते, उसका निर्णायक पौर्वापर्य या अन्वयव्यतिरेक अन्य निमित्तक है, साधारणतः अन्वयव्यतिरेक बीज और अङ्कुर का है बीज विनाश के साथ नहीं, विशेष सूक्ष्मरूप से देखें तो मालूम पड़ेगा कि बीज का धरणी जल गर्मी के सम्बन्ध से बीज अवस्थाविशेष होता है उसके बाद अङ्कुर पैदा होता है, उस अवस्था विशेष के साथ अन्वयव्यतिरेक है; उसको दूसरा व्यूह कहते हैं, पहला व्यूह वह अवस्थाविशेष है जिसका क्षेत्र में वपन होता है, बीजवपन के बाद तुरंत अङ्कुर नहीं पैदा होता इस लिये बीज के पूर्व व्यूह को अङ्कुर का प्रतिबन्धक माने और बीज को कारण माने, अथवा बीज को कारण न मानकर बीज के दूसरे व्यूह को ही अङ्कुर का कारण माने, बीज विनाश को किसी प्रकार अङ्कुर का कारण नहीं बना सकते। दूसरा व्यूह पहले व्यूह के निरोध के विना नहीं हो सकता; इसलिये पहले व्यूह के नाश के बाद अवयवों से दूसरे व्यूह का उत्पाद होने के बाद अङ्कुर पैदा होता है।

शङ्का—बुद्धिमान कृषक अङ्कुराभिलाषी बीज के लिये प्रयास करता है, इस प्रयास से बीज के साथ अन्वयव्यतिरेक है, इसलिये बीज को अङ्कुर का कारण मानना चाहिये।

समाधान—ठीक है कृषक बीज का ग्रहण करते हैं किन्तु बीज का दूसरा व्यूह जो अङ्कुर को पैदा करेगा वह बीज के विना नहीं हो सकता इसलिये उनका बीज का प्रयास सार्थक है, काम है बीज के दूसरे व्यूह का किन्तु बीच में बीज आ जाता है।

सूत्र में भी कहते हैं 'विनष्ट बीजों से अंकुर नहीं बन सकता'। यदि बीज विनाश अंकुर का कारण हो तो बीजों को कुचकर चुराकर दें, अवयवों का विच्छेद हो जाय, अवयवों से दूसरा व्यूह न पैदा हो, तो भी बीज विनाश हुआ ही, उससे अंकुर नहीं

पैदा होता, उससे निश्चित करते हैं कि बीज विनाश से अंकुर नहीं पैदा होता किन्तु बीज के दूसरे व्यूह से पैदा होता है, इससे माया कि अभाव से भाव की उत्पत्ति नहीं होती।

**और भी**—बीज विनाश को कारण मानने में कोई विना व्यवधान का या विना अन्यथासिद्धि का कोई अन्वय व्यतिरेक भी नहीं है, बीज के साथ तथा बीज के दूसरे व्यूह के साथ जो अन्वयव्यतिरेक है उसी अन्वयव्यतिरेक को बीज का विनाश कहते हैं, वह बीज से व्यवधान वाला है, बीज के दूसरे व्यूह से अन्यथासिद्ध है, चूर्णित बीज में व्यभिचरित होने से वाधित है। बीज और बीज विनाश के साथ समान पौर्वापर्य नहीं है इसमें चूर्णित बीज से अंकुर न होना विनिगमक दे दिया गया है।

**और दूसरा**—सभी विनाश अनुपाख्येय असत् है, शशशृङ्ग आदि के ऐसा विशेषण-विशेष्य-सम्बन्ध-देश-काल-आदि प्रभावों से रहित हैं, इसलिये बरावर है, सभी बीज विनाशों से सभी अङ्कुरों का उत्पाद होने लगेगा, यव में कलमत्व, धान में गोधूमत्व, इस प्रकार जातियों का सांकर्य हो जायेगा। कार्यों में रहनेवाली परस्पर व्यावृत्त जातियाँ परस्पर व्यावृत्त कारणतावच्छेदक जातियों से प्रयुक्त होती हैं, इस प्रकार परस्पर व्यावृत्त यवत्व-कलमत्व आदि कार्यगत जातियों का प्रयोजक कोई कारण में जाति माननी पड़ेगी जो कारणतावच्छेदक हो सकें। अनुपाख्येय विनाश में कोई जाति नहीं रहती, तथा उसमें किसी जाति को विशेषण नहीं बना सकते, इसलिये कारण का भेद करनेवाला कोई विशेष नहीं रहने पर कार्यों में भी भेद नहीं होगा, सभी बीज नाशों से सभी अङ्कुर पैदा होने लगेंगे। कलमत्व से अन्वित बीज विनाश कलमत्व से अन्वित अङ्कुर का कारण है, इत्यादि व्यवस्था अनुपाख्येय वादी के यहाँ नहीं हो सकती, ऐसा मानने पर विनाश अनुपाख्येय नहीं रहेगा। अतः ऐसा कारण सिद्ध होता है जिसमें कलमत्व-यवत्व आदि रहें, वैसा बीज या बीजका व्यूह हो सकता है।

जो कि असत् अविद्यमान कार्य की उत्पत्ति मानने में अभाव कारण की आवश्यकता बताई गई है, उसको इसीसे खण्डित समझना चाहिये। क्योंकि कार्यभेद का प्रयोजक तथा कार्यगत विभिन्न जातियों का प्रयोजक कारणों का फरक २ होना, तथा कारणों में विभिन्न जातियों का होना आवश्यक है, वह अभाव कारण में नहीं हो सकता।

कार्यभेद का प्रयोजक कारणों की शक्ति के भेद को मानकर भी व्यवस्था नहीं हो सकती, शक्ति और शक्तिमान् को एक अभिन्न मानने पर वैसे ही कारण एक प्रकार का रह गया, फिर भी कार्यभेद नहीं हो सकता, विनाश से भिन्न विनाश में कोई शक्ति-भेद अथवा उस शक्तिभेद से विनाश का भेद नहीं हो सकता, मानने पर अनुपाख्येय नहीं रहेगा। नैयायिकों का अभाव अनुपाख्येय नहीं है, सत् है, काल के साथ जिनका सम्बन्ध है वे सभी सत्य हैं, इसीलिये वह स्वतन्त्र पदार्थ माना गया है, वह कार्य-कारण-सामान्य-विशेष-विशेषण-विशेष्य-सम्बन्धी सब तरह का होता है। प्रागभावों का सामान्य रूप से कोई भेद नहीं है, घटप्रागभावत्व विशिष्ट रूप से भेद है, अर्थात् उनमें विशेषण लगाकर भेद होता है तथा उनका कहीं उपयोग होता है, उस प्रागभाव को कारण माने तो वह अनादि है, कार्य भी अनादि हो जायेंगे। अभाव सहकारी कारण होता है ऐसा कुसुमाञ्जलि के कथनानुसार नैयायिक मानते हैं। क्योंकि वे लोग अभाव को तुच्छ नहीं मानते. इसलिये दूसरे पाजक रूप आदि की उत्पत्ति में पूर्वरूप आदि के ध्वंस को कारण मानते हैं। पहले बताई हुई श्रुति तो पूर्व पक्ष की है, इसीलिये असत् से सत् कैसे होगा? ऐसा असंभव कहकर 'हे सौम्य यह पहले सत् ही था' इत्यादि से सिद्धान्त किया गया है।

तो इस प्रकार असत् उपादान का असंभव बताने से, अनित्य भूत भौतिक का उपादान सत् एक ब्रह्म की उपादानता के खण्डन से, अनेक विचित्र परिणाम के पराभव द्वारा आरम्भ वाद के अनुसार सर्वथा क्षणिक पक्ष को हटाने से, नित्य परमाणु रूप साक्षात् यत्नजन्य क्रियारूप चेष्टा का आश्रय परमात्मा के शरीर की उपासना की गई। इसीलिये विदेशीय दर्शनों में चेतन परमाणु पुञ्जों के वाद का प्रसार है। इति

गुरुकृपा शुचि शर्करा ममभति दोष मरीच। इस निबन्ध का स्वाद करो तजहुँ समझी नहीं नीच ॥
श्रुतिनीति शास्त्र सरोजवर परमाणु अतिमानो। आदि यत्न धरी देह परमात्मा का जानो ॥
सीवान नव मण्डल में गम्हरिया लघुगांव। वहाँ बसत द्विज काश्यप तथा निवेज सुहाव ॥
रामगोविन्द-यमुना बीच तनुजन्मा केदार। युवामरे प्रियपुत्र करि भाग्यहीन सरदार ॥
बच्ची माता नयन जल करत निरन्तर नेह। पङ्गुपिता बुढ़ करत किमु हिन्दी लिखावसनेह ॥
गिरिजेश धाम गिरिजेश होहुतु तृप्त विशेष। इतना करी माया हरी बनबतुरत निश्शेष ॥

## परमाणुवाद की विषय सूची

महामहोपाध्यायमहोपदेशकप्रसिद्धपण्डितप्रकाण्डश्रीगिरिधरशर्म-चतुर्वेदमहाभागानामभिनन्दनग्रन्थरूपे संस्कृतरत्नाकरस्य दर्शनाङ्के १९४५ ईशाब्दे ।

# शब्दतत्त्वम्

द्रव्यगुणादिविकल्पाः कल्पायन्तेऽनल्पतया यत्र ।
विविधविवर्तविभूतिं सतीं श्रुतिं सर्वोतिं श्रये ॥

तत्र शब्दधर्मिका १—द्रव्यं न वा, २—गुणो न वा ३—सप्तपदार्था-तिरिक्तो न वेति विप्रतिपत्तयः । सप्तपदार्थातिरिक्तस्याप्रसिद्धतया अभाव-भिन्नः कालाकाशदिगात्मभिन्नश्च शब्दः समवेतो न वेत्यत्र तात्पर्यं निर्णेयम् । समवायासिद्ध्याऽप्रसिद्धिर्न संशयास्पदा, सर्वेषां मते तत्स्वीकारात् महाभाष्या-दावपि बहुधोपलम्भादतिरिक्तपदार्थतायामेव विवादात् ।

प्रथमे द्रव्यत्वकोटिके विकल्पे वैयाकरणमञ्जूषायां द्रव्यस्यापि सतो गगनगतत्वप्रतिपादनात् । ४—गगनाश्रयो न वा, बहुत्र पञ्चगुणा पृथ्वीति प्रतिपादितत्वात् ५—पञ्चभूताश्रयो न वा, विभुत्वाङ्गीकर्तृमते सम्भवात् ६—निराश्रयो न वा, अणवः सर्वशक्तित्वात् प्रभृतिवाक्यपदीयरीत्यार्हन्नयेन वा, ७—सावयवो न वा, दूरदेशागमनावगमेन ८—क्रियावान्न वा, वायोरणू-नामिति भर्तृहरिपद्धत्या ९—वायुरूपो न वा, विशिष्टाद्वैतिनां ज्ञानस्याऽपि द्रव्यत्वात् १०—ज्ञानाभिन्नं न वा, विभुत्वाभ्युपगमे ११—दशमं द्रव्यं न वा, अभिघातवशाद् वेगालोचने १२—स्पर्शवान्न वा, तथैव १३—वेगाश्रयो न वा, १४—ध्वंसाप्रतियोगी न वा १५—तृतीयक्षणध्वंसप्रतियोगी न वा १६—महापरिमाणम् १७—मध्यमपरिमाणम् १८—अणुपरिमाणं वा धत्ते इति पञ्चदश विप्रतिपत्तयः । गुणत्वकोटिकेऽपि १९—आकाशस्य २०—वायोः २१—पञ्चभूतानां वा गुण इति तिस्रः २२—पूर्वोक्तचतुर्दशपञ्चदशाभ्यां सङ्कलय्य पञ्च विकल्पाः । २३—सर्वस्मिन्नपि पक्षे श्रूयमाणशब्दानाम् । २४—उत्पत्तिमत्त्वम् २५—अभिव्यङ्ग्यत्वम् २६—अर्थतादात्म्यम् २७—बोध-कत्वम् आन्तरिकस्फोटनयेन २८—अभिव्यञ्जकत्वम् २९—ध्वनिरूपता न वेति सप्त । तद्विचाराविनाभूततयोपोद्घातसङ्गत्या ३०—श्रोत्रस्य स्वरूपम्

३१—प्राप्यकारित्वम् ३२—क्रियावत्त्वम् ३३ परिणामित्वमितित्रयः पक्षाः। ३४—दूरश्रवणयन्त्रस्य कार्यञ्चेति चतुस्त्रिंशद् विवेचनीयाः समापतन्ति।

## १—द्रव्यत्वसाधनम्

तत्र शब्दो द्रव्यं तारत्वादिगुणाश्रयत्वात्। न च तारत्वादयो वायुनिष्ठा ध्वनिनिष्ठा वा श्रावणत्वाच्च शब्दत्ववत्। अत्र मीमांसकाः प्रवदन्ति। वर्णानां विभूनां द्रव्यत्वं ध्वनीनान्तु वायुगुणत्वम्। वायुगुणस्यापि ध्वनेः संयुक्तसमवायाच्छ्रोत्रेण ग्रहः। इति। परन्तु वैयाकरणमञ्जूषायां तारत्वादिगुणाश्रयस्य द्रव्यत्वमुक्तम्। तत्र ममायं विवेकः—ध्वनयोऽपि साक्षाच्छ्रोत्रग्राह्यतया द्रव्याण्येव सन्तु वर्णा इव, श्रोत्रग्राह्यत्वस्य द्वयोः समानत्वात्। न चानित्यत्वेन कार्यत्वात्तेन चाश्रितत्वात् गुणत्वं युक्तम्।

> अणवः सर्वशक्तित्वात् भेदसंसर्गवृत्तयः।
> छायातपतमःशब्दभावेन परिणामिनः॥ १॥
> वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
> कैश्चिद् दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः॥ २॥

इति वाक्यपदीयरीत्या स्वतन्त्रपरमाणुसमाश्रितस्य ध्वनेः स्वतन्त्रद्रव्यत्वात्। एवं 'शब्दो द्रव्यं साक्षात्सम्बन्धेन गृह्यमाणत्वात् घटवत्' इत्यनुमानमपि द्रव्यत्वसाधकम्।

अत्र कुसुमाञ्जलिकृतः साक्षात् सम्बन्धः संयोगः समवायो वा। स च द्रव्यगुणभावादिव्यवस्थामन्तरा न व्यवतिष्ठतेऽतः साधनाप्रसिद्धिरित्याहुः। तत्रेदं प्रतिभाति द्रव्यत्व-गुणत्वान्यतरसिद्धिमन्तरा संयोगत्वेन समवायत्वेन वा सम्बन्धो मा व्यवतिष्ठताम्, साक्षात्वेन सिद्धौ को बाध इति हेतुः प्रसिध्यत्येव। गुणत्वाङ्गीकारे तदाश्रयकल्पनागौरवभिया भट्टाभिमतसंयोगसम्बन्धाङ्गीकारेण साध्यपर्यवसानात्। किञ्च न केचन गुणाः साक्षात् सम्बन्धेन गृह्यन्ते किन्तु चक्षुरादिभिर्द्रव्याण्येव तदा बलवत्तरबाधकं विना साक्षात् सम्बन्धेन गृह्यमाणे शब्दे गुणत्वाङ्गीकारद्रव्यत्वप्रतीकारौ न शोभेते। यद्यपि तैरेव बाधकमुपन्यस्तं शब्दो न गुणो बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपादिवत्। अयम्भावः, सर्वाणि बहिरिन्द्रियाणि कमपि विशेषगुणमादायैव विषयविशेषप्रत्यक्षव्यवस्थापकानि भवन्ति। अत एव चक्षुषा रूपिणामेव, त्वचा स्पर्शवतामेव प्रत्यक्षमेवं श्रोत्रेणापि विशेषगुणवत्ता भाव्यम्।

स च शब्दो विशेषगुणः। इति। तदपि न सर्वथा बाधकम्, यतो न हि समेषां समानव्यवस्था। भवन्मतेऽपि श्रोत्रेणैव साक्षात्सम्बन्धेन गुणस्य ग्रहणं न चक्षुरादिना, अन्येषां संयोगः सन्निकर्षो न श्रोत्रस्य, किन्तु समवाय एव, अन्येषां सजातीयगुणग्रहणव्यवस्थार्थं सगुणस्येन्द्रियभावः स च गुणोऽनुद्भूतः। श्रोत्रस्य शब्दो गुण उद्भूतः। तत्प्रत्यक्षाय निश्शब्दस्यैव श्रोत्रस्य करणतेति बहुविधवैषम्यसत्त्वात्। किञ्च यदि बहिरिन्द्रियव्यवस्थाहेतुत्वं तत्तदिन्द्रियमात्रजन्यप्रत्यक्षविषयत्वम्, तदाऽगुणे चक्षुर्मात्रग्राह्ये प्रभादौ व्यभिचरितम्। यदाऽपि वर्धमानाचार्यविचारेण चक्षुरग्राह्यबहिरिन्द्रियग्राह्यजातिमत्त्वादित्यादिना व्याख्यायते तदा बाधकस्यास्य प्राण एवापसरति। यतो चक्षुरग्राह्यबहिरिन्द्रियग्राह्यजातिमान् प्रसिद्धस्य चक्षुषोऽपि बहिरिन्द्रियतां न व्यवस्थापयति तदा श्रोत्रस्य तत्त्वव्यवस्थापको भविष्यतीति कः श्रद्दधीत। साक्षात्सम्बन्धाग्राह्यत्वद्रव्यग्राहकेन्द्रियाग्राह्यत्वाद्युपाधिभारभुग्नश्च।

## ४—गगनाश्रयत्वखण्डनम्

एवं स्थिते गगनेन श्रोत्रेण शब्दस्य ग्रहणव्यवस्थार्थं गगनाश्रयत्वप्रतिपादनं शब्दानां मञ्जूषाकृतां नावर्जनीयतामर्जयति। यतो न स्ववृत्तेर्द्रव्यस्येन्द्रियेण ग्रहणम्, सर्वथाऽसम्भवात्। नाऽपि सजातीयस्याऽपि, चक्षुरादौ व्यभिचारात्। नापि सगुणस्य श्रोत्रभावः सगुणग्र णानुपपत्तेः। तथा च यथा चक्षुरादीनि स्वसम्बद्धानि द्रव्याणि गृह्णन्ति न द्रव्याणां तद्वृत्तित्वमपेक्ष्यते तथैव श्रोत्रसम्बद्धान् शब्दान् गृह्णातीत्येतावतैव पर्यवसाने श्रोत्रवृत्तिता नावश्यकी। नापि स्ववृत्तिगुणसजातीयगुणवन्ति द्रव्याणि गृह्णन्तीति नियमेन श्रोत्रस्य गुणवत्ता अपेक्ष्यते यत्र सगुणस्येन्द्रियभावस्तत्र तथाऽभ्युपगमेऽपि श्रोत्रे तथात्वकल्पने प्रमाणाभावात्। नापि हृदवच्छिन्नाकाशे शब्दस्य वृत्तिता, तत्कार्यस्य नैयायिकप्रक्रियया हृदवच्छिन्नात्मनि साङ्ख्यादिरीत्याऽन्तःकरणे च शब्दसंस्कारस्य सत्त्वादेव निर्वाहात्। सम्बन्धस्तु, तस्य न निवार्यते।

## ५—पञ्चभूताश्रयत्वखण्डनम्

यदि च पञ्चीकरणप्रक्रिया प्रामाणिकी तथा च शब्दगुणत्वमपि पृथिव्या इति पञ्चभूताश्रयत्वम् आयाति परं न सा प्रक्रिया समेषां दार्शनिकानां मान्या तत्प्रतिपादकश्रुतीनामपि बहुधा समन्वयात्। तदङ्गीकृतावपि

द्रव्यगुणतादात्म्यवासनया तत्तद्द्रव्यसाङ्कर्येण, तत्तद्गुणसाङ्कर्यमङ्गीकृतम्, न तु तद्व्यवहारोपयोगि। अत एव तद्वैशेष्याद् व्यवहारोपयोगितामङ्गीचकार श्रीव्यासाचार्यः। एवञ्च श्रूयमाणशब्दानां विवेचनीयतया न ते पञ्चभूताश्रयाः। भेरीशब्दो मया श्रुतो वीणाशब्दो वेति व्यवहारोऽपि न परीक्ष्यमाणस्तद्गुणतां ग्राहयति यतो हि यदि भेरीवीणादौ शब्दो रूपपरिमाणादिवत्, दण्डाभिघातमन्तराऽपि कथन्न श्रूयते। यदि दण्डाभिघातादिस्तन्निमित्तं तदुत्पत्तेरभिव्यक्तेर्वा। प्रथमे तु तन्निमित्तादन्यत्रैव शब्दः सञ्जातः किं प्रमाणं भेर्यादिवृत्तित्वे। अभिव्यक्तिस्तु कार्यतावच्छेदकगुरुत्वेन नाङ्गीकार्या। यदि लाघवाच्छब्दनित्यतामादायाभिव्यक्तिरुपस्थाप्येत, तदा नित्यानां शब्दानां भेर्याद्यनित्यगुणत्वासम्भवात्, निराश्रयत्वमन्याश्रयत्वं वा शब्दानां सिध्येत्। किञ्च कुतश्चिद् वाद्याज्जायमाने शब्दे दूरश्रवणयन्त्रेण ( रेडिओ ) कियता समयेन दूरं नीयमाने शीघ्रमेव वाद्ये पाटिते निराश्रयस्य शब्दस्य प्रत्यक्षताङ्गीकृता भवेत्, तत्तु न समीचीनमतो पञ्चभूताश्रयत्वं शब्दस्य न रोचते एव।

## ६—निराश्रयत्वविवेकः

अतः स्वतन्त्रद्रव्यतया निराश्रयत्वं वर्णानाम्। ध्वनीनान्तु परमाणुपुञ्जैर्जायमानानां घटादीनामिव स्वावयवाश्रितत्वम्।

## ७—सावयवत्वविचारः

सावयवत्वविषये ध्वनीनां वात्स्यायनीयरीत्या परमाणुजन्यत्वमुक्तमेव। वर्णानामपि तत्स्वाङ्गीकारेऽनित्यत्वापत्तिरिति नित्यानित्यविचारवर्णनायैव विषयीकरिष्यते इति कृतं प्रबन्धवर्धनेन।

शब्दः पौद्गलिकः ( परमाणुजन्यः ) इन्द्रियार्थत्वात्, रूपादिवदित्यनेकान्तिककल्पितस्यानुमानस्य विमानित्वन्तु नायमलङ्काथो निबन्धः पूरयितुं प्रभवति यतोऽतिविचित्रं तद् दर्शनम्। अपेक्षते चैकस्याऽपि पदार्थस्य व्यवस्था अन्यान् तद्दार्शनिकान् पदार्थान्। यथा तेषां मते जीवोऽपि कथञ्चित्सावयवः। पर्यायैरेधते ह्रासञ्चैति तदा किमाश्चर्यं शब्दविषये। किञ्च दृष्टान्तासिद्धिरेव। न केनापि रूपादयो गुणाः सावयवा अङ्गीक्रियन्ते साङ्ख्यमते कथञ्चिद् व्यवहारोऽपि गुणगुणिनोरभेदमपेक्ष्य न तु गुणानां स्वातन्त्र्येण परमाणुपुञ्जत्वम्। केवलगुणानां परमाणुजन्यत्वं न केनाप्यङ्गीक्रियते न च सम्भवति। तथा हि वायोः परमाणौ स्पर्शशब्दादयो गुणाः

वर्तन्ते चेत् तेषां परमाणवो वर्तन्ते इत्येवागतम्, तथा चाश्रयभूतस्य निरवयवत्वाभावात्, परमाणुत्वमेव पलायेत। यदि गुणगुणिनोरभेदभावनया शब्दस्य परमाणव एव तदाश्रयपरमाणव इति दर्शनन्तदा सावयवत्वायुगुणत्वपरीक्षैव अदसीयपरीक्षा भविष्यति। गुणं मन्यमानाः नैयायिकास्तु न गुणानां परमाणून् स्वीकुर्वन्तीति निरवयवत्वम्।

## ८—सक्रियत्वनिरासः

नैयायिकमते गुणत्वादेव न सक्रियत्वम्, नित्यत्वनये च विभुत्वादेव क्रियाया असम्भवः, वायुगुणत्वपक्षेऽपि वायुक्रिययैव क्रियाकार्यसिद्धौ न शब्दे क्रिया। वायुरूपता तु अनुपदमेव प्रक्षेपिष्यते। परन्तु नैयायिकमते क्रियया विना कथं निर्वाह इति चिन्त्यते। तथा हि प्राप्यप्रत्यक्षकारिस्वदेशस्थितं श्रोत्रं स्वसमवेतं शब्दं गृह्णाति। दूरे जायमानश्च शब्दः स्वजन्यशब्दजशब्दपरम्परया श्रोत्रं पूरयतीति तेषां दर्शनम्। तत्र क्रियां विना शब्दपरम्परयाऽपि कथं शब्दप्राप्तिः। किं शब्दो यदवच्छेदेनात्मानमलभत तदवच्छेदेनैव शब्दान्तरं जनयति? भिन्नावच्छेदेन? निरवच्छिन्ने वाकाशे? प्रथमे वालाग्रमात्रेऽपि कण्ठादिभ्यो दूरे शब्दो न जायेत, किमु वक्तव्यमियति दूरे। द्वितीये सहस्रयोजनदूरेऽपि जायेत कार्यकारणयोः सामानाधिकरण्यञ्च विलुप्येत। तृतीये च सर्वत्रोपलब्धिप्रसङ्गः। क्रियाङ्गीकारे तु किमप्यग्रे एधमानः शब्दः शब्दान्तरं जनयतीति कथञ्चिद् दूरे श्रवणं सम्पद्येत।

अत्र केचन कण्ठताल्वादियन्त्राभिघाताद्वायौ कम्पनक्रियाविशेषो जायते स एव च शब्दस्य कारणम्। स च स्वकारणाभिघातादितारतम्याद् दूरदूरतरपवनानुवर्ती भवति। स्वाश्रयक्रियावशाच्च यावति अनुवर्तते तावति दूरे शब्दपरम्परेति समादधति। वयन्तु सत्यं कम्पो जायतेऽनुवर्तते च तथैव तथापि न स एव शब्दं जनयत्यपि तु तं सहायीकृत्य पूर्वतनः शब्द एव। कार्यतावच्छेदकसम्बन्धश्च स्वजनककम्पजन्यकम्पावच्छेदकतासम्बन्धः। अर्थाद् यदवच्छेदेन वायुक्रियावशात् कम्पोनुवर्तते, तदवच्छेदेन शब्दजशब्दो जायते। तेन च शब्दजशब्देत्यादिपदसमन्वयोऽपि साधु संगच्छते।

रेडियोनामकेन यन्त्रेण यत्र दूरे शब्दः श्रूयते न तत्र पवनकम्पोनुवर्ततेऽन्यथा प्रसारकश्रावकयन्त्रयोर्मध्येऽपि तादृशकम्पस्य सत्त्वाच्छब्दश्रवणापत्तिरतो नूतन एव श्रावकयन्त्रेण पवनकम्पनक्रमः कण्ठाद्यभिघात इव समुत्पाद्यते। स च पवनकम्प एव शब्दं जनयेत् तदा प्रसारकयन्त्रसन्निधे कश्चिद् ब्रुवाणो नापेक्ष्येत। किन्तु कस्मिंश्चित् प्रब्रुवाणे एव श्रावणयन्त्राणि

श्रावयन्तीति मर्यादा। अतो मदुक्तरीत्या पूर्वतनः शब्द एव तादृशकम्प-सहकारी शब्दकार्यकारीति समीचीनम्।

परं यन्त्रप्रभावपरीक्षका विशेषतो विज्ञाः प्रष्टव्याः। यद् यन्त्रयोरुभयोर्मध्ये वायौ कश्चिद्विकारः संस्कारो वा यन्त्राभ्यां क्रियते? किम्वा यन्त्रदेशीयवायौ? यदि पूर्वस्तदा पूर्वाऽपि व्यवस्था। यद्युत्तरं तदा मदुक्ता। किन्तु पूर्वोक्तकार्यतावच्छेदके सम्बन्धे स्वजनकसजातीयकम्पावच्छेदकतेति परिवर्तनीया। अन्यप्रक्रियया तु यन्त्रप्रभावः पश्चात्सति स्मरणे विवेचयिष्यते।

## ६—वायुरूपतानिरासः

वायुस्तु सावयवः परिच्छिन्नः वर्णास्तूपवर्षमुनिमतेन नित्या विभवश्च तदा वर्णानां पवनात्मत्वं शङ्कनीयतामेव नाश्रयते। नित्यत्वं विभुत्वञ्च वर्णानां स्थापयिष्यते। ध्वनयश्च केषाञ्चिन्मते वायवोऽश्रावणाः, शास्त्रदीपिकाकृतश्च श्रावणान् वायुगुणान्तानभिमन्यन्ते, न तु वायूनेव। अतो न प्रसिद्धिर्वायुरूपतायाः किन्तु वायुगुणताया एव। सा तु क्रमेण पर्यालोचिता भविष्यति। अर्हन्मतेऽपि स्पर्शाश्रये वस्तुन्याश्रितः शब्दोऽङ्गीक्रियते, न तु वायुद्रव्यरूप एव।

'वायुः खात्' 'शब्दस्ततः' इति प्रातिशाख्यसूत्रयोर्व्याख्यायां पवनात्मताऽपि शब्दानामाविर्भवति, परन्नासौ सूत्राक्षरेण सूच्यते। ममाभिप्रेतपोषकमपि व्याख्यानं तयोः स्फुरति। तत्तु विस्तरभिया न चिन्त्यते। यद्यपि योगभाष्यव्याख्यायां परमाणुपरिणाम इव वायोरपि परिणामः प्रतिपादितः। एवं 'लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिनः स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते।' वाक्यपदीयेऽपि, तथाऽपि समुपबृंहणमस्य मतस्य नावलोक्यते, कल्प्यते चेमान्यक्षराणि वायुगुणतायामेव योजितान्यर्वाचीनैः, यतः खण्डनमण्डनभावेन गुणभावस्यैव बहुत्रोल्लेखः प्रतीयते।

नापि च प्रतिपाद्यतामर्हति यतः शब्दो न वायुर्निस्पर्शत्वात् कालादिवत्। अन्यथा स्पर्शप्रत्यक्षापत्तिरनुकूलस्तर्कः। बधिरेण प्रत्यक्षीक्रियेत शब्दः। न च विलक्षणोऽयं वायुरस्पर्शोऽनुद्भूतस्पर्शो वा श्रवणमात्रग्राह्य इति वाच्यम्, प्रसिद्धवायुवैलक्षण्यमात्रस्य सिषाधयिषितत्वाद्, अन्यथा सर्वाणि द्रव्याणि वायुरेव तत्तत्कार्यभेदस्तु वैलक्षण्यमात्रनिर्वाहितः स्यादिति बहूपप्लवः। किञ्चेदं वायुरूपत्वं न स्वीयतया शाब्दिकैरादरणीयम्, अन्यथा

'मारुतो वर्णान् जनयते' इति शिक्षास्थाने 'मारुतो वर्णो भवतीति पाठः शोभास्पदी' स्यात्।

## १०—ज्ञानाभेदभेदनम्

'अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम्।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन निवर्तते॥

इति हरिवचनस्य 'आख्यातोपयोगे' सूत्रभाष्यात् 'आत्मा बुद्ध्येत्यादि' शिक्षातश्च बहवो वैयाकरणा ज्ञानरूपतां शब्दस्य सिद्धान्तं वर्णयन्ति।

मञ्जूषायां नागोजीभट्टैः प्रायः शैवागमे प्रसिद्धाः कियतोंऽशस्य परिवर्तनेन व्याकरणनये पदार्था अवतार्य सपरिकरसृष्टिप्रक्रियया अर्थशब्दज्ञानांशमिश्रितेन स्वतन्त्रेण पराख्यतत्त्वेन तत्तत्सहकारिविशेषवशाद् वैखरीपर्यन्तानामुत्पादः प्रतिपादितः। लब्धानुकूलयन्ति परं सूक्ष्मतयाऽवलोकने प्रमाणेभ्य एभ्यो ज्ञानरूपता शब्दस्य नायाति। किन्तु शब्दं प्रति कारणता ज्ञानस्य। हरिग्रन्थे बहूनि मतानीवेदं वर्तते न तु वैयाकरणस्वमिव किमपि प्रतिपादितम्। कतिपयपद्यान्येतद्विरुद्धान्यप्यवाप्यन्ते। तथापि शब्दत्वेन निवर्तते इति दर्शनेनाभासते तन्मतमिति खण्डचते। ज्ञानस्य विवर्तः शब्दः परिणामो वा ? आद्ये वेदान्तिनये सर्वे पदार्थास्तादृशा इति न विविच्यते। द्वितीयन्तु न प्रसिद्धं केनापि वस्तुतो ज्ञानस्य परिणामाङ्गीकारो न कृतः सावयववस्तुन एव परिणामस्वीकारात्। तथाप्यहंकारिकस्य पाञ्चभौतिकस्य वा, सावयवस्यान्तरिन्द्रियस्याज्ञानस्यापि ज्ञानपर्यायबुद्धिव्यपदेश्यस्य परिणमने का क्षतिरिति वाच्यम्, अन्तःकरणवृत्तित्वे बहिरिन्द्रियग्राह्यत्वाभावप्रसङ्गात्। शब्दो नान्तर्वृत्तिर्बहिरिन्द्रियग्राह्यत्वात् घटादिवत्। ज्ञानस्य शब्दात्मकत्वे न किमपि प्रमाणम्, प्रत्युत विभिन्नेन्द्रियग्राह्यतया विरुद्धमेव। किञ्च ज्ञानस्य शब्दात्मकत्वे प्रमाणं शब्दतया परिणाम एवेति चेदन्योन्याश्रयः। तादृशे परिणामे सिद्धे ज्ञानस्य शब्दात्मकत्वं तत्त्वे च तादृशः परिणामः।

एवं शब्दोपादाने ज्ञानत्वं चेच्छब्देऽप्यनुवर्तेत। तदा शब्दो ज्ञानं निर्विषयकं शब्दस्वरूपविषयकं तदर्थविषयकम्वा ? निर्विषयस्य ज्ञानत्वे मानाभावात् न प्रथमः। द्वितीये श्रोत्रस्य वैयर्थ्यम्, तृतीये शक्तिग्रहादिवैयर्थ्यम्।

## ११—अतिरिक्तद्रव्यत्वस्थापनम्

आकाशस्थाने नित्यो विभुश्च शब्दो द्रव्यत्वेन स्थापनीयः। स च व्यवस्थितवर्णादिरूपेण नानान्। ते ते वर्णा नानेके, नैयायिकनये नित्य आत्मनि ज्ञानादेराकाशे चानित्यस्य शब्दस्येव विभुषु नित्येषु वर्णेषु तारत्वादयोऽनित्यगुणाः। यद्वा मञ्जूषादर्शितदिशा वर्णोच्चारणस्थलेऽवश्यं ध्वनयो जायन्ते, तदा त एव तारत्वादयो गुणाः। यदि च विभवो वर्णा दिशो वा नावकाशदानसमर्थास्तदर्थञ्च द्रव्यान्तरस्यावश्यकता, तदा गगनमपि द्रव्यान्तरमास्ताम्। एवञ्च शब्दो दशमं द्रव्यमेकादशञ्च ध्वनिरिति मदीयं दर्शनम्। विशेषगुणक्रिययोरभावान्न भूतमूर्ते, बहिरिन्द्रियग्राह्यत्वादेव न दिक्कालात्मानः।

## १२-१३ स्पर्शवेगयोर्वारणम्

स्पर्शवेगयोः खण्डनन्तु विवेचनेन क्रियाखण्डनपथेनैव समेष्यतीति न पृथग्वितन्यते।

## १४—नित्यानित्यत्वविषये

नित्यतावादिनो मीमांसकाः वेदान्तिनः केचन वैयाकरणाश्च वर्णानां प्रायो नित्यतां मन्यन्ते। अर्थादक्षपादविपक्षतया स्थिरतापक्षपातिनोऽपि ब्रह्म विना सर्वेषां विनाशित्वात्सर्गोदये प्रादुर्भूय प्रलयं यावत्तिष्ठन्ति वर्णाः। तत्खण्डनन्तु 'ब्रह्मातिरिक्तं न किञ्चिन्नित्यमिति' सिद्धान्तखण्डनाधीनं विशालतां वधन्नात्रावसरं लप्स्यते। अतोऽत्र क्षणिकत्वस्थिरत्व एव विवेचनीये। स्थिरत्वे च साधिते 'तावत्कालं स्थितं चैनं कः पश्चान्नाशयिष्यति' इति न्यायेनैव नित्यता पर्यवस्यति।

## १५— क्षणिकत्वमतम्

अनित्यः शब्द उत्पत्तिधर्मकत्वात् पटादिवदित्यनुमानेनानित्यत्वसाधने हेतुप्रसिध्यै व्यङ्ग्यत्वखण्डनाय न्यायभाष्यकृतां युक्तयः। १— अभिव्यञ्जकाः प्रदीपादयः सन्त एव समानदेशं वस्तु प्रकाशयन्ति। नैवं संयोगविभागौ, भेर्यादिसंयोगविभागाद् दूरे शब्दोऽभिव्यज्यते। किमुत दूर एव किन्तु संयोगविभागयोर्विनाशेऽपि शब्दसन्तानेन शब्दश्रवणं जायते। तस्मान्नाभिव्यञ्जकौ संयोगविभागावपि तूत्पादकावेव। २—तीव्रो भेरीशब्दो वीणाशब्दमभिभवति न मन्द इत्यनुभवः। स चानित्यत्वे निर्वहति यतो हि नित्ये शब्दे

मन्दतीव्रौ संयोगौ न किञ्चिद्विधातुं प्रभवतः। शब्दाभेदे च स एव भेरी-शब्दोऽभिभवति कदाचिन्नेति नोपपद्यते। ३—किञ्चाभिव्यञ्जकापसारणीयं किमप्यावरणमेवं स्थलेऽनुभूयते न चात्र किमपि तादृक्। अत्र च वर्धमानोपाध्यायाः 'सम्बन्धविच्छेद आवरणम्' स च विभूनां शब्दानां सर्वदा श्रोत्रसम्बन्धान्न सम्भवति, इत्युपपादयन्ति।

अन्यत्र च यदि "ध्वनिभिरपनेयाः कौष्ठ्या वायव आवरणभङ्गी-क्रियेरन् तर्ह्येकेन ध्वनिना श्रोत्रे संस्कृते विभुत्वात्सम्बद्धाः सर्वे शब्दा युगपच्छ्रूयेरन्। यदि च संस्कारका ध्वनयो यदि नित्यान् शब्दान् संस्कुर्वीरन् तदावयवशः संस्कारासम्भवात् ते शब्दा अन्यत्रापि श्रूयेरन्। यदि च श्रोत्रन्तदान्ये शब्दा अपि श्रोत्रेण गृह्येरन्।" इत्याशङ्कितमस्ति।

## स्थिरत्वस्थापनम्

अत्र च नित्यतायां १—न संयोगविभागावभिव्यञ्जकावपि तदुत्पन्ना ध्वनयः सन्तानेन सर्वगामिपरमाणुपरिणामेन वा श्रोत्रपर्यन्तं समायाता विद्यमाना एवाभिव्यञ्जयन्ति। २—अभिभावकोऽपि ध्वनिरेव न वर्णाः स चानित्यो भिन्न एव। ३—यथा दीपश्चक्षुष सहकारी सन्नभिव्यञ्जकस्तथा श्रवणस्य सहकारित्वेनैवाभिव्यञ्जकत्वं ध्वनीनाम्। न हि दीपेन तत्र किमपि क्रियते, तेजोऽत्यन्ताभावस्य तमसो नित्यत्वान्निष्क्रियत्वाच्च। पूर्वमीमांसानुसारेण च 'शब्दस्य श्रोत्रस्य वा संस्कारका ध्वनयः'। वाक्यपदीयेप्युक्तम् 'इन्द्रियस्यैव संस्कारः शब्दस्योभययोरपि' इत्यादिना दृष्टान्तपुरस्सरम्। शब्दसंस्कारश्च यदवच्छेदेन तदवच्छेदेनैवाभिव्यक्तिरित्यवच्छेदकतासम्बन्धेन कार्यकारणभावाङ्गीकारान्नान्यत्र शब्दाभिव्यक्तिः। श्रोत्रसंस्कारका अपि ध्वनयः स्वसामग्रीसमायातशक्तितया तत्तद्वर्णाभिव्यञ्जकत्वेन व्यवस्थिता न सर्वे ध्वनयः सर्वान् शब्दान् प्रकाशयितुं प्रभवन्तीति नान्यशब्दानामभिव्यक्तेरापत्तिः। एवञ्च शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत्। असमवेतद्रव्यत्वादात्मवदित्याद्यनुमानमपि निष्प्रत्यूहम्। अनाश्रितत्वद्रव्यत्वयोः पूर्वं साधितत्वात्। तथा च श्लोकवार्तिकम्—

तस्मादकृत्रिमश्शब्दो न कदाचिद् विनश्यति।
नित्येन नित्यसम्बन्धादाकाशपरमाणुवत्।

बहुभिः श्रवणैरेप प्राणित्वादीनि वर्जयन् ।
निकृष्टगोत्ववाचित्वं चिरेण प्रतिपद्यते ॥
तावत्कालं स्थिरञ्चैनं कः पश्चान्नाशयिष्यति ।

उत्तरकारिकाया अयम्भावः—गोशब्दश्रवणानन्तरं शब्दस्वरूपमवधार्य व्यक्तौ, द्रव्यत्वे, प्राणित्वे, पशुत्वे गोत्वे वा शक्तिरिति विविच्य पश्चात् गोत्वे शक्तिर्निर्णीयते । तावत्कालञ्च स्थितिरस्य निश्चिता । इति ।

## १६-१७-१८—परममहत्त्वम्

वर्णाः परममहान्तो नित्यत्वे सति सर्वत्रोपलभ्यमानत्वादात्मवत् । इत्यनेन परममहत्त्वं तेन च विभुत्वं सिद्धम् । अन्यसावयवद्रव्यवत् ध्वनयस्तु महान्त एव । अत एव नाणुत्वम् ।

## २ गुणत्वखण्डनम्

वर्णाः न गुणाः साक्षादिन्द्रियग्राह्यत्वात् घटवत् अनाश्रितत्वादात्मवत् । इत्यादिना गुणत्वनिषेधः । शब्दो गुणश्चक्षुरग्राह्यबहिरिन्द्रियग्राह्यजातिमत्वात् स्पर्शवदिति मुक्तावलीप्रयोगे तु आश्रितत्वसाक्षात्सम्बन्धाग्राह्यत्वादय उपाधय ऊह्याः ।

## १६—आकाशगुणत्वनिषेधः

गुणत्वाभावे चाकाशगुणत्वं पञ्चभूतगुणत्वम्वाऽसिद्धमेव । किञ्च शब्दो नेन्द्रियगुणः इन्द्रियग्राह्यत्वात् रूपवत्, इत्यनेनेन्द्रियवृत्तिगुणाः नेन्द्रियेण गृह्यन्त इति मूलकेन श्रोत्राकाशगुणत्वनिषेधे सामान्याकाशगुणत्वनिषेधः समेष्यत्येव ।

## २०—वायुगुणत्वखण्डनम्

शब्दो न वायोर्विशेषगुणोऽयावद्द्रव्यभावित्वात् ज्ञानवत् । वायोः स्पर्शादयो विशेषगुणा आश्रयनाशजन्यनाशप्रतियोगिनो वायौ नष्टेऽवश्यं विनश्यन्ति, नैवं शब्दः । अन्यथा वायौ स्तिमिते मन्दं श्रूयेत, जविनि च तीव्रम् । एवं सदागतिशीले वायौ पृथगपसरत्यन्यस्मिंश्चागतवति शब्दानामपि परिवर्तनं स्यान्न चैवमनुभूयते । तस्मान्न वायुगुणः शब्दः । शब्दो न वायुविशेषगुणस्त्वगिन्द्रियावेद्यत्वाद् रूपादिवत् । इत्याद्यप्येवमेवोह्यम् ।

## २१—पञ्चभूतगुणत्वनिषेधः

पञ्चभूताश्रयत्वनिषेधेनैव तद्गुणत्वनिषेधोऽपि समायात एव। पृथिव्यादीनां गुणानां श्रोत्रप्राप्यता न स्यादिति शास्त्रदीपिकाकृतः। यत्तु रामरुद्रभट्टाः आत्मस्वरूपं श्रोत्रमङ्गीकृत्य दूषणमिदं निराचक्रुस्तत्त सत्यवसरे श्रोत्रविचारे चिन्तयिष्यामि।

## २२-२३—विषयः

सप्तपदार्थान्तर्भावः—असमवेतद्रव्यत्वसाधनेन सप्तपदार्थान्तर्भावः सिद्धः। अत्र पक्षे क्षणिकत्वखण्डनन्तु पूर्वरीत्यैवावसेयम्। क्षणिकत्वखण्डनेनैवोत्पत्तिमत्त्वस्य खण्डनं जातं तत्रापि।

## २४—उत्पत्तेः खण्डनम्

यदि शब्दः समुत्पद्येत तर्हि विनाशकारणाभावात्, संततं श्रूयेतेत्यापत्तिः। यदपि पूर्वशब्दस्योत्तरः सर्वान्त्यस्य च, तत्पूर्व एव नाशक इति समाधानन्तदपि कथमपि स्वीकृतायामुत्पत्तौ सन्ततौ चागत्या कल्पनीयमिव न त्वनुगतत्वेनानुभवपथारोहणीयम्। एवं नापि शब्दविनाशः प्रत्यक्ष आकाशस्यातीन्द्रियत्वात्। यद्यपि कुसुमाञ्जलौ महता समारोहेण तत्प्रत्यक्षं साधितन्तथाऽपि न कश्चिद् दृष्टान्तोऽयोग्याधारेऽभावप्रत्यक्षस्य।

## २५—अभिव्यङ्ग्यत्वस्थापनम्

अभिव्यक्तिवादे तु यावदभिव्यञ्जकमभिव्यक्तिरिति प्रसिद्धमर्यादया न शङ्काया अवसरः।

## २६—अर्थतादात्म्यखण्डनम्

नाप्यर्थतादात्म्यमर्थशब्दयोर्भिन्नेन्द्रियग्राह्यत्वात्, अग्निशब्दादावुच्चारिते मुखदाहाद्यापत्तेः। आध्यासिकन्तादात्म्यमपि यत्र शरीरेन्द्रियादिभिरात्मनो व्यतिरेको न स्फुटमवभासते तत्रैवानाद्यविद्यामूलकम्। अत्र तु बधिरेण शब्दो न श्रूयते तदर्थश्च प्रत्यक्षीक्रियते इति स्फुटो व्यतिरेकः। घट एव शब्दो घट एवार्थो घट एवानीयते इत्यादिव्यवहारस्य निदानन्तु यत्किमपि ज्ञानं परस्मै बोधनीयं चेदनुकूलचेष्टादेरभावे शब्दमन्तरा न किमपि

द्वारमिति सर्वत्रैव ज्ञापने शब्दस्य नान्तरीयकतया प्रवेशो, नार्थतादात्म्येन; नापि विषयत्वेन, किन्तु ज्ञापकत्वेनेति प्रत्यक्षलक्षणे न्यायभाष्ये विवेचितम् ।

## २७—बोधकत्वम्

श्रूयमाणशब्दानां बोधकत्वे केचनैव वैयाकरणा श्रान्तरस्फोटवादिनो विप्रतिपद्यन्ते । किन्तु नित्यानां वर्णानां साधनेऽभिव्यञ्जकध्वनिक्रमेण च क्रमोपपादने ज्ञानघटितानुपूर्व्याः प्रतिपादने, अखण्डस्फोटेऽपि ध्वनिक्रमेणैव क्रमाद्यवभासं समीक्ष्य का विप्रतिपत्तिः ।

## २८— नाभिव्यञ्जकत्वम्

एवञ्चास्थिरत्व एव वैखरीशब्दानां स्फोटाभिव्यञ्जकत्वं नित्यत्वे तु बोधकत्वमेव ।

## २९—ध्वनिभेदः

वर्णाः न ध्वनयो वर्णग्रहणेऽपि ध्वनेर्ग्रहणात् । यथा दूरात्कश्चिदुच्चैर्वंशित न जाने किमुच्चारयति, असावव्यक्तं ब्रूते न च शृणोमि किमिति, इत्यादिव्यवहारा भेदेनैवोपपाद्याः । सर्वत्रगामिनो ध्वनिपरमाणवोऽभिघातविभागाभ्यां वायुना संहन्यन्ते, संघाताभिघाताच्च संघातान्तरं यावद् दूरमनुवर्तते, तावच्छब्दोपलब्धिः । वायुताङ्गीकारे तु तारत्वादीनां श्रावणं न स्यादित्यादि पूर्वखण्डनमनुसन्धेयम् ।

## ३०—श्रोत्रस्य स्वरूपम्

श्रोत्रविषये तु मतानीमानि यत्र कुत्रचिन्मयोपलब्धानि । १ कर्णशष्कुलीमात्रं तदेव रोगादिना विकार्यते भैषज्येन च संस्कार्यते । २ केनचिद्धर्मेण विशिष्टा सा कर्णशष्कुली तत्, रोगभैषज्याभ्यां धर्मस्यैव विनाशप्रादुर्भावौ । ३ अहङ्कारपरिणामस्तत् । तच्च लघुनैव दूरतरं सम्बध्नाति । ४ कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम् । ५ तादृशी च दिक् ६ तदवच्छिन्नमीश्वरतत्त्वम् । ७ तादृशमेव जीवतत्त्वम् ८ परमाणुपरिणाम. ९ एवं मतप्रवाहे कर्णशष्कुल्यवच्छिन्ना वर्णाः श्रोत्रमिति ममापि दर्शनीयं दर्शनम् । परमेषां विवेचने लेखशरीरसमेधनमवश्यम्भावीति लेखान्तरमेव तदुपयोगि मन्तव्यं मनीषिभिः ।

## ३१—प्राप्यकारित्वम्

अप्राप्यकारित्वन्तु केवलं बौद्धैरेवाभिगतन्तच्च सन्निकृष्टविप्रकृष्ट-वाचां युगपद् ग्रहणापत्तेर्न युक्तम्। अन्यैस्तु सर्वैः प्राप्यकारित्वमेव वर्ण्यते।

## ३२-३३—श्रोत्रस्य क्रियापरिणेयत्वे

एषां मध्येऽहङ्कारिकस्य शब्ददेशे गमनं सम्भवति। परमाणुपरिमाण-पक्षेऽपि मञ्जूषाप्रदर्शितदिशा सर्वगामिभिर्विचित्रशक्तिभिः परमाणुभिः कर्णच्छिद्रादारभ्य शब्दपर्यन्तं श्रोत्रसन्तानसम्पादनेन विषयदेशव्यापिता जायते। अन्येषां मते शब्दानामेव श्रोत्रदेशागमनेन प्राप्यता। गगनदिगी-श्वरादीनां श्रोत्रत्वपक्षे यदा शष्कुल्या न विशेषणत्वं किन्तूपाधित्वम्, तदा न कस्यापि कुत्रचिद् गमनं सर्वदैव सर्वेषां प्राप्यता। दूरान्तिकग्रहणा-ग्रहणव्यवस्था तु कयाऽपि रीत्या सर्वेषामावश्यकेन, व्यवधानादिप्रतिबन्ध-काङ्गीकारेण सम्पादनीया। एवमेव समाप्यन्तिमे दर्शने। एवं यथा वायु-तेजसोः प्रत्यक्षाय वायवीयतैजसत्वक्चक्षुषोः सजातीययोः कल्पना तथा शब्द-प्रत्यक्षे शब्देन्द्रियस्य कल्पनेति साजात्यानुभवोऽपि संगच्छते। शुद्धस्य ग्राह्य-ताऽवच्छिन्नस्य च ग्राहकतेति न विरोधः। दिक् तु न ग्राह्या नापि ग्राह्यसजा-तीयगुणवती, एवमीश्वरोऽपि, तथेश्वरानङ्गीकर्तुर्मतेऽनिर्वाहान्न श्रोत्रम्। रामरुद्राचार्योद्भावितं तत्तदात्मनामेव श्रोत्रत्वपक्षे चक्षुरादिभिर्विनिगमना-विरहः कर्तृत्वकरणत्वयोर्विरोधः, तथानङ्गीकारे मनस एवात्मत्वापत्तिः। कालेन विनिगमकाभावश्चेत्यादिदूषणानि बोध्यानि।

यथाकथञ्चिदपि प्राप्यत्वे न दोषः। यद्यपि श्रोत्रस्य गमने भेरीशब्दो मया श्रुत इत्यादिप्रतीतिं बहवः प्रमाणयन्ति तथापि भेर्यादीनां श्रोत्रा-ग्राह्यतया न सा प्रामाण्यमश्नुते। शब्दविशेषणतया दिशोऽपि श्रोत्रग्राह्यतया यतो दिशो ध्वनय आगच्छन्ति, तत्तद्देशानामनुमानाद्बोध इति शास्त्र-दीपिकाकृत इति कृतं सूचनादधिकेन।

## ३४—दूरश्रवणयन्त्रस्य कस्मिन् मते समुपयोगः।

तत्र कार्यविषये प्रामाण्यमश्नुवतां दार्शनिकप्रक्रियया व्यवस्थापयितु-मशक्यां पद्धतिं प्रतिपादयतां प्रायः इदं तत्त्वमीदृगेव न तत्त्वान्तरमिति व्यवस्थामुपेक्षादृष्ट्या विलोक्य ईदृक् कार्यमनेन कर्तुं प्रभूयत इत्याविष्कार-परायणानामाधुनिकवैज्ञानिकानां शब्दविषयेऽधस्तनं मतम्—मैटरशब्दो-

बितानां पृथिव्यप्तेजोवायूनां शक्ति ( ताकत ) राकाशस्य च गुणः। यत्र संक्षोभः क्रिया वा तत्र शब्द उत्पद्यते। भ्रमतां भ्रमराणामपि पक्षभ्यः शब्दो जायते। एवं यत्र वायुः सर्वथैव नास्ति तत्राऽपि शब्दो न जायते प्रमाणितञ्चेदं यन्त्रेण। शब्दग्राहकप्रसारकयन्त्रेण श्रावकयन्त्रं यावद्वायौ कश्चिद् विकारः, संस्कारो वा विधीयत इति यन्त्रयोर्मध्ये यन्त्रान्तरेण प्रत्यक्षीकृतम्। वायोरपेक्षया शीघ्रगतिश्च। तत्रेदं चिन्तनीयम्। केषाञ्चिच्छक्तिरन्यस्य गुण इति व्यवस्थायाः किं प्रयोजनम्?। गुण एव यस्य कस्यापि कथन्न भवेत्?। किञ्च यत्र संक्षोभो वायुश्च वर्तेते तत्रैव शब्दस्तदा वायोर्गुण एवान्येषामभिघाताज्जायमानः कथन्नाङ्गीक्रियेत। शक्तिमन्तं विहाय शक्तेरन्यत्र गमनासम्भवात् तदनुपपत्तिरपि। एवम् यावद् वायुविकारोऽनुवर्तते तावदेव रेडियोयन्त्रेण शब्दोऽपि श्रूयते, तथाऽपि वायोरपेक्षया शब्दस्याधिकगतेरङ्गीकारो न शोभते। यतो हि शब्दश्रवणस्थले न ग्राहकं यन्त्रं न वायुं विना तदाश्रितो विकार आगच्छति किन्तु वायुरेव, तदा तावद्गतिरेव शब्दः।

द्वित्रेभ्यो वत्सरेभ्यः पूर्वन्तेषां वायुगुणतया सिद्धान्तः परिणत आसीत्परं तदनन्तरं वायुमपेक्ष्य वेगवत्तरत्वेन न तथेति प्रवादेऽपि ममैवं प्रतिभाति यद्, यदि प्रसारकश्रावकयन्त्रयोर्मध्ये शतं क्रोशानां दूरमपि वायुं यन्त्रं संस्करोतीति सत्यं तदा पूर्वं या वायोर्गतिर्निश्चितासीत्, ततोधिका गतिः प्रमाणमित्येव तत आगतम्। भ्रान्तेः शब्दगतितया गृहीतम्। अन्यथा वायुक्रियां विना यन्त्रमेतावद् दूरं मध्ये कथं संस्कुर्वीत। यदि च वायोरपेक्षया शब्दस्याधिका गतिस्तदा तावद्दूरं यन्त्रेण वायुसंस्कारपक्षो दूरं प्रक्षिप्यताम्। वायुसहायमन्तरा च तावद्दूरागमने गतिमत्त्वाद्वेगवत्त्वाच्च शब्दः स्वतन्त्रो द्रव्यं न शक्तिर्न वा गुणः। वेगधर्मभिघाताद्यपेक्षणे सावयवत्वञ्च तस्येति स्वीकर्तव्यं स्यात्। तच्च पूर्वोक्तखण्डनेन नोपपद्यते। तस्माद्यन्त्रप्रभावाद्वायोर्गतेश्चापि क्षिप्रं दूरे श्रवणाय स्वतन्त्राः सर्वव्यापिनो वर्णा अङ्गीकर्तव्याः। ग्राहकयन्त्रेण शब्दसंस्कारः, श्रावकयन्त्रेण च श्रोत्रसंस्कार इति व्यवस्था च। परस्परसम्मेलनवशाद्विलक्षणशक्तिमत्पदार्थाविष्कारपरायणानां भूतानां संयोगेन जायमानस्य प्रसारकयन्त्रस्यैतावान् महिमा येन तत् अन्यैरभिव्यक्तं शब्दं गृह्णाति। श्रावकयन्त्रस्य च स्वसम्बन्धिभिरन्यैरुद्योतितस्यैवाविष्कारे प्रभाव इति कार्यवशात्कल्प्यते। परं श्रोतुरिच्छावशात्तस्मिन्नेव काले, कयाचित् कुञ्चिकया मोहमयीनगरेण सह सम्बन्धविच्छेदं कृत्वा इन्द्रप्रस्थेन सह

सम्पाद्यते । स च मध्य एतावद्दूरे कस्यचिदनुवर्तनमन्तरा तत्तद्भिभिः सह श्रोतृकाभनाप्रयोज्यः सम्बन्धो न भवितुमर्हतीति विद्वद्भिर्विवेचनीयम् ।

तस्मात्प्रसा(कयन्त्रेण तत्तच्छब्दाभिव्यञ्जकध्वन्यनुकूलः कश्चित् पवनप्रकम्पः समुत्पाद्यते । स च क्रमशो नानादिक्षु परिवर्तमानो दूरेऽसंस्कृत-वायुना विच्छेदमाप्तः । श्रावकयन्त्रेण प्रकम्पननियमनद्वारा कम्पोऽपि नियम्य ध्वनिरुत्पाद्यते तेन च वर्णा अभिव्यज्यन्ते । शब्दस्य च नाधिका गतिरित्यङ्गीकर्तव्यम् ।

यदि च शब्दस्याधिका गतिः प्रमाणितैव तदा ध्वनिशब्दपरमाणव इतस्ततः सर्वत्र प्रसरणशीलाः प्रसारकश्रावकयन्त्राभ्यां स्तिमितगतयः क्रियन्ते तेन च स्थूलध्वन्युत्पादने वर्णा आद्योत्यन्त इति स्थापनीयम् ।

( फोनूग्राफ ) वातवाद्यविषये—वैज्ञानिकाः कथयन्ति यद् विद्युन्नि-र्मितं किमपि सूक्ष्मं मृदुतरञ्च वस्त्रं कर्गदमिव वा वस्तु वर्तते, तत्सन्निधाने मुखं कृत्वोच्चारणे तत्राघातेन मृदुनि पिपीलिकासञ्चार इव उच्चैर्नीचैश्च चिह्नं जायते । तेन च गीतं गृह्यते । तदुपरि सूचिका सञ्चार्यते । तत्र पत्र-( तावा ) निर्माणसमये चैवमपि भवति यद्यन्त्रस्य सविध उच्चारणेनाघा-ताद्यन्त्रक्रिया तथा च सूचिकासञ्चारस्तेन च विध्यते इति वदन्ति । तत्राप्युच्चारणेन वायुकम्प एव भवति तत एव च विलक्षण आघात इत्युप-संहरणीयं कृतमधिकेन ॥ इति

नित्यं सर्वोतरूपं श्रवणकरणकं द्रव्यभावं भजन्तं
भेरीकण्ठाभिघाताद्बहुविधविततैर्नादपुञ्जैर्लसन्तम् ।
यन्तं पुष्पप्रभावं तव गुणगणनासक्तमस्याविधौतं
शब्दं ते विश्वबन्धो गिरिधरभगवन् पाणिपद्मेऽर्पयामि ॥



जयपुर महाराजा संस्कृत कालेज के महामहोपाध्याय श्रीगिरिधर-शर्मा चतुर्वेदी के अभिनन्दन समारोह में १६४५ ई० प्रकाशित संस्कृतरत्नाकर दर्शनाङ्क से—

## शब्दतत्त्वम्

उसमें शब्द विषयक विप्रतिपत्ति वाक्य १ शब्द द्रव्य है कि नहीं ?, २ शब्द गुण है कि नही ?, ३ शब्द नैयायिकों के सात पदार्थों में से अतिरिक्त पदार्थ है कि नहीं ? सात पदार्थ से अतिरिक्त अप्रसिद्ध होने पर अभाव भिन्न काल आकाश-दिशा आत्मा से भिन्न शब्द समवेत है या नहीं ?, इसमें तात्पर्य समझना चाहिये। और समवाय की असिद्धि से अप्रसिद्धि दोष का सन्देह न करें, सभी समवाय को मानते हैं, महाभाष्य आदि में भी बहुत मिलता है, केवल अतिरिक्त पदार्थ होने में विवाद है।

पहले द्रव्यत्वकोटि वाले विकल्प में कारण वैयाकरणसिद्धान्तलघुमञ्जूषा बनी है उसमें लिखा है कि शब्द द्रव्य हो कर भी गगन में रहता है। उसी के अनुसार ४ शब्द गगनवृत्ति है या नहीं। बहुत जगह पञ्चगुणा पृथ्वी ऐसा लिखा मिलता है इस लिये ५ शब्द पञ्चभूत में रहता है या नहीं ?, जो लोग शब्द को विभु मानते हैं, विभु किसी में नहीं रहता उसके अनुसार ६ शब्द निराश्रय है या नहीं ?, अणवः सर्वशक्तित्वात् इत्यादि वाक्यपदीय के अनुसार अथवा जैन मत के अनुसार ७ शब्द सावयव है या नहीं ? शब्द दूरदेश जाता है इसके अनुसार ८ शब्द क्रियावान् है या नहीं ? वायोरणूनाम् इत्यादि भर्तृहरि पद्धति से ९ शब्द वायुरूप है या नहीं ? विशिष्टाद्वैती जैसे ज्ञान को भी द्रव्य मानते हैं १० शब्द ज्ञानरूप हैं या नहीं ? विभु मानने पर ११ शब्द दशवां द्रव्य है या नहीं ? अभिघात से वेग समझने पर १२ शब्द स्पर्श वाला है या नहीं ? उसी प्रकार १३ शब्द वेगवाला है या नहीं ? १४ शब्द ध्वंस का अप्रतियोगी है या नहीं ? १५ शब्द तीसरे क्षण ध्वंस का प्रतियोगी है या नहीं ?, १६ महापरिमाणवाला है या नहीं ?, १७ शब्द मध्यम परिमाण वाला है या नहीं ? १८ शब्द अणु परिमाण है या

नहीं ?, इस प्रकार द्रव्य पक्ष में १५ विप्रतिपत्तियाँ हैं। गुणत्व पक्ष में १६ आकाश का २० वायु का अथवा पञ्चभूतों का २१ गुण है, ऐसी तीन विप्रतिपत्तियां हैं। २२ पहले के १४–१५ को जोड़कर पांच विकल्प होंगे। २३ सभी पक्षों में श्रूयमाण शब्दों का २४ उत्पत्तिमत्त्व २५ अभिव्यङ्ग्यत्व, २६ अर्थतादात्म्य, २७ बोधकत्व, आन्तर स्फोट मत के अनुसार २८ अभिव्यञ्जकत्व, २९ ध्वनिरूपता, है या नहीं। ऐसे सात विकल्प होंगे। इन विचारों के आवश्यक अङ्ग तथा उपोद्घात संगत ३० श्रोत्र स्वरूप, ३१ श्रोत्र का प्राप्यकारित्व, ३२ क्रियावत्त्व, ३३ परिणामित्व ये तीन पक्ष होंगे, ३४ दूर श्रवण यन्त्र का कार्य, इस प्रकार ३५ विचारणीय विषय होंगे।

१—उसमें शब्द द्रव्य है, तारत्व मन्दत्व आदि गुणों का आश्रय होने से, इत्यादि अनुमानों से शब्द में द्रव्यत्व सिद्ध होता है, तारत्व आदि गुण वायु के अथवा ध्वनि के नहीं हैं ऐसा सिद्ध किया जायेगा। ध्वनि के गुण के विषय में आगे विचार आयेगा, श्रवण से प्रत्यक्षत्व हेतु से तथा शब्दत्व दृष्टान्त से वायु का गुण नहीं है ऐसा सिद्ध करना चाहिये।

इतने पर मीमांसक कहते हैं—वर्ण विभु है और द्रव्य है, ध्वनि वायु का गुण है, वायु का गुण भी ध्वनि संयुक्त समवाय स्वरूप परम्परा सम्बन्ध से श्रोत्र द्वारा प्रत्यक्ष किया जाता है। इति। किन्तु वैयाकरणमञ्जूषा में तारत्व आदि गुण के आश्रय ध्वनि को द्रव्य कहा गया है। उस पर मेरा विचार ध्वनि भी साक्षात् श्रोत्र से प्रत्यक्ष होने के कारण वर्णों के ऐसा द्रव्य ही हो, श्रोत्र ग्राह्यत्व दोनों में समान है।

इस पर यह सन्देह होगा कि ध्वनि अनित्य तथा कार्य है, कार्य होने से आश्रित होगा, उसमे उसमें गुणत्व होना चाहिए, उसपर नीचे की हरिकारिका के अनुसार समाधान दिया जाता है। 'परमाणु सभी शक्ति वाले हैं, भिन्न-भिन्न सम्बन्धों से परिणामी है, कहीं-कहीं छाया आतप तम शब्दरूप से परिणत होते हैं। १ वायु परमाणु और ज्ञान शब्द बन जाता है, यह भिन्न-भिन्न दार्शनिकों का मतभेद है। विशेष विचारो में स्थिर नहीं है। इस वाक्यपदीयरीति से स्वतन्त्र परमाणुओं में आश्रित ध्वनि स्वतन्त्र द्रव्य है। इस प्रकार शब्द द्रव्य है, इन्द्रिय से साक्षात् सम्बन्ध से गृह्यमाण होने से, घट के ऐसा, यह अनुमान भी द्रव्यत्व का साधक है।

इस अनुमान पर कुसुमाञ्जलिकार कहते हैं–शब्द गुण है या द्रव्य इसकी व्यवस्था जब तक नहीं हो पाई है तब तक शब्द का संयोग या समवाय साक्षात् सम्बन्ध नहीं निर्णीत है इसलिये साधनाप्रसिद्धि दोष है। उसपर मेरी समझ–जब तक द्रव्यत्व या गुणत्व का संदेह है तब तक संयोग या समवाय का निर्णय न हो, किन्तु दोनों साक्षात् सम्बन्ध हैं, दोनों में कोई होगा, साक्षात् सम्बन्ध होगा, साक्षात्त्वेन अन्यतर का निर्णय है, इसमें कोई बाधा नही, अत एव प्रसिद्ध है। गुण मानने पर उसके आश्रय की कल्पना में गौरव होगा, इसलिये भट्ट से अभिमत संयोग सम्बन्ध स्वीकार करने से साध्य का पर्यवसान हो जायेगा।

और भी—साक्षात् सम्बन्ध से किसी गुण का प्रत्यक्ष नहीं होता, चक्षु आदि इन्द्रियाँ साक्षात् सम्बन्ध से द्रव्य ही का प्रत्यक्ष करती हैं, तब बलवान् बाधक के बिना साक्षात् सम्बन्ध से प्रत्यक्ष शब्द में गुणत्व मानना तथा द्रव्यत्व का निषेध करना नहीं शोभता।

जो कि उन्होंने ही बाधक रखा कि–शब्द गुण है, बहिरिन्द्रियों के व्यवस्था का कारण होने से, रूप आदि के ऐसा। भाव है कि—सभी बाह्य इन्द्रियाँ कोई विशेष गुण को लेकर ही विषयविशेष के प्रत्यक्ष की व्यवस्था करती हैं, इसलिये आँख से रूपी द्रव्यों का, त्वचा से स्पर्शवाले द्रव्यों का ही प्रत्यक्ष होता है, वहाँ जैसे आँख में रूप है, त्वचा में स्पर्श है, वैसे श्रोत्र में भी विशेष गुण होना चाहिये, वह विशेष गुण शब्द है। इति।

वह भी सर्वथा बाधक नहीं है क्योंकि—सभी इन्द्रियों की समान व्यवस्था नहीं है, न्यायमत में केवल श्रोत्र ही साक्षात् सम्बन्ध से गुण का ग्रहण करता है, चक्षु आदि का संयोग सन्निकर्ष होता है, श्रोत्र का नहीं। श्रोत्र का समवाय ही सम्बन्ध होता है, और इन्द्रियों को सजातीय गुण प्रत्यक्ष की व्यवस्था के लिये सगुणों को इन्द्रियता है। और वे इन्द्रिय गुण अनुद्भूत हैं। श्रोत्र का शब्द गुण उद्भूत है, निःशब्द ही श्रोत्र का इन्द्रियत्व है, इस प्रकार बहुत वैषम्य है, यदि बाह्य इन्द्रिय व्यवस्था का कारण उस इन्द्रियमात्रजन्यप्रत्यक्ष का विषय होना हो तो गुणभिन्न चक्षुमात्र ग्राह्य प्रत्यक्ष प्रभा में व्यभिचरित है। चक्षु से अग्राह्य बाह्य इन्द्रिय से ग्राह्य जातिमान् ऐसे हेतु के व्याख्या

रूप वर्धमानोपाध्याय के विचार से तो इस बाधक का प्राण ही चला जाता है, क्योंकि चक्षु से अग्राह्य बाह्य इन्द्रिय से ग्राह्यजाति वाला गुण जब प्रसिद्ध चक्षु का ही व्यवस्थापक नहीं हो पाता तब श्रोत्र का व्यवस्थापक होगा, इस पर कौन श्रद्धा करें। साक्षात् सम्बन्ध से ग्राह्य न होना, तथा द्रव्य के ग्राहक इन्द्रियों से ग्राह्य न होना, इत्यादि उपाधियों के भार से यह हेतु दबा है।

४—ऐसी स्थिति में—श्रोत्र गगन है, श्रोत्र से शब्द के प्रत्यक्ष की व्यवस्था के लिये शब्दों का आश्रय गगन है, ऐसा वैयाकरणमञ्जूषाकार का वचन अवश्य आदरणीय नहीं रहता। क्योंकि अपने में रहने वाले द्रव्य का इन्द्रियों से ग्रहण असम्भव सा लगता है, कहीं नहीं दीख पड़ता है। चक्षु आदि में व्यभिचार होने से सजातीय द्रव्यों के ग्रहण का नियम नहीं हो सकता, श्रोत्र से सगुण का ग्रहण नहीं बन सकता इसलिये सगुण का श्रोत्रभाव नहीं हो सकता, जैसे चक्षु आदि इन्द्रियाँ अपने से सम्बद्ध द्रव्यों का ग्रहण करती है, उन द्रव्यों का इन्द्रियों में रहना अपेक्षित नहीं है, उसी प्रकार श्रोत्र सम्बद्ध शब्दों को श्रोत्र ग्रहण करेगा, शब्दों को श्रोत्र में रहना जरूरी नहीं है। इन्द्रियाँ अपने में रहने वाले गुणों के सजातीय गुण वाले द्रव्यों का प्रत्यक्ष करती हैं। यह नियम वहाँ के लिये है जहाँ विशेष गुणवाली इन्द्रियों की व्यवस्था है, श्रोत्र में ऐसा नहीं है, शब्दवाला ही श्रोत्र इन्द्रिय है इसमें कोई प्रमाण नहीं, हृदय से अवच्छिन्न आकाश में शब्द रहे, यह भी नहीं बनता, शब्दविषयक संस्कार नैयायिक प्रक्रिया से हृदय से अवच्छिन्न आत्मा में, सांख्य के अनुसार अन्तःकरण में रहता है, इतने से ही उन कार्यों का निर्वाह हो जायगा। शब्द के सम्बन्ध का निवारण नहीं है।

५—यदि पञ्चीकरण प्रक्रिया प्रामाणिक है तब पृथिवी में भी शब्द गुण है, पाँचों भूत शब्द के आश्रय हैं, ऐसा आता है, लेकिन वह प्रक्रिया सभी दार्शनिकों को मान्य नहीं है, उसके प्रतिपादक श्रुति वचनों का अनेक प्रकार से समन्वय किया जाता है, द्रव्य और गुणों में तादात्म्य माननेवाले उन उन द्रव्यों के सांकर्य से उन उन गुणों का सांकर्य स्वीकार किये हैं, वह व्यवहार का उपयोगी नहीं है, इसीलिये ब्रह्मसूत्र में व्यासाचार्य कहते हैं कि जिसमें जिस भूत का अधिक अंश है, उसको लेकर लोक व्यवहार होता है, इससे पुरानी भी सम्मति हुई कि पञ्चीकरण प्रक्रिया व्यवहार के

अनुसार नहीं हैं; इस रीति से श्रूयमाण शब्दों का यहां विवेचन है, वे शब्द पञ्चभूतों में रहनेवाले नहीं हैं। मैंने भेरी शब्द सुना, मैंने वीणा शब्द सुना, इत्यादि व्यवहारों से भेरी और वीणा में रूप-परिमाण आदि गुणों के ऐसा शब्द भी रहता है ऐसा नहीं समझना चाहिये, क्योंकि रूप आदि के ऐसा हमेशा शब्द नहीं सुने जाते, डंडे आदि के चोट को निमित्त कहेंगे तो क्या वह उत्पत्ति का निमित्त है अथवा अभिव्यक्ति का ?। पहले पक्ष में उस निमित्त कारण से दूसरी ही जगह शब्द पैदा हुआ, भेरी या वीणा में ही पैदा हुआ इसमें क्या प्रमाण है ?। अभिव्यक्ति में निमित्त मानने पर शब्दप्रत्यक्ष कार्य होगा, शब्द प्रत्यक्षत्व गुरुभूत कार्यतावच्छेदक हो जायेगा। यदि लाघव से शब्द की नित्यता का पक्ष लेकर अभिव्यक्ति कहते हैं तो नित्य शब्दों का अनित्य भेरी आदि आश्रय नहीं हो सकेंगे, शब्दों को निराश्रय अथवा दूसरा कोई आश्रय मानना पड़ेगा। और भी—किसी बाजा से शब्द होने पर दूर श्रवण यन्त्र रेडियों से दूर गया हुआ शब्द सुन पड़ता है, शब्द पैदा होने पर तुरत बाजा को फोड़ दें, तो भी शब्द सुन पड़ता है, तब निराश्रय शब्द का श्रवण मानना पड़ेगा। वह ठीक नहीं है, इसलिये शब्दों को पञ्चभूतों में रहना नहीं पसन्द करना चाहिये।

## ६-७—शब्दनिराश्रय और निरवयव है

अतः वर्ण शब्द स्वतन्त्र द्रव्य हैं, उनका कोई आश्रय नहीं है. ध्वनि तो परमाणु पुञ्जों से पैदा होते हैं, घट आदि के ऐसा सावयव हैं तथा अपने अवयवों में रहते हैं, वाक्यपदीय रीति से ध्वनियों की उत्पत्ति परमाणुपुञ्ज से बताकर उनका सावयवत्व कह दिया गया है, वर्णों की परमाणु पुञ्ज से उत्पत्ति तथा सावयव मानने पर अनित्यत्व हो जायेगा। अनित्यत्व का खण्डन आगे आनेवाले नित्य और अनित्य विचार से गतार्थ हो जायेगा, यहां अभी उसका विचार छोड़ा जाता है।

## अनैकान्तिक मत

शब्द पुद्गल ( परमाणु ) से जन्य हैं, इन्द्रिय का अर्थ होने से, रूप आदि के ऐसा, इस जैन मत कल्पित अनुमान का खण्डन तो यह छोटा निबन्ध नहीं पूरा कर सकता, यह बड़ा विचित्र दर्शन है, एक पदार्थ की व्यवस्था अन्य दार्शनिक पदार्थों की अपेक्षा रखती है। जैसे उनके यहां जीव भी किसी प्रकार सावयव है। पर्यायों से

बढ़ता है तथा घटता है, तब शब्द के विषय में क्या आश्चर्य है ?। दृष्टान्त तो असिद्ध ही है, कोई भी रूप आदि गुणों को सावयव नहीं मानता, कोई कोई गुण-गुणी को अभेद मानकर वैसा कह सकता है, कोइ भी गुणों को परमाणु पुञ्ज नहीं मानता। ऐसा संभव भी नहीं है। जैसे कि वायु के परमाणु में रूप और स्पर्श रहता है, इससे आया कि वायु के परमाणु में रूप-परमाणु और स्पर्श परमाणु रहते हैं; जिस परमाणु में दूसरा परमाणु रहता है, वह परम अणु परमाणु ही कैसे होगा ?। क्योंकि आश्रय परमाणु सावयव हो गया, यदि गुण-गुणी की अभेद भावना से शब्द परमाणु ही उस वायु के परमाणु है ऐसा दर्शन माने तो आगे सावयव वायु के गुण शब्द का विवेचन करेंगे, उसी से इसका खण्डन होगा। नैयायिक लोग शब्द को गुण तथा निरवयव मानते हैं, गुणों का परमाणु भी नहीं मानते।

## ८—वर्ण शब्दों में क्रिया नहीं

न्याय मत में गुण में क्रिया नहीं होती, जो नित्य विभु मानते हैं उनके यहां विभु होने से ही क्रिया नहीं होती, शब्द को वायु का गुण मानने पर वायु की क्रिया से ही क्रिया का काम हो जायेगा, शब्द में क्रिया मानने की आवश्यकता भी नहीं होती। शब्द की वायुरूपता का आगे खण्डन किया जायेगा। तो भी नैयायिकों के यहां क्रिया के बिना कैसे निर्वाह होगा ?, यह चिन्तनीय है। क्योंकि विषय को प्राप्त करके प्रत्यक्ष करनेवाला श्रोत्र अपने ही देश में स्थित अपने में समवेत शब्द को प्रत्यक्ष करता है। दूर में पैदा हुआ शब्द अपने से पैदा हुआ शब्द उससे फिर शब्द इस प्रकार शब्दज परम्परा से श्रोत्र को भरता है ऐसा उनका दर्शन है, वहां क्रिया के बिना शब्दज शब्द परम्परा से भी श्रोत्र को कैसे शब्दप्राप्ति होगी ?, शब्द जहां पैदा होता है वहीं दूसरा शब्द पैदा करता है अथवा दूसरे देश में पैदा करता है ? या निरवच्छिन्न केवल आकाश में दूसरे शब्द को पैदा करता है ?। प्रथम पक्ष में क्रिया के बिना बालमात्र भी आगे कैसे बढ़ सकता है ?। कण्ठ आदि देश में पहला शब्द पैदा हुआ वह वहीं दूसरे शब्द को पैदा करेगा, दूर मे कैसे श्रवण होगा ?। दूसरे पक्ष में सहस्र योजन दूर में भी शब्द का श्रवण होने लगेगा। कार्यकारण के सामानाधिकरण्य का भी विलोप होगा। तीसरे पक्ष में सभी जगह शब्द का प्रत्यक्ष होने लगेगा। क्रिया मानने पर कुछ आगे बढ़कर शब्द दूसरे शब्द को पैदा कर सके तो दूर में शब्दश्रवण संभव है।

इस पर किसी का कहना है कि—कण्ठतालु आदि के अभिघात से वायु में कम्पनक्रियाविशेष पैदा होता है, वही क्रियाविशेष शब्द को पैदा करता है, अपने कारण अभिघात की तीव्रता और मन्दता के तारतम्य से दूर दूरतर पवनों में चलने वाला वह कम्पनविशेष होता है, वायु के क्रियावश जितने दूर जगह वह कम्पन जाता है, उतने दूर जगह में शब्द परम्परा का आधान करता है, वहाँ वहां शब्द का श्रवण होता है।

मेरी समझ के अनुसार तो इतना ठीक है कि अभिघात से कम्पन और कम्पन का दूरतक जाना, किन्तु वह कम्पन शब्द को नहीं पैदा करता, उस कम्पन की सहायता से पहला शब्द ही दूसरे शब्दों को पैदा करता है, कार्यतावच्छेदक सम्बन्ध होगा, पूर्व शब्द का जनक जो कम्प उससे जन्य जो कम्प उस कम्प की अवच्छेदकता, अर्थात् जिसको अवच्छेद करके वायु की क्रिया से कम्प पैदा होता है, उसी को अवच्छेद करके शब्द होते हैं। शब्द को ही कारण मानने पर नैयायिकों का शब्दज–शब्द समन्वित होता है।

रेडियों नामवाले यन्त्र से जहाँ दूर में शब्द सुनाई पड़ता है, वहाँ पवन कम्प की परम्परा नहीं चलती। अन्यथा प्रसारक यन्त्र और श्रावक यन्त्र के बीच में भी उस पवन कम्प के रहने से शब्द का श्रवण होने लगे, इसलिये श्रावण यन्त्र नया ही पवन कम्प का क्रम पैदा करता है, जैसे कण्ठतालु आदि का अभिघात पवनकम्प पैदा करत हैं, यदि श्रावक यन्त्र से पैदा हुआ पवनकम्प शब्द को पैदा करे तो प्रसारक यन्त्र के पास किसी के बोलने की जरूरत न पड़े, किन्तु ऐसा नहीं होता, जब कोई प्रसारक यन्त्र के पास बोलता है तभी श्रावक यन्त्र से दूर तक सुन पड़ता है। इस रीति से मेरी व्यवस्था ही अच्छी मालूम पड़ती है कि पहला शब्द ही वैसे पवनकम्पों की सहायता से शब्दज शब्द पैदा करता हैं।

तो भी यन्त्र प्रभावों के परीक्षक विशेषज्ञों से पूछना चाहिये, प्रसारक और श्रावक यन्त्र दोनों मिलकर बीच के वायु में कुछ संस्कार करते हैं जिससे पहले के पवन कम्प का अनुवर्तन श्रावकयन्त्र तक चलता हो, तथा मध्य में शब्द न पैदा हो, अथवा श्रावकयन्त्र के बिना पैदा होकर भी नहीं सुन पड़े, यदि ऐसा हो सके तो पहली व्यवस्था

भी पवनकम्पन ही शब्दों को पैदा करता है, यह भी ठीक है, यदि जिस देश में यन्त्र हैं उसी देश में वायु का संस्कार करते हैं ऐसा माने तो मेरी व्यवस्था ही पूर्व शब्द वैसे पवनकम्पों के सहकार से शब्द पैदा करता है ऐसा ही ठीक है। यन्त्र का प्रभाव कुछ पीछे भी विचारा जायेगा, जिसके साथ दूसरी प्रक्रियाओं का भी सम्बन्ध संभव है।

## ९—शब्द वायु नहीं है

वायु सावयव और परिमित परिमाण वाला है, उपवर्ष मुनि के मत के अनुसार वर्णात्मक शब्द नित्य तथा विभु है, उसके अनुसार तो वर्णों को वायुरूप नहीं ही मान सकते, वर्णों का नित्यत्व और विभुत्व आगे सिद्ध किया जा रहा है। किसी के मत में ध्वनि वायुरूप हैं, और उनका कान से प्रत्यक्ष नहीं होता, शास्त्रदीपिकाकार ध्वनि को वायुरूप नहीं किन्तु वायु के गुण मानते हैं, और उनका कान से प्रत्यक्ष करते हैं, इस लिये ध्वनि वायुरूप से प्रसिद्ध नहीं समझा जायेगा किन्तु वायु के गुण से ही अधिक प्रसिद्ध समझना चाहिये। उसकी भी क्रमशः आलोचना आयेगी। अर्हन् मत में भी स्पर्श के आश्रय वस्तु में शब्द माना जाता है, वायु द्रव्यरूप नहीं माना जाता।

'वायुः खात्' 'शब्दस्ततत्' इत्यादि प्रातिशाख्य सूत्र व्याख्या में वायुरूप भी शब्द मालूम पड़ता है, किन्तु वैसा अर्थ सूत्रों के अक्षर से स्फुट नहीं निकलता, मेरे अभिप्राय का पोषक भी उसका व्याख्यान हो सकता है, उसको निबन्ध बढ़ने के भय से छोड़ा जाता है। यद्यपि योगभाष्य व्याख्या में परमाणुओं के परिणाम के ऐसा वायु का भी परिणाम कहा गया है, इसी प्रकार 'वक्ता की इच्छा के अनुसार यत्न से सक्रिय हुआ तालु आदि स्थानों में अभिघात पाया हुआ वायु शब्दता को पाता है' इत्यादि वाक्यपदीय में भी है, तो भी इस मत की आगे विशेष चर्चा नहीं देखी जाती, मालूम होता है नवीनों ने इन पदवाक्यों की योजना वायुगुण के तात्पर्य से कर दिया हो। क्योंकि गुणपक्षका ही बहुत अधिक खण्डन मण्डन चलता है।

शब्द वायुरूप हो भी नहीं सकता, शब्द वायु नहीं है, स्पर्श रहित होने से, काल आदि के ऐसा, इत्यादि अनुमानों से वायु भेद सिद्ध हो जाता है, शब्द के स्पर्श का प्रत्यक्ष, बधिर द्वारा स्पर्श के ऐसा शब्द का भी प्रत्यक्ष आदि आपत्तियाँ अनुकूल तर्क होगी। शब्द स्पर्शरहित विलक्षण वायु है, अथवा इसका अनुद्भूत स्पर्श है, केवल

१२

कान से प्रत्यक्ष होने वाला है, इत्यादि किसी का वर्णन व्यर्थ है, प्रसिद्ध वायु से भेद सिद्ध हो जाना ही बहुत है, उसी से शब्द वायु नहीं हुआ, वायु भिन्न शब्द में वायु नाम से क्या लाभ। अन्यथा सभी द्रव्य वायु ही हो जाय, उनका कार्य भेद कुछ-कुछ वैलक्षण्य मानकर चलाया जाय, इस प्रकार बहुत उपप्लव हो जाय। इस वायुरूपता पक्ष को वैयाकरण नहीं अपनायें। पाणिनि शिक्षा से स्पष्ट विरोध है, शिक्षा में 'मारुत वर्णों को पैदा करता है' ऐसा कहता है, वायुरूप वर्ण होता तो 'मारुत वर्ण होता है' ऐसा कहा जाता।

## १०—ज्ञानरूप शब्द का प्रतिपादन और खण्डन

अथेदमान्तरम् इत्यादि हरिकारिका में लिखा है कि 'अन्तःकरण में रहने वाला सूक्ष्मवाक्रूप ज्ञान अपने स्वरूप को प्रगट करने के लिये शब्दरूप बनता है'। इसी प्रकार कुछ अभिप्राय 'आख्यातोपयोगे' सूत्र भाष्य से निकलता है, उसी तरह 'आत्मा बुद्ध्या समेत्येत्यादि' पाणिनि शिक्षा से निकलता है। इस प्रकार कुछ वैयाकरण ज्ञानरूप शब्द को सिद्धान्त वर्णन करते हैं, मञ्जूषा में नागोजीभट्टमहोदय शैव आगम में प्रसिद्ध पदार्थों को कुछ अंशों के परिवर्तन के साथ व्याकरण शास्त्र के पदार्थरूप से उतारे हैं। उसके अनुसार साङ्गोपाङ्ग सृष्टिप्रक्रिया दिखाये हैं, एक परा नाम से परतत्त्व बताये हैं कि उसमें सूक्ष्मरूप से अर्थ शब्द ज्ञान तीनों हैं, अथवा परा तीनों रूप है, उसी परातत्त्व से विभिन्न सहकारी के समवधान से क्रमशः वैखरी पर्यन्त का उत्पाद कहे हैं। उसको वैयाकरण अपने पक्ष का उपपादन मानते हैं। किन्तु सूक्ष्मरूप से देखने से इन प्रमाणों से शब्द की ज्ञानरूपता नहीं सिद्ध होती, किन्तु शब्दविशेष का कारण ज्ञान है यही आता है, शब्द के विषय में हरिग्रन्थ में अनेक मत दिये गये हैं, यह व्याकरण मत है, ऐसा कुछ नहीं कहा गया है। हरिग्रन्थ में कुछ पद्य ज्ञानरूपता के विरोधी भी मिलते हैं, तो भी उपर की कारिका के अनुसार ज्ञानरूप शब्द मालूम पड़ता है, उसका खण्डन किया जाता है।

### ( ज्ञानरूपता का खण्डन )

ज्ञान का शब्द विवर्त है या परिणाम ?, पहले पक्ष में वेदान्त के अनुसार सभी पदार्थ विवर्त हैं तो शब्द का क्या विचार किया जाय ?, रस्सी में होने वाला सर्प

असदेवासीत् पश्चात् कारणकलापात् समुत्पद्यते, यथा वेदान्तिनः 'इदं सर्वं' पदयोरात्मभिन्नं दृश्यमर्थं संकोचयन्ति तथा नैयायिकाः स्थूल जगत्परतां वर्णयन्ति ।

एतावता विषयविषयिणोर्जडप्रकाशयोः प्रकाश्यप्रकाशयोरात्मानात्मनोरुभयोः सत्तायां समागतायां व्यवहारे उभयोर्मिश्रणं किमात्मस्वरूपं जडस्वरूपं वा ? जडस्य च कथं समुद्भवः कथञ्च व्यवहारे मिश्रणं ? इति विवेकार्था चतुर्थभूमिः ।

## चतुर्थी भूमिः

तत्र मूलम् । ततो विवेकः, यमाश्रित्य सांख्यमतोपसंहारः शक्तितत्त्वसमुत्थानञ्च । तत्प्रतिपादनार्थम् 'प्रकृतेः परस्तात्, इत्यादि, तद्धानाय 'नान्यत् सत्' इत्यादि इति ।

आत्मा शुद्धबुद्धमुक्तस्वभावः, प्रकृत्यात्मक-जडसम्पर्काद् अविवेकवशात् कर्तृभोक्तृभावादिरनर्थपरम्परा 'सन्तानेन' प्रचलति । वस्तुतो निष्प्रपञ्चस्वभाव एव आत्मा, सुषुप्तौ प्रलये मुक्तौ च जडसम्पर्काभावाच्छरीरेन्द्रियादीनां विरामेण निष्प्रपञ्चभावस्यानुभवादित्यभिप्रायेण सांख्यमतोपसंहारः ।

निष्प्रपञ्चे आत्मनि कथमकस्मात् प्रपञ्चानां समुद्भव इति चिन्तायां शक्तितत्त्वसमुत्थानम् । यथा सांख्यमते परिणामस्वभावा विचित्ररचनापटीयसी प्रकृतिः, रामानुजमते ईश्वराधीनाऽपि प्रायस्तादृशी एव प्रकृतिः, वेदान्तमते अनिर्वचनीयाऽपि अघटितघटनापटीयसी माया प्रकृतिः, प्रत्यभिज्ञा-दर्शने च सर्वविध-परिवर्तनपरिकरपरा स्वयंप्रकाशा शिवे शक्तिः ।

इममेव विवेकं 'प्रकृतेः परस्तात्' इत्यादिश्रुतिर्विदधाति परमाणवो मनोऽदृष्टादिकञ्च न्यायनये प्रकृतिशब्देन विभिन्नव्युत्पत्त्या बोध्यते। सांख्यादिमतेऽङ्गीकृतानां नित्यानां प्रकृतिशक्तिप्रभृतीनां 'नान्यत् सत्' इति श्रुतिविरुद्धत्वमाह । इत्थञ्च यथा सांख्यवेदान्ताभ्यां निष्प्रपञ्च आत्मा स्वीक्रियते तथा न्यायेनापि । विपरीतसंशयविपर्यय-विषयताया अभावेन यथा तयोः पराप्रकाश्यत्वं तथा न्यायेऽपि, आत्मगुणेनैव आत्मा प्रकाशते न परेण परगुणेन वा । निर्विषयेऽपि ज्ञानपदं प्रयुञ्जानौ सांख्यवेदान्तौ आत्मा ज्ञानस्वरूप इति मन्येते । न्यायस्तु निर्विषये न ज्ञानपदं प्रयुङ्क्ते इति न तथा वक्ति इति नाममात्रे विवादोऽकिञ्चित्कर एव । तयोर्मते आत्मस्वरूपं ज्ञानं निर्विषयं न्यायमते आत्मा निर्विषयः इत्थं वस्तुसाम्यम् । सांख्ये बुद्धेरविवेक-

वशादात्मनि प्रपञ्चः प्रतिभासते न तूत्पद्यते, न्यायनये तु शरीरेन्द्रियमनः-प्रभृतिभिरविवेकग्रहात् तेषां सव्यापाराणां सम्पर्कादात्मनि सुखदुःखादिः प्रपञ्चः समुत्पद्यते विलीयते चेति एतावान् विशेषः, विवेकश्च आत्मज्ञानोपयोगी स्वीक्रियत एव ।

एवं साम्येऽपि सांख्यस्य सत्कार्यवादो न न्यायसम्मतः, सर्वं कार्यं सदेव, आविर्भावात् प्राक् तिरोभावात् पश्चाच्च सूक्ष्मरूपेण कारणात्मना वा तिष्ठत्येवेति तस्यार्थः । तत्स्वीकारे आत्मोपादानकाः सुखदुःखादयः सूक्ष्मरूपेण सर्वदैव आत्मनि अवतिष्ठेरन्निति निष्प्रपञ्च आत्मा न सिध्येत् । तेन तस्य सत्कार्यवादं 'नान्यत् सत्' इति श्रुत्या न्यषेधत् । आत्मदर्शनमेव पुरुषार्थसाधनतया श्रुतिसम्मतम्, प्रथममुपयोगिन्यपि विवेके प्रतियोगिनोरुभयोर्ग्रहस्यानुपयोगात् केवलात्मज्ञानाभ्यासार्थं पञ्चमीं भूमिं दर्शयति मूले ।

## पञ्चमी भूमिः

मूलतः केवल आत्मा प्रकाशते । यमाश्रित्याद्वैतमतोपसंहारः, तत्प्रतिपादनार्थम् 'न पश्यति' इत्याहुरेकीभवतीत्यादिश्रुतिः । तद्धानार्थम् 'नाद्वैतं नापि च द्वैतम्' इत्यादि ।

विवेकं विवेक-प्रतियोगिनञ्च विहाय केवलस्य आत्मनः सविकल्पकसमाध्या ध्यानाभासो विधेयः, तत्र क्रमशः अभ्यासवशात् समापत्तिसम्पदा एकीभावो भवति । ध्येय-ध्यान-ध्यातॄणामेकाकारतास्फुरणेन केवलं ध्येयमेव स्फुरति । वेदान्तिमते एकात्मभावना जायते । न्यायनये तु समेषां निष्प्रपञ्चात्मनां साम्याच् श्रुत्यात्मभावना सम्पद्यते । तदेव श्रुत्या प्रतिपाद्यते, ध्येय-ध्यात्रोरेकाकारता सम्पद्यत इति श्रुतेरर्थः ।

एकाकारतायामपि ऐक्यम् अद्वैतम् तत्र च प्रतियोगितया द्वैतमपि विषयो भवति, अतस्तस्यापि शुद्धात्मविषयत्वाभावात् न मोक्षसाधनतेति नाद्वैतमित्यादिश्रुत्या हेयतोच्यते । भेदकधर्माभावेऽपि भेदस्य नित्यतया न न्यायनयेऽद्वैतम् । किञ्च सविकल्पके शब्दादयोऽपि विषयाः, न तेषामुपयोग इति निर्विकल्पकभावनार्थं षष्ठीं भूमिं प्रस्तौति ।

## षष्ठी भूमिः

मूलम्—ततः समस्त-संस्काराभिभवात् केवलोऽपि न विकल्पते । यमाश्रित्य चरमवेदान्तोपसंहारः, तत्प्रतिपादनार्थं 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादि सा चावस्था न हेया मोक्षनगर-गोपुराय-

माणत्वात् । अयमर्थः—सविकल्पक-समाध्या केवलात्मभावनया आत्मव्यतिरिक्त-विषयकाणां सर्वेषां संस्काराणाम् अभिभवः अकार्यकारित्वं स्मृत्यजनकत्वमिति यावत् । निर्विकल्पकं ज्ञानं जायते इति नोक्तम्, न विकल्पत इत्युच्यते तेन सूच्यते यत् निर्विकल्पकं ज्ञानमतीन्द्रियम्, न प्रत्यक्षम् । ततो विषयविषयिभावोऽपि न स्फुरति । शुद्धात्मस्फुरणम् । तथा च नाम जातिप्रभृतिविभिन्न-विषयाणां स्मृतेरनुदयात् केवलात्मविषयकमेव ज्ञानं जायते, देशकालोपाधि-जाति-नाम-प्रभृती-नामवच्छेदकानां विशेषणानां वा ज्ञानाभावात् तज्ज्ञानं निर्विकल्पकं भवति, अत एव उक्तं न विकल्पते इति, यथा निर्विकल्पकसमाधौ, निर्विकल्पकसमाधिरपि वृत्तिर्यथा इदं निर्विकल्पकं ज्ञानं वेदान्तिनामपि चरमं सम्पाद्यमिदमेवेति चरमवेदान्तोपसंहार इत्युक्तम् । अखण्डाकारा साक्षात्कारात्मिका ब्रह्मविषयिणी चरमावृत्तिर्भवति प्रत्यक्षविषयकम् आत्मसुखादिविषयकं शब्द-जन्यमपि ज्ञानं वेदान्तिनां प्रत्यक्षमेव । चरमं सम्पाद्यमिदमेवेति चरमो वेदान्तः । ततश्च सकार्यवासनाविद्या निवर्तते इति सिद्धान्तः । तदानीन्तन-निर्विकल्पक-विषयस्य जातिगुणादि-सविकल्पक-विषयस्य आत्मस्वरूपस्य प्रतिपादिका वाचो न भवन्ति । वाचां धर्मपुरस्कारेणैव बोधजनकत्वस्वभावात् । तदेव यतो वाचो प्रभृति श्रुत्योच्यते । यद्यपि वेदान्तिनां चित्तमिव नैयायिकानां नित्यं मनस्तदानीं तिष्ठति । तथापि विषयाभिमुखस्यासंयतस्य मनसोऽप्राप्तिः श्रुतेर्विवक्षिता । मनसेदमाप्तव्यमित्यस्य व्याख्याने वेदान्तिभिरपि एवमेवोच्यते । एषा प्रक्रिया नैयायिकसम्मतेति सा चावस्था न-हेयेत्यनेन सूचितम् । मोक्षो यथा नगरं तथा निर्विकल्पकमिदं ज्ञानं मोक्षस्य द्वारम् एतदन्तरं न्यायवेदान्तयोरुभयोरपि मुक्तिस्वीकारः । मोक्षाव्यवहितपूर्ववर्तित्वादित्यस्य द्वारता ।

## सप्तमी भूमिः

तथा च मूलम्—निर्वाणन्तु तस्य स्वयमेव । यामाश्रित्य न्यायमतोपसंहारः । तत्प्रतिपादनार्थम् 'अथ यो निष्काम आत्मकामः स ब्रह्मैव सन् ब्रह्माप्येति, न तस्य प्राणा उत्क्रामन्ति, तत्रैव समवलीयन्ते' इत्यादीनि इति ।

निश्शेष-विशेषगुणोच्छेदसत्वे एव मुक्तेः स्वीकारात् पूर्वोक्तनिर्विकल्पकज्ञानस्यापि नाश आवश्यकः । तदर्थमाह निर्वाणन्तु । तस्य निर्विकल्पकज्ञानस्य विनाशः स्वयमेव भवति न तु तन्नाशकत्वेन तदुत्तरवर्त्तिविशेषगुणस्यान्वेषणम् । अन्यथा तन्नाशकस्याप्यन्वेषणापत्तेः, वेदान्तमते पूर्वोक्तचरमवृत्तेरविद्या-नाशकतया अविद्यानाशे तत्कार्यतया वृत्तेरपि स्वयं नाशः,

कारणान्वेषणे तु पूर्ववर्तिगुणनाशस्य-मनःसंयोगविशेषनाशस्य वा नाशकत्व-कल्पना, एवं निश्शेषविशेषगुणविनाशमेव नैयायिका मुक्तिमभीप्सन्ति अतो न्यायमतोपसंहारः ।

वेदान्तनये ब्रह्मण एवोपाधिवशाज्जीवता, उपाध्यपाये जीवस्य ब्रह्मता ब्रह्मणि जीवता वा साधु संगच्छते, न्यायनये तु जीवस्येश्वरभिन्नतया भेदस्य नित्यतया च विशेषगुण-विनाशेऽपि नेश्वरत्वं तथापि निरञ्जनः परमं साम्यमुपैतीति श्रुत्यन्तरात् परमसमतायामेव श्रुतेस्तात्पर्यात् ब्रह्मतापि अत्र ब्रह्मसाम्यमेवेति रीत्या व्याख्या कार्या, ईश्वराद् विभाजकाः विशेषगुणाः मुक्त-जीवे न सन्तीति तात्पर्यम् अन्यत् प्रायो न्यायवेदान्तयोः समानमेव ।

ज्ञानसत्त्वे सांख्यतुलनायामुक्तमेव । वैषयिकसुखं नास्तीतिविषये न्यायवेदान्तयोरैकमत्यम्, न्यायस्तु वैषयिक-सुखेष्वेव लोके व्युत्पत्त्या सुख-शब्दस्य स्वरसप्रयोगं समीहते तेन मुक्तात्मानमानन्दं न ब्रूते, वेदान्तस्तु वैषयिकसुखभिन्नेऽपि आत्मनि आनन्दपदं प्रयुङ्क्ते । दुःखं दुःखसुखानुभवश्च सामग्रीविरहात् मुक्तात्मनि न संभवत इति न्यायोक्ति वेदान्तो न विरुणद्धि । चेतन आत्मा मुक्तोऽपि चेतन एव । न्यायोपरि जडात्मवादारोपणं तु परिहासकथयाऽन्याय एव वस्तुतः । नैयायिकपरिभाषया वेदान्तात्मनोऽपि जडत्वापत्तिः । तथा च जडचेतनयोः परिभाषायामेव भेदो न वस्तुनीति ध्येयम् । इत्थं प्राचीना उदयनाचार्य-सरस्वती समेषां भारतीयदर्शनानाम आस्तिकानां नास्तिकानाञ्च समन्वयं विदधति सर्वेषां दर्शनविचाराणां मूल-स्रोत उपनिषद इत्यपि प्रख्यापयति । अस्यामपि शताब्द्यां भूतपूर्व-राष्ट्रपतिः-श्रीराधाकृष्णन् महोदयेन लिखिते—'बौद्धदर्शनानां मूलस्रोत उपनिषदः' इत्यारब्धे ग्रन्थे बहवो विद्वांसो नानुमता अभूवन्, अत्र तु चार्वाकदर्शनस्यापि मूलमुपनिषद् इत्याशये किं चिन्तयेयुरिति ते एव जानन्तु । अन्यच्च किमु-पदिशति एषा इति समासतः सूचयामि ।

## वैदिकं दर्शनम्

अत्र दर्शनानां मूलवाक्यानि परिहारवाक्यानि च समुद्धृत्य भूमयो वर्णिताः, वैदिके न्यायदर्शनेऽपि वेदान्तदर्शन इव उपनिषदां गीतायाश्च योजना वर्तते, न तर्कबलेनैव व्यवस्थाप्यते इति सूच्यते ।

इदानीं वेदान्त-दर्शनस्य प्रस्थान-त्रयीं शारीरक-भाष्यञ्च विलोक्य जना भ्रमवशं-प्राप्ता यद् वेदान्त-दर्शनमेव उपनिषदो व्याख्याति नान्यानि

दर्शनानि। वस्तुतः सर्वाणि आस्तिक-दर्शनानि उपनिषदो गीताञ्च व्याचक्षते। स्वीयसम्प्रदायसरणि-समृद्धेरभावात् वेदान्तसम्प्रदायसम्पदाऽभिभूतत्वाच्च तानि व्याख्यानानि, अप्रकाशितानि विच्छिन्नानि विलुप्तप्रायाणि च जातानि, शारीरकभाष्यस्य पूर्वपक्षमधीयानस्य प्रेक्षावतो मनसि बलादायात्येव यत् सांख्यदर्शनानुगामिनी उपनिषद्व्याख्या ग्रन्थनिबद्धा अध्ययनासरणि-निरूढा वा अवश्यमासीत्।

## सर्वाणि वैदिकदर्शनानि प्रधानानि नाङ्गानि

एवमध्ययनेन मम मानसमेवं समुदसहत—सर्वाणि वैदिकदर्शनानि स्वयं प्रधानानि, स्वीये सम्प्रदाये अन्यदर्शनानि स्वप्राक्तनभूमिकायां स्थापयन्ति स्वयञ्च अङ्गीभवद् अन्यानि स्वाङ्गानि विदधाति। दर्शितमेव वेदान्तस्य प्राधान्यवर्णनं विज्ञान-भिक्षुणा गौड-ब्रह्मानन्देन च कृतम्। ततश्च प्राचीनोऽयं न्यायस्योदयन इति निश्चितम्। न्यायसम्प्रदायस्याभावात् चिरमात्मतत्त्वविवेकपुस्तकस्यैव तिरोधानाच्च अस्य वर्णनस्य नाद्यापि तथा प्रचार इति कृत्वैव ममायं प्रयासः। एवमेव सांख्ययोगौ पूर्वमीमांसाञ्च प्रधानं कृत्वा भूमिका-वर्णनं संभवति। तत्र असंभावनाया भावना पाठकैर्हेया।

## वैदिकानामप्येषां भेदमूलं व्याख्याभेदः

दर्शनानां मूलवाक्यानि परित्यागवाक्यानि यथा सूचितानि तत्र मूलवाक्यं प्रधानीकृत्य अन्यानि च तदनुकूलवाक्यानि संगृह्य परित्याग-वाक्यस्यार्थान्तरवर्णनेन विरोधः परिहरणीयः एवं-विधया व्याख्यया दर्शनभेदः व्याख्याभेदे च बुद्धिभेद इति।



पंजाब होशियारपुर मण्डल साधुआश्रम विश्वेश्वरानन्द वैदिक-शोधसंस्थान के 'विश्व संस्कृतं' नामक संस्कृत पत्र के मई अगस्त संयुक्त अङ्क १९७३ ई० में संस्कृतमय प्रकाशित

# प्राचीनो दर्शनसमन्वयः हिन्दी

दर्शनों की भूमिका की कल्पना करके समन्वय की विशेष चर्चा व्याख्यान और लेखों में बहुत समय से चलती है, सबसे पहले लाहौर राजकीय संस्कृत महाविद्यालय प्रधानाचार्य स्व० महामहोपाध्याय पण्डित श्रीमाधवशास्त्री भण्डारी महोदय के करीब २५-३० वर्ष पहले अहमदाबाद गुजरात शहर में प्रवचन में इस समन्वय को सुना था, उसके बाद १५ वर्ष पहले न्यायकुसुमाञ्जलि की भूमिका के प्रकाशन में पण्डितराज पद्म-विभूषण काशीस्थ श्रीराजेश्वर शास्त्री द्रविड़ महोदय का इस विषय का लेख पढ़ा, उसमें दर्शनसमन्वय प्रधान नहीं था, लेकिन नैयायिक मूर्धन्य उदयनाचार्य महोदय का वेदान्ती होना वेदान्त प्रेम न्याय की अपेक्षा वेदान्त का विशेष समादर विशेषरूप से वर्णित था। उसके प्रधान विषय में मेरा विरोध उसी समय 'संस्कृतं' पत्र में प्रकाशित हुआ, उसी में उसके बाद स्व० महापण्डित श्री हरिराम शुक्ल महोदय और मेरे विचारों में पांच छ लेख निकले। पंडितराजजी के लेख में बलपूर्वक समन्वय भी किया गया था। स्व० न्यायाचार्य पण्डितप्रवर श्रीढुण्ढीराज शास्त्री जी से लिखित आत्मतत्त्वविवेक की भूमिका में उदयनाचार्य जी के वेदान्तित्व का खण्डन प्रकाशित है, ऐसे समन्वय का मूल अद्वैतसिद्धि की टीका में गौड़ ब्रह्मानन्द महोदय का लेख है ऐसा उनके उद्धरण से मिलता है, यद्यपि पहले उदयनाचार्य के वेदान्तिकत्व का वर्णन विशेष रूप से करता है तो भी न्याय की पहली, सांख्य की दूसरी भूमिका इत्यादि बताकर अन्तिम पुरुषार्थ का साधन वेदान्त है इत्यादि समन्वय मार्ग को भी दीखाता है। उसका सन्दर्भ इस प्रकार है :—

विषयों के भेद के बिना विषयी ज्ञानों का भेद नहीं हो सकता, बाह्य विषयों को नहीं मानने पर बलवान् वैदिक दर्शन की विजय लक्ष्मी होगी, यदि उस वैदिक दर्शन को नहीं अपनाते हो तो अचिन्त्य इस ऐसे ही संसार को सत्य मानो बौद्ध दर्शन का कहां

अवकाश है ? ऐसे योगाचार के खण्डनवाले आत्मतत्त्वविवेक के उदयनाचार्य के वचन को लेकर वैदिकदर्शन की जयश्री है इस अंश का व्याख्यान किया गया है, बौद्धमत की अपेक्षा न्यायमत में जय, उसकी अपेक्षा आत्मा को असङ्गी मानने से सांख्य में विजय उसकी अपेक्षा वेदान्त में विजय की परा काष्ठा है इत्यादि कहा गया है। उसपर श्री ढुण्डीराज शास्त्री जी का लेख नीचे लिखे की तरह है इतनी विडम्बना की क्या आवश्यकता है ? न्याय और वेदान्त दोनों वैदिकनय हैं, यदि विज्ञानों की विचित्रता के लिये वाह्य वस्तु को स्वीकार करें तो न्याय से पराजय होगा, यदि वाह्य को अतथ्य = अनिर्वचनीय माने तो वेदान्त से पराजय होगा, सर्वथा वैदिक दर्शन का विजय है, सर्वथा पराजय का परिहार संभव नहीं होने पर जैसा अनुभव होता है, जैसा व्यवहार होता है, वैसा ही वाह्य वस्तु को सत्य मानो, वाह्य विचार को नहीं सहता, अथवा अलीक है, ऐसे वाद का अवकाश नहीं है, ऐसा मानते हैं और न्याय का जय वर्णन करते हैं।

असत् अलीक का ज्ञान नहीं होता, काल का सम्बन्धि सत् हैं, भ्रम स्थल में असत् संसर्ग का भान होता है यह एकदेशी मत है, ज्ञान के विषय कारण हैं, निर्विकल्पक ज्ञान की उपेक्षा नहीं है, अतीत और अनागतों का भी आखिर में महाकाल सम्बन्ध है ही, बाह्य विषयों कारणों के विना ज्ञान नहीं पैदा होंगे, तद्‌बाधने = बुद्धियों के न होने पर विषयों का प्रकाश नहीं हो सकता, ज्ञान और विषयों के सम्बन्ध का बाध होने पर सुषुप्ति और मुक्ति में विषय का प्रकाश नहीं होता, अतः निर्विषयक आलय विज्ञान को अवसर नहीं मिलेगा, प्रवृत्ति विज्ञानों के सन्तानों का विच्छेद होने पर कारण न होने से दूसरे विज्ञान नहीं होंगे, इस प्रकार सर्वथा बौद्ध मत का अवकाश न होने से वैदिक न्याय दर्शन में जयश्री है ऐसा मेरा व्याख्यान है। इसी से ज्ञान सविषयक ही है ऐसा न्याय सिद्धान्त उजागर है, इसी प्रकार दूसरे आचार्यवचन का भी गौड ब्रह्मानन्द जी ने वेदान्त की श्रद्धा का प्रकाशन के लिये व्याख्यान किया है, आत्मतत्त्व-विवेक की भूमिका में उसका निराकरण भी हुआ है, उनके उद्धरण से क्या। इस प्रकार का दर्शन समन्वय गौड ब्रह्मानन्द जी के लेख से पैदा हुआ है तथा उसका विरोध भी चिरकाल से आता है। इतना ही कहना है।

यहाँ 'अचिन्त्यम् के स्थान में 'अनिन्द्यम्' पाठ कुसुमाञ्जलि मूल में हैं, उसका उल्लेख उसके गद्य भाग में भी है, बौद्धों के यहाँ सभी दुःख है इस भावना का उपदेश

होने से जगत् निन्दय है, सर्वत्र विभु परमात्मा के दर्शन से आनन्दभावना के द्वारा जगत् अनिन्दय है ऐसा अभिप्राय व्यक्त होता है, गौडब्रह्मानन्द जी अनिर्वचनीयता द्योतन के लिये अचिन्त्य पाठ को ठीक माने हैं, प्राय: महामुनि मधुसूदन सरस्वती महोदय का भी अद्वैतरत्न रक्षण ग्रन्थ में उदयनाचार्य के कुसुमाञ्जलि के कतिपय पद्यों में वेदान्त के अनुकूल कुछ परिवर्तन शैली के ऐसा मालूम पड़ता है ? दो वर्ष पहले प्रयाग के संगमनी पत्र में कुछ दिखाया हूँ ।

यहाँ मेरा दर्शन समन्वय के मूल के अन्वेषण में तथा उसकी परम्परा के प्रदर्शन में प्रयास है, उसमें क्या युक्त है ? क्या अयुक्त है ? ऐसा विवेचन नहीं करना है, वस्तुत: दर्शनों का समन्वय नहीं संभव है ऐसा मैं समझता हूँ, हिन्दी और संस्कृत पत्र पत्रिकाओं में प्रकाशित भी किया हूँ ।

गौड़ ब्रह्मानन्द जी के पहले प्राय सोलहवीं शताब्दी में ब्रह्मसूत्र विज्ञानामृत भाष्य में श्रीविज्ञान भिक्षु महोदय स्फुट दर्शन समन्वय कहें हैं, उसमें भी प्राय: भूमिकायें वेदान्त का प्राधान्य तथा अङ्गित्व ऐसा ही है, किन्तु उसका वैसा प्रचार नहीं है, माया और अनिर्वचनीयता आदि का खण्डन करके रामानुज दर्शन के अपृथक् सिद्ध सम्बन्ध के ऐसा ब्रह्म से अविभक्त ब्रह्माद्वैत का व्याख्यान करते हुए शाङ्कर अद्वैत वेदान्त से विलक्षण वेदान्त दर्शन को स्थापित करते हैं । शाङ्कर वेदान्त को प्रधान अङ्गी मानने वालों के दर्शन समन्वय में गौड़ ब्रह्मानन्द जी का पहले दिया गया लेख ही मूल मालूम पड़ता है ।

सभी से प्राचीन दर्शनों का समन्वय नवमी शताब्दी में उदयनाचार्य जी का है, जो आत्मतत्त्वविवेक पुस्तक के अन्तिम भाग में है, सभी दर्शन श्रुति से निकले हैं, सभी की अपेक्षा न्याय का प्राधान्य जो पहले अप्रचलित है उसको दिखाने की इच्छा से वर्णन है, वही दर्शनसमन्वय प्राचीन है, जिसमें वेदान्त भी न्याय का अङ्ग हो जाता है । उसमें सात भूमि बनाई जाती है, जिसमें सातवी भूमि न्याय की आती है ।

## प्रथम भूमि

मुमुक्षुओं को आत्मा की उपासना के समय मुक्ति के प्रतिकूल और जो मुक्ति के अनुकूल न हों वैसे द्वारों को छोड़कर अनुकुल ही द्वारों में घूसना चाहिये ऐसा कहना

चाहने वाले आचार्य उदयन कर्ममीमांसक और चार्वाक की प्रथम भूमि है ऐसा कहते हुए इनके उद्गम और परिहार के उपनिषद् वाक्यों को सूचित करते हैं, जैसे कि आत्मा की उपासना के समय पहले बाहरी ही वस्तुयें मालूम पड़ती है, जिनको लेकर कर्म मीमांसा का उपसंहार और चार्वाक मत का उत्थान होता है, उसके प्रतिपादन के लिये पराञ्चि खानि इत्यादि श्रुति हैं, और उनके परिहार के लिये 'परं कर्मभ्य' इत्यादि श्रुति हैं, ऐसा आत्मतत्त्वविवेक का मूल है, सभी चेतनों का बाहर देखना ही स्वभाव है, क्योंकि बाहरी ग्राम पशु स्वर्ग आदि ही परमपुरुषार्थ हैं, उसी से ही श्रुति का व्याख्यान करना चाहता हुआ भी पूर्व मीमांसा शास्त्र ग्राम पशु स्वर्ग आदि फल वाले कर्मकाण्ड भागों का ही व्याख्यान करता है, अध्यात्म प्रधान उपनिषदों को छोड़ देता है, कर्मकाण्ड का अङ्ग ज्ञानकाण्ड को करता है अथवा अर्थवाद मान लेता है। अतः कर्ममीमांसा का प्रधान विषय बाहरी वस्तुयें है अन्तरात्मा नहीं, वैसे चार्वाक भी मानता है कि इन्द्रियों से मालूम होने वाले बाहरी पदार्थ ही परमार्थ हैं आन्तरिक नहीं, प्रत्यक्ष ही प्रबल है अनुमान आदि नहीं वे प्रमाणाभास हैं, इसीलिये श्रुति भी कहतीं है कि स्वयंभू भगवान् बाह्य विषयों पर जाने वाली इन्द्रियों को बनाये, ये इन्द्रियां अन्तरात्मा को विषय नहीं करती, संसार में चार भूत सार हैं, उन्हीं से मदशक्ति के ऐसा चैतन्य का उद्भव होता है।

इनके परित्याग में दूसरी श्रुति कारण बनी, बहिर्मुख आत्मा को नहीं जानने वाले जन सन्तानों को पैदा करके सृष्टि को बढ़ाते हुए भरण पोषण के लिये धन को चाहते हैं, धन के लिये कर्म को करते हैं, कर्मों द्वारा पाप पुण्यों की परम्परा से भोग के लिये जन्म लेते हैं, और इस जन्म-मरण परम्परा में व्याकुल रहते हैं, दूसरे विज्ञ लोग आत्मज्ञान का सम्पादन करके मरने जीने के मार्ग को छोड़कर आत्मज्ञान से मोक्ष सुख को पाते हैं, और उस प्रकार आत्मज्ञान से परम मोक्ष पुरुषार्थ है, 'पराञ्चि खानि' आदि श्रुतियां ऐसा उपदेश करती हैं कि स्वभाव से इन्द्रियां बहिर्मुख हैं, उनको यत्न से मन के अधीन करना चाहिये, और मन का आत्मा से सम्बन्ध करना चाहिये।

## दूसरी भूमि

अन्तर्दृष्टि होने पर ज्ञानरूप प्रकाश का परिचय होता है, अनादिकाल से अभ्यस्त ज्ञेय विषय भी मालूम पड़ते हैं, किन्तु इनका शीघ्र विवेक नहीं हो पाता, प्रकाश्य विषय

रूप ही प्रकाश मालूम होता है, इन प्रकाश्य और प्रकाश दोनों का विवेक नहीं ऐसी दूसरी भूमि है। उसी प्रकार मूल है—विषयाकार ज्ञान है, जिसको लेकर त्रैदण्डिक मत का उपसंहार और योगाचार के मत का उत्थान होता है, उसको बताने वाली 'यह सब आत्मा ही है' इत्यादि श्रुति है, उसका बाध करने के लिये 'गन्ध रस नहीं है' इत्यादि श्रुति है।

आत्मा या आत्मगुण ज्ञान श्रुति के आत्मशब्द से ले सकते हैं, यह सब जगत् आत्मरूप ही है ऐसा श्रुति का अर्थ है, आत्मा सभी का अन्तर्यामी होने से, जगत् का चेतन से उत्पाद होने से, सभी को आत्मा का शरीर होने से सभी आत्मस्वरूप है, ऐसा अनेक प्रकार से तात्पर्य का वर्णन होता है, उस पर त्रिदण्डिमतविभेदिनी पुस्तक में रामानुज मत का खण्डन है, उससे रामानुजमत त्रिदण्डिमत मालूम होता है, उसमें स्फुट रूप से प्रकाश्य प्रकाश का अभेद या जगत् का आत्मरूप होना नहीं मिलता, किन्तु शरीर आत्मा का अभेद और जगत् को चेतन का शरीर होना माना जाता है, उससे सभी जगत् आत्मा का शरीर होने से आत्मरूप है ऐसा संगत होता है।

इसी प्रकार नूतन भी विज्ञान भिक्षुमत त्रिदण्डिमत के ऐसा मालूम पड़ता है, प्रलय दशा में प्रकृति और जीव ईश्वर में अविभाग रूप से रहते हैं, इससे अद्वैत हानि नहीं होती ऐसा विज्ञानामृत भाष्य में है, उस प्रकार प्रकृति से पैदा हुआ भी सभी परमात्मा से भी पैदा होने से परमात्मारूप ही है ऐसा समन्वय होता है।

उस प्रकार अविकृत परिणामवादी शुद्धाद्वैत मत में भी परमात्मा से परिणत सभी जगत् परमात्मा रूप है ऐसा समन्वय हो जाता है।

अथवा माया को नहीं मानने वाले जगत् का उपादान परमात्मा को मानने वाले यादव आदि के मत में भी सभी आत्मा ही है, ऐसा व्याख्यान हो।

योगाचार तो बुद्धि को आत्मा मानते हैं, यह बुद्धि स्वयंप्रकाश है, बाह्य वस्तु नहीं है, बाहर मालूम होने वाले वस्तुओं के आकार बुद्धि में है। बुद्धि आत्मा रूप यह जगत् मालूम होता है, ज्ञान और विषयों का भेद नहीं है, ऐसा कहते हैं, उनके मत की स्थापना करने वाली यह श्रुति है।

इन सभी के खण्डन के लिये 'अगन्धरसम्' इत्यादि श्रुति है, गन्ध रस वाले पृथ्वी जल आदि भूतों का भेद आत्मा में बताती है, उस प्रकार शरीर शरीरीभाव

अथवा उपादान उपादेयभाव जिस किसी प्रकार भी आत्मा जगद्रूप नहीं है ऐसा श्रुति का अभिप्राय है, नञ् तत्पुरुष समास द्वारा व्याख्यान से गन्ध रस विषय हैं वे सभी विषयों के उपलक्षक हैं, आत्मा का विषयी ज्ञान में तात्पर्य वर्णन से विषय-विषयी प्रकाश्य-प्रकाश का परस्पर भेद बताया गया, इस भेद वर्णन से योगाचार आदि का मत श्रुतिविरुद्ध है ऐसा सिद्ध होता है, इस प्रकार 'यह सब आत्मा ही है' यह श्रुति ज्ञान द्वारा आत्मा से प्रकाश्य जगत् है, अथवा विभु होने से आत्मा से संयुक्त सभी हैं, इत्यादि रीति से न्यायमत में इस श्रुति का व्याख्यान समझना चाहिये।

## तृतीय भूमि

'यह सब आत्मा ही है' इत्यादि श्रुति से विषयी प्रकाश की सत्ता सूचित होती है, 'अगन्धरसम्' इत्यादि श्रुति से विषयों का अभाव मालूम होता है, ज्ञानमात्र या आत्ममात्र सभी है, ज्ञान से भिन्न विषयों का निरूपण नहीं हो सकता, इस प्रकार तीसरी भूमि आती है, उस प्रकार मूल है कि 'यदि विषयों का अभाव है' जिससे वेदान्त के द्वारमात्र का उपसंहार है। शून्यवाद और नैरात्म्यवाद इससे उठता है, उसके प्रतिपादन के लिये 'यह सब असत् ही है' इत्यादि श्रुति है, उसके निषेध के लिए 'जो आत्मा के विद्रोही जन हैं ये घोर अन्धकारमय लोक में प्रवेश करते हैं' इत्यादि श्रुति है।

ज्ञान भिन्न अर्थ=विषयों का ज्ञानमात्र अथवा व्यवहारमात्र स्वरूप है, सत् से भिन्न मिथ्यात्व यह वेदान्त मत है, प्रकाशमात्र तीनों काल में अबाधित सत्य है, प्रकाश-भिन्न जड़ वस्तुओं का व्यवहार काल में बाध न होने से व्यावहारिक सत्ता है।

शून्यवादी तो-जैसे योगाचार के मत में ज्ञान भिन्न बाह्य वस्तुओं का निरूपण न होने से बाह्यार्थ का अभाव है, तो भी बाह्यार्थ का प्रकाश है, उसी प्रकार ज्ञानाकार वस्तुओं का भी निरूपण नहीं हो सकता, इस प्रकार ज्ञानरूप से तथा बाह्यरूप से असत् वस्तुओं का प्रकाश है, विषय के अवभास से विषयि ज्ञान की सिद्धि ज्ञान से विषय की सिद्धि-परस्पर अपेक्षा होने से विज्ञान भी असत् ही प्रकाश स्वभाव है, इस प्रकार विषय-विषयी दोनों की पारमार्थिक सत्ता नहीं है, ऐसा कहते हैं।

अनादि वासनाओं की परम्परा के कारण अविद्या संस्कार आदि की सन्तानें चलती हैं, और भी व्यवहारों को चलाती हैं, विज्ञान आदि का आधार कोई आत्मा

पदार्थ यहाँ नहीं माना जाता, इस प्रकार बौद्धों का नैरात्म्यवाद भी उठता है, आत्म भिन्नों की मिथ्यात्व दृष्टि से आत्मदृष्टि परिपुष्ट होती है, इसी अभिप्राय से विषयों का मिथ्यात्व माना जाता है, इसकी सूचना के लिये ही ग्रन्थकार वेदान्त मत का उपसंहार न कहकर द्वारपद का प्रयोग करते हैं, शुक्ति में नहीं रहने वाले रजत की जैसे प्रतीति और व्यवहार है, उसी प्रकार वस्तुतः ब्रह्म में नहीं रहने वाले जगत् की प्रतीति और व्यवहार है ऐसा वेदान्त मत से श्रुति का अर्थ है, शून्यवाद आदि के मत में तो हमेशा सभी असत् का भान होता है,श्रुति द्वारा प्रतिपादित पहले असत् है ऐसा अर्थ उनके मत को बताती ही है।

आत्मज्ञान ही परमपुरुषार्थ का साधन है ऐसी गाती हुई श्रुति आत्मा को असत् कहने वाले आत्मा को ठीक नहीं समझने वाले को आत्मघाती कहती हैं, सैकड़ों जन्म-मृत्यु की परम्परा रूप समुद्र के कारण कर्म आदि परम्परा में पड़ता है ऐसा बताती है, उस प्रकार जगत् सत् है या असत् है इसमें श्रुति का आग्रह नहीं है किन्तु आत्मा सत् है, आत्मज्ञान मोक्ष का साधन है इतना अवश्य उपदेश करती है, इसमें न्याय और वेदान्त का विवाद नहीं है, वेदान्त में जैसे आत्मभावना का आदर है वह न्यायसम्मत है, किन्तु शून्यवाद तथा नैरात्म्यवाद श्रुति और युक्ति के विरोधी हैं त्याज्य ही हैं, अनित्य यह जगत् पहले असत् ही था, पीछे कारण कलाप से पैदा होता है, वेदान्ती जैसे इदं सर्वं का आत्मभिन्न दृश्य में संकुचित अर्थ करते हैं वैसे नैयायिक स्थूल जगत् में तात्पर्य वर्णन करते हैं।

इतने से विषय-विषयी जड़-प्रकाश प्रकाश्य-प्रकाश आत्मा-अनात्मा की सत्ता सिद्ध हुई है दोनों की समान सत्ता है, किन्तु व्यवहार में दोनों का मिश्रित व्यवहार है, क्या आत्मा का स्वरूप है ? जड़ क्या है ? जड़ का कैसे समुद्भव है ? व्यवहार में दोनों का मिश्रण कैसे हो ?, इसके विवेक के लिये चौथी भूमि है।

## चौथी भूमि

उस पर मूल— उसके बाद विवेक आता है, जिसको लेकर सांख्यमत का उपसंहार है, और शक्ति तत्त्व का समुत्थान होता है, उसके प्रतिपादन के लिये 'वह आत्मा प्रकृति से भिन्न है' इत्यादि श्रुति है, उसके निराकरण के लिये 'आत्मा से भिन्न सत् नहीं है' इत्यादि श्रुति है।

आत्मा शुद्ध-बुद्ध-मुक्त स्वभाव है, प्रकृति रूप जड़ के सम्बन्ध से भेद नहीं मालूम होने से कर्ता-भोक्ता आदि अनिष्टों की परम्परा सतत चलती है, वास्तव में आत्मा प्रपञ्चों से रहित स्वभाववाली है, सुषुप्ति-प्रलय और मुक्ति में जड़ का सम्बन्ध नहीं होने से शरीर-इन्द्रिय आदि का विराम से निष्प्रपञ्च आत्मा के स्वभाव का अनुभव से सांख्यमत का उपसंहार कहा गया है।

निष्प्रपञ्च आत्मा में कैसे अकस्मात् प्रपञ्च का उद्भव होता है; ऐसी चिन्ता होने पर शक्ति तत्त्व का समुत्थान है, सांख्यमत में जैसे परिणाम स्वभाव वाली विचित्र सृष्टि में प्रवीण प्रकृति शक्ति है, रामानुजमत में ईश्वर के अधीन होती हुई भी प्रायः वैसी ही प्रकृति है, वेदान्त में अनिर्वचनीय भी विलक्षण सृष्टि में निपुण माया प्रकृति है, प्रत्यभिज्ञा दर्शन में शिव में सभी प्रकार के परिवर्तनों को करने वाली शक्ति है।

इसी विवेक को 'प्रकृति से परे' इत्यादि श्रुति विधान करती है, न्यायनयमें विभिन्न व्युत्पत्ति के द्वारा परमाणु-मन अदृष्ट आदि प्रकृति शब्द से समझे जाते हैं, सांख्य आदि के मत में नित्य प्रकृतिः शक्ति आदि को 'दूसरे नहीं' इत्यादि श्रुति से विरुद्ध कहते हैं, इस प्रकार जैसे सांख्य और वेदान्त में निष्प्रपञ्च आत्मा मानी जाती है उसी प्रकार न्यायशास्त्र में भी है, विपरीत संशय और विपर्यय की विषयता के अभाव से जैसे सांख्य और वेदान्त में दूसरे से अप्रकाश्य आत्मा मानी जाती है वैसे ही न्यायमत में भी, अपने गुण से आत्मा प्रकाश करती है न कि दूसरे या दूसरों के गुण से, विषय का अवभास न होने पर भी ज्ञान पद से व्यवहार करने वाले सांख्य और वेदान्त आत्मा को ज्ञान स्वरूप मानते हैं, न्याय तो निर्विषय में ज्ञान पद का प्रयोग नहीं करता इससे वैसा नहीं कहता? इस प्रकार नाममात्र में विवाद कुछ करने वाला नहीं है, उन दोनों के मत में आत्मरूप ज्ञान निर्विषयक है न्याय में आत्मा निर्विषय है इस प्रकार वस्तुओं का साम्य है, सांख्य में बुद्धि के साथ पुरुष का विवेक न होने से आत्मा में प्रपञ्च भासता है उत्पन्न नहीं होता, न्याय मत में तो शरीर, इन्द्रियों से विवेक ज्ञान न होने से शरीर-इन्द्रियाँ अपना काम करती हैं उनसे सुख ज्ञान आदि प्रपञ्च आत्मा में पैदा होते हैं और विलीन होते हैं, इस प्रकार इतना फरक है, आत्मा के ज्ञान का उपयोगी होने से विवेक को न्याय मानता ही है।

इस प्रकार साम्य होंने पर भी सांख्य का सत्कार्यवाद न्यायसम्मत नहीं है, सभी कार्य सत् हैं, आविर्भाव से पहले और तिरोभाव से पीछे भी कार्य सूक्ष्म रूप से रहते हैं; यह सत्कार्यवाद का अर्थ है, उसको मानने पर आत्मा में पैदा होने वाले सुख दुःख आदि प्रपञ्च हमेशा आत्मा में रहेंगे उससे निष्प्रपञ्च आत्मा नहीं सिद्ध होगी, उससे उनके सत्कार्यवाद का 'दूसरा सत् नहीं' इत्यादि श्रुति निषेध की है। आत्म-ज्ञान ही पुरुषार्थ का साधन है यह श्रुतिसम्मत है, यद्यपि विवेक पहले उपयोगी है, तो भी विवेक के दोनों प्रतियोगियों का ज्ञान उपयोगी नहीं, इससे केवल आत्मज्ञान के अभ्यास के लिये मूल में पांचवी भूमि दीखाते हैं।

## पांचवीं भूमि

मूल से केवल आत्मा प्रकाश है, जिसको लेकर अद्वैत मत का उपसंहार है, उसके प्रतिपादन के लिये 'एक हो जाता है नहीं देखता ऐसा कहते हैं' इत्यादि श्रुति है, उसके खण्डन के लिये 'अद्वैत नहीं द्वैत भी नहीं' इत्यादि श्रुति है।

विवेक और विवेक के प्रतियोगी को छोड़कर केवल आत्मा के ध्यान का सवि-कल्पक समाधि से अभ्यास करना चाहिये, वहां क्रमशः अभ्यास से समापत्ति सम्पत् से एकता हो जाती है। ध्येय ध्यान ध्याता इन तीनों की एकता भासती है, केवल ध्येय ही मालूम पड़ता है, वेदान्ती के मत में एक आत्मा की भावना पैदा होती है, न्यायमत में तो सभी निष्प्रपञ्च आत्माओं के साम्य से श्रुति द्वारा आत्मभावना सम्पन्न होती है, ऐसा श्रुति का अर्थ है।

एक आकार होने पर ऐक्य अद्वैत है, उसमें प्रतियोगि द्वैत भी है, इससे वह भी भावना शुद्ध आत्मा को विषय नहीं करती, वह मोक्ष का साधन नहीं है, इसलिये 'अद्वैत नहीं' इत्यादि श्रुति उसको त्याज्य कहती है, भेद ज्ञान के उपयोगी धर्मों का अभाव होने पर भी भेद नित्य होने से न्यायमत में अद्वैत नहीं है, और भी सविकल्पक समाधि में शब्द आदि भी विषय होते हैं, उनका कुछ उपयोग नहीं है, अत निर्विकल्पक भावना के लिये छठी भूमि का प्रस्ताव है।

## छठी भूमि

मूल—सविकल्पक समाधि के अभ्यास से आत्मा से भिन्न के सभी संस्कारों का अभिभव होता है जिससे संस्कार स्मरण नहीं कर पाते, उससे विशेषण नहीं हो पाता,

तब शुद्ध आत्मा का निर्विकल्पक ज्ञान होता है, निर्विकल्पक समाधि हो जाती है, जिसको लेकर वेदान्त का अन्तिम प्रयास समाप्त हो जाता है, उसके प्रतिपादन के लिये 'मन के साथ वाणी नहीं पा सकती, उससे मन और वाणी निवृत्त हो जाते हैं' इत्यादि श्रुति है, उस अवस्था को नहीं छोड़नी चाहिये, क्योंकि मोक्ष रूप नगर के गोपुर के ऐसा है।

यह अर्थ है—सविकल्पक समाधि द्वारा केवल आत्मा की भावना से आत्मा से भिन्न विषयों के सभी संस्कारों का अभिभव होता है, कुछ करने लायक नहीं रहते, स्मृति को नहीं पैदा करते, निर्विकल्पक ज्ञान पैदा होता है ऐसा नहीं कहे हैं विकल्प नहीं होता ऐसा कहे हैं, इससे सूचित होता है कि निर्विकल्पक ज्ञान अतीन्द्रिय होता है प्रत्यक्ष नहीं है उससे विषय और विषयी के भाव का स्फुरण नहीं होता, ज्ञान ज्ञेय में किसी प्रकार भेद नहीं भासता वह शुद्ध आत्मा का स्फुरण है। उस प्रकार नाम जाति आदि विषयों का स्मरण न होने से केवल आत्मविषयक ही ज्ञान पैदा होता है। देश काल उपाधि जाति नाम आदि विषयों का अवच्छेदक रूप से या विशेषण रूप से ज्ञान का अभाव होने पर वह ज्ञान निर्विकल्पक होता है, इसीलिये कहा कि विकल्प नहीं होता, जैसे निर्विकल्पक समाधि में, निर्विकल्पक समाधि भी वृत्ति है जैसे यह ज्ञान है, वेदान्तियों का भी यही अन्तिम प्राप्य है। इसी से चरम वेदान्त का उपसंहार कहा गया, अखण्ड आकार वाली ब्रह्म आकार वाली प्रत्यक्ष वृत्ति होती है, जिसके विषय प्रत्यक्ष हैं ऐसे आत्मा सुख आदि का ज्ञान शब्द से पैदा होने पर वेदान्तिओं का प्रत्यक्ष ही होता है, अन्तिम प्राप्य यह है इससे अन्तिम वेदान्त है और उससे कार्य और वासना के साथ-साथ अविद्या निवृत्त हो जाती है, ऐसा सिद्धान्त है, उस समय के निर्विकल्पक के विषय जाति गुण आदि सविकल्पक के विषय आत्मस्वरूप को वर्णन करने वाली वाणी नहीं होती क्योंकि वाणियों का अवच्छेदक या विशेषण धर्म को लगाकर ही बोध पैदा करने का स्वभाव है, यही 'यतो वाचो' इत्यादि श्रुति से कहा जाता है, यद्यपि वेदान्तियों के चित्त के ऐसा न्याय का नित्य मन रहता है, तो भी असंयत मन की अप्राप्ति कही गई है, 'मन से इसको पाना चाहिये' इत्यादि श्रुतियों का व्याख्यान वेदान्ती भी ऐसा ही कहते हैं, यह प्रक्रिया न्यायसम्मत है ऐसा 'उस अवस्था को नहीं छोड़ना चाहिये' इस कथन से सूचित होता है। मोक्ष जैसे नगर है वैसे निर्विकल्पक ज्ञान

मोक्ष का द्वार है, जिसके वाद न्याय वेदान्त दोनों मुक्ति मानते हैं। मोच के व्यवधान रहित पूर्व में यह ज्ञान रहता है इसी से इसको द्वार कहा गया है।

## सातवीं भूमि

और उसी प्रकार मूल—उस निर्विकल्पक ज्ञान की समाप्ति स्वयं हो जाती है, जिसको लेकर न्यायमत का उपसंहार है, उसके प्रतिपादन के लिये 'और जो कामना-रहित हैं या आत्मा ही जिसकी कामना है वे ब्रह्म होते हुए ही ब्रह्म को प्राप्त करते हैं, उनके प्राण कहीं निकल कर उपर नहीं जाते, आत्मा में ही लीन हो जाते हैं, इत्यादि श्रुति वचन हैं।

सम्पूर्ण विशेष गुणों का उच्छेद होने पर ही मुक्ति मानी जाती है, उसके अनुसार पूर्ववर्णित निर्विकल्पक ज्ञान का नाश आवश्यक है। उसी के लिये कहते है कि 'उसका निर्वाण स्वयं है' उस निर्विकल्पक ज्ञान का नाश स्वयं है, उसका नाशक आगे होने वाले विशेप गुण की खोज नहीं है, अन्यथा नाशक के नाशक की भी आपत्ति आ जाय। वेदान्त मत में पूर्वोक्त चरमवृत्ति अविद्या का नाशक है, अविद्या का नाश होने पर उसका कार्य होने से वृत्ति का भी स्वयं नाश है, नाश का कारण खोजना हो तो पहले रहे विशेप गुण का नाश अथवा मन के संयोग विशेप का नाश नाशक माना जाय। इस प्रकार नैयायिक सम्पूर्ण विशेप गुणों के नाश को मुक्ति मानते हैं, इसी से न्यायमत का उपसंहार कहा गया।

वेदान्त में ब्रह्म ही उपाधि लगने में जीव हो जाता है, उपाधि के नाश से जीव को ब्रह्म हो जाना या उपाधि से ब्रह्म को जीव होना ठीक संगत होता है, न्यायमत में जीव और ईश्वर का भेद है, भेद भी नित्य है, विशेप गुणों के नाश से भी जीव ईश्वर नहीं हो सकता, तो भी मिथ्या ज्ञान से रहित जीव परम समानता को पाता है इत्यादि दूसरी श्रुतिओं के अनुसार पहली श्रुति का तात्पर्य परमसाम्य में रखा जायेगा, उस प्रकार पहली श्रुति के ब्रह्म शब्द का ब्रह्म सदृश ऐसी व्याख्या करनी चाहिये। ईश्वर से भेद सिद्ध करने वाले विशेप गुण मुक्त जीव में नहीं रहते इतना ही तात्पर्य है, और तो प्राय न्याय वेदान्त का समान है।

ज्ञान है या नहीं ? यह तो सांख्य की तुलना में कहा ही गया है, विपय सम्बन्धी सुख नहीं है, इस विपय में न्याय वेदान्त दोनों का एकमत है, न्याय तो लोकव्यवहार

से सुख पद की शक्ति विषयसुख में ही मानता हुआ विषयसुख में ही सुख शब्द का स्वारसिक प्रयोग चाहता है, इससे मुक्त आत्मा को आनन्द नहीं कहता, वेदान्त तो विषयसुख से भिन्न आत्मा में भी आनन्द पद का प्रयोग करता है, दुःख या दुःख सुख का अनुभव मुक्तात्मा में नहीं रहता ऐसे न्याय के कथन का वेदान्त विरोध नहीं करता। चेतन आत्मा मुक्त होने पर भी चेतन ही है, न्याय के उपर जड़ात्मवाद का आरोप परिहास दृष्टि से अन्याय ही है, वास्तविक नहीं है, न्यायपरिभाषा से वेदान्त की आत्मा में जड़त्व की आपत्ति होगी; इस प्रकार जड और चेतन की परिभाषा ही में भेद है वस्तु में नहीं ऐसा ध्यान देना चाहिये, इस प्रकार प्राचीन उदयनाचार्य की सरस्वती सभी आस्तिक दर्शनों का समन्वय करती हुई, सभी दार्शनिक विचार धाराओं का मूल स्रोत उपनिषद हैं यह भी प्रसिद्ध करती है, इस शताब्दी में भी भूतपूर्व राष्ट्रपति श्री राधाकृष्णन् महोदय से लिखित 'बौद्ध दर्शनानां मूलस्रोत उपनिषदः' ग्रन्थ पर अनेक विद्वान् सहमत नहीं हुए, यहां तो चार्वाक दर्शन का भी मूल उपनिषद् कहा गया, ऐसे अभिप्राय पर वे क्या सोचेंगे सो वे ही जाने, और भी संक्षेप से क्या सूचित करती है? उसकी सूची देता हूं।

## वैदिक दर्शन

यहाँ दर्शनों के मूलवाक्य तथा परिहार वाक्य का उद्धरण देकर भूमिका बनाई गई हैं, वैदिक न्याय दर्शन में भी वेदान्त के ऐसो उपनिषद् और गीता की योजना है, केवल तर्क बल से पदार्थों की व्यवस्था नहीं है यह भी सूचित होता है।

इस समय वेदान्त की प्रस्थानत्रयी तथा शारीरकभाष्य को देखकर लोग भ्रम में पड़ जाते हैं कि वेदान्त दर्शन ही उपनिषदों का व्याख्याता है दूसरे दर्शन नहीं, वास्तव में सभी आस्तिक दर्शन उपनिषद् और गीता का व्याख्यान करते हैं, अपनी सम्प्रदाय सरणि को समृद्धि न होने से तथा वेदान्त सम्प्रदाय सम्पत् से अभिभूत होने के कारण वे व्याख्यान प्रकाशित नहीं हुए, छिन्न भिन्न हुए, प्रायः विलुप्त हो गये, शारीरक भाष्य के पूर्वपक्षों को पढते हुए प्रतिभा वाले के मन में अवश्य आयेगा कि सांख्य दर्शन के अनुसार उपनिषद् व्याख्या ग्रन्थरूप में अथवा पठन-पाठन से अवश्य प्रसिद्ध थी।

## सभी वैदिक दर्शन प्रधान हैं किसी के अङ्ग नहीं हैं

ऐसे अध्ययन से मेरे मन में ऐसा उत्साह हुआ कि सभी वैदिक दर्शन स्वयं प्रधान हैं, अपने सम्प्रदाय में दूसरे दर्शनों को पहली भूमिका में रखते हैं, और स्वयं अङ्गी होते हुए दूसरे दर्शनों को अपना अङ्ग करते हैं, विज्ञान भिक्षु तथा गौड ब्रह्मानन्द से किया गया वेदान्त का प्राधान्य वर्णन दिखाया ही गया, उन लोगों से उदयनाचार्य प्राचीन हैं यह निश्चित है, न्याय का सम्प्रदाय नहीं होने से बहुत समय तक आत्मतत्त्व विवेक पुस्तक को ही छीपे रहने से इस वर्णन का आज भी वैसा प्रचार नहीं है, इसी से मेरा यह प्रयास है ऐसे ही सांख्य योग पूर्व मीमांसा को लेकर भी भूमिका का वर्णन संभव है, इसमें असंभव की भावना पाठकों को छोड़ देना चाहिये।

## इन वैदिक दर्शनों के भी भेद का कारण व्याख्याभेद है

दर्शनों के मूलवाक्य तथा परिहार वाक्य जैसे सूचित हैं, वहाँ मूल वाक्यों को प्रधान करके और दूसरे मूल वाक्यों के उपयोगी वाक्यों का संग्रह करके परित्यागवाक्यों का दूसरा अर्थ करके विरोध का परिहार करना चाहिये, ऐसी व्याख्याओं से दर्शनों में भेद हुआ, व्याख्या भेद में बुद्धि भेद कारण है ही इति।



# सारस्वती सुषमा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

३० वर्षः] मार्गशीर्षफाल्गुनपूर्णिमे, वि० सं० २०३२ [३-४ अङ्कौ

## आत्मदर्शनम्

ईशः प्रसीदतु नु मानवतां ददातु स्वार्थादिदोषशमनं समतां दधातु।
लोभप्रमादमदमर्दनमातनोतु धैर्यक्षमाशमदमादिगणं करोतु ॥ १॥

न्यायाम्भोजनिमानना श्रुतिशिरो हस्ते दधाना नवा
प्राचीनाऽपि समन्वयामृतरसौ पीनस्तनौ बिभ्रती।
नैरात्म्यस्य निरासिनी मतिमतां मोदाय सद्भासिनी
आचार्यस्य सरस्वती विजयते शास्त्रार्थहंसाश्रया ॥ २॥

अध्ययनप्रियस्य जिज्ञासाविष्टस्य आपाततः 'आत्मा वाऽरे द्रष्टव्यः, श्रोतव्यः, मन्तव्यः, निदिध्यासितव्यः' इत्यादय उपनिषदामात्मदर्शनवाचः समुपतिष्ठन्ते। 'अरे' इति सम्बोधनबलेन 'श्रोतव्यः' इत्यादिदर्शनोपायप्रदर्शनेन च व्युत्पन्नो ग्रन्थोऽस्यात्मदर्शने महतीमास्थामवदधाति, आत्मदर्शनमवश्यमधिकारिणः समीहितसाधनमिति निश्चिनुते च। ततः परमात्मानमात्मीयञ्च परिचेतुं चेष्टते, पश्यति चात्मनो विस्तारम्। यथा ब्रह्मसूत्रशारीरकभाष्ये—'पुत्रकलत्रादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति श्रीशङ्करभगवतो वचः। यथाबुद्धि वाराणसेयः, उत्तरप्रदेशीयो भारतीयो वा अहमात्मानमात्मीयं वा अभिमनुते। अन्तर्दृष्टिः प्रयाससाध्या नोदेति, 'पराञ्चि खानि व्यतृणत् स्वयंभू'रित्यादिरीत्या स्वभावत इन्द्रियाणि बहिर्मुखानि बहिरर्थान् अवलोकयन्ति। तत्रैव च आसक्ता भवन्ति।

यथा चार्वाकाः— अर्जितव्यम्, भोक्तव्यम्, शरीरं शरीरसम्बन्धीनि च यावन्ति रक्षणीयानि, अनुरञ्जनीयानि च, 'आत्मा वै जायते पुत्रः' इत्यादि-

रीत्या पुत्रादिसन्ताना उत्तरजन्मानि गृहस्य कुटुम्बस्य समाजस्य राष्ट्रस्य च नीतय इह जन्मनि स्वसुखाय । परजन्मनि च सन्तानसमृद्धये सर्वथाऽनुष्ठेयाः, पारिवारिक-सामाजिक-राजकीय-दण्डभिया चानीतयोऽनाचरणीयाः । सांसारिकादरसन्मानादिप्राप्तये दया, औदार्यञ्च यथाशक्यमादातुं प्रयतनीयम्, स्वकर्मकौशलाय मनसोऽवधानतादयोऽध्यात्मसम्पदोऽपि आत्मनि निधेयाः, उत्तमतामर्जयितुं धृतिक्षमादिमानवगुणा अप्यावश्यका एव । प्रत्यक्षं प्रत्यक्षमूलकञ्च सर्वं प्रमाणम् ।

ये च प्रत्यक्षमेव चार्वाकस्य प्रमाणम्, नानुमानादीनि इति सङ्गिरन्ते, ते न अन्वेषणशीलाः, तत्त्वसङ्ग्रहकमलशीलटीकायां चार्वाकसाम्प्रदायिकस्यैकस्य नामग्राहमनुमानमपि प्रमाणमुपलभ्यते । विनाऽनुमानादिकं कथं व्यवहारो निर्वहेत् ? कथं स्याद् दार्शनिको यो व्यवहारमपि न साधयेत् । तस्मान्न कश्चिद् विलक्षणो मानवचार्वाको नाम, किन्तु अस्मास्वेव शते पञ्चनवतिर्नवतिर्वा चार्वाकाः । न्यायभाष्ये 'अन्वीक्षा' शब्दनिर्वचनावसरे प्रत्यक्षागमाभ्यामीक्षितस्य अनु-ईक्षणम्-अन्वीक्षाम् अवोचत् । चार्वाकस्य कृते तु प्रत्यक्षेणेक्षितस्य अनु ईक्षणम् अन्वीक्षा । एतावानेव विशेषः, आगमप्रणयिनः प्रामाण्यसंशये साक्षात् परम्परया वा प्रत्यक्षागमौ मूले अन्विष्य निश्चिन्वन्ति । अनुमितिजनकव्याप्तिग्रहे प्रत्यक्षमूलकम्, आगममूलकञ्च तर्कमुपस्थापयेयुः । चार्वाकाश्च साक्षात् परम्परया वा प्रत्यक्षं मूलं प्रत्यक्षमूलकं तर्कं वोपस्थापयेयुः । तथा च दार्शनिकविचारप्रारम्भे प्रथमं बहिर्दृष्टौ चार्वाक उदेति ।

## कर्ममीमांसा

एवमेवान्तर्दृष्टिविहीना बहिरर्थदृष्टय आस्तिका वैदिकाः कर्मभ्यः कुशलं कामयमानाः स्वर्गं नरकञ्च श्रद्दधतो जीवस्य जन्मान्तरं लोकान्तरञ्च स्वीकुर्वन्तो ग्रामपशुप्रभृतिफलकान् यागान् विधातुं वेदस्य कर्मकाण्डभागानेव व्याचख्युः, ज्ञानकाण्डञ्च परितत्यजुः, कर्मकाण्डशेषतां वा निन्युः ।

## निवृत्तिमार्गस्योपक्रमः

बहिर्दृष्टौ बहवो दोषा अवाभासन्त, परदोषानेव पश्यन्ति, स्वदोषान् नानुसन्दधते । परमपराधिनं मन्यमाना भृशं कलहायन्ते, येन संहतिर्न भवति, पारिवारिकम्, ग्रामीणम्, जनपदीयम् , सामाजिकं वा सङ्घटनं न

जायते। आत्मदर्शने च मयि के के दोषाः, परो मामपेक्ष्य दोषेषु समानो न्यूनोऽधिको वेति विचिकित्सा जायते। समो मित्रं न्यूनदोषो महान् आदरणीयः, कश्चिदेवाधिकदोषभाक् शत्रुरुपेक्षणीयो वा भवेत्।

## भोगेषु समानताकलहः

समे भोगलिप्सवो भोगेषु समानतामभिवाञ्छन्ति, विद्या वयोऽनुभवः, श्रमः, सहनशक्तिः, शीतोष्णसहिष्णुताप्रभृतयो गुणा परेषु कीदृशाः कियन्तश्च ? ममापेक्षया अधिका न्यूनाः समा वा इत्यविचार्यैव समादरं समीहन्ते। ततः कलहोऽशान्तिश्च जागर्ति। आत्मात्मीयविवेकदृष्टौ तु भूयसा एते कलहा शाम्येयुः।

परस्य कीदृशेनाचारेण मम दुःखम् ? तादृशेन ममाचारेण परस्यापि दुःखं स्यात्। यथाहं दुःखदायिनं द्वेष्मि, तथा परोऽपि दुःखदायिनं विद्विष्यात्। अतः परस्य क्लेशकरं कर्म न करणीयमिति, समाजतत्त्वविन्दुः शुष्यति, समाजो नश्यति, स्वपरदोषगुणविवेचनहानादानादि विना कथं राष्ट्रं सङ्घटितं सुरक्षितं वा भवेत ?

यथाऽधुनोत्कोचाविभ्रष्टाचारस्य भूयान् कोलाहलः। सभायामुत्कोचविरोधं भाषन्ते, परं स्वयमाचरन्ति, न केचन वेतनेन तुष्यन्ति। अनुचितरीत्यापि उपरितम् आयं विदधति, बहुधनमर्जयन्तोऽपि रात्रिंदिवं धनार्जने व्यग्राः। गतस्य दशानामपि वर्षाणां स्वजीवनस्य क्रमिकानुसन्धानेऽसमर्थाः, क्षणभङ्गुरं तस्य जीवनं कल्पस्थायि प्रतिभाति, भोगं भोगसामग्रीञ्च नित्यां मनुते. चञ्चलामपि अचलां पश्यति।

अन्तर्दृष्टौ तु सद्विचाराः समीचीनतर्काश्चावभासेरन्। अनुचितलाभेषु अधिका हानिः स्फुरेत्, एकान्तभोगः शक्तिक्षयकरोऽङ्गीक्रियेत, शास्त्रश्रद्धाद्वारेण 'तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद धनम्' इति त्यागपूर्वको भोगः समाद्रियेत। धृतिः क्षमेत्यादिमानवगुणाः कायिकवाचिकमानसिकशक्तयो व्यक्तेः समाजस्य राष्ट्रस्य च हितकरा उत्पादनवृद्धिकरा इत्यादि सिध्येरन्। अत एव भगवती उपनिषद् आत्मदर्शने बलं ददाति। दृष्टैरुपायैर्न दुःखत्रयस्य एकान्तात्यन्ततो निवारणम्। वैदिककर्मानुष्ठानमपि अविशुद्धिक्षयातिशययोगि प्रायस्तथैवेति लौकिकैर्वैदिकैश्च एभिरुपायैरपरितुष्यन्तोऽध्ययनेऽन्वेषणे च प्रवृत्ताः—

कर्मभिर्मृत्युम् ऋषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः ।
अथापरे मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः ॥

इत्यादिश्रुतिषु आस्थां दधुः ।

## द्वितीया भूमिः

ऋषयो द्रष्टारोऽपि बहिरेव नान्तरात्मानः प्रजासृष्टिः समेधयन्तस्तेषामुपयोगाय द्रव्यार्थं चेष्टमाना जराजन्ममरणपरम्परां निषेदुः । अथ तेष्वेव केचनापरे मननशीलाः कर्मफलेभ्योऽनित्येभ्यः परं नित्यममृतत्वं मोक्षसुखं प्रापुः । सत्यं बहिर्मुखानीन्द्रियाणि परं बहिर्वस्तुषु दोषदर्शनेन वैराग्यान् मनोऽधीनानीन्द्रियाणि कर्तव्यानि, मनश्च आत्मनि अवस्थापयेत् प्रत्यक्षायेति मार्गः प्राचीकरत् । अन्तर्दृष्टावपि काठिन्यं परिससार । अन्तःशरीराभ्यन्तरे आत्माऽऽत्मज्ञानं वा प्रकाशः, अर्थश्च बहिर्विदूरे प्रकाशमाप्नोति । कथमनयोर्विदूरस्थयोः सम्बन्धः, येन प्रकाश्यप्रकाशभाव आयात् । विदेशीयदर्शनेष्वियं समस्या कतिपयदर्शनोत्थानस्य बीजं भवति । यद्यपि कतिपये तत्र बाह्यादाभ्यन्तरस्य समुत्थानम्, अपरे आन्तराद् बाह्यस्य सृष्टिरित्यपि वदन्ति, तथाप्यान्तर्वाह्ययोः सम्बन्धसमस्या महती दर्शिता ।

भारतीयदर्शनेषु दर्शनोत्थापकतया नेयं समस्योट्टङ्किता, परम् अद्वैतसिद्धौ ज्ञानविषययोः दर्शनान्तरीयान् कतिपयसम्बन्धान् खण्डयित्वा आध्यासिकसम्बन्धो निर्णीतः, तेन प्रतिभाति भारतीयदर्शनानामपि परस्परं सिद्धान्तभेदस्येयं समस्या मन्थरां चेष्टामगृह्णात् । अत्र तु आत्मनो विभुत्वाङ्गीकारेण सर्वत्र विषयसम्बन्धेन समाहिता भवति । जीवस्य अणुत्ववादिनोऽपि ज्ञानगुणस्य महिमानं व्यापिनमङ्गीकुर्वत एव । एवमपि सर्वत्र आत्मप्रकाशस्य प्रकाश्यस्य च सत्त्वाद् जले दुग्धमिव मिश्रणं सञ्जातं विविक्तस्वरूपं दुःखग्राह्यं सम्पन्नम् । तेन च वैदिकस्य वेदान्तमतस्य द्वारमुद्घाटितम्, विषया हि व्यवहारमन्तरा असत्प्रायाः । ज्ञानं विना नावतारो विषयाणां व्यवहारे । ज्ञानादतिरिक्ता विषया निरूप्यमाणा नावतिष्ठन्ते । तेन प्रकाशात्मनि ज्ञानेऽध्यस्ता विषया रज्जुभ्यः सर्प इव न ज्ञानाद्भिन्ना मिथ्या अवभासमानशरीरा इति । 'आत्मैवेदं सर्वम्' इत्यादयः श्रुतयोऽत्र मार्गदर्शिका जायन्ते । आत्मैव एकः सन् अन्ये च प्रतीयमानाः सर्वे आत्मनैव सन्त,, न आत्मसत्तातिरिक्तसत्ताशालिन इति तस्यार्थः ।

विशिष्टाद्वैतिनः 'समेषामात्मभूतस्य परमात्मनः शरीरमिदं सर्वम्' इत्यादिरीत्या शरीरशरीरिभावेन व्याचक्षत, अभेदव्यवहारस्य शरीरशरीरिणोऽव्याहतत्वात्। अविभागवादी विज्ञानभिक्षुर्विज्ञानामृतभाष्यरीत्या प्रलयदशायां प्रकृतिजीवौ ईश्वरेऽविभागेन वर्तेते इति वदन् आत्माविभक्तम्, आत्मरूपं वा जगत् सर्वमिति मन्येत। मायामनभ्युपगच्छन् परमात्मनो जगदुपादानत्वञ्च स्वीकुर्वन् यादवादिरपि सर्वमात्मरूपमिति स्वीकुर्यादेव। 'कुण्डलं सुवर्णम्' इत्यादिरिवाधिभौतिकजगद्रूपेण परिणतोऽपि परमात्मा अविकार्यवेति साधयन् शुद्धाद्वैती परमात्मस्वरूपं जगन्मनुत एव। जडचेतनयोः प्रकृतिपुरुषयोर्वा सर्वत्र व्यापनाद् मिश्रणे दुग्धं जलमितिवत् सर्वमिदमात्मा, एष सर्वत्र आत्मेति वा साङ्ख्यन्यायौ प्रायो व्याख्यास्यतः।

## योगाचारः

अवैदिको योगाचारस्तु "आत्मैवेदं सर्वम्" इत्यादिश्रुतिवाक्यं स्वानुकूलं मेने, अनुससार व्याचख्यौ च। आन्तरा नानाविधानां त्रिज्ञानादीनां क्षणिकानां सन्ततयः प्रवहन्ति। त एव विज्ञानादय आत्मा, तद्रूपमेव जगत्सर्वम्। आन्तरमेव वहिर्वदवभासते, विज्ञानमेव प्रकाशः न प्रकाशातिरिक्तं प्रकाश्यम्। बाह्याकारविशेषोऽपि अवभासमानान्तरस्यैव विज्ञानस्य, विशेषाकाराकारितानि विज्ञानानि प्राक्तनस्वकारणमहिम्ना जायन्ते। एवं पूर्वपूर्ववर्तिकारणापेक्षायां बीजाङ्कुरवदनादिरयं प्रवाहो विशेषाकाराणां विज्ञानानाम्।

## तृतीया भूमिः

अतः परं विवेचयतां जिज्ञासूनां पुरतः 'अगन्धरसम्, अस्थूलम्, अनणु' प्रभृतयः श्रुतयो विवेचनीया अभवन्। ये च पूर्वोक्ताः प्रकाशातिरिक्तं प्रकाश्यमनङ्गीकुर्वाणास्ते तु प्रकाशातिरिक्तानां गन्धरसादीनां प्रकाशमानानामप्यभावं पारमार्थिकं निरूपयन्त्य इमाः श्रुतयस्तेषां मिथ्यात्वमभिप्रयन्तीति मेनिरे।

योगाचारस्तु प्रकाशमानानां गन्धरसादीनामभावमभिधत्ते। श्रुतिस्तन्नूनं बाह्यानामभावं वक्ति, प्रतीतयस्तु स्वकारणायातविशेषाकाराकारिता इति स्वमतेन योजयति। ये च वैदिका द्वैतवादिनः प्रकाश्यवस्तुनो मिथ्यात्वं ज्ञानाकारतां वा नाङ्गीकुर्वन्ति, तेषां कृतेऽपि इमाः श्रुतयोऽनुकूला द्वैतप्रतिपादिका भवन्ति। यथा साङ्ख्यस्य प्रकाशः पुरुषचैतन्यं प्रकाश्यप्रकृति-

प्राकृतिकवस्तुविषयेभ्यो भिन्नं गन्धरसादिज्ञानम्, एवं न्यायोऽपि आत्मानम्, आत्मगुणं ज्ञानञ्च भूतभौतिकविषयेभ्यो भिन्नम्, प्रकाशातिरिक्तसत्तावन्तश्च प्रकाश्या विषया इति च साधयति। विशिष्टाद्वैतोऽपि भिन्नसत्तां स्वीकृत्य क्वाचित्कमभेदव्यवहारं शरीरशरीरिभावेन निर्वाहयति।

ततः परम् 'असदेवेदमग्र आसीत्' इत्यादौ विचारकाणां जिज्ञासूनां दृष्टिपातो जातः। वेदान्तिनः—असतां शशशृङ्गादीनां ज्ञानं न भवति। अतो दृश्यमानं जगद् असद्भिन्नं परमार्थदशायां बाधितत्वाच्च सद्भिन्नमनिर्वचनीयम्। व्यवहारदशायां सदेवावभासते। तेन तस्य पूर्वावस्थाऽपि सर्वथाऽसद्रूपा न सम्भवेत्। अतः 'कथमसतः सज्जायेत' इति श्रुतिरपि प्रतिवदति। तेन अनिर्वचनीयं नामरूपाभ्याम्, अव्याकृतं वा असच्छब्दार्थं व्याचक्षते।

योगाचारभूमिकायामेव वर्तमानाः कतिपयेऽनया असन्मूलविचारधारया शून्यवादे नैरात्म्यवादे च प्रवतेरुः। योगाचारभूमिकायां ज्ञानं विना व्यवहारमलभमाना बाह्या ज्ञाननिरूपणाधीननिरूप्यत्वात्, ज्ञानभिन्नत्वेनानिरूप्यत्वाच्च विषया असन्तोऽवभासन्ते यथा तथा विषयावभासं विना ज्ञानस्यापि अनिरूपणात्, ज्ञानानां निर्विषयत्वे मानाभावात्, विषयाकारनिरूपणाधीनाकारत्वाच्च, असन्ति एव विज्ञानान्यपि संवृत्तिसत्त्वाच्च बाह्यमिवाभ्यन्तरं व्यवहारसाधकं न सर्वथाऽबाध्यं परमार्थसत् किमपीति निश्चिक्युः।

यदा आन्तराणि ज्ञानसुखादीन्येव सन्तानीनि असन्ति, तदा तेषां गुणत्वकल्पनया तदाधारभूतः स्थिर आत्मेति नैयायिकानां कल्पना निरालम्बनेति नैरात्मवादं दृढं कुर्वन्। अन्ये वैदिका व्याख्यातारः कथमसतः सज्जायेतेत्यादिना श्रुतिरेवासन्मूलवादं निराकरोतीति नात्र आतस्थिरे। एष्वेव केचनाग्रे इदं दृश्यं स्थूलं जगद् असदप्रत्यक्षम् अस्थूलं सूक्ष्मं कारणात्मनैवासीत। सर्वथाऽभावं तु कथमसतः सज्जायेतेत्येव निषेधति। अतः सद्रूपं कारणमपि कल्पयन्ति। कारणमपि चैतन्यमात्रम् न ततो जडस्य जगत उत्पत्तेरनुपपत्तेः। तादृशमपि कारणं कार्यसजातीयं कार्याणां सूक्ष्मावस्थापन्नं परिणामिप्रधानं प्रकृत्यादिशब्दवाच्यमिति साङ्ख्ययोगी। नैयायिकास्त्विदं दृश्यं जगदसद् अविद्यमानम्, अस्य प्रागभाव इति यावत्। असतः कारणाद अभावात् सतां कार्याणामुत्पत्तेः श्रुत्यैव निषेधात्। सन्ति नित्यानि कारणानि द्रव्याणि सृष्टेः प्रागपि आसन्।

ततः परमाणुवाद उदतिष्ठत्। उत्पत्तेः प्राक् कार्यमसदिति असत्कार्यवादोऽपि तेषां सूचितः। परिणामित्वस्वीकारे कार्याणां सूक्ष्मरूपेण कारणेऽवस्थानापत्त्या मुक्तानामपि आत्मा न शुद्धो भवेत्। आत्मधर्माणां सुखादीनां सूक्ष्मरूपेणावस्थानापत्तेः। कार्यं विनाऽपि कारणानामवस्थानात् कार्यकारणयोरभेदासम्भवात् तयोर्भेदवादोऽपि तेषाम्। अन्यथा सुखदुःखादीनामात्मकार्याणामुत्पादविनाशाभ्यामात्मनः परिवर्तनापत्तेः। तथा च शुद्धात्मस्वरूपाणामवधारण एषां सिद्धान्तानां समुपयोगः। एवं गुणगुणिभेदवादस्यापि। अन्यथा गुणानां परिवर्तने गुणिन आत्मनोऽपि परिवर्तने तस्य विकारित्वं स्यात्, गुणगुणिभेदवादे त्वत्यन्तभिन्नानां गुणानां परिवर्तनेऽपि गुणिन आत्मानं किमपि न विकुरुते। सर्वदाऽऽत्मा निर्विकारस्तिष्ठति। गुणगुणिनोः कार्यकारणयोश्चाभेदवादादेव चेतनस्य पुरुषस्याकारणत्वं निर्गुणत्वञ्च साङ्ख्ययोगयोर्गले पतितम्, तथैव वेदान्तेऽपि।

चेतनस्य कारणत्वमपि वेदान्तिनां न शुद्धस्य साङ्ख्यवद्विकारित्वापत्तेः, अपि तु मायासंवलितस्यैव। चेतनभिन्नस्य मिथ्यात्वदृष्ट्या च वेदान्ती मायाबलमादातुं प्रभवति। साङ्ख्यादयस्तु सर्वम् अनन्तञ्च सदिति वादिनो जगतो मिथ्यात्वमपसारयन्तः कथं मायास्पर्शं सहेरन्? एवं वैदिका व्याख्याभेदेन श्रुतीः समनुगमयन्तः स्वस्वप्रक्रियाभेदैरात्मानञ्च विकारात् परिवर्तनाच्च रक्षन्तः स्वस्वदर्शने पूर्णं मुक्तिमार्गं निर्मलं कुर्वन्ति। एवञ्चोपनिषदो व्याख्याभेदेन वैदिकदर्शनानां परस्परं भेदः समागतः, बुद्धानां भेदाच्च व्याख्याभेदः। समेषां वैदिकदर्शनानामुपनिषदां गीतायाश्च तत्तद्दर्शनानुसारं पाठनपद्धतौ पुस्तकरूपेण वा व्याख्यानं चिरं प्रचलितमासीत्। तदधुना विच्छिन्नम्, साम्प्रदायिकसम्पदा वेदान्तस्यैवेदानीमुपलभ्यते। ब्रह्मसूत्राणामपि नैकानि द्वैतपराणि व्याख्यानानि सम्प्रदायसम्पदैव विराजन्ते। शारीरकभाष्ये उपनिषन्मूलकसाङ्ख्यानुसारिपूर्वपक्षं पठतां विदुषां बलाद् मनसि आयास्यति यत् साङ्ख्यस्योपनिषद् व्याख्यानं पुस्तकरूपेण पाठनपद्धतौ वाऽवश्यं रूढमासीत्।

## आधुनिको भारतीयदर्शनोपरि आक्षेपः

अधुना आङ्गलभाषाद्वारा भारतीयशिक्षितानां विश्वस्य विद्याभिविवृद्धिश्च भूयान् सम्पर्कः। अधिविशति च भारते विदेशीयशैलीशिक्षितानां विदुषां परिषद् दर्शनपरिषद् वा। विदेशीयानि च दर्शनानि समाजवादसाम्यवादप्रभृतिनीति समर्थनविमर्दनोद्देशेनाविर्भूतानि, तथैव व्याख्यायन्ते,

प्रचलन्ति च। भारतीयानि च दर्शनानि मोक्षोद्देशेन प्रवृत्तानि, उद्योगमार्ग-कण्टकभूतानि, ऐहिकपरिस्थितावनुपयुक्तानि, वैयक्तिकफलसाधनान्यपि अनुदाराणि समाजस्य राष्ट्रस्य वा अकिञ्चित्कराणि—इत्यादिः।

अत्र विषयेऽन्यत्रालिखम्। इदानीं तु संक्षिप्ततरं किञ्चिदुक्त्वा त्यक्ष्यामि। ओदनार्थी तण्डुलानां कृते व्रीहिमुत्पादयति। तत्र पशूनां कृते पुलालम्, अग्निसंधुक्षणाय तुषाश्च भवन्ति। तथैव मुमुक्षवः शरीरयात्रा-निर्वाहाय तत्त्वज्ञानस्याभिव्यक्तये संरक्षणाय च यद्यत्समीहन्ते सम्पादयन्ति च तत्तत्सर्वम् ऐहिकसमृद्धये समाजस्य राष्ट्रस्य च हितायैव भवति, न किञ्चिदनिष्टं जनयति। यथा शिक्षितः सभ्यः समृद्धः सुखीसमाजः तदनुकूलं स्वतन्त्रं सक्षमं सद्भिर्मानवैर्नागरिकैः संरक्षितं राष्ट्रं शिक्षासाधनसामग्री, भिक्षासौविध्यम्—इत्यादिकं समेषां भोगार्थिनामप्यपेक्षितम्। दर्शनाधि-कारिषु चत्वारो गुणा अपेक्ष्यन्ते—

(१) इहामुत्र फलभोगविरागः - ऐहिकेभ्यः पारलौकिकेभ्यश्च भोगेभ्यो विरागो मुमुक्षूणामपेक्षितः, न भोगार्थिनाम्, किन्तु प्रागुपवर्णितत्यागपूर्वकः समानो भोग ऐहिकसुखार्थिनां चार्वाकाणामप्यावश्यकः। भोगलम्पटास्तु शरीरेन्द्रियाण्यपि रक्षितुमसमर्था जीवनविहीनाः कथं सुखार्थिनां सफलेयुः ? एकान्तभोगः सर्वविनाशकर इति न शास्त्रस्यैवाज्ञा, अपि तु कार्यकारण-शैलीसमायातो लौकिकः पदार्थः।

(२) नित्यानित्यवस्तुविवेकः—मोक्षार्थिनाम्, भोगार्थिनामपि क्षुद्रलाभ-महर्घलाभयोः, आशुविनाशिचिरस्थायिनोश्च विवेको नोपेक्षणीयः।

(३) शमदमादिसाधनसम्पत्—यथा मुमुक्षूणाम्, तथा बुभुक्षूणामपि। आन्तरस्य मनसो बाह्येन्द्रियाणाञ्च शमनं विषयप्रवणतां लक्ष्यगोचरताञ्च विना के भवन्ति कवयो विद्वांसो मलयोद्धारो विज्ञानस्य आविष्कारका उन्नायका वा ? तितिक्षां विना पारिवारिकं जीवनमपि दुर्लभम्, क्व समाजस्य राष्ट्रस्य वा स्थानम् ? "न तितिक्षा सममस्ति साधनम्" इति लौकिकं नीतिवचनं न मोक्षशास्त्रम्। धृतिक्षमादमोऽस्तेयमित्यादिमानवधर्मान् विना यदि मानवाः, पशवश्च के ? केषां समाजो राष्ट्रं वा ? "नैनं छिन्दन्ति शस्त्राणि" इत्यादिगीतावचांसि नित्यनिर्विकारशुद्धात्मवर्णनपराणि शत्रु-सैन्यानां शिरांसि शाकमूलकादिवत् कर्तयितुम्, अर्जुनस्य अकर्मण्यताविषादं विनाशयितुं चोपक्रान्तानि। जीवनधर्मणस्तु, युद्धे सर्वस्वं नश्यति। अमरण-धर्मणस्तु किं हीयते युद्धेन ? येन न प्रवर्तेत ? जीवनसंरक्षणमात्रतत्परा हि

भीता: 'श्रमकर्मभ्यो विदूरे' स्थिता जगद्भारभूता: किं करिष्यन्ति समाजस्य राष्ट्रस्य वा ? अविभ्यत: करतले प्राणान् धृत्वा परिस्थितिभ्यो युध्यन्तो वीरा: 'परानपि' रक्षन्ति स्वयञ्च सुरक्षिता जायन्ते। अस्त्वेतावदेवाग्रे विवेचनीयम्।

एवं मननशीला: श्रुतिपरिशीलिन: "अन्धं तम: प्रविशन्ति ये के चात्महनो जना:"—श्रुतौ आस्थां चक्रु:। आत्मोपासनाञ्च मुक्तौ प्रधानं कारणमिति निरणैषुश्च। ततश्च शुद्धात्मोपासनापरायणा वैदिका दृढा जाता:, अवैदिकाश्च ा:त एव श्रुतिभ्यो विरज्य आत्मबहिर्मुखा: "सर्वं दु:खं सर्वं क्षणिकम्" इति भावनापरा वैराग्यमेव मोक्षोपायमगत्या गणयामासु:।

एतावता नास्तिकानामपि दर्शनानामुत्थानमुपनिषद्वाक्येभ्यो ब्रुवाणो नाहं विद्वेषणीयो विदुषाम्। उदयनाचार्यन्यायवचसा दर्शनानां भूमिकावर्णने प्रवृत्तत्वात्। स च चिरन्तन:। आधुनिकोऽपि महाविद्वान भूतपूर्वराष्ट्रपति: श्रीराधाकृष्णन्महोदयो बौद्धदर्शनानामुदगम उपनिषद्भ्य इति लिखति। आर्हतानां गणधरवादे समागतानां सिद्धान्ते वेदविरोधं दर्शयतां महावीरस्वामी वेदमन्त्राणां समन्वयं करोतीत्यायाति।

## चतुर्थी भूमिका

एवम् आत्मोपासनायां दृढा वैदिका: 'प्रकृते: परस्तात्' इत्यादिश्रुतिसहायेन विवेकाय प्रस्तुता:। तत्र साङ्ख्या: 'सदेव सोम्येदमग्र आसीत्' सच्छब्दार्थं जडं चेतनमुभयरूपं वेति व्यचिन्तयन्। 'सच्च त्यच्चेत्यादि'श्रुत्यनुसारं जडचेतनात्मकजगत: समुद्भव: सतोऽभिप्रेयते ? भारतीयविदुषां परम्पराऽपि प्रतिभाति जडचेतनात्मके सच्छब्दार्थे। यथा कुमारसम्भवे श्रीकालिदास:—

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदु:॥
नमस्त्रिमूर्तये तुभ्यं प्राक् सृष्टे: केवलात्मने।
गुणत्रयविभागाय पश्चाद् भेदमुपेयुषे॥

वैदिका द्वैतिनो भेदनित्यत्ववादिनो भेदस्योत्पादविनाशौ नाङ्गीकुर्यु:। जडचेतनौ सृष्टे: प्रागपि भिन्नावेव। परं भेदावभासो न भवति। अविवेकार्थं सृष्टिरित्यपि सिद्धान्त:। अव्यक्तस्य प्रधानस्य व्यक्तावस्थायां स्थूलस्य

मन ही तक रही है, १८ वीं शताब्दी के बाद तो भारतीय दर्शनों के सम्पर्क से कुछ लोग नित्य ग्रात्मा में भी विश्वास करने वाले नये हुए हैं, बाह्य वस्तुओं को मानने पर भी भीतरी प्रकाश से बाह्य का सम्बन्ध नहीं हो सकता इसलिये मानस वस्तु का स्वीकार हुआ है। यह युक्ति विज्ञानवाद में तथा अद्वैत दर्शन में प्रधान है, भाषा और उपपादान शैली का भेद होने पर भी दृष्टि एक ही है, विज्ञानमात्र प्रकाश होने से विषय आकार को विज्ञानरूप हुए बिना विषय आकार का प्रकाश नहीं हो सकता इसलिये विषय आकार विज्ञान ही है यह विज्ञानवाद है, सभी जड़ विषयों का नित्य प्रकाश चैतन्य के साथ सम्बन्ध के बिना जड प्रकाशित नहीं हो सकते इस अनुपपत्ति से ही नित्य विज्ञान स्वरूप ब्रह्म में सभी अध्यस्त हैं, यह वेदान्त की दृष्टि है, इसी प्रकार अद्वैत सिद्धि में दृक् दृश्य सम्बन्ध भङ्ग प्रसङ्ग पर विकल्प करके सम्बन्धों का विस्तार से खण्डन किया गया है। वैयाकरण सिद्धान्त लघु मञ्जूषा में नागोजी भट्ट महोदय की यही दृष्टि है जो लिखते हैं कि बौद्ध अर्थों के साथ बाह्य शब्दों का सम्बन्ध संघटित नहीं होता, इसलिये बौद्ध शक्त शब्द है ऐसा सिद्धान्त है। बाह्य अर्थ को स्वीकार करते हुए भी वे भट्ट तादात्म्य के निर्वचन में कुछ वैलक्षण्य करते हैं, यद्यपि भारतीय क्षणिक विज्ञान स्वरूप में अथवा दृष्टि सृष्टिवाद में दूसरे प्रकार से प्रत्यभिज्ञा का उपपादन करते हैं, किन्तु जार्ज उसके लिये विभु ईश्वर मानस मानते हैं, उसके साथ जीव मानसों का घटाकाश के महाकाश ऐसा सम्बन्ध कल्पना करते हैं, तो भी विचार से ईश्वर मानस का और भी उपयोग है, उसी से प्रत्यभिज्ञा के समर्थन में न्यूनता नहीं हुई। उस प्रकार विज्ञानवाद के ऐसा ही इसमें भी अध्यास की गति है।

जर्मन का लीब्नीज दर्शन वर्णन करता है कि—सभी चेतन हैं, परमाणु भी चेतन हैं जिससे स्थूल जगत् की सृष्टि होती है, पृथिवी पत्थर आदि मूक चेतन हैं, मूक चेतनों से भी क्रमश: वनस्पति आदि के द्वारा स्थूल वाचाल चेतन जीव पैदा होता है, सबसे उत्तम चैतन्य ईश्वर चैतन्य है, इत्यादि। चैतन्य विज्ञान है, मूक वाचाल आदि अवान्तर भेद होने पर भी ग्राह्य और ग्राहक का साजात्य दिखा ही दिया। साजात्य से तादात्म्य है, प्रकाश चैतन्य से भिन्न नहीं है यहाँ तक आता है, उस प्रकार प्रकाश प्रकाश्य का ऐक्य अध्यास मूलक आ जाता है।

## ३—प्रत्यभिज्ञा दर्शन में अध्यास

प्रत्यभिज्ञा दर्शन में लीब्नीज का कुछ अंश आता है, शिव चेतन से सबकी सृष्टि, सभी शिवात्मक होने से सभी चेतन। शिव सदाशिव महेश्वर आदि अवस्थाओं में जड़ और चेतन को एक करने से प्रकाश जड और चैतन्य का अध्यास विलास प्रकृत में उदाहरण है।

शिव का विमर्श शक्ति से 'अहम्' ऐसा स्फुरण जड़-प्रकाश का एक स्फुरण है, पहला 'अहम्' यह स्फुरण सदाशिव अवस्था में 'अहम् इदम्' इस स्वरूप को धारण करता है, 'अहम्' इस स्फुरण में विषय अंश 'इदम्' स्फुट नहीं मालूम होता है, जैसे आलङ्कारिकों के अध्यवसाय में 'अहम् इदम्' इस स्फुरण में आलङ्कारिकों के आरोप के ऐसा दोनों भासते हैं। वहां भी अहम् अंश प्रधान है, उस अहमंश चैतन्य से विषय इदम् अंश आच्छादित होता है, ऐसी उनकी प्रक्रिया है।

महेश्वर अवस्था में 'इदम् इदम्' ऐसा विषय प्रधान विमर्श है। किन्तु चिद्रूप अहम् अंश से भेदरहित ही यह इदम् अंश विषय है। भेदस्फुरण तो माया का अवतरण होने पर होता है, उसके पहले तो शुद्ध विद्या का साम्राज्य होने से चैतन्य स्वरूप का ही स्फुरण होता है यह उनका सिद्धान्त है। यद्यपि उनकी मान्यता के अनुसार वास्तविक ही जगत् की चैतन्यरूपता है, अध्यास से नहीं है, तो भी वेदान्त दृष्टि से आध्यासिक और मिथ्या है, निष्क्रिय निष्कलङ्क शिव का स्वतः क्रिया रूप स्फुरण नहीं हो सकता, अहम् यह स्फुरण वेदान्त में आध्यासिक है, और भामती में पूती कुष्माण्ड किया गया है, स्वतः स्फुरण नहीं है किन्तु विमर्श शक्ति से है ऐसा है, कहते हैं, कह सकते हैं, तो भी स्वाभाविक नहीं हुआ, उस स्फुरण के अधिकरण में स्वतः उसका अभाव होने से मिथ्यात्व दुर्वार है, वे वैसा नहीं मानते इतने से वस्तु स्वरूप में फरक नहीं पड़ता, शुक्ति में रजत के अध्यास वाले भी शुक्ति प्रत्यक्ष के पहले रजत को आध्यासिक नहीं मानते। अधिष्ठान साक्षात्कार के बाद ही आध्यासिकत्व का ज्ञान हो सकता है, उस प्रकार माया के अवतार से पहले प्रत्यभिज्ञा दर्शन में अध्यास स्फुट है; जिसका वर्णन अध्यास शाङ्कर भाष्य में युष्मत् अस्मत् प्रत्यय का गोचर विषय विषयी

का अध्यास कहा गया है, माया अवतार के बाद दूसरे दर्शनों की तरह प्रायः सम्बन्ध का अध्यास आयेगा।

## ४—सांख्यमत में अध्यास

सांख्यमत में भी वेदान्त के ऐसा विषय-विषयी का अध्यास वर्णन किया जा सकता है, ब्रह्म के ऐसा सांख्य पुरुष भी असङ्ग है, स्वतः विषयों का सम्बन्ध नहीं हो सकता, सङ्ग या परिणाम की आपत्ति होगी। सम्बन्ध के बिना विषय का प्रकाश नहीं संभव है, अनुपपन्न सम्बन्ध अपनी आध्यासिकता को अवश्य सिद्ध करेगा। बुद्धि द्वारा सम्बन्ध हो तो इससे क्या? वेदान्त में भी मायावश अध्यास है। ब्रह्मरूप अधिष्ठान में वस्तु पैदा होती है, पुरुष का वस्तु के उत्पाद में कोई उपयोग नहीं है यह फरक भी इस विषय में कुछ नहीं करता, प्रकृति या बुद्धि के परिणाम में पुरुष सन्निधान या चैतन्यावेश अपेक्षित ही होता है, विस्तार रहे, विषयक के आकार वाली बुद्धि की वृत्ति होती है, उस पर पुरुष का अवभास भी उसी आकार का होता है, इसलिये उस अवस्था में पुरुष और बुद्धि का विवेक नही होता, दूसरी अवस्था में पुरुष का वृत्ति के साथ सारूप्य होता है ऐसा योगसूत्र भी कहता है। जहां प्रकाश और प्रकाश्य का सारूप्य होगा वहाँ उनका तादात्म्य भी होगा, वह वास्तविक नहीं है आध्यासिक है। असङ्ग अपरिणामी पुरुष का दूसरे का सारूप्य या तादात्म्य वास्तविक नहीं होगा, वैसा भासता है इसलिये अध्यास का उदाहरण है। इस प्रकार प्रायः प्रत्ययवादी कितने ही दर्शनों में आध्यासिक तादात्म्य का उदाहरण खोजना चाहिए।

दूसरे प्रायः दार्शनिक सम्बन्ध अध्यास वाले मालूम पड़ते हैं, ज्ञान प्रकाश के साथ ज्ञेय का तादात्म्य नहीं मानते। किन्तु सम्बन्ध विशेष को मानते हैं, कुछ दर्शनों की अपनी ज्ञान प्रक्रिया में भी फरक है, आन्तर ज्ञान के साथ बाह्य वस्तुओं का संयोग आदि सम्बन्ध नहीं हो सकता इससे विलक्षण सम्बन्ध की भी कल्पना करते हैं, वेदान्ती तो वैसे वास्तविक सम्बन्ध को असिद्धि बताकर अध्यास कह देंगे, वेदान्तियों को सम्बन्ध के अध्यास में कोई कठिनाई नहीं पड़ती, जैसी वासना वैसा अध्यास होता है, विषय और विषयी की भेदवासना वालों को सम्बन्ध का ही अध्यास होता है, इसीसे अहम्, इदम्, मम इदम् ऐसे दो अध्यासों को भाष्य बताता है।

विदेशीय अनुभव वादी दर्शनों में प्रायः सम्बन्ध का ही अध्यास आता है, लेकिन भारतीय दर्शनों के ऐसा उसका स्फूट प्रतिपादन नहीं कर सकता, भारतीय प्रतिपादन शैली के अनुसार उसका विश्लेपण भी असंभव है, उसमें भी इङ्लिश भाषा से अनभिज्ञ हिन्दी के द्वारा दूर से ही छूते हुए मेरे लिये, जैसे कि इङ्गलैण्डनिवासी लॉक दर्शन में सुना जाता है—मनुष्यों में सहज ज्ञान नहीं है, बाह्य वस्तुओं के अनुभव से मनमें ज्ञान पैदा होता है, इसीका नाम अनुभववाद है, सभी ज्ञान शिक्षा के अधीन हैं, संस्काररूप से मनमें ज्ञान है, सभी ज्ञानों का मूल प्रत्यक्ष है, सहज ज्ञान का खण्डन है, अनित्य ज्ञान का वर्णन है, बाह्य वस्तुएँ मानी जाती हैं, वस्तु का ज्ञान से तादात्म्य नहीं है, ज्ञान के साथ वस्तुओं का कुछ न कुछ सम्बन्ध है, सम्बन्ध विशेष आकार-आकारी भाव बौद्धों के ऐसा है, अथवा विषय-विषयीभाव है ? यह स्फुट नहीं कह सकता, आकार-आकारी भाव में तादात्म्य आता है, यदि बौद्धदर्शन का प्रभाव है तो आकार-आकारीभाव है, अन्यों का प्रभाव है तो विषय-विषयीभाव है।

## ५—बाह्यसद्वादी बौद्धमत में अध्यास

आकार-आकारीभाव जैसे ज्ञानाकारवादी बौद्ध मानते हैं, उसमें विज्ञानवादी के मतमें ज्ञान में आकार का भान बाह्यवस्तु के अधीन नहीं है, क्योंकि वे बाह्य को सत् नहीं मानते, किन्तु भीतरी कारण के अधीन है, बाह्य को सत् कहने वाले के मत में ज्ञान का आकार बाह्यवस्तु के अधीन है, यह विज्ञान घट का ज्ञान है इसमें ज्ञान का घटाकार होना ही कारण है, अपने आकार से आकारी होना ही ज्ञान और विषयों का सम्बन्ध है, विज्ञान पैदा हो जाने पर बाह्य वस्तुओं से विज्ञान में आकार पैदा होते हैं ऐसी प्रक्रिया क्षणिक विज्ञान में समर्थ नहीं है, किन्तु बाहरी और भीतरी कारणों के जुट जाने पर एक ही बार उस आकार वाला ज्ञान पैदा हो जाता है, वहाँ जैसे विज्ञान में विषय कारण है वैसे विज्ञान के आकार में भी। उसी प्रकार ज्ञान और विषय के आकारों में जन्यजनकभाव है। परोक्ष में भी विषय अपने अनुभव से जन्य संस्कार द्वारा कारण होते हैं। परोक्ष में भी सम्बन्ध का अनुभव होने से ऐसे परम्परा सम्बन्ध माने जाते हैं, ऐसी कल्पना दूसरों के मतमें भी आयेगी, यहां पूछा जाय कि घट और उसके विज्ञान में एक ही आकार है या भिन्न है ? एक ही आकार को एक ही समय

भिन्न-भिन्न दो में रहना असंभव है, इसलिये पहला पक्ष असंभव है, दूसरा मानें तो घट ज्ञान भी पट ज्ञान क्यों न हो ?, क्योंकि सजातीयता के नियामक किसी धर्म का निर्वचन नहीं हो पाता। और भीतरी तथा बाहरी आकारों का सम्बन्ध कैसा ?, यह भी रही जायेगा, इससे विषय और विज्ञान का अध्यास ही आयेगा।

## ६—न्यायमत में अध्यास

इसके बाद नैयायिक आदि का विषय विषयीभाव सम्बन्ध का अध्यास है, उसमें कोई प्रकार भेद अवश्य ध्यान देने लायक है, बौद्ध वेदान्ती सांख्यों के मत में चैतन्य और चेतन एकही पदार्थ है, वैसा होने पर प्रकाशक और प्रकाश एकही होता है, इन्द्रिय बुद्धि तथा उनकी वृत्तियाँ वास्तव में जड़ हैं प्रकाश नहीं हैं, प्रकाश चैतन्य है उसमें कोई दूसरी प्रकाशक्रिया नहीं है, जिससे चैतन्य वास्तविक प्रकाशक हो सके, कहीं कहीं प्रकाशकत्व व्यवहार तो भाक्त है। न्याय आदिमत में तो आत्मा प्रकाशक है, तथा चेतन है, चैतन्य ज्ञान प्रकाश है, ज्ञान के साथ विषय का विषय-विषयीभाव सम्बन्ध है, जैसे पाचक सोता हुआ भी पाचक है वैसे ही ज्ञान न रहने पर भी आत्मा प्रकाशक चेतन है, जिसके मत में ज्ञान नित्य है उसके यहाँ बिना विषय का भी ज्ञान होता है, बौद्धों का विज्ञान भी कभी निर्विषयक होता है, किन्तु नैयायिकों का अनित्य ज्ञान कभी बिना विषय का नहीं होता, क्योंकि विषय का अवभास ज्ञान है, वह विषय का अवभास सांख्य और वेदान्तमत में भी अनित्य है, यह समानता समझनी चाहिये। प्रकृत में आन्तर ज्ञान का बाह्यविषयों के साथ कैसे सम्बन्ध संभव है, सम्बन्ध का अवभास मिथ्या है, इसीसे सम्बन्ध का अध्यास है। विषयत्व आदि के सम्बन्धत्व का खण्डन वेदान्त ग्रन्थों में है ही।

## ७—गुरु मत में भी यही मार्ग

अतीन्द्रियज्ञान अपने अंश में अतीन्द्रिय है, विषय अंश में तो प्रकाश ही है। ज्ञातता आदि के उत्पाद से इस विषय में कोई फरक नहीं है, ज्ञान अपने से सम्बद्ध विषयों में ज्ञातता पैदा करता है, उस ज्ञान और विषय का वह सम्बन्ध अध्यास वश है, इतने से यह उदाहरण है।

## ८—रामानुजदर्शन में भी विषयविषयीभाव सम्बन्ध है

किन्तु उनकी प्रक्रिया से दूसरे सम्बन्ध का आभास होता है, वे ज्ञान को गुण तथा द्रव्य दोनों ही मानते हैं, दूरस्थ विषय का प्रभा ज्ञान भी मानते हैं। प्रभा भी द्रव्य हो सकती है, सूर्य, चन्द्र, नेत्र आदि की प्रभा की तरह ज्ञानप्रभा का संयोग आदि भी सम्बन्ध संभव है, तो भी उससे निर्वाह नहीं है, प्रत्यक्ष स्थल पर ज्ञानप्रभा से निर्वाह करने पर भी परोक्ष स्थल में संस्कार के द्वारा ही विषयों का आन्तर ज्ञान से सम्बन्ध वर्णन करना चाहिये, संस्कार के साथ विषय विषयी भाव ही है।

इतने पर भी-ज्ञान अपने से सम्बद्ध विषयों पर प्रभा का सञ्चार करता है अथवा असम्बद्ध विषयों पर भी? दूसरे पक्ष में अतिप्रसङ्ग स्फुट है, पहले पक्ष में सम्बन्ध क्या है? यह पहले के ऐसा प्रश्न हो गया। इन्द्रिय द्वारा सम्बन्ध कहेंगे तो किसी इन्द्रिय द्वारा सम्बन्ध है ही, अपनी इन्द्रियों द्वारा कहें तो इन्द्रियों में अध्यास के विना अपनापन क्या है, अदृष्ट द्वारा कहेंगे तो अन्योन्याश्रय होगा, इन्द्रियों में अपनापन के विना अदृष्ट नहीं, अदृष्ट के विना अपनापन नहीं, इसलिये शरीर और इन्द्रियों में अध्यास से ही अपनेपन का उपपादन होगा, इसलिये यह उदाहरण है। पहले जो परोक्ष स्थल में संस्कार द्वारा सम्बन्ध कहा गया है, वहाँ विषय और उसके अनुभव के साथ भी सम्बन्ध का अध्यास आयेगा, इसलिये वह अध्यास का उदाहरण है।

वह मेरा अध्यास निरूपण 'विषय-विषयिणो.' करके अध्यासभाष्य में प्रस्तुत हुआ, आगे शारीरक भाष्य में कहीं-कहीं इसका उपसंहार भी किया गया। अद्वैत-सिद्धि में दृग्-दृश्य सम्बन्ध के भङ्गप्रसङ्ग में दूसरे मतों का खण्डन करके ज्ञान में विषय अध्यस्त हैं, ऐसा पर्यवसान किया गया है, किन्तु वह दूसरी रीति है, वहाँ कौन कौन सम्बन्ध सम्भव हैं ऐसा प्रस्तुत करके खण्डन किया गया है। दर्शन विशेष की चर्चा नहीं है। सम्बन्ध भी कुछ कल्पित हुए हैं, प्रायः उनका निरूपण यहाँ नहीं किया गया, किन्तु विदेशीय कुछ दर्शनों में आन्तर ज्ञान से बाह्य का क्या सम्बन्ध? कैसे सम्बन्ध? इत्यादि प्रश्नों को उठाया गया, उनको महत्व दिया गया, उसी के अनुसार दर्शनों का प्रारम्भ भी किया गया, उस प्रश्न का महत्त्व भारतीय दर्शनों में भी है, इसको बताने के लिये यह अध्यासनिरूपण का क्रम आदृत किया गया है। इस एक

प्रकार के अध्यासनिरूपण से ही सभी विषयों का मिथ्यात्व आ जाता है, इससे इसका अध्यासों में आदर है।

अध्यास का लक्षण और उसका समन्वय, तथा यह अध्यास अंशतः अथवा दूसरे प्रकार से सभी तीर्थङ्करों को सम्मत है, इत्यादि शारीरक भाष्य में वर्णित है, व्याख्याताओं ने उसको बढ़ाया-चढ़ाया भी है। उस रीति से वर्णन में विशेष फल न होने से उसकी उपेक्षा की गई है, मेरी अपनायी शैली किसी से गृहीत नहीं मालूम पड़ती इसलिये उसी का निरूपण किया गया। यद्यपि भाष्यरीति को लेकर रामानुज दर्शन की सत् ख्यातिका, प्रत्यभिज्ञा को अपूर्ण ख्यातिका, माध्व के विचित्र अन्यथा ख्यातिका वर्णन किया जाय तो अच्छा ही हो, लेकिन इस छोटे निबन्ध में सन्निवेश नहीं कर सकता, इसलिये उपसंहार ही करता हूँ।

## माया का परिचय

एक स्वयंप्रकाश चिदात्मा प्रकाश में अनेक प्रपञ्चों के विलक्षण विषयों का ऐसा अध्यास स्वयंसिद्ध है। सभी व्यवहारों का कारण है, अनादि प्रवाहों से आ रहा है, इसका मूल माया को भगवती श्रुति बताती है, वह माया अनादि सिद्ध अनिर्वचनीय अभाव से विलक्षण वस्तु है, आत्मा विज्ञान माया की वृत्तियों से बहुत रूप को प्राप्त करता है, ऐसा अर्थ है। दूसरे भी दार्शनिक प्रायः सम्पूर्ण अनर्थ का कारण अनादि सिद्ध भाव रूप कोई वस्तु नामभेद से वर्णन करते हैं। लोक में भी अद्भुत प्रकाशन-कार्य के लिये मायाशब्द का प्रयोग होता है, उसी तरह इस दर्शन में भी अघटित घटनाओं के सम्पादन में सामर्थ्य रूप से इसका निरूपण आता है।

इसके आगे का अंश 'माया सर्वदर्शनानुस्यूता' निबन्ध में आ गया है, इसलिये इसका यहाँ हिन्दी देना छोड़ दिया गया है।



श्रीविश्वेश्वरानन्दवैदिकशोधसंस्थान-साधुआश्रम, होशियारपुर पञ्चनदप्रचारितविश्वसंस्कृतं त्रैमासिकसंस्कृतपत्रे १९६७ ईशा वर्षे प्रकाशिता—

## माया सर्वदर्शनानुस्यूता

महामाये मातः सकलगुणकाये चितिरते।
निकाये ब्रह्माख्ये गतविविधदाये परिगते॥
गतच्छाये जीवे वितर दययेशे सुनयने।
नयेनासीना त्वं सरसविटपे दर्शनवने॥

वैदिक-दर्शन-सम्प्रदायस्य मौलिक-निबन्धेषु बहुलम् उपगीता माया। तान् निबन्धान् अनुसरन्ति तेषां समन्वयं चाऽभिवाञ्छन्ति दर्शनानि मायायाः सम्मानम् अन्तरा कथं मानम् अर्हन्तीति मायायाः सर्व-दर्शन-व्यापकता। तस्याः स्वरूपे परं प्रतिदर्शनं कश्चिद् रूपभेदोऽवश्यम् आयाति, स च पश्चात् प्रस्फुटीभविष्यति। प्रथमं सम्प्रदायम् एव प्रदर्शयामि। तद् यथा श्वेताश्वतरोपनिषदि—

यस्मान्मायी सृजते विश्वमेतत्।
तस्मिँश्चान्यो मायया सन्निरुद्धः॥
मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥

माया-शक्ति-विशिष्टे मायिन्येव विश्व-सृष्टि-कर्तृत्वं न तु शुद्धे निर्लेपचैतन्ये, प्रथम-मन्त्रोत्तरार्धेन जीवानां माया-वशगत्वम्, प्रकृष्ट-करणार्थकप्रकृति-शब्देन सर्जन-शक्तिः, मायिनो महेश्वर्यवचनाच्चैतन्यं केवलं प्रकाशः, अन्य-विधा सर्वा शक्तिर्माया, मायाया अवयवा मायिन्यध्यस्ताः,

अतः सर्वं जगद् मायिनोऽप्यवयव-भूतं ततश्चाऽन्तर्यामित्वमित्यादि दर्शितम्। अविद्या-शब्देनाऽपीयं व्यपदिश्यते। तद् यथा—

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता।
विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त॥
अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः॥

इत्यादिनाऽनादि-बन्ध-कारणत्वम् अव्यक्त-शब्द-वाच्यत्वं चाऽविद्याया दर्शितम्। ज्ञान-निवर्त्याऽतोऽज्ञान-शब्देनाऽप्यस्या वर्णनं प्राप्यते। यथा लिङ्गपुराणे—

तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम्।
परतन्त्रे स्वतन्त्रे च भिदाऽभावाद् विचारतः॥ इति।

'मायामात्रं कार्त्स्न्येनाऽनभिव्यक्तत्वात्' इत्येवं ब्रह्मसूत्रे पूर्णतया चैतन्यस्याऽभिव्यक्ति-विरोधित्वम् अस्या वर्णितम्।

आचार्यगौडपाद-कारिकायां बहुशोऽस्याश्चर्चा—'संघाताः स्वप्नवत् सर्वे आत्ममायाविसर्जिताः' इति। आत्मनो मायाऽविद्या तद्-वशाद् नानाविधा मिथ्याभूता सृष्टिरिति व्याख्या। तत्रैव—'नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि' इति। पूर्ववत् तात्पर्यम्।

'कल्पयत्यात्मनाऽऽत्मानमात्मा देवः स्वमायया' इत्यत्रैकाधिष्ठानेऽनेककल्पनम्।

'स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा' इत्यत्र मिथ्या-वस्तुषु माया-शब्दः।

'जन्म मायोपमं तेषां सा च माया न विद्यते' इत्यत्राऽनिर्वचनीया माया।

न केवलम् एतावद् एवाऽपि त्वद्वैतसिद्धौ तट्-टीकादिषु च ग्रन्थेषूपवर्णितेयं बहुशः।

श्रीमदुदयनाचार्यः पाप-पुण्य-रूपम् अदृष्टं नैकविधं संसाध्य माया, अविद्या, सहकारि-शक्तिः, प्रकृतिरित्यादि-शब्दैरदृष्टस्यैव शास्त्रेषु वर्णनमित्युपसञ्जहार न्यायकुसुमाञ्जलि-प्रथम-स्तवकम्। यथा—

इत्येवं सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता।
देवोऽसौ विरतप्रपञ्चरचना कल्लोलकोलाहलः
साक्षात् साक्षितया मनस्यभिरतिं पुष्णातु शान्तो मम॥

जीवानां कृत-कर्मण उपभोगायैव जगतः सृष्टिः, परमेश्वरोऽपि जीवाऽदृष्टं विना सृष्टि-संहारौ विधातुं नेष्टे। अतः कर्मेश्वरस्याऽसमा सहकारिशक्तिः। तस्यैवाऽपरं नाम माया। लोके दुःखेनोन्नेये दुस्तर्के वस्तुनि माया-शब्दः प्रयुज्यते। कर्माऽप्यदृष्टं तथा, प्रकृतिः सृजति, प्रकृतिर्जगत्-कारणम् इति यत्र तत्राऽऽख्याति। मूले आदिम-कारणे हि प्रकृति-शब्दस्य प्रयोगः, अदृष्टम् अपि सृष्टेर्मूल-कारणम्। या हि विद्यया विनाश्यते साऽविद्या 'ज्ञानाग्निः सर्व-कर्माणि भस्मसात् कुरुतेऽर्जुन' इति गीतोक्तेन भगवतः कृष्णस्य वचनेन कर्मणाम् अपि ज्ञानेन विनाशात् कर्माऽविद्येत्यनर्थान्तरम् इति वक्तुं शक्यते।

अदृष्ट-भिन्नं संसाराऽनर्थ-कारणं प्रवाह-रूपेणाऽनादि मिथ्याज्ञानम् इत्यपि नैयायिका ऊचुः, तत्राऽपि वेदान्तिनाम् इव माया-शब्दोऽधिकम् उपपद्यते। तथा हि 'दुःख-जन्म-प्रवृत्ति'रिति न्यायसूत्रे सोपपादनं मिथ्या-ज्ञानं सर्वाऽनर्थ-कारणमिति प्रतिपादितम्। श्रीशाङ्कर-शारीरकाध्यास-भाष्येऽपि 'मिथ्याज्ञान-निमित्तः' इत्यत्राऽध्यास-विशेषणतया स एव मिथ्या-ज्ञान-शब्द उपात्तः, तत्र केचन व्याख्यातारः—मिथ्या अज्ञानं मिथ्याभूता अविद्या माया इत्यादि वर्णयन्ति च। तथा च न्याये वेदान्ते चाऽध्यासस्य भ्रम-प्रतीतेः कारणत्वं सत्यानृत-मिथुनीकरणत्वम् अनादि-भाव-रूपत्वं तत्त्वज्ञान-निवर्त्यत्वं च मिथ्याज्ञानस्य समानम्। अनादि-प्रवाह-पतितानाम् उपभोग-पर्यवसायिनां कर्मणाम् उपभोगायैव सर्जनम् इति मायाया अदृष्ट-रूपत्ववचनम् एव। मिथ्याज्ञानकर्मणोस्त्रिचतुःक्षणादिस्थायित्वम् अस्तु नाम विशेषः, परं प्रवाह-रूपेणाऽनादित्वं मायापद-प्राप्त्यै पर्याप्तम् एव। मिथ्या-ज्ञानस्य दृढा स्थायिनी वासना वा माया-पदं प्राप्नुयात्।

यद्यपि शरीरादिष्वहं-ममेत्यादि-विविधाऽध्यासम् अन्तरा न कश्चिच्छरीरादिभिश्चेष्टते । समुपपादितं तच्छाङ्कर-शारीरक-भाष्यादिषु । नैयायिका अपि शरीरादि-भिन्नाऽऽत्मसिद्धान्तिनः शरीरादिष्वहं-ममाध्यास-मूलिकाम् एव चेष्टां ब्रूयुः, तथा च कर्मभ्यः प्रागध्यासस् तन्मूलं माया चाऽऽयातीति कर्माणि न माया-पदं भजेयुः, तथाऽपि शरीरादिषु समुत्पन्नेषु तत्राऽहं-ममाध्यासः, उपभोग-जनक-शरीरादि-जनकानि कर्माण्यपि तादृशाध्यास-प्राग्-वर्तीनीति वक्तुम् अवसरः । अध्यासस्य यानि लक्षणानि शारीरक-भाष्यादिषूपलभ्यन्ते तानि नैयायिकादीनां मिथ्याज्ञाने सम्यक् समनुयन्ति ।

वेदान्त-विरोधम् अकामयमानोऽपि श्रीनागोजीभट्टो वैयाकरण-सिद्धान्तलघुमञ्जूषायां बौद्धाऽर्थनिरूपणे आधुनिकैः स्वीकृतं मायायाः स्वरूपनिर्वचनं निरस्यन् सूत्र-भाष्य-भामती-कल्पतरु-प्रभृति-सन्दर्भांश्च संयोजयन्ननादिपरम्परया प्रचलन्ती मिथ्याज्ञान-तद्-वासना-रूपैव मायाऽविद्या वेति सिद्धान्तयामास । तथा च कतिपय-वेदान्तिनोऽपि मिथ्या-ज्ञान-रूप-माया-वादिन इति कथयन्नापराध्यति । मिथ्या-ज्ञान-साधनानीन्द्रियाण्य-ध्यासम् अन्तरा न भवन्त इति मिथ्याज्ञानात् प्राग् अध्यासस्य स्थानम् इति दुष्प्रत्ययस्थानम् अध्यासस्य मिथ्याज्ञानरूपत्वात् । प्राग्वर्तिनो मिथ्या-ज्ञानस्य प्रवर्तकत्वात्, जानाति इच्छति यतत इति क्रमिक-सिद्धान्तस्य व्यापकोपपत्तेः स्वतः क्वचिद् इन्द्रियादीनां प्रवृत्तेरस्वीकाराच्च ।

सांख्यदर्शने वेदान्ताऽभिमतमायाया विक्षेपशक्तिप्रयुक्तं कार्यं स्वतन्त्रं प्रधानं साधयति । परं विवेक-ख्यात्या मायाया इव न प्रधानस्योच्छेदः किन्त्वौदासीन्यम् । मायाया आवरण-कार्यं तु तमोगुणस्य कार्यम्, तमो-गुणोऽपि प्रधान-रूपम् एव, गुणानां पृथग् अप्रवृत्तेः । तथा च प्रकृतिरेव माया-पदम् अलङ्कुर्वीत । प्रकृतेर्मुक्तान् प्रत्यौदासीन्यं तु न मायायास्तादृश-व्यतिरेक-करम्, वेदान्तेऽपि मायाया एकत्वे अनेकजीववादे क्रमिकमुक्तौ च तादृशौदासीन्यसमशीलस्य कस्यचिद् अवश्यम अङ्गीकारात । एवं च माया-सदृशं वस्त्वन्येषाम् अपि दार्शनिकानाम् अभिमतम्, न केवलं वेदान्त-सम्प्रदाय एव एतादृशस्य विलक्षणवस्तुनः स्वीकारस्य भारः ।

अविवेकस्तु सांख्यानां व्यवहार-विषयो न माया-स्थानम् अधि-तिष्ठति, नञर्थ-घटिततया सत्त्वपुरुषयोर्विवेकेन भेदेन ज्ञानाऽभावरूपः । विवेकेनाऽगृह्यमाणा प्रकृतिश्चैतन्याऽऽवेशं लभते, ततश्च प्रवर्तते । विवेकेन गृह्यमाणा तु चैतन्याद् उदासीना न प्रवर्तत इति सिद्धान्तात्, अभावस्याऽ-

विवेकस्य भावरूप-जगज्जनकत्वं नाऽद्भुतं प्रकृतेरुपादानत्वाद् अविवेकस्य च निमित्तकारणत्वात्। अभावस्य भावोपादानत्व-मात्र-विरोधात्। अन्ये तु भाव एव अविवेकः, अत एव कुत्रचिद् अविवेक-ख्यातिरिति भाव-रूपेण ख्यातिपदेनोल्लेखः। अन्यत्र प्रकृति-पुरुषयोर्बुद्धि-पुरुषयोर्वा 'एकं संवेदनम्' इत्यायाति। योगसूत्रे च ख्याति-विशेषस्यैवाऽविद्या-शब्देन समुल्लेखः। मायाया इव तादृशाऽविद्यायाः सर्वाऽनर्थ-मूलत्वं विवेक-ख्यात्यानिवर्तनीयत्वं च वर्णितम्। एवं च मायाया नामान्तरम् इव सांख्यस्याऽविवेकः प्रतिभाति।

प्रत्यभिज्ञा-दर्शनस्य मायाऽप्यद्वैति-मायाम् अनुहरति "फलादीनां तत्त्वानाम् अविवेको माया' इति शिवसूत्राऽभिमतन् अविवेकपदस्य निर्वचनं सांख्यानाम् अविवेकम् अपि अनुसरति, शिव-चैतन्यात् स्वातन्त्र्यवशाज्जायमानेषु जडेषु उपादानरूपशिवाऽऽत्मता अविवेकवशान् न स्फुरतीति तत्कार्यवर्णनम्। तेनाऽहम् अंशचिद इदम् अंशजडस्य च पृथग अवभासः, तेन द्वैतं स्फुटं स्फुरति। क्रमशश्चैतन्यांऽशस्य सर्वाऽनुस्यूतत्वसंकोचो जायत इति तात्पर्यम्। अद्वैतिनां मायया साम्यं त्वविवेकपदेन सत्याऽनृतमिथुनीकरणम्, जडेषु शिवात्मता न प्रकाशत इत्यनेनाऽधिष्ठानशिवस्याऽऽवरणम् इति आवरण-शक्तेर्वर्णनम्, पृथग् अवभास-शब्देनैकस्मिन्ननेकप्रकटनरूपविक्षेपशक्तेः सूचनं च।

तथा विशेषस्तु जड-वर्गेषु शिवाऽऽत्मत्व-स्फूर्तेर्निरोधम् आरभ्यैवाऽनन्तरं मायाकार्यं निर्दिशति प्रत्यभिज्ञादर्शनम्। ततः प्राक्तनस्य 'अहम्' 'अहम् इदम' इत्यादिस्फुरणस्य विमर्शशक्त्या शुद्धविद्यातत्त्वेन च निर्वाहः क्रियते, वेदान्ते च विमर्शशक्तेरपि कार्यं मायाकार्यम् एव स्वप्रकाशचैतन्यस्वरूपे ब्रह्मणि स्वतः स्फुरणादि-कर्माऽसंभवात्। शक्तिश्च मायैव। एष विशेषोऽप्येतावता यत् प्रत्यभिज्ञादर्शनं चैतन्ये क्रियाशक्तिं स्वीकरोति, शाङ्करदर्शनं तु चैतन्ये सर्वथा कर्माऽसंभवं मनुते।

बौद्धदर्शनेऽप्यविद्याशब्देन शक्तिशब्देन वासनानाम्ना संवृतिसद् इत्यादौ संवृतिपदेन च विज्ञानस्य विविधाऽऽकारप्रकाशनशक्तेर्वर्णनम् आयाति। तादृशं वस्तु भावरूपम् अनादिप्रवाहपरम्परया प्रचलत सर्वाऽनर्थमूलम्, तद्बलाद् विज्ञानेषु नैकविधा विषयाः स्फुरन्ति। शुद्धचैतन्यं न स्फुरति। शुद्धचैतन्यस्य निराकारस्य धारैव मोक्षः। स च मायाया निरोध एव जायते। तादृशमायानिरोध एव पुरुषार्थः। सर्वस्य क्षणिकत्वाद् वासनाऽऽधारत्वेन कस्यचिद् अनङ्गीकाराच्च स्थिरं वस्तु माया नाऽस्ति, किन्तु कस्यचिद्विषयाऽनुभवस्याऽनन्तरं स्वकारणमहिम्ना विज्ञानसन्ततौ

कश्चित् प्रभावपातो जायते, 'चतुर्गुणिताः पञ्चविंशतिरि'ति समानशब्दैः प्रथमं पठतो बालस्य गणितज्ञस्य वृद्धस्य च बुद्धौ भवति विशेष इति नाऽपरोक्षं केषांचित् मनोविज्ञानपरिशीलनशालिनाम्, तस्य च प्रभावपातस्य सन्तानेऽनादितेति विपर्यासहेतुर्नुवित यावद अनुवर्तति किम् अपि अनादिभाववस्त्विति। तत्-स्थानेऽत्र मायाऽभिधानम्।

कुत्रचिद् वैष्णवदर्शने मायाशब्देन ईश्वरेच्छाऽपि व्यवहृता, यथा शुद्धाद्वैतवल्लभदर्शने शब्दस्याऽस्य बाहुल्येन प्रयोगः प्राप्यते, सा नित्या भावरूपा, तया चेच्छया मिथ्यावस्तुनोऽपि सर्जनं भवति। परं माया मुक्तौ नाऽनुवर्तते, ईश्वरेच्छा तु सनातनीति नाऽस्याः समुच्छेदः, किन्तु सहकारिशाकल्यवैलक्षण्येन न मुक्तौ मिथ्या सृष्टिः। रामानुज-दर्शनेऽपि शास्त्रीयवचसां समन्वयायाऽसकृद् अज्ञानशब्देन कर्मणां व्यवहारोऽङ्गीकृतः।

एवं च समेषु दर्शनेषु मायाया अङ्गीकारोऽवश्यं वर्तते, परं स्वरूपविचारे प्रतिदर्शनं कश्चिद् विशेषो दृश्यते एव।

> या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः,
> पापात्मनां कृतधियां हृदयेषु बुद्धिः।
> श्रद्धा सतां कुल-जन-प्रभवस्य लज्जा,
> तां त्वां नतोऽस्मि परिपालय देवि विश्वम्।

इति दुर्गासप्तशतीरीत्यानेकरूपया भगवत्या मायया कस्याऽपि सम्प्रदायस्य, धर्मस्य, दर्शनस्य, जातेः, सभ्यतायाश्च न विद्वेषः संभवति तथा च सर्वानुस्यूतत्वं मायायाः।

शाङ्कराऽद्वैत-दर्शनं स्वपरिणामिनः शुद्धस्य स्वयं प्रकाशस्याऽऽनन्दात्मकस्य ब्रह्मणोऽनादि-कालाद् आवरणम्, ब्रह्मण्यध्यस्तस्यैव स्फुरणम् अध्यासेनैव विक्षेप-शक्त्यैकस्मिन् ब्रह्मण्यनेकत्व-ज्ञानं, जीवत्वस्याऽनादेः सम्पादनम्, जीवानां भेद-विधानम्, जडात्मतया जीवानाम् अध्यासः शरीरेन्द्रियाद्यात्मना जीवानाम् अध्यासः, सत्यानृत-मिथुनीकरणम्, किमुत, ज्ञाने विषयाणाम् अध्यस्ततयैव प्रकाश इति सृष्टि-स्थिति-प्रलय-जागतिक-सर्वव्यवहारनिष्पादकत्वं मायाया अभिप्रैति।

माया हि स्वयम् अनिर्वाच्या मिथ्याऽतस्तत् तत्-कार्याण्यपि मिथ्याभूतानि, तेन तत्त्व-ज्ञानेनाऽधिष्ठान-ब्रह्म साक्षात्कारेण मायायास्तत् कार्याणां च मिथ्या-भूतानां समुच्छेदः। सतो हि सांख्य दर्शन-प्रधानस्य नैयायिकादीनां कर्मणश्च ज्ञानेन समुच्छेदो न संभवति। ज्ञानेन ह्यज्ञानस्याऽज्ञानकार्यस्य

च निवृत्तिरनुभव-सिद्धा, न ह्यन्यस्य, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' इत्यादिशास्त्राणि नाऽपूर्वं-विधायकान्यपि तु ज्ञानेनाऽन्तःकरणे आत्मनोऽध्यासस्य निवृत्तिः। ततश्च कर्मणाम् आत्मना सह सम्बन्धाऽभावाद् भोगाऽजनकत्वं तदनुवादीन्येव पूर्वोक्त-शास्त्र-वचनानि। प्रधानस्यौदासीन्ये न विश्वासः, प्रधानस्य जडतया तत्र राग-द्वेषयोरसंभवाद राग-द्वेषाभाव-रूपस्योपेक्षात्मक-ज्ञान-रूपस्य चौदासीन्यस्योपपादनाऽसंभवात्। अचेतनम् अपि प्रधानं रज्यति, उदास्ते चेति वर्णनं माया-वर्णनम् एव इति मनुते। अन्येषां वस्तुवादि-दार्शनिकानां कार्य-कारण-भावादि-दिशा व्यवहार-व्यवस्थापने यत्र यदा चाऽद्भुतत्वस्य प्रवेशस्तत्रैव तदैव च माया-प्रवेश इति पश्यति च। यथा परमाणु-कारण-वादे परमाणवः क्रिया-स्वभावा अक्रिया-स्वभावा वा ? उभयथाऽपि न सृष्टि-प्रलय-व्यवस्थायाः सम्भवः। क्रियाया आगन्तुक-कारणकत्वे प्रलय-दशायां तादृश-कारणानाम् असंभवः। तत्र यत् किम् अप्यद्भुतं वर्ण्यते तन्माया-प्रभाव-वर्णनम् एव। अघटित-घटनापटीयो वस्तु सर्वम् एव दर्शनम् अङ्गीकरोतीति भावः।

प्रत्यभिज्ञा-दर्शनं तु मायाम् आश्रयत एव किं तु शिवस्य शक्तिं मायाम् एवाऽवगच्छेदित्येव नूतनम् उक्तप्रायम् एव।

प्रत्ययवादि-बौद्धदर्शने तु सर्वं वस्तु ज्ञानाकारम् एव यथा स्वाप्निकम् इति वर्ण्यते। तत्र पर्वतं पश्यतो बालस्य हृदि पर्वतो वर्तते इति यदि कश्चित् साधयेत् तं मायावीत्येव जना वदेयुः। एवं स्वप्न इव जाग्रति गृहे बहिर्वा धूम्र-शकट्या मोहमयी-यात्रां प्रदर्शयेत् ताम् अद्भुतां मायाम् एव द्रष्टारो मन्येरन्। तथा च शशशृङ्ग-प्रायं बाह्यं वस्तु न श्रद्दधाति वेदान्ति-चेतः। अदसीय-माया-विनिर्मितानि तु जागतिक-वस्तूनि प्रत्यक्षानुमानादिप्रमाणैर्यथा यथा परीक्षकाः प्रणिगदन्ति भौतिकशास्त्रज्ञैर्वा रसायन-रसज्ञैर्मनोवैज्ञानिकैर्वा यथा व्यवस्थाप्यन्ते तानि तथैव। तत्र न कश्चिद् विरोधः। शुद्धब्रह्मसाक्षात्कारबाध्यत्व-मात्रेण तु तेषां मिथ्यात्वम् इति न तत् केचन बाधन्ते इति शम्।

माया मदीयदनीयमनोदयार्द्रा<br>
भद्राकरोति भवदारुणदुर्गदाहम्।<br>
तन्द्रा प्रयातु विलयं न लयं चितिर्मे<br>
वाचोऽर्पितास्तव-पदाब्जरजः श्रयन्ताम्॥

श्रीविश्वेश्वरानन्द वैदिकशोधसंस्थान साधुआश्रम होशियारपुर पंजाब से संचालित त्रैमासिक संस्कृतपत्र 'विश्वसंस्कृतं' में १९६७ ई०में प्रकाशित संस्कृत—

# माया सर्वदर्शनानुस्यूता

## माया सभी दर्शनों में मिली जुली है

वैदिक दर्शन सम्प्रदाय के मौलिक निबन्धों में माया का विशेपरूप से बहुत स्तोत्र है, उन निबन्धों का अनुसरण करने वाले, उनके समन्वय को चाहने वाले दर्शन माया के सम्मान के बिना प्रमाण कैसे हो सकते हैं ? इस लिये माया सभी में व्यास है, लेकिन उसके स्वरूप के प्रति दर्शनों में कुछ भेद अवश्य आता है, वह पीछे स्फुट होगा, पहले सम्प्रदाय को ही दिखाता हूँ जैसे कि श्वेताश्वतर उपनिषद् में—जिस कारण मायी परमात्मा इस विश्व की सृष्टि करता है, उसमें दूसरा जीव माया से बद्ध है। प्रकृति को माया समझों, महेश्वर को मायी समझो, माया की अवयवभूत वृत्तियों से, अथवा उस उपाधि वाले महेश्वर से यह सम्पूर्ण जगत् व्याप्त है। इति।

माया शक्ति से युक्त ही महेश्वर में संसार सृष्टि का कर्तृत्व है, शुद्ध निर्लेप चैतन्य में नहीं, प्रथम मन्त्र के उत्तरार्ध से जीवों की मायावशवर्तिता सूचित है, प्रकृष्ट करण अर्थ वाले प्रकृति शब्द से सृष्टि शक्ति, मायी को महेश्वर कहने से महा ऐश्वर्य माया प्रयुक्त बताया गया, चैतन्य केवल प्रकाश है, दूसरे प्रकार की सभी शक्ति माया है, माया के अवयव मायी में अध्यस्त हैं, इसलिये सभी जगत् मायी के भी अवयव हैं, इससे अन्तर्यामित्व आदि दिखाया गया, अविद्या शब्द से भी इसका व्यवहार है। जैसे कि—

अविद्या और विद्या ये परस्पर बहुत विपरीत चलने वाली हैं, दोनों के कार्यों में बहुत फरक है। तुम नचिकेता को विद्या चाहने वाला मानता हूँ, क्यों कि अनेक

कामनायें तुमको नहीं लुभा सकी, अविद्या के भीतर पड़े हुए अपने को धीर पण्डित मानने वाले इधर उधर कर्म मार्ग में भागते हुए वारवार जन्म मरण परम्परा में पड़ते हैं, जैसे अन्ध से ले जाये जाते हुए अन्धका वार वार पतन अवश्य होता है, महत् से उपर अव्यक्त है, और अव्यक्त से उत्कृष्ट पुरुष है। इति।

इत्यादि से अनादि बन्ध का कारण और अव्यक्त शब्द से वाच्य माया को कहा गया। ज्ञान से निवर्त्य होने से अज्ञान शब्द से भी इसका वर्णन मिलता है, जैसे कि लिङ्गपुराण में—

विचार से स्वतन्त्र या परतन्त्र में भेद न होने से सभी प्राणी का संसार अज्ञान-मूलक मालूम पड़ता है। 'पूर्णरूप से अभिव्यक्त न होने से मायामात्र हैं' इस ब्रह्मसूत्र में चैतन्य के पूर्णरूप से अभिव्यक्ति की विरोधी माया बताई गई है।

आचार्य गौड़ पादाचार्य की कारिका में इसकी बहुत चर्चा है 'आत्मा की माया से की गई अनेक प्रकार की जगत् की मिथ्या सृष्टि है' 'आत्मा में किसी प्रकार का भेद नहीं है' इत्यादि श्रुति से शुद्ध आत्मा को बताया जाता है, 'आत्मा माया से बहुरूप होता है' इस श्रुति से मायावश जगत् की विलक्षण सृष्टि बताई गई है। 'आत्मा देव अपनी माया से स्वयं अपनी अनेक कल्पना करता है' इस कारिका से एक अधिष्ठान में अनेक की कल्पना सूचित हुई। 'मायारूप स्वप्न की वस्तु और गन्धर्व नगर माया है' इससे मिथ्या वस्तु में माया शब्द का व्यवहार बताया गया। 'उन वस्तुओं का जन्म माया सदृश है, वह भी माया सत् नहीं है' इससे अनिर्वचनीय माया कही गई। इतना ही नहीं किन्तु अद्वैतसिद्धि और उसकी टीकाओं में इसका बहुत प्रकार से वर्णन है। श्रीमान् उदयनाचार्य पाप-पुण्य रूप अदृष्ट को अनेक प्रकार से सिद्ध करके माया अविद्या सहकारी शक्ति, प्रकृति इत्यादि शब्दों से अदृष्ट ही का शास्त्र में वर्णन मानकर न्याय-कुसुमाञ्जलि प्रथमस्तवक का उपसंहार किये हैं। जैसे—

जिस देव की वह अदृष्ट अनुपम सहकारी शक्ति कही गई है, कठिन कल्पना से माया, मूलकारण होने से प्रकृति, ज्ञान से निवर्त्य होने के कारण अविद्या कही गई है, इन अदृष्टों से ही सृष्टि रचना का कोलाहल है, इनके बिना भगवान् शान्त साक्षात् द्रष्टा सर्वसाक्षी हैं, वे भगवान् मेरे मनमें भक्ति को परिपुष्ट करें, इति।

जीवों के किये हुए कर्मों के फल भोग के लिये ही सृष्टि होती है, परमेश्वर भी जीव के अदृष्ट के विना सृष्टि और संहार करने में समर्थ नहीं है, इसलिये कर्म ईश की अनुपम सहकारी शक्ति है, उसी का दूसरा नाम माया है, लोक में भी कठिनाई से समझने लायक अद्‌भुत वस्तुओं में मायाशब्द का प्रयोग होता है, वैसा अदृष्ट भी है, प्रकृति सृष्टि करती है, प्रकृति जगत् का कारण है, ऐसा जहाँ तहाँ आता है, आदि कारण में प्रकृति शब्द का प्रयोग होता है, अदृष्ट भी सृष्टि का मूल कारण है, जो विद्या से नष्ट किया जाता है उसको अविद्या कहा जाता है, 'ज्ञानरूप अग्नि सभी कर्मों को भस्म कर देता है', इत्यादि गीता में कहे गये भगवान् कृष्ण के वचन से ज्ञान द्वारा कर्मों का भी विनाश माना जाता है, इसलिये अदृष्ट को भी अविद्या कह सकते हैं।

अदृष्ट से भिन्न संसार आदि अनर्थ के कारण प्रवाहरूप से अनादि मिथ्याज्ञान को भी नैयायिक कहे हैं। उसमें भी वेदान्तियों के ऐसा मायाशब्द का अधिक उपयोग है, उसी प्रकार 'दुःख जन्म प्रवृत्ति' आदि न्याय सूत्रों में युक्ति के साथ मिथ्याज्ञान को सभी अनर्थ का कारण कहा गया है। श्रीशाङ्कर शारीरक अध्यासभाष्य में भी अध्यास का विशेषण 'मिथ्याज्ञाननिमित्तः' इसमें वही मिथ्याज्ञान शब्द दिया गया है, उस पर कोई-कोई व्याख्याता मिथ्या + अज्ञान ऐसा पदच्छेद करके मिथ्याभूत अविद्या माया इत्यादि वर्णन करते हैं। उस प्रकार न्याय और वेदान्त में अध्यास या भ्रम प्रतीति का कारण, सत्य और मिथ्या का मिश्रण करने वाला, अनादि भावरूप, तत्त्वज्ञान से विनाश्य मिथ्याज्ञान समान है। अनादि प्रवाह में पड़े हुए फल पैदा करने में समर्थ कर्मों के फल भोग के लिये ही सृष्टि है इस प्रकार माया को अदृष्ट कहना यह भी समान ही है, मिथ्याज्ञान और कर्मों में तीन चार क्षण आदि तक रहना फरक हो, किन्तु प्रवाहरूप से अनादि होना मायापदप्राप्ति के लिये पर्याप्त है। अथवा मिथ्याज्ञान की दृढ स्थिर वासना मायापद को पावें।

यद्यपि शरीर आदि में 'मैं' 'मेरा' इत्यादि अनेक प्रकार के अध्यास के विना कोई शरीर आदि से चेष्टा नहीं करता, श्रीशाङ्कर शारीरक भाष्य आदि में इसका उपपादन है, शरीर आदि से भिन्न आत्मा मानने वाले नैयायिक आदि भी शरीर आदि में 'मैं मेरा' इत्यादि अध्यासमूलक ही चेष्टा कहेंगे, उस प्रकार कर्मों से पहले अध्यास

और उसका कारण माया आती है तब कर्म मायापद के योग्य नहीं हो सकते, ऐसा कहने पर कहने का अवसर है कि शरीर आदि के पैदा होने पर अध्यास होगा, शरीर आदि के कारण कर्म पहले हैं, इससे अध्यास से पहले ही कर्म रहता है, अध्यास के जो लक्षण शारीरक भाष्य आदि में लिखे गये हैं वे नैयायिकों के मिथ्याज्ञान में ठीक समन्वित होते हैं।

वेदान्त विरोध को नहीं चाहते हुए भी श्रीनागोजी भट्ट वैयाकरण सिद्धान्त लघु-मञ्जूषा में बौद्धार्थनिरूपण में आधुनिकों से स्वीकृत माया के स्वरूप का खण्डन करते हुए, तथा सूत्र-भाष्य-भामती-कल्पतरु आदि के सन्दर्भों का समन्वय करते हुए अनादि परम्परा से चलती हुई मिथ्याज्ञान और उसकी वासना ही माया या अविद्या है ऐसा सिद्धान्त किये हैं। उस प्रकार कितने वेदान्ती भी मिथ्याज्ञान रूप मायावादी हैं ऐसा कहता हुआ अपराधी नहीं है। मिथ्याज्ञान के साधक इन्द्रियाँ अध्यास के बिना नहीं होती; इसलिये मिथ्याज्ञान से पहले अध्यास का स्थान है, ऐसा कहना ठीक नहीं है, अध्यास मिथ्याज्ञान रूप है, पहले रहने वाला मिथ्याज्ञान इन्द्रिय आदि का प्रवर्तक है, जानता है, तब चाहता है उसके बाद प्रवृत्त होता है। ऐसा क्रमिक सिद्धान्त है, पहले प्रवृत्ति मानने पर उस सिद्धान्त का व्याकोप हो जायेगा। और कहीं इन्द्रिय आदि की स्वतः प्रवृत्ति मानी भी नहीं जाती।

वेदान्तसम्मत माया का विक्षेप शक्ति वाला कार्य सांख्य दर्शन में स्वतन्त्र प्रधान सिद्ध करता है। किन्तु विवेक ख्याति से माया के ऐसा प्रधान का उच्छेद नहीं होता, उदासीनता मात्र होती है, माया का आवरण कार्य तो तमोगुण का कार्य है। तमोगुण भी प्रधान ही है, गुणों की पृथक् प्रवृत्ति नहीं होती, उस प्रकार प्रकृति ही मायापद को अलङ्कृत करे, प्रकृति की मुक्तों के प्रति उदासीनता तो माया से वैसा भेद नहीं कर सकती, वेदान्त में भी जब माया एक है, जीव अनेक हैं, क्रमिक मुक्ति है, तब माया में भी वैसी उदासीनता के सदृश कुछ अवश्य मानना पड़ेगा ? इस प्रकार माया सदृश कुछ वस्तु और दार्शनिकों को भी अभिमत है, ऐसे विलक्षण वस्तु स्वीकार का भार केवल वेदान्त सम्प्रदाय ही पर नहीं है।

सांख्यों के व्यवहार विषय अविवेक तो माया का स्थान नहीं पा सकता, नञ् के अर्थ से घटित है, और सत्त्व और पुरुष के भेद ज्ञान का अभाव है, विवेक से अज्ञात

प्रकृति चैतन्य के आवेश को पाती है, उसके बाद प्रवृत्ति को करती है, विभिन्न रूप से ज्ञात प्रकृति चैतन्य से उदासीन होकर नहीं प्रवृत्त होती, ऐसा सिद्धान्त है ?

अभावरूप अविवेक का भावरूप जगत् का जनक होना अद्भुत नहीं है, क्योंकि वह निमित्त कारण है, प्रकृति उपादान कारण है, अभाव को उपादान होने ही में सिद्धान्त का विरोध है, निमित्त कारण तो होता ही है, दूसरे लोग अविवेक को भाव भी मानते हैं, इसीलिये अविवेक ख्याति शब्द से भावरूप से भी उसका उल्लेख आता है, दूसरी जगह प्रकृति पुरुष या बुद्धि पुरुष का एक संवेदन ऐसा आता है, जो अविवेक अवस्था का बोधक है, तथा भाव रूप बताता है। योगसूत्र में भी भावरूप ख्याति विशेष को ही अविद्या नाम दिया गया है, और माया के ऐसा अविद्या को भी सभी अनर्थ का कारण तथा विवेक ख्याति से निवर्तनीय कहा गया है, इस प्रकार सांख्य का अविवेक और योग की अविद्या माया के दूसरे नाम के ऐसा मालूम पड़ते हैं।

प्रत्यभिज्ञा दर्शन की माया अद्वैत वेदान्त की माया के सदृश है, 'कला आदि तत्त्वों का अविवेक माया है' यह शिव सूत्र का अभिप्राय है, अविवेक माया कही गई है, यह अविवेक सांख्यों के अविवेक के ऐसा है, शिवस्वरूप चैतन्य से स्वातन्त्र्य वश पैदा हुए जड़ों में उपादान शिवस्वरूप की स्फूर्ति न होना अविवेक का कार्य बताया गया है। उससे अहम् अंश चैतन्य से इदम् अंश जड़ का पृथक् अवभास होता है, उससे द्वैत की स्फूर्ति होती है, चैतन्यांश को सभी में व्याप्ति का क्रमशः संकोच होने लगता है ऐसा तात्पर्य है। अद्वैत वेदान्त की माया का अविवेक से साम्य इस प्रकार दिखा सकते हैं कि— सत्य और मिथ्या को जोड़ना, जड़ों में शिव स्वरूप की स्फूर्ति न होने से अधिष्ठान शिव का आवरण, इससे आवरण शक्ति की सूचना है। शिव और जड़ का पृथक् अवभास से एक शिव में अनेक रूप का विकाश जिससे विक्षेपशक्ति की सूचना है। फरक यह है कि—जड़ वर्गों में शिवस्वरूप की स्फूर्ति के रुकावट से शुरू करके उसके बाद माया का कार्य प्रत्यभिज्ञा दर्शन बताता है, उसके पहले के 'अहन्' 'अहम् इदम्' स्फुरणों का विमर्श शक्ति से तथा शुद्ध विद्या तत्त्व से निर्वाह करता है, वेदान्तरीति से विमर्श शक्ति का कार्य भी माया का कार्य है, स्वप्रकाश चैतन्य स्वरूप शिव में स्वतः स्फुरणक्रिया संभव नहीं है। शक्ति माया ही है। यह फरक भी इतने से है कि प्रत्यभिज्ञा

दर्शन चैतन्य में क्रियाशक्ति को मानता है, शाङ्कर दर्शन तो चैतन्य में सर्वथा कर्म असंभव कहता है।

बौद्ध दर्शन में भी अविद्याशक्ति वासना संवृति आदि शब्दों से विज्ञान के अनेक आकार के प्रदर्शक शक्ति का वर्णन आता है, वैसा वस्तु भावरूप है, अनादि प्रवाह से चलता आता हुआ सभी अनर्थों का कारण है। उसी के कारण विज्ञानों में अनेक प्रकार के विषयों के आकार भासते हैं, शुद्ध चैतन्य स्वरूप विज्ञान नहीं भासता, निराकार शुद्ध चैतन्य की धारा ही मोक्ष है। वह माया का निरोध होने पर होता है, ऐसा माया का निरोध ही पुरुषार्थ है, सभी वस्तु क्षणिक है, वासना का आधार कुछ स्थिर नहीं माना जाता, इसलिये माया भी स्थिर वस्तु नहीं है, किन्तु किसी विषय के अनुभव के बाद आगे के विज्ञानों में उस पूर्व अनुभव का कुछ प्रभावपात होता है, वह अपने कारण की महिमा से आगे सन्तान में चलता है, उसी विशेष प्रभाव को वासना कहते हैं, पाँच चौके बीस इस एक आकार वाले शब्द को सुनते हुए बालक और गणितज्ञ वृद्ध का ज्ञान एक सा नहीं होता, दोनों के पहले के अनुभव भिन्न हैं, और अपने पूर्व अनुभवों का उसपर प्रभाव है, यह मनोविज्ञान के परिशीलनशील सुधिओं का परोक्ष नहीं है। वह प्रभावपात सन्तान में अनादि है, इसलिये भ्रम का कारण मोक्ष तक चलने वाला कोई प्रवाह से अनादि भाव वस्तु है, उसी स्थान पर यहां माया का कथन है। कहीं पर वैष्णव दर्शन में माया शब्द से ईश्वर की इच्छा का व्यवहार है, जैसे शुद्धाद्वैत वल्लभ दर्शन में इसका बहुत व्यवहार मिलता है, वह नित्य भावरूप है, उससे मिथ्या वस्तु की भी सृष्टि होती है, उस प्रसिद्ध माया का मुक्ति में सम्बन्ध नहीं होता किन्तु उच्छेद हो जाता है, ईश्वर की इच्छा माया जो सनातन है उसका उच्छेद नहीं होता। किन्तु सहकारी विशेष का समवधान न होने से मुक्ति में मिथ्या सृष्टि नहीं होती।

रामानुज दर्शन में भी माया स्वतन्त्र पदार्थ न मानकर शास्त्रीय वचनों के समन्वय के लिये बार-बार अज्ञान शब्दो से कर्म का व्यवहार किया गया है।

जो पुण्यशालियों की श्री है, जो पापियों के घर में अलक्ष्मी दारिद्र्य है, जो संयतमन वालों के हृदय में बुद्धि है, सज्जनों की श्रद्धा, कुलीनों की लज्जा है, उस तुम

देवी को प्रणाम करता हूँ, हे देवि, संसार की रचा करो। इस दुर्गा सप्तशती की रीति से अनेक रूप वाली भगवती माया से किसी भी सम्प्रदाय, धर्म, दर्शन, जाति और सम्यता का विद्वेष नहीं संभव है। इसलिये माया सभी में जुटी हुई है।

शाङ्कर अद्वैत दर्शन तो माया का बहुत काम मानता है—अपरिणामी शुद्ध स्वयं-प्रकाश और आनन्द रूप ब्रह्म का अनादिकाल से आवरण करना, ब्रह्म में अध्यस्त ही का स्फुरण, अध्यास से ही विक्षेपशक्ति द्वारा एक ब्रह्म में अनेक का दर्शन, अनादि जीवों का स्वरूप सम्पादन, जीवों का परस्पर भेद करना, जीवों का जड़ अन्तःकरण में अध्यास, जीवों का शरीर इन्द्रिय आदि में अध्यास, सत्य और मिथ्या को जोड़ना, और क्या ? विषयों का ज्ञान में अध्यस्त रूप से प्रकाश, इस प्रकार सृष्टि, स्थिति, प्रलय और जगत् के सभी व्यवहारों का सम्पादक माया है, ऐसा चाहता है।

माया स्वयं अनिर्वचनीय मिथ्या है इसलिये उसके कार्य भी मिथ्या हैं, इससे तत्त्वज्ञान अधिष्ठान ब्रह्म के साक्षात्कार से मिथ्याभूत माया और उसके कार्यों का समुच्छेद हो जाता है, सांख्यदर्शन का प्रधान और नैयायिकों का कर्म सत् है, इसलिये तत्त्वज्ञान से उनका समुच्छेद संभव नहीं है, ज्ञान से अज्ञान और उसके कार्यों की निवृत्ति में अनुभव प्रमाण है, दूसरे की निवृत्ति में नहीं, ज्ञानरूप अग्नि सभी कर्मों को भस्म करता है, इत्यादि शास्त्र वेदान्त मत में अपूर्वविधायक नहीं हैं, किन्तु प्रकारान्तर से सिद्ध का अनुवादक हैं, ज्ञान से आत्मा और अन्तःकरण का अध्यास हट जाता है। उससे कर्मों का आत्मा से सम्बन्ध छुट जाता है, इसलिये कर्म आत्मा के भोग को नहीं कर पाते। प्रधान की उदासीनता भी विश्वास के लायक नहीं है, चेतन में अनुराग-विराग-उदासीनता आदि संभव नहीं हैं, प्रधान जड़ है, राग और द्वेष को नहीं करने वाला उपेक्षारूप ज्ञान औदासीन्य होगा, वह जड़ प्रधान में कैसे हो सकता है ? अचेतन प्रधान में राग और उदासी का कथन माया के वर्णन के ऐसा मालूम पड़ता है। दूसरे वस्तुवादी दार्शनिकों के कार्य-कारणभाव की रीति से व्यवहार की व्यवस्था करने पर जहाँ जब वैलक्षण्य अद्भुतत्व का प्रवेश होता है वहीं उस समय माया का प्रवेश शाङ्करअद्वैतदर्शन मानता है। जैसे कि परमाणु कारणतावाद में परमाणु क्रिया स्वभाव वाले हैं या अक्रिया स्वभाव वाले हैं ?, दोनों प्रकार से सृष्टि और प्रलय की

व्यवस्था नहीं संभव है। आगन्तुक कारण मानने पर प्रलय दशा में वैसे कारणों का संभव नहीं है, वहाँ जो कोई अद्भुत का वर्णन करेंगे वह माया का ही वर्णन होगा। अघटित घटना में समर्थ कोई वस्तु को सभी दर्शन स्वीकार करते हैं, यही भाव है।

प्रत्यभिज्ञा दर्शन तो माया का आश्रय लेता ही है, माया को ही शिवशक्ति समझें, इतना ही नया प्रायः कहा जा चुका है।

प्रत्ययवादी बौद्ध-दर्शन में सभी वस्तु ज्ञानाकार हैं, जैसे स्वप्न की वस्तुएँ इत्यादि वर्णन किया जाता है। वहाँ पर्वत को देखते हुए बालक के हृदय में पर्वत है ऐसा यदि कोई सिद्ध करें तो उसको लोग मायावी ही कहेंगे, इसी प्रकार स्वप्न के ऐसा जागरण में घर या बाहर रेल से बम्बई की यात्रा यदि कोई दिखावें तो उस अद्भुत को देखने वाले माया ही मानें। उस प्रकार वेदान्ती का चित्त शशशृङ्ग प्रायः वस्तुओं में श्रद्धा नहीं करता, इसकी माया से बनी हुई जगत् की वस्तुएँ प्रत्यक्ष-अनुमान आदि प्रमाणों से परीक्षक जैसी समझें, वैसी ही हैं, भौतिक विज्ञान के विद्वानों से, रसायन-शास्त्र के रसज्ञों से, और मनोवैज्ञानिकों से जैसी व्यवस्था की जाय वे वैसी ही हैं, उसमें कोई विरोध नहीं, शुद्ध ब्रह्म साक्षात्कार से बाध्य होने के कारण वे सब मिथ्या हैं, उसमें कोई बाधा नहीं देता। इति शम्।



वाराणसेयसंस्कृतविश्वविद्यालय सञ्चालित त्रैमासिक संस्कृत-पत्रिका सारस्वतीसुषमावर्ष ११ अङ्कौ ३–४ संवत् २०१३

प्रकाशनतिथिः मार्गशीर्ष पूर्णिमा संवत् २०१५

उमासहायोऽप्यनुमाप्रतीतः स्वयंप्रकाशः शिरसीन्दुभासः।
अगङ्गतोयः श्रितगाङ्गतोयो भवान्तकः स्यात्सभवोरुजो मे॥ १॥
दृष्टिसृष्टिपरदर्शनमार्गं दुर्गमं कथमपि प्रगतस्य।
जायतां मम गुरोः पदपांशुस्तारणाय ननु भालसुधांशुः॥ २॥

# दृष्टिसृष्टिवादः

## प्रथमा व्यापिका दृष्टिसृष्टिः

दृष्ट्या भोग्यस्य विषयस्य जगतः सृष्टिः। उपभोगसाधनं विषयः। सर्वमपि कार्यजातं साक्षात्परम्परया वोपभोगं जनयतीति नैयायिकभणितिः। विषयता भोगजनकता विषयेषु दृष्टिप्रयुक्ता। जीवानां सांसारिकपदार्थानां विलक्षणग्रहणमेवोपभोगजनकमिति यावत्। कार्यजनकमदृष्टमपि दृष्टिद्वारेणैवोपभोगजनकम्। 'अज्ञातोऽपि वह्निर्दहति' प्रभृतिप्रवादोऽप्यापातत एव विरोधी; दाहदृष्टेः शरीरात्मदृष्टेश्च सत्त्वात्।

## मूलम्

मूलमस्य नान्वेषणीयमास्ते, भारतीयसंस्कारेष्वस्य प्ररूढत्वात्। 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इत्यस्य यन्मूलं तत्सर्वमस्य मूलम्। चार्वाकाणामाधुनिकमनोविज्ञानप्रणयिनां मस्तिष्कवादो वा मन आत्मवादो स्यात्, नात्र जीवात्मस्वरूपविवेचनं प्रक्रान्तम्। यत्किञ्चिद्वाऽस्तु जीवस्वरूपम्, मनःसारत्वं तु तस्य सर्वत्र—"मनोमयो भारूपः", "प्राणबन्धनं हि सौम्य मनः" इत्यादिश्रुतेः, "मनआख्या जीवरूपता" इत्यादिशाङ्करभाष्याच्च।

जीवानां विषयेषु विलक्षणा अननुगम्या अनन्ता दृष्टयः। कासाञ्चिदेव दर्शनेष्वनुगमः। भोगस्य सुखदुःखान्यतरसाक्षात्कारत्वेन यद्यप्यनुगमो वर्तते, तथापि सुखदुःखजनकत्वं दृष्टीनामननुगतमेव।

## लौकिकव्यवहारे स्थानम्

लौकिकव्यवहारेषु सूक्ष्मेक्षिकयाऽयं दृष्टिसृष्टिप्रकारोऽवलोक्यताम्। चिरान्मित्रतां गतोऽपि कदाचन शत्रुर्भवति, तत्र मित्रत्वशत्रुत्वे प्रति निरूपकजीवदृष्टिं विना किं दृष्टं कारणमित्यालोच्यताम्। विशेषाचरणमिति चेन्न, तत् सर्वत्र तथा करोति। आचारगताऽनुकूलता प्रतिकूलता वा जनिकेति चेत्, वेदनामन्तराऽनुकूलत्वादि कमनुगम्यताम्। नात्र विस्तरस्यावसरः। साहसं क्रियताम्। मानसिकपदार्थप्रवेशमन्तरा शत्रुत्वमित्रत्वादिपरिष्कारे विफलतायां जीवेन मनसा दृष्ट्या वा सर्वमिदं सृष्टमित्यवधार्यताम्। एवमेव पुत्रत्वपितृत्वभ्रातृत्वादिकमपि दृष्टिसृष्टमालोचनीयम्।

## काव्यनाटकादिषु स्थानम्

काव्यनाटकादिषु रसास्वादप्रक्रियाऽपि दृष्टिविलसितैवावधार्यताम्। विभावादीनां शब्दार्थयोर्वा भावना दृष्टिप्रकार एव। साधारणीकरणव्यापारेणाप्यगम्यत्वप्रयोजिका दृष्टिरपसार्यते, रतिप्रयोजिका विलक्षणा दृष्टिः पुरस्क्रियते। आलोक्यतां पण्डितराजजगन्नाथस्य मानसिकनिश्चयघटित आलम्बनकान्तात्वादिपरिष्कारः।

## दर्शनेषु स्थानम्

सोऽयं दृष्टिसृष्टिवादः प्राच्यपाश्चात्यसकलदर्शनवनीविहरणशीलो दर्शनराज इति किञ्चित् सूचयामि। तत्र भारतीयदर्शनानां बन्धमोक्षविवेचनोद्देश्यतया प्रवृत्तेस्तत्रायं स्फुटमवभासेत, ममाल्पपरिचितेषु विभिन्नोद्देश्यतया प्रवृत्तेषु पाश्चात्यदर्शनेषु चात्यल्पमेव स्फुरेत्।

तथा च न्यायवैशेषिकयोः—शरीरादिष्वात्मदृष्टिर्बन्धकारिणी, अनात्मदृष्टिश्च मोक्षहेतुः। शास्त्रोपदेशेन दृष्टिसृष्टमात्मत्वं विनाश्यते, अनात्मत्वं सृज्यते। न तत्त्वज्ञानेन शरीरादीनि जीवन्मुक्तस्य विनश्यन्ति, अपि तु पूर्ववदेव तिष्ठन्ति, केवलं दृष्टिसृष्टं परिवर्तते; एवमेव शरीरादिषु दुःखत्वभावनोपदिश्यते शास्त्रेण, तत्रानादिवासनावशसुखसाधनत्वदृष्टी-

रागादिदोषजनिकाऽपसार्यते, दुःखसाधनत्वदृष्टिश्च वैराग्यजनिका पुरस्क्रियते। अत एव विरक्तस्य तत्त्वज्ञस्य जीवन्मुक्तस्य शरीरादिस्वरूपं किञ्चिन्न परिवर्तते, केवलं वस्तुग्रहणस्य रूपमेव विलक्षणं जायते।

सांख्येऽपि वाचस्पतेर्वचो विविच्यताम् एकैव नायिका सत्त्वपरिणामेन कञ्चित् सुखयति, राजसेन परिणामेनान्यं दुःखाकरोति, अपरं च तामसेन मुग्धं सम्पादयति। तत्रापि सात्त्विकत्वादिकं दृष्टिगतमेव वैजात्यं सुखादिप्रयोजकमन्तत आयाति।

वेदान्तेऽप्यहंममादिविभिन्नाध्यास एव सर्वानर्थमूलम्, तत्तदध्यासनिवृत्तिश्च पुरुषार्थ इति स्फुटमेव। अध्यासश्च मिथ्यादृष्टिरेव।

बाह्यास्तित्ववादिबौद्धानामपि "दर्शनहेयाः, भावनाहेयाः" इत्यादिना विविधाः क्लेशा वर्णिता सन्ति। तत्र हानं न संयोगादिसंबन्धविनाशेन पार्थक्यादिकरणं संभवति, अपि तु दृष्टिपरिवर्तनमेव। अत एव बुद्धस्य भगवतः केवलज्ञानात् प्राग् यथा संसारः प्रावर्तत, तथा केवलज्ञानानन्तरमपि। अत एवाज्ञजनान् वीक्ष्योपदेशाय करुणा समुदैत। केवलमयमेव विशेषो यत्प्राग्यथा प्रभावस्तस्य चेतसि जगतस्तथा न बोधानन्तरमिति दृष्टिविलास एव।

एषा च व्यापिका दृष्टिसृष्टिर्दृष्टिरेव भोगसृष्टिकरीत्यभिप्रायेण वर्णिता। बाह्यं जगत् प्राकृतिकमीशसृष्टं यथा साधारणम्, तथाऽस्तु विशेषभोगसंपादिका जीवदृष्टिरेव। यथा नानाविधपुष्पपल्लवादिपरिपूर्णविरुद्धिटपादिसमृद्धवाटिकायां साधारणरूपायां पृथग्जनस्य, वनस्पतिविज्ञानविज्ञस्य कवेश्चावलोकने साधारणं नेत्रमालोकश्च, परं दृष्टिभेदोऽवश्यं जायते, ततश्चेतसि प्रभावविशेषश्च; तथैव साधारणे वस्तुनि जीवानां विभिन्ना दृष्टिर्नानाभोगं जनयति।

## द्वितीया दृष्टिसृष्टिः

ततः परमिदमालोचनीयं यत् साधारणे वस्तुनि विशेषदृष्टिः कथमुदियात्? समानालम्बनतया समानैव युज्यते। विशेषालम्बनतया यदि विशिष्य दृष्टिस्तदा स विशेषः कस्य? यदि विषयस्य, तदा साधारण एव सर्वजनग्राह्यः कथं जीवभेदेन दृष्टिं विशेषयेत्? एवं समस्यायां द्विधा भारतीयदर्शनशैली—प्रथमा वेदान्तिवाचस्पतिमिश्रस्य। नाना जीवाः, जीव एव जगदुपादानम्, जीवभेदेन नाना जगत्, स्वसृष्टमेव स्वेन सृज्यते, दृष्टि-

भेदेन सृष्टिरिति दृष्टिसृष्टिः। विषयगत एव विशेषः, विशेषविषयालम्बना च विशेषदृष्टिः।

अस्योपपादनं तु ब्रह्मविषयकमज्ञानं जीवे, अज्ञानस्य परिणामो जगज्जीवे तिष्ठेत्। जीवनिष्ठविद्यया जीवगताज्ञानस्य ब्रह्मविषयकस्य विनाशात् तत्कृतसंसारविलयाद् बद्धमुक्तादिव्यवस्था, शुकादीनां मुक्तिश्रवणम्, "तद् यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" इत्यादिश्रुतिश्च यथावदुपपद्यते। परमेश्वरकृतसृष्ट्युत्पादनपरकश्रुतीनां जीवगताज्ञानविषयतया जीवाधिष्ठानतया वा नेयता। क्वचित् सृष्टिपरकवाक्य आत्मपदं जीवपरमेव। स्वाप्निकसृष्टिर्यथा जीवोपादानिका, तथा जागरसृष्टिरपि। जीवस्य ज्ञेयताबोधिका अपि श्रुतयः—"न वाचं विजिज्ञासेद् वक्तारमेव विजानीयात्" इत्यादयः। याज्ञवल्क्यवाक्येऽपि जीवात्मैव द्रष्टव्यत्वेनोपदिश्यते, तस्यैव पत्नीपतिकामादिसंबन्धोपपत्तेः।

अत्र मूलं तु स्वप्नानन्तरं बोधे जीवात्मनः प्राणादिसकलप्रपञ्चसृष्टिश्रुतयः, "पुरत्रये क्रीडति जीव एव ततस्तु जातं सकलं विचित्रम्" इति श्रुतिः, "तस्यैव नित्यतृप्तस्य सदानन्दमयात्मनः। अविच्छिन्नस्य जीवस्य संसृतिः कथ्यते बुधैः।" इत्यादिस्मृतयश्च। जीवसृष्टिपराण्याचार्यवचांसि प्रसङ्गत उदाहरिष्यमाणान्यप्यत्र योज्यानि। मनोमयसृष्टिपराण्यपि प्रमाणान्यत्र साधकानि।

यद्यपि कतिपयवेदान्तिभिरेकजीववादपक्ष एव दृष्टिसृष्टिवादः समुपपादितः, परमन्यैर्वादविशेषमपुरस्कृत्य जीवसृष्टिपक्षं वा पुरस्कृत्यायं वादः सामान्येन व्याख्यातः। मम च कस्मिन् दर्शने कीदृशी दृष्टिसृष्टिरित्यन्वेषणे प्रवृत्तस्य सर्वत्रैव दृष्टिसृष्टिमालोचयतो नेदमप्रासङ्गिकं संभवति, जीवभेदेन प्रपञ्चनानात्वे दृष्टिसृष्टेरवश्यमुल्लासात्। नैयायिकैर्ग्राहकभेदेन द्वित्वादीनां नानात्वमङ्गीक्रियते, तदाऽपेक्षाबुद्धिजन्यत्वमपि स्वीक्रियते। अस्यैव नानाजीववादस्य व्याख्यातॄणां नाना व्याख्या—एक एव प्रपञ्चः, नाना प्रपञ्चः; क्रमिकसृष्टिः, युगपत्सृष्टिरित्यादिः; तथैव ममापि मतान्तरमवसेयम्। तथा चेयं द्वितीया दृष्टिसृष्टिः।

## तृतीया दृष्टिसृष्टिः

नानाजीववादे विषयगत एव विशेषस्तदा विषयेण साकं समेषां पृथग्जनादीनां समाने सन्निकर्षे कथं न सर्वैः सकलो विशेषो गृह्यते। जीवेन

स्वसृष्टमेव गृह्यते, न च सकलो विशेषो जीवैः सर्वैः सृष्ट इति चेद् जीवेन सृष्टं तद् बहिः सृष्टमिति कुत आयातम्? जीवेन स्वान्तरेव सृष्टमित्येव स्यात्, आन्तरस्य जीवस्य बहिः संबन्धासंभवात्; तथा च जीवेन स्वान्तरेव सृज्यते। जीवो दृष्टिर्बुद्धिर्वा। बुद्धिगत एव बौद्धो विशेषः। तस्याः सृष्टिश्च वासनाद्वारा विलक्षणदृष्टिसमुत्थापकत्वम्। वासना चातीन्द्रियो धर्मविशेषो योगाचाररीत्या दृष्टयन्तरं वा।

मन्यतां च युक्तमिदम् – समेषां पूर्वोक्तां वाटिकामवलोकयतां प्रणिहितमनश्चक्षुरालोकाः समानाः। को विशेषकः स्याद् दृष्टेर्विज्ञानविदः कवेर्वा, वासनाविशेष एव विशेषः स्यात्। मनसो वासनाया वा विशेषकत्वे बौद्ध एव विशेषः समायाति। तथा च दृष्टेरेव स्वेन स्वाकारस्य ग्रहणम्। दृष्टया दृष्टिगतैव सृष्टिरिति तृतीया दृष्टिसृष्टिः।

अत्र च दर्शने सर्वं प्रायो योगाचाररीत्या। योगाचारेण बहिर्वस्तु नाङ्गीक्रियते, सर्वं बौद्धमेव मन्यते। अत्र दर्शने च बहिरपि वस्तु वर्तते, आन्तरमपि। परं गृह्यते आन्तरमेव। बाह्यसंवादात् तस्य ग्रहणस्य प्रामाण्यमुपपद्यते विसंवादाच्च भ्रमत्वम्। नात्र लघौ निबन्धे विस्तरस्य स्थानम्। नागेशभट्टकृतवैयाकरणसिद्धान्तलघुमञ्जूषायां बौद्धार्थनिरूपणे सम्यगुपपादितमास्ते। समानाधिकरणौ बौद्धावेव शक्तशक्यार्थौ। ज्ञानेच्छाकृतीनां बौद्धार्थसमानविषयकत्वेन कार्यकारणभावः। विकल्पज्ञाने बौद्धार्थ एव विषयीक्रियते। प्रतीतविषयकनलादीनां बौद्ध एव शक्तिग्रहो बोधश्चेति समुपपादितमास्ते।

अस्यास्तृतीयदृष्टिसृष्टेः पाश्चात्यकाण्टदर्शनेऽपि स्थानं पश्यामि। तथा हि—प्रत्ययवादि प्रत्यक्षवादि च वैक्रम्यामष्टादश्यामेकोनविंश्यां च शताब्द्यां वर्तमानं जर्मनदेशीयमिदं दर्शनम्। अस्ति ज्ञानातिरिक्तं वस्तुरूपमेकरसं तथाताशब्देनानूद्यमानम्। तथाशब्दात् तल्प्रत्ययेन तथाताशब्दः। तस्य ज्ञानं बोधो मानसम्। प्राथमिकं ज्ञानं देशकालावच्छिन्नं साक्षाच्छब्देन व्यपदेश्यस्वरूपम्, तदनन्तरं च सविकल्पस्थानीयं हिन्द्यां समझशब्देन संस्कृतेऽवगमादिशब्देन व्यपदेशार्हं ज्ञानान्तरम्, येन वस्तु ज्ञातमिति क्रियते व्यवस्थाप्यते। ज्ञातमपि वस्तु मानसमेव। व्यवस्थाव्यवस्थितो विशेषश्च मानस एव। पूर्वोक्तं वस्तु त्वज्ञेयमेव। अज्ञेयवादोऽपि दर्शनस्य नामान्तरम्। व्यवस्थानामनुगमाय प्रथमं सामान्यतो गुणः परिमाणं प्रकारः संबन्ध इति चतस्रः प्रतिज्ञा उच्यन्ते। प्रत्येकं त्रिप्रकारतया ता द्वादश भवन्ति। गुणव्यवस्थयास्तित्वनास्तित्वानन्तत्वानि संगृह्यन्ते, परिमाणेनै-

कत्वबहुत्वपूर्णत्वानि, प्रकारेण निश्चितत्वानिश्चितत्वस्थिरत्वानि, संबन्धेन च वस्तुगुणयोः कार्यकारणयोः पारस्परिकश्च संबन्धविशेषः कवलीक्रियते। इमे सर्वे विशेषा मानसा एव। हिन्ध्याः समीक्षकाणां लेखेषु कपिलमतसाम्यमस्य दर्शनस्येति पश्यन् कदाचन बुद्धिरूपं मनः परिणामशालि विषयाकारताग्राहीति कलयामि, परं स्फुटं वक्तुं सामग्रीं न लभे। अज्ञेयं वस्तु किमर्थमङ्गीक्रियत इति न जानामि। तथापि गुणपरिणामादिविशेषा मानसा बौद्धा बाह्यास्तित्ववादिनाऽप्यङ्गीक्रियन्ते, तदा पूर्वभारतीयदर्शनसाम्यं बिभर्तीति दृष्ट्या जातां दृष्टिगतां सृष्टिमवद्योतयति, अत उदाहार्षम्।

## चतुर्थी दृष्टिसृष्टिः

सृष्टं सृष्टिरिति बाहुलकात् कर्मणि क्तिन्। दृष्टिरेव सृष्टिः। सृष्टं वस्तु दृष्टिरूपमेव। न तु दृष्टिभिन्नं वस्तु सृज्यते सृष्टं वा। ज्ञानाकारमेव वस्तु न ज्ञानातिरिक्तम्। एकस्यैव ग्राह्यत्वं ग्राहकत्वं चाङ्गीक्रियते वास्तविकमिति योगाचारपथः। सत्त्वं ज्ञानतादात्म्यम्। सर्वं बुद्धिरूपम्, बुद्ध्या गृह्यमाणत्वात्। बाह्येन ग्राह्येणान्तरस्य ग्रहणस्य भिन्नदेशतया संबन्ध एव न संभवति, तदा कथं स्याद् बाह्यस्य ग्राह्यत्वम्। बाह्यवस्तुस्वीकारे यद्यान्तरेण ग्रहणं न संभवति, तदा तस्य स्वीकार एव मुधेति सर्वमान्तरमेव। वेदान्तिनो ज्ञानविषययोः संबन्धविषये बहुधा विचारयन्ति, न्यायसांख्ययोर्विषयविषयिभावं विषयाकारपरिणामादिकं खण्डयित्वा ज्ञाने विषयस्याध्यासिकं संबन्धमुररीकुर्वन्ति। तादृशं च चितोऽविद्यायाः परिणामः, चितोऽधिष्ठानत्वम् अध्यस्तस्यानिर्वचनीयत्वमित्यादिकल्पनायां गौरवाद् बुद्ध्यन्तर्गतमेव सर्वो ज्ञानज्ञेययोस्तादात्म्यसंबन्ध इति बौद्धाः कल्पयन्ति।

## पञ्चमी दृष्टिसृष्टिः

ततः परं ग्राह्यग्राहकत्वमेकस्य वास्तविकं न संभवति, कर्तृकर्मविरोधात्। काल्पनिकं यथा तथा वा स्यात्। ग्राहकस्य ग्राह्यत्वे जडत्वप्रसङ्गात्, प्रकाशाभावे जगदान्ध्यप्रसङ्गः। आन्तरस्य सतो बाह्यतया कथं भानम्? असन्नेव भासते बाह्यतयेति चेत्, एवमेव सर्वत्राङ्गीकार्यम्। आन्तरसतः काऽऽवश्यकता? तथा च भासत इत्येव सत्, अन्यच्च सर्वमसदेव। भासमानं वस्तु भासरूपं पूर्वोक्तरीत्या न व्यवतिष्ठते। भासातिरिक्तं कीदृग्भवेत्? परमाणुरूपं संघातरूपं वा? नित्यमनित्यं वा? सर्वेषां खण्डनान्न किञ्चित्, भवदपि भाससंबद्धं कथं स्यात्? इत्यत्र सर्वे दार्शनिकाः

पराक्रान्ताः। परस्परखण्डनान्न किञ्चिदवशिष्यते। भासश्च क्षणिकतया विश्रमशील इति शून्यतापर्यवसानम्।

माध्यमिकमते भासस्य परमार्थसत्तेति गवेषितं काशीहिन्दूविश्वविद्यालये वसद्भिः डा० चन्द्रधरविद्वद्भिः, तैश्च शुद्धं नित्यचैतन्यं माध्यमिकाभिमतं प्रदर्शितम्। संसारदशायां विषयोपप्लुता साकारतया भासमाना मोक्षदशायां शुद्धा क्षणिकी चित्सन्ततिरेवेत्यवगच्छाम्यहमद्यापि शून्यवादिमतम्।

वेदान्तिनः शुद्धं विभु स्वप्रकाशं सर्वदैकरसं विविधोपाधिभिरनभिभूतं क्वचिदप्यनासक्तं वादिभिः कल्पनया बलादासञ्जितैरप्युपाधिभिरविक्रियमाणं चैतन्यं सारवस्तु परमार्थसदित्यामनन्ति। अन्यच्च सर्वं वैदिकं स्मार्तं व्यावहारिकं प्रस्थानपरम्परया वा कल्पितं सद् यथा तथा वाऽस्तु, तत्र न विद्वेषो रागो वेत्यादिकं गौडपादकारिकया खण्डनग्रन्थेन च निर्मथितम्। तथा च दृष्टिरेव सृष्टिरिति पञ्चमी दृष्टिसृष्टिः। दृष्टिश्च वृत्तिरूपा वृत्त्यवच्छिन्नचैतन्यरूपा वा। शुद्धस्य निरुपाधिकस्य ब्रह्मणो वृत्तिविषयता नाङ्गीक्रियते, सोपाधिकस्य च मिथ्यात्वमिष्यत एव। यद्यपि चरमा वृत्तिः शुद्धब्रह्माकारा, तथापि तदा ब्रह्मणो निरुपाधिकत्वासंभवः। दृष्टिव्यतिरिक्तसृष्ट्यभावो वा, सृष्टदृष्टादिभेदव्यवहारस्तु दृष्टिसृष्टिवादमपश्यतोऽज्ञानिनः। दृष्टिव्यतिरेकेण सृज्याभावो वा, ज्ञातो न ज्ञातमिति व्यवहारस्तु भानांशस्य तिरोहितत्वात्। ज्ञातैकसत्त्वं विषयत्वसमानकालीनत्वाभ्यां दृष्टिविशिष्टत्वं वा, दृष्टिविभिन्नकाले सर्वेषामभावेनानायासेन मिथ्यात्वं सिध्यतीति वादोऽयं वेदान्तिभिः समाद्रियते। जन्यमात्रे सृष्टेर्व्यवहारात्, मोक्षदशायां दृष्टेः सृष्टेश्चाभावात्। असत्त्वापादकदोषप्रयुक्तत्वे सति दृष्टिविशिष्टत्वं जन्यत्वव्यापकं मिथ्यात्वोपयोगि द्रष्टव्यम्। अनादीनां मिथ्यात्वं तु दृश्यत्वादिनैव साधनीयमित्यादिकमन्यच्च ग्रन्थे लिखितमेवास्ते।

बृहदारण्यकजागरणविषयकया "तस्मादात्मनः सर्वे प्राणाः" इत्यादिश्रुत्या जागरितजीवात् प्राणादिप्रपञ्चसृष्टिप्रतिपादनात् प्राक्तनसुषुप्तिश्रुत्या च सुषुप्तौ सर्वलयबोधनाच्च जीवात् तज्ज्ञानदशायां सृष्टिः, दृष्टिविलोपे च लय इति पर्यवसानाद् दृष्टिसृष्टिवादः सूचितः। जीवाभिन्नात् सुषुप्ताधाराच्च ब्रह्मणो जाग्रतप्रपञ्चोदयस्तु नायाति, प्राक्तन्या "क्वैष तदाऽभूत्" इत्यादिश्रुत्या जीवस्यैव प्रश्नात् प्रक्रान्तत्वाच्च सर्वनाम्ना जीवस्यैव परामर्शात्।

गौडब्रह्मानन्द्यां श्रुतिप्रमाणेन जगतो मनःपरिणामत्वं साधितम्। ततश्च स्फुटो दृष्टिसृष्टिवादः। जीवादेव जगतो वैचित्र्यमुक्तम्। तत्रत्य-वार्त्तिकेऽपि [ २।८२ ] तथैवोक्तं वर्तते। संक्षेपशारीरकपद्ये उत्तमाधिकारिणां कृते व्यावहारिकेऽपि प्रातिभासिकत्वदृष्टिरेवोक्ता, सा च दृष्टिसृष्टावेव संभवति। तत्रैव २।२६ पद्ये बौद्धमतसाम्यं शाङ्करमतस्यापादितम्, परिहारस्तु विषयान्तरपुरस्कारेण कृतः। तेन चतुर्थी दृष्टिसृष्टिरपि वेदान्त्यभिमता भवति। वार्त्तिके जागरसृष्टीनां जीवकर्तृकत्वं व्यवहारस्यापि काल्पनिकत्वमुक्तम्। यद्यपि तत्र ब्रह्मकर्तृकत्वमपि पद्यान्तरेण वर्णितमास्ते, परन्तु तद् व्याख्यानान्तरं जीवब्रह्मणोरभेदात् प्रमाणस्य संकीर्णत्वाच्च। गौडपादकारिकायां तु स्फुटं सर्वस्य प्रातिभासिकत्वं चेतसा कल्पितत्वं मनःस्पन्दितत्वं च वर्णितं विद्यते। तत्र पञ्चमी दृष्टिसृष्टिर्विराजते। चतुर्थी दृष्टिसृष्टिस्तु योगवाशिष्ठेऽप्यवलोक्यताम्।

## पाश्चात्यदृष्टिसृष्टिवादः

प्रायः पश्चिमीयसमस्तप्रत्ययवादिदर्शनेषु कियताचिद् वैचित्र्येण दृष्टिसृष्टिवादः समुल्लसति। तत्रैकस्याष्टादशवैक्रमशताब्दीस्थितस्य आयर्लैण्डवासिनो वर्कलेजार्जस्य दर्शनेऽद्वैतसिद्धिसदृशं दृष्टिसृष्टिवादमुपलभे। ज्ञातैकसत्त्वं समेषामङ्गीक्रियते। अज्ञेयस्य वस्तुत्वमेव नास्ति, मानसातिरिक्तं न किमप्युररीक्रियते। बाह्यस्याङ्गीकारेऽप्यन्तरेण संबन्धो न संभवति। एकमेव बाह्यतयाऽध्यवसितं वस्तु तेनैव पुरुषेण नैकरूपेण गृह्यते पुरुषान्तरस्य का कथा? अतो बाह्यं नियताकारं वस्तु न संभवति, कदाचनेच्छां विनापि जीवमनसि चिन्तनधाराऽभिनवा समुदेति, अतो विभु ईश्वरमानसमप्यङ्गीक्रियते, येन जीवचेतसि प्रेरणा मिलति, ईश्वरजीवमनसोर्महाकाशघटाकाशवत् स्थितिः। ईश्वरमनसि सामान्यरूपेण सर्वाणि वस्तूनि सन्ति, तैश्च सामान्यैर्जीवमानसानां विशेषाणां संवादः प्रत्यभिज्ञादिव्यवस्था च। अद्वैतसिद्धावप्यनादिषु परसूक्ष्मेषु कारणात्मसु दृष्टिसृष्टिर्नोपेयते।

जार्मनेयलीबनीजदर्शने उपलभ्यते—दृष्टेश्चेतनाद् दृष्टिरूपा चेतनमयी सृष्टिरिति। चेतनाः परमाणवः, तेभ्यः स्थूलजगतः समुत्पत्तिः। सर्वं चेतनम्। अधमं चैतन्यं पृथ्वीपाषाणादिषु, तत उत्कर्षक्रमेण जीवेषु, परमोत्कृष्टं चेश्वरचैतन्यम्। पृथ्वीपाषाणादिभ्यो वनस्पतिक्रमेण जीवचैतन्यं स्थूलं जायते। प्रकृतिर्मूका जीवाश्च वाचालाश्चेतना इत्याद्युपपादनं तत्र क्रियते।

## न्यायामृतकाराक्षेपसमाधानम्

न्यायामृतकाराणामाक्षेपाः कतिपये प्रसङ्गतः प्रागेव समाहिता विद्यन्ते। अधुनाऽपि संक्षेपेणेत्थमवगम्यताम्—स्थायित्वादिप्रत्यभिज्ञा मन्दाधिकारानुरोधेन भ्रान्तोपपादिता। काल्पनिकसामान्यमादाय वर्कलेरीत्या वा स्वर्गादिकार्यकारणभावः स्वाप्निककार्यकारणभाववत्, धर्मस्य सूक्ष्मतया तत्र दृष्टिसृष्टेरनङ्गीकाराद्वा। बाधाबाधौ स्वप्नजागरवस्तुनोर्भेदकौ। अन्यूनसत्ताकस्य बाधकत्वेन प्रातीतिकयोरपि बाध्यबाधकभावः, लघुचन्द्रिकारीत्या स्वतन्त्रबाध्यबाधकभावस्वीकाराच्च। दृष्टेः प्राक् शुक्तेरभावेऽप्यज्ञानस्य सत्त्वेन रजतदृष्टिसंभवः, प्रतिसुषुप्ति संसारलयेऽपि पुनर्विक्षेपजनकाज्ञानसत्त्वेन न मुक्तस्य पुनरावृत्तिः, सुषुप्तावपि सूक्ष्मतया कारणात्मना संस्कारसत्त्वान्न जागरणानुपपत्तिः। घटं पश्यामीत्यादौ चाक्षुषाभेदो घटे विषयः।

## गौरवलाघवप्रदर्शनम्

सृष्टिदृष्टिकल्पे स्रष्टव्यालोचनस्य कारणत्वम्, आवरणतद्भञ्जकवृत्त्यादिककल्पनम्, स्थिरघटादावनन्तसंयोगादिकम्, इन्द्रियसंयोगादीनां प्रत्यक्षहेतुत्वं प्रातीतिकव्यावहारिकयोर्भेदेन कारणत्वम्, ज्ञानस्य हेतुत्वमित्यादिगौरवम्, दृष्टिसृष्टिकल्पे च विषयस्यैव हेतुत्वमिति लाघवमिति॥

आस्वादयन्तु कृतिनो मधुरं निबन्धं यन्मान्द्यतिक्तमपि नैकरसंसुपेयम्।
नोवञ्चिताः कटुतया सुरसाद् भवन्तु दोषाकरस्य किरणेषु यथा सुधातः ॥१॥

## दृष्टिसृष्टिवादे सूचितानां प्रमाणवाक्यानामयमोघप्रकाशः

तत्र प्रथमम् अद्वैतसिद्धिसम्बद्धानि बृहदारण्यकोपनिषदो द्वितीयाध्याये प्रथमब्राह्मणस्य मन्त्राः—सहोवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागादिति तदु ह न मेने गार्ग्यः॥ १६॥

सहोवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते इत्यादिकः॥ १७॥

अथ यदा सुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभि प्रतिष्ठन्ते ताभिः प्रत्यवसृत्य पुरीतति शेते स यथा कुमारो वा महाराजो वा ब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेव शेते॥ १९॥

स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येव-मेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वाणि भूतानि व्युच्चरन्ति इत्यादिकः ॥ २० ॥

अविद्या योनयो भावाः सर्वेऽमी बुद्बुदा इव ।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥
रज्जुसर्पादिवद्विश्वं नाज्ञातं सदिति स्थितम् ।
प्रबुद्धदृष्टसृष्टित्वात् सुषुप्तौ च लयश्रुतेः ॥

गौडब्रह्मानन्द्यामेव लेखः—पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्रम् इत्यादि श्रुत्यन्तराच्च । अत एव तस्माद्वा एतस्मादात्मन आकाश इत्यादौ श्रुतौ आत्मपदं सार्थकम्, अत एव असतोऽधिमनोऽसृजत मनः प्रजापतिमसृजत, तच्चेदं मनसि प्रतिष्ठितम्, यदिदं किञ्चेत्यादि श्रुत्या जगतो मनः परिणामत्वमुक्तम् ।

एतत्सर्वं मन एवेति श्रुतिव्याख्याने वार्तिकेऽप्युक्तम्—

शुक्लं कृष्णमणुस्थूलमिति धीः कर्मणो वशात् ।
द्वैताधिकारमापन्नो वैश्वरूप्यं न गच्छति ॥
धीर्विपर्ययरूपेयं यतः शुद्धादिरूपिणी ।
मन एवेत्यतः प्राज्ञाः सर्वं रूपं प्रचक्षते ॥

उत्तमाधिकारिणां कृते प्रातिभासिकत्वमेवेति सूचयत्संक्षेपशारीरकं तत्रैव—

तत्त्वावेदकमानदृष्टिरधमा तत्त्वक्षतिर्मध्यमा ।
तत्त्वप्रच्युतिविभ्रमक्षतिकरी तत्रान्त्यदृष्टिर्मता ॥
जीवैकत्व मुमुक्षुभेदगतितो व्यामिश्रदृष्टिर्द्विधा ।
भिन्ना तत्र च पूर्वपूर्वविलयादूर्ध्वोर्ध्वदृष्टिर्भवेत् ॥ २८३ ॥

स्वयं संगृहीतानि—

यदि बोध एव परमार्थवपुर्न तु बोध्यमित्यभिमतं भवति ।
ननु चाश्रितं भवति बुद्धमुनेर्मतमेव कृत्स्नमिह मस्करिभिः॥२।२६॥-
संक्षेपशारीरकम् ।

बृहदारण्यकवार्तिकसारः—

नान्यत्राभूदयं सुप्तौ नान्यस्मादुत्थितः पुनः ।
सुप्त्युत्थानभ्रमः पूर्णे बुद्ध्युपाधिविजृम्भितः ॥२।१।१२६॥
शक्तिर्नियामिका चेत्सा केनान्येन नियम्यते ।
अविचारितरम्यातः सृष्टिरात्मनि कल्पिता ॥२।१।१३२॥
स्वप्नसंसारवत्तस्माज्जीवसंसार इष्यताम् ॥२।१।१६६॥
अन्योऽन्यव्यभिचारित्वात् स्वप्नजाग्रदवस्थयोः ।
मिथ्यात्वमित्यसावर्थः स्वप्नश्रुत्या विवक्षितः ॥२।१।६४॥
सुप्तः प्रबुद्ध इत्येवं स्वप्नं पश्यति चेति यः ।
विकल्प एव भूतानामविद्यारात्रिशायिनाम् ॥२।१।८३॥

गौडपादकारिकाया वैतथ्यप्रकरणम्

अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम् ।
यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥ ४ ॥
स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितन्त्वसत् ।
बहिश्चेतो गृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥ ६ ॥
जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ।
बहिश्चेतो गृहीतं सद् युक्तं वैतथ्यमेतयोः ॥ १० ॥

चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहिः ।
कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ॥ १४ ॥
जीवं कल्पयते पूर्वं ततो भावान् पृथग्विधान् ।
बाह्यानाध्यात्मिकांश्चैव यथाविधस्तथा स्मृतिः ॥ १६ ॥
न निरोधो न चोत्पत्तिर्न बध्यो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३२ ॥

॥ अद्वैतप्रकरणम् ॥

नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।
अजायमानो बहुधा मायया जायते पुनः ॥ २४ ॥
संभूतेरपवादाच्च संभवः प्रतिषिध्यते ।
कोन्वेनं जनयेदिति कारणं प्रतिषिध्यते ॥ २५ ॥
यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः ।
तथा जाग्रद् द्वयाभासं स्पन्दते मायया मनः ॥ २९ ॥
न कश्चिद् जायते जीवः संभवोऽस्य न विद्यते ।
एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥ ४८ ॥
एवमलातशान्ति प्रकरणेऽपि अजातवादः समुपपाद्यते ।

योगवाशिष्ठे

बहिर्नकिञ्चिदप्यस्ति तेजोऽम्भूर्वायुदिगादिकम् ।
एतत् स्वचित्ते एवास्ति पत्रपुञ्जमिवाङ्कुरे ॥ ४८ ॥
फलादि स्फारनामेति यथैव बहिरङ्कुरात् ।
बहिः प्रकटतां याति तथा पृथ्व्यादि चेतसः ॥ ४९ ॥

वाराणसेय संस्कृत विश्वविद्यालय वाराणसी त्रैमासिक संस्कृत पत्रिका सारस्वतीसुषमा में ११ वर्ष ३-४ अङ्क संवत् २०१३ प्रकाशनतिथि मार्गशीर्ष पूर्णिमा २०१५ संवत् प्रकाशित संस्कृत दृष्टिसृष्टिवादः हिन्दी

# दृष्टिसृष्टिवाद

## पहली दृष्टि सृष्टि

दृष्टि से भोग्य विषय जगत् की सृष्टि है, एक अनुभव करने लायक विशेष ज्ञान अथवा विशेष भावना दृष्टि शब्द से लिया जाता है, सामने पड़े हुए विषयों का ऐसा ज्ञान होता है जिससे सुख या दुःख दोनों में कोई एक अवश्य होता है, एक ऐसा ज्ञान होता है, जिससे सुख या दुःख कुछ नहीं होता, उसको उपेक्षा ज्ञान कहते है, उपेक्षा भिन्न ज्ञान सुख या दुःख को अवश्य पैदा करता है; सुख और दुःख के प्रत्यक्ष का नाम उपभोग या भोग है, वस्तु स्वभाव से ही उपभोग को नहीं पैदा करता, किन्तु उसपर एक ऐसी दृष्टि पड़ती है अथवा उसकी एक तरह भावना होती है, जिससे वह वस्तु उपभोग को पैदा करती है, अर्थात् विशेष भावना वस्तु को उपयोग के लायक बना देती है, बनाना सृष्टि है, भावना विशेष से उपभोग योग्य वस्तुए बनती हैं यह सरल अर्थ हुआ। भावना विशेष का विषय उपभोग का साधन है, सभी कार्य साक्षात् या परम्परा से उपभोग को पैदा करते हैं ऐसा नैयायिकों का कहना है, उसका तात्पर्य पूर्वकथित रीति से उपभोग पैदा करना है, उपभोग का जनक विषय है तो उपभोग जनकता विषयता हुई। वह भोगजनकता दृष्टि से भावना विशेष से प्रयुक्त होती है। संसार के पदार्थों में जीवों की विलक्षण दृष्टि ही उपभोग का जनक है यह भाव है, कार्य को पैदा करने वाला पाप पुण्य भी वैसी दृष्टि देकर ही उपभोग का कारण है। नहीं समझा हुआ भी अग्नि जलाता ही है, ऐसी प्रसिद्धि इस सिद्धान्त से विरुद्ध पड़ती है, क्योंकि आग में दृष्टि विशेष के विना ही दाह हुआ। किन्तु साधारणरीति से इसका विरोध मालूम पड़ता है विशेष

विचार पर विरोध नहीं है, पहले तो आग में भस्म दृष्टि से पैर रखा गया, एक भस्म दृष्टि हुई, दूसरा दाह का यहा प्रसङ्ग नहीं है किन्तु सुख दुःख का है, सभी अग्नि दुःखदायी नहीं कोई सुखदायी भी है, सभी दाह भी दुःखकर नहीं कोई सुखकर भी है, इस लिये दृष्टि ही भोग करने वाली है, यहाँ भी दाह की दृष्टि, शरीरात्मता की दृष्टि उपभोग करने वाली है ही।

## इसके मूल

इसका कोई मूल खोजना नहीं है, भारतीय संस्कारों में यह जमा हुआ है, 'मनुष्यों के बन्ध और मोक्ष का कारण मन ही है' इसका जो जो मूल हैं वे सब इस सिद्धान्त के मूल हैं, चार्वाक अथवा मनोविज्ञानवादियों का मस्तिष्कवाद हो या मन आत्मवाद हो, यहाँ जीवात्मा के स्वरूप का विवेचन नहीं चलता, जो कुछ जीव का स्वरूप हो, जीव में मन सार होना सर्वसम्मत है, 'मनोमय प्रकाशरूप है' हे सौम्य मन प्राण के अधीन है' इत्यादि श्रुति है, 'मन नाम वाला जीव रूप है' इत्यादि शाङ्कर-भाष्य है।

जीवों की विषयों में विलक्षण अनन्त दृष्टियां हैं, जिन का किसी प्रकार अनुगम नहीं है, दर्शनों में कुछ ही दृष्टियों का अनुगम है, सुख और दुःख किसी का साक्षात्कार भोग है ऐसे भोग का तो अनुगम किया गया है, किन्तु भोगजनक दृष्टियों का अनुगम ठीक नही हो पाता।

## लोक व्यवहार में भी स्थान

सूक्ष्मदृष्टि से लोक व्यवहार में भी दृष्टिसृष्टि वाद देखें—बहुत दिनों का मित्र भी कभी शत्रु बन जाता है, किसी की झूठी निन्दा से शत्रु मान लेने पर भी फिर सत्य बात मालूम होने पर कहा जाता है कि मैं किसी के कहने पर भ्रम में पड़ गया था, ठीक समझ गया, आप मेरे असली मित्र हैं इत्यादि, सोना जाय, यहाँ शत्रुता या मित्रता को कौन बनाता है ? और कौन नष्ट करता है ?, क्या यह सृष्टि प्रलय परमेश्वर कृत है ?, जीव कृत होने पर भी शुद्ध जीव से नहीं होता, अन्यथा जीवन भर नहीं बदलता। किन्तु जीव की दृष्टि से बनता है और बिगड़ता है, यह जीव की दृष्टि जो किसी कारण

और परिस्थितियों से भिन्न-भिन्न हुआ करती है। इस प्रकार दृष्टि से शत्रुता और मित्रता की सृष्टि प्रमाणित होती है, ऐसे ही दूसरी जगह भी देखा जा सकता है। कोई आचरण शत्रुता और मित्रता का कारण कहें तो वह ठीक नहीं, जिसका जो आचरण है वह सभी जगह है, सभी शत्रु ही या सभी मित्र ही नहीं होते, किन्तु कोई शत्रु और कोई मित्र होता है, आचरण में अनुकूलता, सौहार्द और प्रतिकूलता शात्रव पैदा करती है ऐसा कहें तो सोचें कि अनुकूलता या प्रतिकूलता कैसे होती है ?। एकही आचरण किसी का अनुकूल और दूसरे का प्रतिकूल पड़ता है, एक ही के लिये कभी अनुकूल कभी प्रतिकूल पड़ता है, रुचि-अरुचि का सम्बन्ध होता है, ये सब भावना या दृष्टि विशेष से होता है, अन्ततः सुख-दुःख का सम्बन्ध रहता है, इससे निकलेगा कि एकही आचरण दृष्टि भेद से सुखकारी तथा दुःखकारी बनाया जाता है, आचरण में भोगजनकता की सृष्टि दृष्टि से हुई। यहाँ विस्तार का अवसर नहीं, साहस करें, वैर-सौहार्द का लक्षण करें, उस लक्षण में मानसिक पदार्थों के प्रवेश के विना सफल नहीं हो सकेंगे, तब निश्चय करें कि ये सौहार्द और वैर आदि जीव से या मन से अथवा विशेष दृष्टि से बनाये गये हैं। इसी प्रकार पुत्रत्व-पितृत्व-भ्रातृत्व आदि दृष्टि से बने हुए समझे जाय।

## इसका काव्य नाटकों में स्थान

काव्य नाटक आदि में रसास्वाद की प्रक्रिया से दृष्टि का ही विलास समझा जाय। विभावों की भावना तथा शब्द और अर्थ की भावना एक प्रकार की दृष्टि ही है जो चमत्कार का निदान है, साधारणीकरण व्यापार से अगम्यता को लाने वाली दृष्टि हटायी जाती है तथा रति को बढ़ाने वाली दृष्टि अपनायी जाती है, पण्डितराज जगन्नाथ का आलम्बन कान्ता का लक्षण देखें, मन की वस्तु निश्चय से युक्त है, एक दृष्टि ही है।

## दर्शनो में इसका स्थान

वह यह दृष्टिसृष्टिवाद प्राच्य-पाश्चात्य सकलदर्शनवाटिका में विहार करने वाला दर्शनों का राजा है, कुछ सूचित करता हूँ। उसमें भारतीय दर्शन बन्ध और मोक्ष के विवेचन को उद्देश्य करके प्रवृत्त हैं उनमें यह स्फुट मालूम पड़ेगा, मेरे थोड़े परिचित तथा भिन्न-भिन्न उद्देश्यों से प्रवृत्त पाश्चात्य दर्शनों में थोड़ा ही दीख पड़ेगा।

जैसे कि न्यायवैशेषिक को देखिये—शरीर इन्द्रिय आदि में आत्मा की दृष्टि बन्ध का कारण है, तथा उनमें अनात्म की दृष्टि मोक्ष का उपाय है, शास्त्र के उपदेश की दृष्टि से पहले की लौकिक दृष्टि से बना आत्मपना हटाया जाता है तथा आत्मा का भेद बनाया जाता है, जीवन्मुक्त के शरीर आदि तत्त्वज्ञान से नष्ट नहीं किये जाते किन्तु पहले ही के ऐसा बने रहते हैं, दृष्टि से बने हुए का परिवर्तन होता है, इसी प्रकार शास्त्र से शरीर आदि में दुःखभावना का उपदेश किया जाता है। वहाँ अनादि वासना से शरीर आदि में सुखसाधन दृष्टि दृढ हो गई है, यह रागदोष को अधिक बढ़ाती है, उससे संसार के अनेक पदार्थ भोग के कारण हो जाते हैं, वह सुखसाधन दृष्टि शरीर आदि से हटाई जाती है, शरीरादि में दुःखसाधन दृष्टि जमाई जाती है, जो राग विरोधि-वैराग्य को पैदा करती है, उसी से वहाँ विरक्त तत्त्वज्ञानी जीवन्मुक्त का शरीर आदि नहीं बदलता, केवल वस्तुओं पर दृष्टि का परिवर्तन होता है जिससे भोग नहीं होता है।

सांख्य में भी वाचस्पति के वचन को विचारे—एक ही नायिका सत्त्व के परिणाम से किसी को सुखी करती है, रजोगुण के परिणाम से दूसरे को दुःखी करती है, तीसरे को तमो गुण से मुग्ध बनाती है, वहाँ भी विचार करने पर अन्त में सुख आदि का जनक सत्त्व आदि दृष्टि की ही विलक्षणता आयेगी।

वेदान्त में अहं मम आदि अनेक प्रकार का अध्यास ही सभी अनर्थों का कारण है, उन अध्यासों की निवृत्ति पुरुषार्थ है, अध्यास मिथ्या दृष्टि ही है।

बाह्य अस्तित्व वादी बौद्धों के यहाँ दर्शनहेय-भावनाहेय इत्यादि अनेक प्रकार से क्लेशों का वर्णन है, वहाँ भी ज्ञान त्याग संयोग आदि सम्बन्ध के नाश से पृथक् करना नहीं है किन्तु दृष्टि का परिवर्तन है, इसीलिये बुद्ध भगवान् के केवलज्ञान से पहले जैसा संसार था वैसा ही केवल ज्ञान के बाद भी रहा, इसी से अज्ञजनों को देखकर भगवान् की करुणा का उदय हुआ। केवल इतना ही फरक पड़ा कि भगवान् के चित्त पर संसार का जैसा पहले प्रभाव था वैसा बोध के बाद नहीं रहा, यह दृष्टि का ही विलास है। यह व्यापक दृष्टि-सृष्टि, दृष्टि से ही भोग्य-विषय की सृष्टि अथवा दृष्टि ही भोग की सृष्टि करने वाली इस अभिप्राय से वर्णित हुई। बाह्य जगत् प्रकृति से सजा हुआ ईश्वर से बनाया साधारण जैसा है वैसा रहे, विशेष भोग को पैदा करनेवाली

जीव की दृष्टि ही है, जैसे नानाविध पुष्प-पल्लव आदि से परिपूर्ण लता-वृक्ष आदि से समृद्ध वाटिकारूप साधारण वस्तु में देखने वाले साधारण जन-वनस्पति विज्ञान के विज्ञ, और प्रकृतिप्रिय कवि के अवलोकन में साधारण कारण आंख और प्रकाश है, लेकिन इनकी दृष्टियों में भेद अवश्य है, उन दृष्टियों से उनके चित्त अञ्चल पर भिन्न-भिन्न प्रभाव पड़ता है, उसी प्रकार साधारण वस्तु में भी जीवों की भिन्न-भिन्न दृष्टियाँ अनेक प्रकार के भोगों की सृष्टि करती हैं।

## दूसरी दृष्टिसृष्टि

पहली की आलोचना—वस्तु यदि सबके लिये बराबर साधारण है तब दृष्टि में भेद कैसे होगा ?। समान विषय होने से समान ही दृष्टि उचित है, यदि आलम्बन विशेष भिन्न-भिन्न हैं इसलिये दृष्टि में भेद है तो वह आलम्बनविशेष किसका है ? यदि सामने पड़े हुए विषय का है तो फिर सबके लिये बराबर साधारण हो गया, दृष्टि का भेद कैसे ?, ऐसी समस्या में भारतीय दर्शनों की दो शैली है, पहली वेदान्त वाचस्पति मिश्र की। नाना जीव हैं, जीव ही जगत् के उपादान कारण हैं; जीव भेद से अनेक जगत् हैं, पहले जीव से बनाया हुआ ही फिर दृष्टि से बनाया जाता है, हर एक जीवों के आलम्बन बाहर भिन्न हैं, इसलिये उनकी दृष्टियाँ भी भिन्न हुई। दृष्टिभेद से भिन्न-भिन्न सृष्टि यह दूसरी दृष्टिसृष्टि हुई।

इसका उपपादन—ब्रह्मविषयक अज्ञान जीव में रहता है, अज्ञान का परिणाम जगत् जीव में रहेगा, इसलिये जीव उपादान होगा। जीव में रहने वाली विद्या से ब्रह्मविषयक अज्ञान का नाश होता है। उससे उस अज्ञानकृत संसार का विलय होता है, तब वह जीव मुक्त होता है, दूसरे जीव जिनमें विद्या नहीं हुई वे बद्ध रहते हैं। इस प्रकार क्रमिक मुक्ति की व्यवस्था है, इसी रीति से शुक-वामदेव आदि के मोक्ष का श्रवण उपपन्न होता है, तथा 'वह जो जो देवताओं के बीच में ज्ञानी हुआ वह ब्रह्म हुआ वैसे ही ऋषियों में' इत्यादि श्रुतियाँ इस क्रमिक मुक्ति का उपपादन करती हैं, जो परमेश्वर को उपादान बताने वाली श्रुतियां हैं वह भी विरुद्ध नहीं पड़ती, जीवगत अज्ञान विषय ब्रह्म जीव में ही है, जीव का अधिष्ठान भी ब्रह्म है, इसलिये परम्परा से ईश्वर भी उपादान हो ही गया। कहीं सृष्टिपरक श्रुतिवाक्यों में आत्मा पद आता है

वहां सरलता से ही जीव लिया जायेगा, जैसे स्वप्न सृष्टि का उपादान जीव है, वैसे जागर सृष्टि का भी उपादान है, जीव का ज्ञान पुरुषार्थ है ऐसा श्रुतियां भी वर्णन करती हैं, 'वाणी को नहीं जानना चाहिये किन्तु वक्ता को ही जानना चाहिये' इत्यादि। याज्ञवल्क्य के वाक्यों में जीवात्मा ही द्रष्टव्य कहा गया है, उसी का पत्नी-पति काम आदि से सम्बन्ध है।

इसमें प्रमाण स्वप्न के बाद बोध होने पर प्राण आदि सकल प्रपञ्चों की सृष्टि को बताने वाली श्रुतियां हैं, और 'तीनों पुर में यह जीव क्रीडा करता है, उसी से सम्पूर्ण विचित्र पैदा हुआ है' इत्यादि श्रुतियां प्रमाण हैं, 'उसी नित्य तृप्त सदा आनन्दमय अविच्छिन्न जीव आत्मा का संसार विद्वानों से कहा जाता है'। इत्यादि स्मृतियां भी उसमें प्रमाण होती हैं, जीव की सृष्टि में तात्पर्य वाले आचार्य के वचन जिनको संस्कृत लेख में दिया गया हैं, उनका भी सम्बन्ध यहां कर लेना चाहिये, मनोमय की सृष्टि में तात्पर्य वाले भी प्रमाण यहां प्रमाण होंगे।

यद्यपि कुछ वेदान्ती एक जीववाद को भी लेकर दृष्टिसृष्टिवाद का उपपादन किये हैं, किन्तु दूसरे वादविशेष को बिना पुरस्कृत किये सामान्यरूप से भी इस वाद का वर्णन किये हैं, कोई कोई जीव सृष्टि पक्ष को भी लेकर इसका उपपादन किये हैं, मैं तो किस दर्शन में कैसी दृष्टिसृष्टि है? इस खोज में प्रवृत्त हूं, सभी दर्शनों में दृष्टि सृष्टि की आलोचना करता हूं। मेरे लिये यह बिना प्रसङ्ग का नहीं होगा, जीवों के अलग-अलग सांसारिक प्रपञ्चों में दृष्टिसृष्टि का अच्छा उल्लास है, नैयायिक भी दृष्टि भेद से वस्तु का भेद कहीं मानते हैं, जैसे कि कहीं सामने तीन चीजे रख दीजिये जिसको बहुत लोग देख सके, उन चीजों में त्रित्व संख्या है, वह एक त्रित्व नहीं है, जिसको सभी लोग देखें, किन्तु जितने लोग देखें, तथा एक आदमी भी जितनी बार देखें, उतने त्रित्व हैं, वे भी हमेशा नहीं रहते, देखने के समय पैदा होते हैं और थोड़ी ही देर में त्रित्व नष्ट हो जाते हैं, क्योंकि अपेक्षाबुद्धि के अनुसार उसका जन्म और जीवन है। अपेक्षाबुद्धि आशुविनाशिनी है। यह दृष्टि से सृष्टि का अच्छा उदाहरण है, इसी नानाजीववाद के व्याख्याताओं की अनेक व्याख्यायें हैं, कोई सभी जीवों का एक ही संसार कहता है, कोई भिन्न भिन्न जीवों का अलग ही संसार कहता है, कोई क्रमशः

जीवों की सृष्टि वर्णन करता है, दूसरे सभ. जीवों की एक साथ सृष्टि बताते हैं, उसी प्रकार मेरा भी एक दूसरा मत समझना चाहिये। उस प्रकार यह दूसरी दृष्टिसृष्टि हुई।

## तीसरी दृष्टि सृष्टि

दूसरी पर अरुचि—नानाजीववाद में भी जो जीव भेद से जगत् का भेद है वह बाहरी भेद व्यक्तिगत असाधारण कैसे होगा? बाहरी विषयों में सभी का इन्द्रिय सन्निकर्ष समान है, सभी को प्रत्यक्ष होगा, जीव अपने से ही सृष्ट की फिर दृष्टि से सृष्टि करता है, सभी को जीवने पहले नहीं बनाया है कि सभी का प्रत्यक्ष कर सके, ऐसा कहने पर यह प्रश्न उठेगा कि जीव सृष्टि करेगा तो बाहर सृष्टि करेगा यह कैसे होगा? जीव सृष्टि करेगा तो भीतर ही सृष्टि करेगा, जीव और उसकी दृष्टि तथा बुद्धि सभी भीतर है, बाहर में सम्बन्ध नहीं तब बाहर सृष्टि कैसे कर सकता है? इस प्रकार जीव की आन्तर सृष्टि है, जो कोई विशेष है वह बुद्धिगत बौद्ध ही है, उसकी सृष्टि वासना द्वारा विशेष दृष्टि को उठाना है, वासना अतीन्द्रिय धर्म विशेष है, योगाचार रीति से दूसरी दृष्टि ही है।

इसको युक्त भी मानें पहले वर्णित वाटिका को देखने वाले सभी सावधान मन-आंख प्रकाश समान हैं, वैज्ञानिक और कवि की दृष्टि में भेद करने वाला कौन है?, दोनों की भिन्न-भिन्न वासना ही दृष्टि को भिन्न-भिन्न करने वाली है, मन या वासना फरक करने वाला होगा तो वह विशेप बौद्ध ही होगा, ज्ञान में जो विपयों के ऐसा आकार मालूम पड़ता है जिससे ज्ञानों का भेद या वैचित्र्य होता है, उस आकार को बाहरी वस्तुए नहीं बनाती, किन्तु भीतरी विपयों की वासना ही बनाती है। वे वासनायें ज्ञान से ही होती हैं, इससे आया कि ज्ञानों से ही ज्ञान के आकार बनते हैं, ज्ञान है दृष्टि दृष्टि से ही दृष्टि के आकार की सृष्टि है इस अर्थ में तीसरी दृष्टि सृष्टि है।

इस दर्शन में सभी प्राय: योगाचार की रीति से है, योगाचार बाहर वस्तु नहीं मानते, सभी बौद्ध ही मानते हैं, मेरे इस दर्शन से बाहर और भीतर दोनों प्रकार के पदार्थ हैं, लेकिन भीतरी वस्तुओं का ही पहले ज्ञान होता है, पीछे बाहर का भी ज्ञान

होता है, दोनों में संवाद होने पर ज्ञान या दृष्टि प्रमाण है, विसंवाद होने पर अप्रमाण है, इस छोटे निबन्ध में विस्तार के लिये स्थान नहीं है, केवल सूचना मात्र दी जाती है, नागेशभट्टकृत वैयाकरणसिद्धान्त लघुमञ्जूषा के बौद्धार्थनिरूपण में इसका विशेष उपपादन है, बौद्ध ही शक्तशब्द और बौद्ध ही शक्यार्थ हैं। क्योंकि दोनों बुद्धि में रहने वाले समानाधिकरण हैं, एक बाहरी दूसरा भीतरी का सम्बन्ध दुर्घट है, जिसको जानते हैं उसको चाहते है, उसके लिये प्रवृत्ति करते हैं, इस क्रमिक अनुभव से ज्ञान चाह प्रवृत्ति का विषय एक ही होता है, बाहरी विषय तो प्रवृत्ति के बाद पैदा होगा, पहले तो बुद्धि में ही है जो तीनों का विषय बनाता है, और वही बुद्धिगत विषय कार्यकारण भाव की शृङ्खला तैयार करता है, शशशृङ्ग वन्ध्यापुत्र आदि विकल्प ज्ञान के विषय बाहर नहीं हैं, भीतर हैं जिनका शब्दों से व्यवहार होता है। अतीत पुराने नल आदि ऐतिहासिक सत्पुरुषों के आकार-प्राकार गुणगण सभी बुद्धि में हैं, उन्हीं में शब्दों का शक्तिज्ञान होता है तथा शाब्दबोध भी बौद्धों का ही होता है। इत्यादि का उपपादन है।

इस तृतीय दृष्टि सृष्टि का पाश्चात्यकाण्ट दर्शन में भी स्थान देखता हूँ, जैसे कि प्रत्ययवादि प्रत्यक्षवादि वह दर्शन वैक्रमी अठारवी शताब्दी में वर्तमान जर्मन देश का है, ज्ञान से भिन्न एक रूप से रहने वाला वस्तु है, जिसका हिन्दी में तथाता शब्द से अनुवाद करते हैं, तथा शब्द से तल् प्रत्यय से तथाता शब्द है, उस वस्तु का ज्ञान मन से होता है, पहला ज्ञान देशकाल से युक्त साक्षात् शब्द से व्यवहार के लायक स्वरूप वाला है, उसके बाद सविकल्प के स्थान पर एक दूसरा ज्ञान होता है, जिसका समक्ष शब्द से अथवा संस्कृत के अवगम आदि शब्द से व्यवहार कर सकते हैं, जिससे वस्तु ज्ञात हुई ऐसी व्यवस्था की जाती है, ज्ञान भी वस्तु मानता ही है, व्यवस्था से व्यवस्थित वस्तु का विशेष आकार भी मानता ही है, पहली जो वस्तु एक रूप से रहने वाली है उसका प्रत्यक्ष ज्ञान नहीं होता, इसलिये इस दर्शन का अज्ञेयवाद भी दूसरा नाम है, व्यवस्थाओं के अनुगम के लिये पहले सामान्य रूप से १ गुण २ परिमाण ३ प्रकार ४ सम्बन्ध रूप से ४ प्रतिज्ञा कही जाती है, प्रत्येक में तीन प्रकार होने से १२ प्रतिज्ञायें हो जाती हैं, गुणव्यवस्था से अस्तित्व-नास्तित्व और अनन्तत्व का संग्रह है, परिमाण से एकत्व-बहुत्व-पूर्णत्व का, प्रकार से निश्चितत्व-अनिश्चितत्व-स्थिरत्व का, सम्बन्ध से

वस्तु-गुण, कार्य-कारण, और परस्पर का सम्बन्ध लिया जाता है। ये सब विशेष मानस ही हैं, समीक्षकों के हिन्दी लेख में इस दर्शन में कपिलमत साम्य देखता हुआ कल्पना करता हूँ कि बुद्धिरूप मन परिणाम स्वभाव वाला विषय के आकार का पक्षपाती है। लेकिन इसको निस्संदिग्ध कहने के लिये सामग्री नहीं पाता हूँ, इसमें अज्ञेय वस्तु जो मानी गई है, उसका पूरा-पूरा उपयोग अभी मेरे सामने नहीं है। बौ भी गुण-परिणाम आदि विशेष मानस हैं ऐसा बाहर को भी सत् मानने वाले बौद्ध मानते हैं, तब यह काण्ट दर्शन पहले वर्णित भारतीय दर्शन का साम्य रखता है, इस दृष्टि से दृष्टि में होने वाली सृष्टि ऐसे अर्थ में उदाहरण दिया हूँ।

## चौथी दृष्टि सृष्टि

सृष्टि का अर्थ है सृष्ट = बनाया हुआ पैदा हुआ सभी दृष्टि ज्ञान है, बाहुल्क कर्म में क्तिन् है, ज्ञान से भिन्न कोई सृष्ट वस्तु नहीं है दृष्टि ही सृष्ट है। दृष्टि से भिन्न की सृष्टि नहीं होती, वही ज्ञान अपने आकार का ग्रहण करता है। एक ही को वास्तविक ग्राह्य और ग्राहक मानना योगाचार का मार्ग है, जिसका ज्ञान से अभेद या तादात्म्य है वही सत्, ज्ञान से भिन्न सब असत् है, बुद्धि से ग्रहण होता है इसलिये सभी बुद्धि रूप है, ग्राह्य वस्तु यदि बाहरी हो ग्रहण ज्ञान आन्तर है, इन दोनों का सम्बन्ध नहीं हो सकता, सम्बन्ध न होने से ग्रहण नहीं होगा, तब बाह्य व्यर्थ है, सभी को आन्तर मानना ही ठीक है, वेदान्ती ज्ञान और विषयों के सम्बन्ध में बहुत विचार करते हैं, न्याय और सांख्य के विषय विषयिभाव को तथा विषय के आकार वाले परिणाम आदि का खण्डन करके ज्ञान में विषयों का आध्यासिक सम्बन्ध स्वीकार करते हैं, ब्रह्म की अविद्या का वैसा परिणाम, ब्रह्म को अधिष्ठान, अध्यस्त की अनिर्वचनीयता, इत्यादि बहुत गौरव सहते हैं इसलिये सभी को बुद्धि के अन्तर्गत मानना तथा ज्ञान ज्ञेय का तादात्म्य सम्बन्ध कहना ठीक है ऐसी बौद्धों की कल्पना है।

## पाँचवीं दृष्टि सृष्टि

योगाचार के मत का खण्डन—ग्राह्य और ग्राहक वास्तव में एक नहीं होगा, एक ही एक क्रिया का कर्ता और कर्म नहीं हो सकता, काल्पनिक जैसा तैसा हो सकता है, ग्राहक यदि ग्राह्य होगा तो जड़ हो जायेगा, इसलिये ज्ञान प्रकाश को ग्राह्य नहीं मान

सकते, अन्यथा उसको भी जड़ हो जानेपर कोई प्रकाश नहीं रहने से संसार ही अन्धमय हो जायेगा। आन्तर सत् है, वाह्य असत् है तो आन्तर का वाह्य रूप से भास क्यों होता है, यदि असत् ही वाहरी का मान होता है तो आन्तर सत् मानने का क्या फल ? सभी जगत् असत् का ही भान मान लिया जाय, इसलिये भास ही सत् है और सब असत् ही है। भासमान वस्तु भास रूप नहीं हो सकती यह पहले कहा गया है; जड़ हो जायेगा, जगत् का आन्ध्य हो जायेगा इत्यादि, भास से अतिरिक्त होगा तो कैसा होगा ? परमाणुरूप या संघातरूप ?, नित्य होगा या अनित्य ?, परस्पर के खण्डन से कुछ भी नहीं रहेगा, कुछ होगा भी तो उसका भास से सम्बन्ध कैसे होगा, इसपर सभी दार्शनिक पराक्रमी होंगे, एक दूसरे का खण्डन करेंगे, कुछ नहीं वचेगा, भास भी विश्रामशील ही है, अतः पर्यवसान शून्य में होगा। माध्यमिक मत में भास की परमार्थ सत्ता है ऐसी गवेषणा हिन्दू विश्वविद्यालय के डा० चन्द्रधर विद्वान् ने की है, उन्होंने शुद्ध नित्य चैतन्य माध्यमिक से अभिमत दिखाया है मुझे तो माध्यमिक मत में संसार दशा में साकार क्षणिक चैतन्य तथा मोक्ष में निराकार क्षणिक चैतन्य इतना ही अभिमत है, अवाधित सत्य कुछ नहीं है इसलिये शून्य है, व्यावहारिक सत्य सभी है।

वेदान्त में शुद्ध नित्य त्रिभुस्वप्रकाश सर्वदा एक रस अनेक प्रकार की उपाधियों से अभिभूत नहीं कहीं भी आसक्त नहीं वादियों से कल्पित हठ से लगायी गयी उपाधियों से विकृत नहीं होता हुआ सारवस्तु चैतन्य परमार्थ सत् है ऐसा मानते हैं, और सब वैदिक स्मार्त व्यावहारिक अथवा प्रस्थान परम्परा से कल्पित जैसा-तैसा हो, उसमें न द्वेष है न राग है, यह सब गौडवाद कारिका से तथा खराडन-खराड खाद्य से निकलता है। इस प्रकार दृष्टि ही सृष्टि है ऐसी पाँचवीं दृष्टि-सृष्टि है। वृत्तिरूप अथवा वृत्त्यवच्छिन्न चैतन्य रूप दृष्टि है, शुद्ध निरुपाधिक ब्रह्म को वृत्ति का विषय नहीं मानते। सोपाधिक का मिथ्यात्व इष्ट ही है, यद्यपि अन्तिम वृत्ति शुद्ध ब्रह्म आकार की होती है तो भी उस समय ब्रह्म निरुपाधिक नहीं है, दृष्टि से भिन्न सृष्टि नहीं है वही पाँचवीं दृष्टि-सृष्टि है। सृष्ट-दृष्टि आदि भेद व्यवहार तो दृष्टि-सृष्टिवाद को नहीं समझते हुए अज्ञानियों का है। अथवा दृष्टि से भिन्न सृज्य वस्तु का अभाव है इसी में पाँचवीं दृष्टि-सृष्टि का तात्पर्य है। यह ज्ञात हुआ अथवा ज्ञान नहीं, इत्यादि व्यवहार तो भान अंश के तिरोधान से होता है। वस्तु ज्ञात एक सत्य है, जब तक वस्तु का ज्ञान है तभी तक

वस्तु है, दृष्टि के समकाल में दृष्टि का विषय वस्तु है, दृष्टि से भिन्नकाल में वस्तुओं का अभाव होने से अनायास मिथ्यात्व सिद्ध हो जायेगा, इस कारण दृष्टि-सृष्टिवाद का वेदान्तियों के यहाँ समादर है। जन्यमात्र में सृष्टि का व्यवहार है, मोक्ष दशा में दृष्टि और सृष्टि का अभाव है, असत्त्व के आपादक दोष से प्रयुक्त दृष्टि से विशिष्ट सभी जन्य होते हैं इसलिये सभी जन्य मिथ्या हैं, अनादि वस्तुओं का मिथ्यात्व तो दृश्यत्व हेतु से ही सिद्ध करना चाहिये, इत्यादि और दूसरे ग्रन्थ में लिखे हैं।

बृहद् आरण्यक की सुषुप्ति श्रुति तथा जागरण श्रुति से दृष्टि-सृष्टिवाद सूचित किया गया है। 'उस आत्मा से सभी प्राण पैदा होते हैं' इत्यादि जागरण श्रुति द्वारा जागरित जीव से प्राण आदि प्रपञ्चों की सृष्टि का प्रतिपादन है, उसके पहले की सुषुप्ति श्रुति द्वारा सुषुप्ति में सभी का लय बताया जाता है, इससे निकला कि जीव की ज्ञान दशा में जीव से सृष्टि और सुषुप्ति में दृष्टि का विलोप होने पर सभी का लय हो जाता है। जीव से भिन्न सुषुप्ति के आधार ब्रह्म से जागरण प्रपञ्च का उदय नहीं आता है, पहली तब यह कहा था' इत्यादि श्रुति से जीव का प्रश्न जीव का उपक्रम जीव का ही सर्व नाम से परामर्श है।

गौड ब्रह्मानन्दी में श्रुति प्रमाण द्वारा जगत् मन का परिणाम सिद्ध किया गया है। इससे दृष्टि सृष्टिवाद स्फुट है, जीव से ही जगत् का वैचित्र्य सिद्ध किया गया है, वहाँ के वार्तिक २।८३। में वैसा ही है। संक्षेप शारीरक पद्य में उत्तम अधिकारी के लिये व्यावहारिक में भी प्रतिभासिक दृष्टि अच्छी मानी गई है। और वह दृष्टि सृष्टि-वाद में ही संभव है। वहीं पर २।२६ पद्य में बौद्ध मत की समानता शाङ्करमत में लाई गयी है, उसका परिहार दूसरे विषय को लेकर किया गया है, उससे चौथी दृष्टि-सृष्टि भी वेदान्तमत के अनुसार है। वार्तिक में जागरण की दृष्टि जीवकृत है और व्यवहार काल्पनिक है ऐसा कहा गया है। यद्यपि दूसरे श्लोक से ब्रह्मकृत व्यावहारिक सृष्टि का भी वहाँ वर्णन है तो भी वह एक दूसरी व्याख्या है, जीव-ब्रह्म का अभेद है, प्रमाणवाक्य भी ऐसे संकीर्ण हैं जो जीव-ब्रह्म दोनों में लग जाते हैं। गौडपाद कारिका में स्पष्ट रूप से वर्णन है कि सभी प्रातिभासिक हैं, चित्त से कल्पित हैं, मन का स्पन्दन है। यहाँ पाँचवीं दृष्टि-सृष्टि विराजमान है। चौथी दृष्टि-सृष्टि को योगवाशिष्ठ में भी देखें।

## पाश्चात्य दृष्टि-सृष्टिवाद

पश्चिमी सभी प्रत्ययवादी दर्शनों में प्रायः कुछ थोड़े फरक से दृष्टि-सृष्टिवाद का उल्लास है, उसमें एक १८ अठारहवीं वैक्रम शताब्दी में आयलैण्डवासी वर्कलेजार्ज के दर्शन में अद्वैत सिद्धि के सदृश दृष्टि-सृष्टिवाद को पाता हूं, वह सभी की ज्ञात एक सत्ता मानता है, ज्ञान से भिन्न काल में तथा अज्ञात वस्तु सत् नहीं है, मानस से अतिरिक्त बाह्य वस्तु नहीं मानते। बाहरी वस्तु मानने पर भी भीतरी ज्ञान से सम्बन्ध नहीं हो पायेगा, प्रकाश नहीं होगा व्यर्थ जायेगा। बाहरी रूप से कल्पित एक ही वस्तु को एक ही पुरुष समय तथा सामग्री के भेद से अनेक प्रकार से देखता है, दूसरे को क्या कहना है। इसलिये बाहरी वस्तु व्यर्थ है, बाह्य वस्तु नियत आकार वाली नहीं हो सकती, कभी इच्छा के बिना भी जीव के मन में नई चिन्तन धारा उठती है, इससे विभु ईश्वर मानस भी माना जाता है, जिससे जीव के चित्त में प्रेरणा मिलती है, ईश्वर-जीव मानसों की स्थिति घटाकाश और महाकाश की ऐसी है, ईश्वर के मन में सामान्य रूप से सभी चीजें हैं, उन सामान्यों से जीव के मानस विशेष पदार्थों का संवाद और प्रत्यभिज्ञा आदि की व्यवस्था है। अद्वैतसिद्धि में भी अनादि परम सूक्ष्म कारण स्वरूप वस्तुओं में दृष्टि-सृष्टि नहीं स्वीकृत है।

जर्मन के लीब्नीज दर्शन में भी मिलता है—चेतन दृष्टि से दृष्टि रूप चेतन-मयी सृष्टि है। परमाणु चेतन हैं, उनसे स्थूल जगत् की सृष्टि होती है, सभी चेतन हैं, पृथिवी-पत्थर आदि में नीच जाति का चैतन्य है, वनस्पति आदि के क्रम से जीव उच्च चेतन है, सर्वोत्तम चेतन ईश्वर है, पृथिवी-पत्थर आदि से वनस्पतियों में उससे भी जीवों में स्थूल चैतन्य बनता है, प्रकृति मूक चेतन और जीव वाचाल चेतन है, इत्यादि का वहाँ उपपादन किया जाता है।

## न्यायामृतकार के आक्षेपों का समाधान

न्यायामृतकार के कितने आक्षेपों का प्रसङ्ग से पहले ही समाधान किया गया है, अब भी संक्षेप से ऐसा समझा जाय। स्थिरता की प्रत्यभिज्ञा भ्रान्त वास्तव है, मन्द अधिकारी के अनुरोध से उसका उपपादन किया गया है, काल्पनिक सामान्य को लेकर अथवा बर्कले की रीति से स्वर्ग आदि का कार्यकारणभाव स्वप्न के कार्य-कारण-

भाव के ऐसा है। अथवा धर्म परमसूक्ष्म है, उसमें दृष्टि-सृष्टि नहीं मानते, बाध और बाध्य जागरण वस्तुओं का भेद करते हैं। अन्यून सत्ता वाला बाधक होता है उससे सभी प्रातिभासिक मानने पर भी बाध्य-बाधक होता है, और लघु चन्द्रिका की रीति से स्वतन्त्र बाध्य-बाधकभाव भी माना जाता है, दृष्टि के पहले शुक्ति के अभाव में भी अज्ञान रहने से रजत दृष्टि संभव है, हरएक सुषुप्ति में संसार का प्रलय होने पर भी विक्षेप का जनक अज्ञान रहने से फिर दृष्टि होगी, तथा अज्ञान न होने से मुक्त की फिर आवृत्ति नहीं होगी। सुषुप्ति में भी सूक्ष्मरूप से कारणरूप में संसार रहता है इसलिये फिर जागरण हो जायेगा। घड़े को देखता हूं इसका विषय घट में विशेषण चाक्षुषाभेद है। जब ज्ञान और विषय भिन्न हैं तब चाक्षुष यह ज्ञान का विशेषण होता है, चाक्षुष ज्ञान का विषय घट होता है, इस वाद में ज्ञान और विषय अभिन्न हैं तब चाक्षुष घट विषय का विशेषण होता है।

## गौरव-लाघव का दर्शन

सृष्टि दृष्टिवाद में जब विषय और ज्ञान भिन्न हैं, विषय पहले से स्थिर रहता है तब ज्ञान या दृष्टि होती है, उसमें गौरव और दृष्टि-सृष्टिवाद में लाघव दिखाया जाता है।

सृष्टि-दृष्टिवाद में जिसकी सृष्टि करनी रहती है उसको पहले समझकर सृष्टि होती है, इसलिये सृष्टि में स्रष्टव्य की आलोचना कारण है। दृष्टि-सृष्टिवाद में समस्त-रूप दृष्टि ही सृष्टि है, ऐसे कार्य-कारणभाव की जरूरत नहीं।

सृष्टि दृष्टि—स्थिर वस्तु हमेशा ब्रह्म में रहती है, हमेशा प्रत्यक्ष न हो इसके लिये आवरण माना जाता है, फिर आवरण भङ्ग का कारण खोजा जाता है।

दृष्टि सृष्टि—पहले से वस्तु ही नहीं, इसलिये उन सबों की आवश्यकता नहीं।

सृष्टि दृष्टि—स्थिर घट आदि में अनन्त संयोग आदि—दृष्टि-सृष्टि में—स्थिर वस्तु नहीं।

सृष्टि दृष्टि—पहले से विद्यमान वस्तु के साथ इन्द्रिय संयोग आदि की कारणता, दृष्टि-सृष्टि—पहले से विद्यमान वस्तु नहीं।

सृष्टि दृष्टि— प्रातिभासिक और व्यावहारिक दो प्रकार के पदार्थ, दोनों के भिन्न-भिन्न कारण, प्रत्येक को भिन्न-भिन्न कार्यों का कारण मानना। दृष्टि-सृष्टि में— एक ही प्रातिभासिक पदार्थ।

सृष्टि दृष्टि—ज्ञान और विषय दो हैं अथवा विषय स्थिर और ज्ञान अस्थिर हैं, किसी कार्य का विषय कारण किसी का उसका ज्ञान कारण है। दृष्टि सृष्टि— दोनों अस्थिर समान समय में रहने वाले हैं, ज्ञान और विषय का व्यभिचार नहीं, केवल विषय को कारण मानने से काम चल जायेगा। इति।



वाराणसेयसंस्कृत विश्वविद्यालय त्रैमासिकी सारस्वती सुषमा पत्रिका पञ्चदशं वर्षम् १–२–३–४ संयुक्ताङ्काः संवत् २०१६ प्रकाशनतिथिः श्रावण पूर्णिमा २०१६ संवत्।

# शिवब्रह्माद्वयवादौ

काश्मीरस्य प्रत्यभिज्ञाया अद्वयं शिवाद्वयम्, शाङ्करवेदान्तस्य ब्रह्म ब्रह्माद्वयमिति प्रगीयतेऽत्र। तत्र प्रत्यभिज्ञादर्शनमुखेनैव कानिचित् तद्दर्शन-तत्त्वान्युपगच्छता ब्रह्माद्वयेन संक्षेपतः साधर्म्यवैधर्म्ये निरूप्येते, तत्र च लेख-कलेवरविवृद्धिभिया प्रायः प्रमाणवचनान्युपेक्षमाणेन वस्तुरूपाण्येव दर्श-यित्वा समापयितुं प्रयतिष्यते। तत्र प्रथमं शिवतत्त्वमिदम्।

यद्यपीश्वरप्रत्यभिज्ञाविमर्शिनीटीकाभास्करीप्रभृतिभ्यः शिवशक्ति-सामरस्यस्वरूपस्य सप्तत्रिंशत्तत्त्वान्तरता आयाति। तस्यैव च प्राथम्यमु-चितम्, तथापि शिवशक्तिवर्णनाभ्यामेवावसेयवर्णनीयतया तस्य, प्रसिद्ध-षट्त्रिंशत्तत्त्वाभ्युपगमरीत्यैवेदमस्य प्राथम्यमवसेयम्।

(१) तत्र शिवः प्रकाशः स्वप्रकाशश्च। स्वप्रकाशत्वञ्च स्वभिन्न-प्रकाशाविषयत्वम्। अतो विमर्शशक्त्या अहं विमर्शविषयोऽपि शक्तिशक्ति-

मतोरभेदन्यायेन स्वभिन्नप्रकाशाविषयत्वमक्षतम्। अत एवाहमंशग्राहक इति गीयते। शिवस्य आत्मस्वरूपस्याहमिति स्फूर्तिरस्ति सैव च विमर्शशक्तिरिति भावः।

एवमस्य पद्यप्रदर्शनेन माहात्म्यं स्तूयते यच्छाङ्करवेदान्तस्य यत् परमं शुद्धं ब्रह्म प्रकाशस्वरूपमेवाहमिति विमर्शशून्यं स्वात्मनोऽप्यज्ञमुपन्नप्रायं ततोऽप्यग्रे विमर्शशक्तिपथेन प्रत्यभिज्ञादृष्टिरञ्चतीति। शक्ति विना निःसारं वस्तु जायते, अतः शक्ति विना शिवोऽपि जडप्राय एव, शिवेन विना आश्रयहीना शक्तिरप्यकिञ्चिदेवेति वर्णनं विमर्शिनीटीकायामुपलभ्यते।

वेदान्तस्य ब्रह्म प्रकाशस्वरूपं स्वयंप्रकाशञ्च, आभ्यां शब्दाभ्यां शिवब्रह्मणोः साम्यगानम्, एवं जगदुपादानत्वविभुत्वनित्यत्वसर्वात्मत्वसजातीयद्वितीयराहित्यादिभिः समानता, शक्तिमत्त्वमपि साधर्म्यमेव, परं तत्तच्छब्दार्थविचारे विधर्मब्रह्मणा कः सधर्मा शिवो वान्यो वा साम्यं स्पृशेत्।

तथा हि—वेदान्तस्य ब्रह्म निर्धर्मकं प्रकाशस्वरूपमेव न स्वेन स्वाभिन्नेन परेण वा प्रकाश्यम्। स्वप्रकाशशब्दस्य स्वभिन्नः प्रकाशो नास्ति स्वयमेव प्रकाश इत्यर्थः। प्रकाश्यत्वं प्रकाशविषयत्वं वा जडत्वम्। ब्रह्मभिन्नं सकलं ब्रह्मप्रकाश्यत्वात् प्रकाश्यं जडस्वरूपम्, तच्छक्तिरशक्तिः स्वाभिन्नं भिन्नं वास्तु, समेषां जडतैव। तथा च प्रत्यभिज्ञाऽभिज्ञातौ शक्तिशिवावेतद्दर्शने जडस्वरूपावेव, अन्धसमुदायस्येवोभयोः सम्मिलितरूपस्य कुतः प्रकाशता? सर्वस्य आन्ध्यप्रसङ्गः।

तद्दर्शनेऽपि शक्ति विना शिवस्य, शिवं शक्तं विना शक्तेश्च निःसारता वर्णिता। एवं हि तत्स्फुटीक्रियताम्—विमर्शशक्तिः स्वयंप्रकाशा, अप्रकाशा वा? तत्रापि प्रथमे शिवमपेक्षमाणा स्वयंप्रकाशा निरपेक्षमाणा वा? तत्र प्रथमे स्वयमप्रकाशतैव सम्पन्ना। द्वितीये शिवं निरपेक्षमाणाऽपि सा सती प्रकाशस्वरूपा शिवं स्वप्रकाशेन समालिङ्गति तदा कथं शिवसापेक्षता तस्याः? कीदृशी च परतन्त्रस्वभावतारूपशक्तिरूपता? स्वयञ्चाप्रकाशस्वरूपा कथं शिवं प्रकाशतां नयेत? अतः प्रथमविकल्पस्य द्वितीयकल्पोऽपि व्याख्यातः।

किञ्च, शक्तिशिवयोरभेदस्तादात्म्यमिव भेदसहिष्णुर्भेदासहिष्णुर्वा? प्रथमे द्वैतगर्भं बिभ्रती इयमद्वैतभावना पारमार्थिकं द्वैतमेव प्रसूते, परप्रकाश-

तया शिवस्य जडतामेव पोषयेत्। न द्वितीयः सर्वथाऽभेदे शक्तिशक्तिमद्भावस्य कुत्राप्यक्लृप्तत्वात्, स्थिरस्य परिवर्तमानो धर्मः, नित्यस्य चानित्यो धर्मः शक्तिरूपतया व्यवह्रियते, सर्वथाऽभेदे शक्तिरूपताया अक्लृप्तता। स्वभाव एव शक्तिपदेन व्यपदिश्यत इति चेत् स्वस्य भावो धर्म इति चेत् सर्वथाऽभेदे धर्मधर्मिभावस्यादर्शनात्। स्वं भाव इति चेत्, तत्रापि कष्टम्, अहमिति विमर्शमात्रव्यक्तं शिवस्वभाव इत्यापत्त्या घटादिप्रकाशनार्थं प्रकाशान्तरस्यान्वेषणापत्तेः, घटप्रत्यक्षेऽहमिति विमर्श अननुभवात्। शक्तेः शिवात् पृथक् स्थित्यभावेन शक्तिरूपता स्वभावता वा शक्तेरिति तावतैवाभेदो वैयावहारिक इति चेत्, हन्त प्राप्तं, नैयायिकानामयुतसिद्धानामिव रामानुजदर्शनीयापृथक्सिद्धानामिव वस्तुतो स्वभावभिन्नानां वैयावहारिकं पारिभाषिकमद्वैतं ब्रह्माद्वयाद् दूरेऽपसर्पति। एवमहमिति विमर्शेऽपि बोध्यम्।

यद्यपि भामतीरीत्या अहमर्थः पूतिकुष्माण्डीकृतस्तस्याऽपि तत्प्रकाशो चिदंशस्तदधीनश्चित्प्रतिबिम्बो वोपयुज्यत इति पश्चाद्भाविन्या अहमर्थबुद्धेः शक्तिर्ब्रह्मण्यपि वर्तते, ततश्च अहमिति विमर्शशक्तस्य शिवस्य ब्रह्मणि सामान्यं वर्णयितुं शक्यते, तथापि विवेचने महावैधर्म्यपर्यवसायि सिध्यति।

तथा हि—वेदान्तिमतेऽहमर्थस्य जडत्वं मायिकत्वं मिथ्यात्वञ्च। प्रत्यभिज्ञामते च प्रकाशस्वभावत्वं सत्यत्वञ्च। अहमिति विमर्शं विना आदिकारणस्य स्वप्रकाशस्य शिवस्य न न्यूनतैव, अपि तु तदधीनप्रकाशत्ववर्णनया स्वयं जडत्वापादकमिति तु प्रागुक्तमेव।

( २ ) द्वितीयं तत्त्वं शक्तिनामकम्—विमर्शस्वरूपा, अस्या निष्कर्षविचारे प्रकाशरूपतायां पर्यवस्यति। पूर्णा अकृत्रिमा अहं स्फूर्तिः, एतद्वशादेव शिवस्याहमंशग्राहकता। तत्सर्वन्तु वर्णितालोचितप्रायम्। इयमेव शिवस्य सृष्टिस्थितिसंहारशक्तिः अस्या विश्वाकारस्फूर्तिः सृष्टिः, विश्वप्रकाशः स्थितिः, विश्वसंहरणं संहारः विमर्शसंकोचस्वरूपः एषैव चेतनस्य शिवस्य चैतन्यं स्वातन्त्र्यं कर्तृत्वविज्ञातृत्वे स्फुरता सारो हृदयं स्पन्दो वा गीयते।

एषा च वेदान्तिकेश्वरस्याविद्यामायादिशब्दवाच्यया शक्त्या विशेषतस्तुलनां बिभर्ति। मायैव परिणामपरम्परया अहमर्थं सूते, आवरणशक्त्या चाध्यासेन अहमिति चिदचिन्मिश्रणात्मकस्फूर्तिः, ईश्वराधिष्ठिताया अस्या एव विक्षेपशक्त्या विश्वाकारपरिणतिः सृष्टिः, परिणतकार्यरूपेणावस्थितिः स्थितिः। एवमेव संहरणमपि।

परिणामोपादानभूताया अस्या अनाद्यध्यासमूलमेव ईश्वरस्य सर्वोपादानत्वविवृतिः कर्तृत्वमैश्वर्यम्, ईश्वरस्य सारो हृदयं स्पन्दस्वभावो वा सर्वं वर्णयितुं प्रभूयते। मायां विना ईश्वरे न किमप्यैश्वर्यमित्यनया ईश्वरशिवयोः सम्यक् तोलनं जायते। ब्रह्मणा सह तुलनायास्तु परिहारो विहित एव।

परं जडस्वरूपाऽप्यधिष्ठानप्रकाशेनैव स्फुरति, अध्यस्ततया अधिष्ठानसाक्षात्कारेण निवर्तमाना बाध्या सत्यधिष्ठानस्य सर्वथाऽबाध्यमानत्वं पारमार्थिकमद्वैतं न विरुणद्धि, स्वयं बाध्यमाना स्वकार्यजगतो बाध्यमानत्वं द्योतयन्ती ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वं विशदयति।

विमर्शप्रकाशरूपा चेयं शिवशक्तिः शिवं प्रकाशयन्ती शिवस्य जडतामानयति, स्वयमबाध्यमानया स्वाश्रयस्यापि सत्तया द्वैतमापादयति, स्वकार्याण्यप्यबाध्यमानानि सृजन्ती नाना सत्यानि सम्पादयन्ती अद्वैतं दूरमपसारयति।

ननु सजातीयद्वितीयराहित्यमेवाद्वैतम्, वेदान्तिमते व्यावहारिकसतां नानात्वेऽपि परमार्थसत एकस्यैव सत्त्वाद् यथाऽद्वैतम्, तथा स्वप्रकाशकस्यैव शिवस्य सतः सर्वत्र स्फुरणाद् लाघवाच्चैकमेव सदिति कुतो नाद्वैतमिति वाच्यम्, विकल्पासहत्वात्, तथा हि—शक्तिशक्तिमत्त्वं वेदान्तिनामिव वैयावहारिकं पारमार्थिकं वा? आद्ये शक्तेरपि बाध्यमानतया तत्कार्याणां सुतरां मिथ्यात्वाद् भवतु नामाद्वैतदर्शनशरणं शरणम्, केवलं प्रक्रियाभेदः। द्वितीये शक्तिशक्तिमत्त्वे पारमार्थिके द्वयोः सत्ताया अनिवारणात्। न च शक्तौ द्वितीयत्वं नास्तीति वाच्यम्, अस्य वचसः शक्तिर्नास्तीत्याकार एव परिणमनात्।

( ३ ) तृतीयं सदाशिवतत्त्वम्—शिवस्य आन्तरनिमेषो भवति। ज्ञानमेवात्र दर्शने क्रियारूपतां धत्ते, क्रियाप्रादुर्भावस्य प्रागवस्थामान्तरनिमेषशब्दः परिचाययति, अत एव चलनस्य स्फुरणमिति पर्यायः। अत्रेदमंशोऽपि विषयांशप्रायः स्फुरति, परमहमिति चैतन्यांशस्फूर्त्या आच्छादित एव भवति। अस्याममवस्थायां बाह्यसत्तायाः स्फुरणात् सद्वाचकोऽस्ति सदाशिवे सच्छब्दो न तु कालद्योतकः।

( ४ ) चतुर्थमीश्वरतत्त्वम्—शिवस्य बाह्यनिमेषाऽवस्थायां शिव एवेश्वरो व्यपदिश्यते, सदाशिवावस्थायां विषयाणां शक्तिरूपेणान्तःस्थान-

मीश्वरावस्थायान्तु स्फुटरूपेण। अस्यामवस्थायामिदमिदमिति विषयप्रधानो विमर्शः परमहमंशेन चिदात्मना विभेदरहित एवेदमंशः स्फुरति।

संक्षेपत इत्थमद्वैतवेदान्ततुलामधिरोहति। सिसृक्षात्मकमायावृत्तिस्वरूपेक्षणोपाधिकः परमेश्वरः सदाशिवः, बहुभवनेक्षणोपाधिकश्चेश्वरोऽत्र गीयते। अन्यनाम्नाऽपि साम्यं प्रतिपादयितुं शक्यते। वैधर्म्यन्तु पारमार्थिकत्ववैयावहारिकत्वाभ्यां स्फुटमेव।

( ५ ) शुद्धविद्यातत्त्वम्—अहमंशेदमंशयोः समानभावेन स्फूर्तिः, एतावत्पर्यन्तं शिवात्मतया सर्वत्र जगति विमर्शस्तिष्ठतीति विद्यापदेनोच्यते।

( ६ ) षष्ठं मायातत्त्वम्—"कालादीनां तत्त्वानामविवेको माया" ( ३।३ ) इत्यादिशिवसूत्रसम्मतम् अविवेकवशाज्जडेष्वपि शिवात्मता न स्फुरति, अहमंशेदमंशयोः स्वातन्त्र्येण पृथगवभासः। द्वैतं स्फुटं भवति चैतन्यांशस्य क्रमशः सर्वानुस्यूतत्वसंकोचो जागर्ति। यथा शाङ्करमतेऽऽवरणशक्त्या ब्रह्मणः स्फुटतयाऽनवभासः, विक्षेपशक्त्या च नानाविधस्य सृष्टिः। तादृगेवेयं माया विद्यते।

एवं निष्कलो निरंशोऽपि भगवान् शिवः सर्वानुस्यूततायाः संकोचेन परिमितशक्तिसम्पन्नः सर्वकर्तृत्वं विसृज्य किञ्चित्कर्तृत्वं धत्ते। परिमिततामापन्नः सर्ववस्तुसम्पर्काभावाच्छरीरेन्द्रियसम्बद्धानेव गृह्णन् सर्वज्ञतां विहाय किञ्चिज्ज्ञः सम्पद्यते; परिमिततया किञ्चिज्ज्ञतया च नित्यतृप्तेरभावात् सन्निकृष्टविषयानुरागी भवति, कालवशतया च परिच्छिद्यमानो नित्यतां निरुन्धे, परिमितशक्तितया च स्वातन्त्र्यविहीनो जायते। निरोधकानि च आवरणशक्तिरूपाणि कञ्चुकपदव्यपदिष्टानि कला-७ विद्या-८ राग-९ काल-१० नियति-११ रूपाणि सप्तमादारभ्यैकादशं यावत् पञ्च तत्त्वानि परिगण्यन्ते, ततश्च पुरुषो द्वादशतत्त्वमवतरति। स एव च जीवात्मा स्थूलजगति अहमंशश्चेतनः, तद्भिन्नाश्च सर्वे जडस्वरूपा इदमंशा विषयांशा वा त्रयोदशं प्रकृतितत्त्वम्। अग्रे च सांख्यानुसारी प्रायस्तत्त्वानामाविर्भावः।

प्राय एवमेव शब्दान्तरेण वर्ण्यमानं शाङ्करवेदान्तेऽपि। तूलाविद्याऽवच्छेदवशादन्तःकरणतादात्म्याध्यासाद्वा सर्वसम्बन्धाभावाद् यत्किञ्चित्कर्ता, ज्ञानेऽन्तःकरणवृत्तिपरतन्त्रतया सकलविषयसन्निकर्षाभावादल्पज्ञः, विषयलाभाभावेन तृप्तेरभावाद् रागवान्, शरीरेन्द्रियपरतन्त्रतया तेषां काला-

वच्छेदाच्चानित्यः, कर्मादिशक्तिनियन्त्रितश्च स्वातन्त्र्यविहीनो जीवश्चेतनो भवति।

यथा च वेदान्ते परिणामस्वभावा माया नानारूपतां धत्ते, ब्रह्माधिष्ठिताया मायायाः परिणामा अपि ब्रह्मण्यध्यस्ताः, अधिष्ठानाध्यस्तयोरभेदव्यवहार इदं रजतमिति भ्रमस्थले क्लृप्तः, अधिष्ठानसत्तया च स्फुरन्तो मायापरिणामाः कार्याणि सर्वं ब्रह्ममयं जगदिति रीत्या ब्रह्मरूपाण्येव, तथा प्रत्यभिज्ञादर्शनेऽप्यनन्तशक्तिसमष्टिरूपाया विमर्शशक्तेर्नानाकारपरिधानाद् विमर्शशक्तिमतोऽभिन्नस्य शिवस्यापि सर्वात्मकतया शिवाद्वैतं निर्बाधं सिध्यति। वेदान्तनये च मिथ्याभूतमायाकार्यतयाध्यस्ततया च मिथ्याभूतानां विकाराणां बाध्यमानतया स्वतःसिद्धं प्रकाशमात्रसारं ब्रह्माद्वयमवशिष्यते। त्रिकमते तु सत्या शक्त्या प्रसूतानामनध्यस्तानां विकाराणां सतामेव शक्त्यभिन्नशिवप्रसूतानां सतां शिवात्मकतया शिवाद्वयं निर्वहति। वेदान्ते नानात्वमसत्, शैवमते नानात्वमपि सत्। वेदान्ते नानावस्तूनि मिथ्याभूतानि ब्रह्मैव सत्, त्रिकतन्त्रे नाना वस्तूनि सन्ति सन्ति शिवात्मकानि, अत एव शिवाद्वैतम्।

परिणामवादे उपादानस्य विकारित्वम्, विवर्ते च विकाराणामविद्याकार्यतया मिथ्यात्वम्, अत्र स्वातन्त्र्यवाद उभयविलक्षणतयोपादानस्य शुद्धत्वं विकाराणामपि सत्यत्वम्। शिवस्येयं भगवती स्वातन्त्र्यशक्तिरतुलितमहिमा किं किं न कर्तुमकर्तुञ्च समर्था येन काचिदनुपपत्तिः प्रसरेत्।

तथा हि—शिवस्येश्वरादिरूपतापन्नत्वं कादाचित्कं स्वाभाविकं वा? आद्ये निरपेक्षं सापेक्षं वा? तत्र निरपेक्षतायां मुक्तावप्यहङ्कारप्रभृतिपर्यन्तसर्जनात् कादाचित्कभोगापत्तेः, सापेक्षतायां सहकारिणः प्रक्षये शिवात्मककार्यस्य विनाशे शिवस्य विलयापत्तेः। स्वाभाविकत्वे शिवस्य सर्वदा भाववद् भोगसाधनानां विकाराणां सर्वदा भावात् किं कुर्यात् संहरणशक्तिः? किन्तु लोकवत्तु लीलाकैवल्यमिति न्यायेन स्वातन्त्र्यशक्त्या कदाचित्सृष्टिः कदाचन चोपसंहरणम्, मुक्तानाञ्च न भोगः।

ईश्वरानुग्रहादेवा पुंसामद्वैतभावनेति रीत्यैव दीक्षोपेयस्य शक्तिपातापरनामकस्य शिवानुग्रहवशादेव सर्वत्राहमिति स्फूर्तिद्वारा शिवात्मसाक्षात्कारस्तेन च मुक्तिरिति।

प्रत्यभिज्ञोपयोगोऽपि वेदान्तदर्शनमनुहरति. शास्त्रेषु यः सर्वकर्ता सर्वज्ञः स्वतन्त्रः शिवः श्रुतः स एवाहमिति प्रत्यभिजानन् क्रमशो मननिदिध्या-

सनसिद्धिद्वारा शिवात्मतां साक्षात्कृत्य मुच्यते। वेदान्तेऽपि तत्त्वमसि श्वेतकेतो ? इति महावाक्यं सदेव सोम्येदमग्र आसीदित्यादि श्रौतं सदात्मानं श्वेतकेत्वात्मतया ग्राहयति, गृहीतवाक्यार्थश्च श्वेतकेतुः स एवाहमित्येव आत्मानं भावयेत्। तथा च प्रत्यभिज्ञा न नूतना। अग्रे लक्षणया अखण्डार्थ-वर्णनं वेदान्तस्य तत्त्वस्तु विशेषः, परं प्रत्यभिज्ञापर्यन्तं तु गृहीतमेव। इति विस्तरभिया संक्षेपतः संसूच्य विरमति।



वाराणसेयसंस्कृतविश्वविद्यालय त्रैमासिकी सारस्वतीसुषमा पत्रिका वर्ष १५ अङ्क १–२–३–४ संयुक्त प्रकाशनतिथि–श्रावण-पूर्णिमा संवत् २०१६

# शिव और ब्रह्म का अद्वैतवाद

कश्मीर के प्रत्यभिज्ञादर्शन का अद्वैत शिवाद्वैत है, और शाङ्करवेदान्त का ब्रह्म ब्रह्माद्वैत यहां कहा जाता है, उसमें प्रत्यभिज्ञा दर्शन के मार्ग से ही कुछ उस दर्शन के तत्त्वों को लेते हुए ब्रह्माद्वैत के साथ संक्षेप से साधर्म्य तथा वैधर्म्य का निरूपण किया जाता है। और उसमें लेख शरीर के बढ़ने के भय से प्रायः प्रमाणवाक्यों की उपेक्षा करते हुए वस्तु स्वरूपों को ही दिखा कर समाप्ति का प्रयास किया जायेगा। यद्यपि ईश्वरप्रत्यभिज्ञा विमर्शिनी की टीका भास्करी आदि से शिवशक्तिसामरस्य स्वरूप एक सैंतीसवां ३७ तत्त्व आता है, और उसी को प्रथम बनाना उचित मालूम पड़ता है, तो भी शिव और शक्ति के वर्णन से ही करीब-करीब उस सामरस्य का भी वर्णन हो सकेगा, तथा प्रसिद्ध ३६ छत्तीस तत्त्व हैं उसको मानकर उसी रीति से ही उसका प्रथम मानना समझना चाहिये।

( १ ) उसमें शिवप्रकाश तथा स्वप्रकाश है, अपने से भिन्न प्रकाश का विषय न होना स्वप्रकाश है। यद्यपि विमर्शशक्ति के अहं विमर्श का विषय है तो भी वह

विमर्श शक्ति शिव की शक्ति है, शक्ति और शक्तिमान् में भेद नहीं होता, विमर्शशक्ति शिव से भिन्न नहीं है, इससे अपने से भिन्न प्रकाश का अविषय है। इसीलिये अहम् अंश का ग्राहक कहा जाता है, शिव के आत्मस्वरूप की अहम् ऐसी स्फूर्ति है, वही विमर्श शक्ति है।

श्लोक के द्वारा इसके माहात्म्य की ऐसी स्तुति की जाती है कि शाङ्करवेदान्त का परमशुद्धब्रह्म स्वप्रकाशस्वरूप अहम् विमर्श से शून्य है, अपने को भी नहीं जानने वाला प्रकाशक मणि के ऐसा प्रायः पत्थर है, विमर्श शक्ति के मार्ग से प्रत्यभिज्ञा दर्शन में 'मैं हूं' इत्यादि एक विलक्षण दृष्टि चलती है जिसको प्रत्यभिज्ञा कहते हैं। शक्ति के विना वस्तु निस्सार होता है इसलिये शक्ति के विना शिव जडप्राय हैं, शिव के विना आश्रय हीन शक्ति भी कुछ नहीं, इनसे शक्ति सहित शिव परम आदि तत्व स्वप्रकाश सभी का प्रकाश है। ऐसा वर्णन विमर्शिनी टीका में मिलता है।

वेदान्त का ब्रह्म भी प्रकाश और स्वयंप्रकाश है, इन शब्दों से शिव और ब्रह्म का साम्य वर्णन है। इसी प्रकार जगत् का उपादानत्व विभुत्व नित्यत्व सभी का आत्मरूप होना दूसरा कोई उसके समान न होना शक्ति वाला होना, इत्यादि धर्मों से भी शिव और ब्रह्म का साधर्म्य समझना चाहिये। किन्तु सूक्ष्मदृष्टि से उन उन शब्दों के अर्थों का विचार करने पर विधर्म ब्रह्म के साथ सधर्म शिव या दूसरा भी कोई समानता को कैसे छू सकता है, धर्म शून्य के साथ धर्म वाले का साधर्म्य नहीं हो सकता, निर्धर्म का साधर्म्य भी कैसे।

जैसे कि–वेदान्त का ब्रह्म सर्वथा धर्मों से शून्य प्रकाश स्वरूप ही है, अपने से अथवा अपने भिन्न दूसरे प्रकाश से प्रकाश्य नहीं है, सर्वथा अविषय है, अपने से भिन्न प्रकाश नहीं है, स्वयं ही प्रकाश है ऐसा स्वप्रकाश शब्द का अर्थ है, प्रकाश्य होना अथवा प्रकाश का विषय होना जड़पना है, ब्रह्म से भिन्न सभी ब्रह्म प्रकाश से प्रकाश्य जड़ हैं, चाहे वे शक्ति हों अथवा अशक्ति हों, ब्रह्म से भिन्न हों या अभिन्न हों जड़ ही है। उस प्रकार वेदान्त दृष्टि से प्रत्यभिज्ञा दर्शन के प्रसिद्ध शिव और शक्ति जड़ ही है। शिव और शक्ति प्रत्येक जब जड़ हैं तब अन्धसमुदाय के ऐसा मिलित भी जड़ ही रहेंगे प्रकाश कैसे होंगे। इस प्रकार कोई प्रकाश न होने से सभी का आन्ध्य हो जायेगा।

प्रत्यभिज्ञा दर्शन में भी शक्ति के विना शिव की तथा शक्त शिव के विना शक्ति की निस्सारता कही ही गई है, इस प्रकार उसको और स्फुट करें—विमर्श शक्ति स्वयंप्रकाश है अथवा अप्रकाश है, पहले पक्ष में और प्रश्न करें कि शिव की अपेक्षा करती हुई स्वयंप्रकाश है अथवा विना अपेक्षा से ? पहले पक्ष में स्वयम् अप्रकाश हो गई, दूसरे पक्ष में शिव की अपेक्षा के विना ही स्वयं प्रकाश सत् होती हुई अपने प्रकाश से शिवरूप को सजाती है तो उसकी शिव सापेक्षता कैसे कही जायेगी। और उसका कैसा परतन्त्र स्वभाव है जिससे वह शक्ति कहाये। प्रथम विकल्प के द्वितीय पक्ष में स्वयम् अप्रकाश रूप होती हुई शिव को प्रकाश कैसे करेगी।

और भी—शक्ति और शिव का अभेद कहते हैं, वह अभेद तादात्म्य के ऐसा भेद के साथ है अथवा भेद के विना है। प्रथम पक्ष में द्वैत गर्भ को धारण करती हुई यह अद्वैत भावना पारमार्थिक द्वैत को ही पैदा करती है, परप्रकाश सम्पादन द्वारा शिव की जड़ता को ही पोषे, दूसरा पक्ष भी संभव नहीं, सर्वथा अभेद में शक्ति और शक्तिमान् का भाव कहीं नहीं देखा जाता, स्थिर वस्तु का परिवर्तन होने वाला धर्म शक्ति कहा जाता है, अथवा नित्य का अनित्य धर्म शक्ति कहा जाता है। सर्वथा अभेद में शक्ति मानना सर्वथा नूतन होगा। स्वभाव का शक्ति शब्द से व्यवहार होता है ऐसा कहें तो अपना भाव अपना धर्म शक्ति हुई तो भी सर्वथा अभेद में धर्मधर्मी भाव नहीं होता, स्वयं होना स्वभाव कहें तो भी क्लिष्ट ही कल्पना होगी, अहम् ऐसे विमर्श मात्र अव्यक्त शिव स्वभाव की आपत्ति होगी, घट आदि वस्तुओं के प्रकाश के लिये दूसरे प्रकाश की खोज करना पड़े, घट के प्रत्यक्ष में अहम् विमर्श का अनुभव नहीं है। शक्ति शिव से अलग नहीं रहती इसलिये उसको शक्ति या स्वभाव कहते हैं। उसी से उसका अभेद व्यवहार भी है, ओ मिला, नैयायिकों के अयुत सिद्धों के ऐसा, रामानुज दर्शन के अपृथक् सिद्धों के ऐसा वास्तविक भिन्न स्वभाव वालों का व्यवहार के अनुसार पारिभाषिक अद्वैत है, जो ब्रह्माद्वैत से दूर जाता है। इसी प्रकार अहम् इस विमर्श पर भी विचार करना चाहिये।

यद्यपि भामती में अहम् वस्तु पूतिकुष्माण्ड = सड़ा कोहड़ा किया गया है तोभी अहम् के प्रकाश में चिदंश या चित्प्रतिबिम्ब का उपयोग है ही, इसलिये पीछे होने वाली

## ब्रह्मवादशब्दार्थः

यद् दर्शनं प्रपंचस्य अभिन्ननिमित्तोपादानं ब्रह्मेति अङ्गीकुरुते तद् ब्रह्मवाददर्शनमिति व्याख्या लिलक्षिपति। ब्रह्मैव प्रपञ्चस्य परिणामि उपादानं कर्तृ चेति शुद्धाद्वैतदर्शनमेव ब्रह्मवादि इति समनुगमयति, न्यायश्चेतनमीश्वरं कर्त्तारं जडान् परमाणून् मनुते, न निमित्तोपादानयोरभेदम्, सांख्यं जडप्रकृतिमात्रकारणवादि, प्रकृतेश्चैतन्यावेशाय केवलं चेतनसन्निधानमुपयोजयति, विशिष्टाद्वैती अपि वैशिष्ट्येन शरीरशरीरिभावेन च व्यामोहत्येव न चेतनस्य ब्रह्मण उपादानताम् अङ्गीकरोति। शुद्धाद्ब्रह्मणोऽजायमानो जगज्जडवर्गोऽचिताविशेषणेन प्रकृत्या विशिष्टाद् ब्रह्मणो जायते इति उपपादनमेव जडायाः प्रकृतेर्जडवर्गस्य जायमानतां व्यनक्ति। प्रकृत्युपादानत्व एव पर्यवस्यति इत्यभिप्रैति। ईश्वर उपादानं निमित्तं चेति शाङ्करवेदान्तिनोऽभिन्ननिमित्तोपादानतामीश्वरस्योपपादयन्ति। परं मायासहायः ईश्वरः, शुद्धं ब्रह्म तु अकिञ्चित्करं साङ्ख्यस्येव, तेन सहायभूतायां मायायां वर्तमानं परिणाम्युपादानत्वं परमेश्वरे परिकल्पयन्ति, विवर्त्तस्तु न काचित् प्रक्रिया उपादानस्य, न कुत्राप्युपयुज्यते, उपादेयानां पदार्थानां मिथ्यात्वापादकश्चेति अनुपादेय एव आस्तिकानामिति उपपादयति व्याख्या। शुद्धाद्वैतं विना न किमपि दर्शनं चेतनस्य परिणामं मनुते। चेतनपरिणामवादित्वमेव यदि ब्रह्मवादस्तदा का आशा अन्यदर्शनेषु ब्रह्मवादसंक्रमणस्येति नाविदितं दर्शनवनीं विहारव्यसनिनाम्।

सृष्टेः प्रागपि सूक्ष्मप्रपञ्चो ब्रह्मैव, ब्रह्मणोऽद्वितीयत्वश्रुत्या प्रपञ्चस्य ब्रह्मभिन्नत्वासंभवात्। ब्रह्मभिन्नं न किञ्चिदिति श्रुतिसम्मतम्। एकाकि अरममाणं ब्रह्मैव स्थूलप्रपञ्चं ससर्ज, स्थूलरूपं प्रादुरभूत्, स्वमेव प्रपञ्चरूपं व्यधात्, अत्रैव श्रुतेस्तात्पर्यम् इति निर्णय एव ब्रह्मवाद इति संक्षेपतो मूलग्रन्थस्वरसः।

## शाङ्करवेदान्तेन सह तुलना

### (१) सृष्टेः प्राग्ब्रह्मस्वरूपम्।

शुद्धाद्वैतस्य सर्वशक्तिसम्पन्नं सगुणम् अनेकधर्माणां धर्मि सूक्ष्मरूपेण कारणरूपेण वा सर्वप्रपञ्चनिधानम् सत् चिद् आनन्दाकारं ब्रह्म। जीवादृष्टसहायोऽपि स्वतन्त्रः अक्षरे परस्मिन् धाम्नि विराजमानः पुरुषोत्तमः श्रीकृष्णो भगवान्।

शाङ्करवेदान्तस्य सृष्टेः प्राक्कालिक ईश्वरः शुद्धाद्वैतसम्मत एव, अक्षरपुरुषोत्तमादिभेदो नावश्यकः, परमीश्वरे विशेष्यांश उपधेयांशो वा सच्चिदानन्दः। जडवर्गस्य सृष्टिशक्तिः प्रकृत्यंशो यां मायामिति आचक्षते। तत्र सर्वे गुणा धर्माः कारणात्मना प्रपञ्चादयोऽपि वर्तन्ते, अतः शुद्धाद्वैतस्य ब्रह्म ईश्वर एव।

सच्चिदानन्दरूपम् एकमेव ब्रह्म। ब्रह्मणा सदंशेनान्वयादेव अन्यानि सन्ति प्रतीयन्ते। एकमेव सद् एतावतैव अद्वैतम् अन्यस्य सतो व्यावर्तकम्, अतः सृष्टेः प्राग् द्वितीयस्य सतोऽक्षरादेर्भेदो नाङ्गीक्रियते, यदि एक एव सदंशोऽक्षरपुरुषोत्तमादिषु तदा न विरोधः। सद्भिन्नमायारूपमिथ्यापदार्थस्य सृष्टेः प्राक्सत्त्वेऽपि न सदेव सौम्येदमग्र आसीदित्यादिश्रुतिविरोधः, वृक्षस्य शाखादिवत् स्वगतभेदस्यापि व्यावर्तनान्न गुणगुणिभावो न वा धर्मधर्मिभावः।

यस्य कदापि न बाधः स एव सन्, यः कदाचिदस्तीति प्रतीयते अन्यथा नास्तीति च, स मिथ्या, कदाचिदपि अप्रतीयमानाच्छशशृङ्गादेस्तुच्छाद्विलक्षणः संसारदशायां यथा प्रतीयते तथैव। अतः परमस्य नाविर्भाव इति यस्य विषये निर्णयः स मिथ्येति शुद्धाद्वैतभाषया मिथ्यापदार्थपरिचयः।

उपनिषदि क्वचिद्गुणस्य निषेधोऽन्यत्र सगुणस्य वर्णनम्। शाङ्करदर्शनं वस्तुतो गुणनिषेधं मन्यमानं सगुणप्रतीतिं मायाकृतां मन्यते। शुद्धाद्वैतन्तु प्राकृतगुणनिषेधम् अप्राकृतविलक्षणगुणविधानञ्चाङ्गीकुर्वाणम् अप्राकृतान् सत्त्वरजस्तमोगुणान् ब्रह्मणि मनुते, तेन ब्रह्मणः स्वाभाविकं सगुणत्वम्, शाङ्करदर्शने तु प्राकृतगुणैरेव व्यवस्था। सोपाधिकब्रह्मण ईश्वरस्य सगुणत्वम् ऐश्वर्यञ्च।

यद्यपि उभे दर्शने ब्रह्मणो वेदैकगम्यत्वं तर्कस्याप्रतिष्ठानत्वं वेदे लक्षणाया अनर्हत्वं मुख्यार्थबाधाभावञ्च उच्चैरुद्गायतः, परं तर्कं शरणीकुर्वात एव लक्षणामुपासात एव, मुख्यार्थबाधवर्णने प्रमाणान्तराणां तात्पर्यनिर्णये च तर्कस्यावश्यमुपस्थानाद् वासनायाः साम्प्रदायिकाग्रहस्य चोपयोगो जायते। तेनैकस्यापि श्रुतिवाक्यस्य विरुद्धविभिन्नव्याख्यानानि प्रचलन्ति, तेन दर्शनद्वयस्य प्रक्रियापरिचयानन्तरं तथ्यातथ्यनिर्णयाय तटस्थविदुषां मनोवैज्ञानिकपरीक्षणमेव शरणम्।

अतः परं ब्रह्मवादस्य कतिपयकारिकासमुद्धरणपुरस्सरं व्यवहार-दशायां परमार्थदशायां वा न भूयान् विभेदोऽनयोर्दर्शनयोरिति स्फोरयितुं प्रयत्यते ।

सर्वोपनिषदाऽभेदः स्पष्टमेव निरूपितः ।
अतोऽस्मत्प्रत्ययो भ्रान्तो मायावृत्तविलोकनात् ॥ ३ ॥

जगता सह ब्रह्मणोऽभेदः स्पष्टमेव वर्णितः । वयञ्च न ब्रह्मरूपं पश्यामः, अतोऽस्माकं जगद् वस्तुप्रतीतिः भ्रमरूपा, ब्रह्मज्ञानात् प्राङ्मायाया याः प्रभावः, मायया आच्छादितस्य विलोकनं जायते । शाङ्करदर्शनानुसारं भ्रान्ते-त्यस्य बाधितोऽर्थः, ब्रह्मज्ञानानन्तरं बाधितत्वे हेतुर्मायावृत्तत्वं मायिकत्वम्, ब्रह्मज्ञानेन मायया विरोधान्मायिकवस्तूनां बाधः तथा चोभयेषां जगत्प्रतीति-र्भ्रान्तिः । यद्यपि अत्रत्या व्याख्या मायिकशब्दं मिथ्याशब्दं वा वस्तुनो विशेषणं न सहते, मायां वस्तुप्रतीतावुपयोजयति न तु वस्तुरचनायां तथापि न भूयान् विभेदः, प्रतीतेर्वस्तुव्यवस्थापकत्वेन प्रतीयमानमेव वस्तुरूपं प्रतीतिविषयः पर्यवस्येत् ।

उत्पन्ने ब्रह्मविज्ञाने सद्यस्तद्बाधदर्शनात् ।
अवास्तवं रूपमेतद् वाचारब्धं विकारि तत् ॥ ४ ॥

ब्रह्मज्ञानानन्तरं शीघ्रमेव जगत् प्रतीतीनां बाधदर्शनात् प्रतीयमानं जगतो रूपं न वास्तविकं वाचारब्धं विकारयुक्तञ्च, ब्रह्मणो निर्विकारित्वात्। व्यवहारदशायां सत्त्वेन प्रतीयमानस्यापि जगत्प्रपञ्चस्य ब्रह्मज्ञानानन्तरम् अवास्तविकत्वं मिथ्यात्वं विकारित्वञ्च स्फुटं भवतीति दर्शनद्वयस्य समानत्वम् अस्य न्तिमभागेन शुद्धाद्वैतस्य मिथ्याशब्दाद्विद्वेषस्तस्य वस्तु-विशेषणत्वासहनञ्च न शोभत इति प्रतिभाति ।

ब्रह्मबोधेऽनृतस्यापि ब्रह्मत्वात् प्रत्ययस्तथा ।
यावद् बोधं सत्यस्यासत्यस्य कथनं पुनः ॥ ५ ॥

ब्रह्मज्ञानानन्तरं मिथ्याऽनृतं वा वस्तु ब्रह्मरूपेणैव प्रतीयते । यावद् ब्रह्मज्ञानं न जायते तावच्छास्त्रप्रतीतिवशाद् ब्रह्म सत्यं ब्रह्मातिरिक्तं मिथ्येति-कथनं भवति न तु प्रमाप्रतीतिरिति । पूर्वतनकारिकायाम् अवास्तवशब्दोऽत्र-

त्यश्च अनृतशब्दः स्फुटं वस्तुविशेषणं न प्रतीतिविशेषणम् । तेन व्यावहारिकवस्तूनाम् अनृतत्वं मिथ्यात्वं वा कारिकाकृद्भ्यो रोचते स्मेति प्रतिभाति ।

व्याख्याकारास्तु मायाद्वारा कश्चिद्विशेषो वस्तुषु जायते यं विषयतामाचक्षते, तया विषयतया विशिष्टस्य मिथ्यात्वमनृतत्वं वा, नामरूपे अपि ब्रह्मणः समुत्पन्ने सत्ये, मायासम्बन्धादेव अनृते, इति वदन्ति, अस्य तुलना पञ्चदशीजीवसृष्टवस्तुभिः सांख्यस्य प्रत्ययसर्गेण सह संभवति । न विरुध्यते चैतच्छाङ्करदर्शनेन—ब्रह्मणः सदंशस्यान्वयात् सत्त्वेन प्रतीयमानं नाम रूपञ्च सदेव, ब्रह्मज्ञानानन्तरन्तु सदंश एव सन्, सद्भिन्नं नामरूपञ्च मिथ्या, शुद्धाद्वैतमते ब्रह्मात्मना नामरूपे सत्ये । व्याख्याकारमते अहन्ताममतासम्बन्धशून्यं नामरूपञ्च सदिति आयाति, मायाकार्याऽविद्यायाम् अहन्ताममतासम्बन्धवर्णनात् ।

शाङ्करदर्शने केवलं सदंशस्यैव कार्यवस्तुषु अन्वयः परं शुद्धाद्वैते ब्रह्मणो नानाधर्मधर्मितया अन्यधर्माणामपि अन्वयादन्यरूपेणापि वस्तूनि सन्ति स्युरिति विशेषोऽभ्यूहनीयः ।

पश्चात् सर्वस्य सर्वत्वं नानृतं किञ्चिदस्ति हि ।
देहादयोऽनृतं तावद् यावत् कार्यतया मतिः ॥ ६ ॥

ब्रह्मज्ञानानन्तरं सर्वं ब्रह्मैव, किमपि मिथ्या नास्ति । अस्य कारणस्येदं कार्यम् इत्यादि भानं यावद् देहादिषु वर्तते तावदेव ते मिथ्याभूताः ब्रह्मज्ञानानन्तरं ब्रह्मतया परिज्ञाने सर्वं ब्रह्मैवेति यथोक्तं प्राक् । तथा चैतन्न शाङ्करवेदान्तविपरीतम् । व्याख्याकारदिशा मायाकार्याविद्यासम्बन्धाद् वस्तु अनृतम्, ब्रह्मज्ञानेनाविद्यासम्बन्धविनाशे ब्रह्मैवेति भावोऽनुसन्धेयः । अहं गौरः स्थूलः, मम शरीरं गृहम् इत्याद्यभिमानो ब्रह्मज्ञानानन्तरं विनश्यति यथा पर्वत-नदी-वनादयो भगवदुद्भूताः ब्रह्मरूपाः तथा शरीरेन्द्रियादयोऽपीति अभिप्रायो वर्णयितुं शक्यः । नात्रापि शाङ्करदर्शनविरोधः । ब्रह्मज्ञानात्प्राक् प्रत्यक्षादिप्रमाणबलात् यद्वस्तु यथा प्रतीयते ब्रह्मज्ञानोत्तरमपि तत्तथैव प्रतीयते, परं प्राक् प्रमात्वस्याभिमानः पश्चाच्च बाधितत्वादप्रमात्वं पर्यवस्यतीति निष्कर्षः ।

## (२) सृष्टेरनन्तरं प्रपञ्चस्य ब्रह्मणश्च स्वरूपम् ।

अत्रापि द्वयोर्दर्शनयोर्न विशेषभेदो वक्तुं शक्यम्, प्रपञ्चो जगद्वा सत्यम्, संसारो मिथ्येति शुद्धाद्वैतस्य साम्प्रदायिकी संज्ञा, न दार्शनिकविचार-

धुराया अध्वा, ब्रह्मज्ञदृशा ब्रह्मकृतः प्रपञ्चो ब्रह्मैवेति उभे मन्येते, ब्रह्मणः सदंशस्य प्रपञ्चे समन्वयात्। व्यावहारिकदृशा प्रत्यक्षादिप्रमाणैर्यद् यथा प्रतीयते तत्तथैव। शास्त्रतात्पर्येण व्यावहारिकवस्तुप्रतीतिर्भ्रान्ता प्रतिभाति, परं शास्त्रीयं परोक्षज्ञानं प्रमाणं न बाधितुमीष्टे, ब्रह्मणोऽपरोक्षज्ञानमेव ब्रह्मज्ञानमभीप्सितम्। उभयोर्ब्रह्मज्ञानस्वरूपेऽस्ति कश्चित् सूक्ष्मो भेदः परं प्रकृतप्रसङ्गे विचारणीयः साम्प्रतमुपेक्षणीय एव।

ब्रह्मविष्णुमहेश्वरा उपाधिभेदाद् भिन्ना द्वयोः समानाः, पुरुषोत्तमस्य तुलना शाङ्करेश्वरेण कार्या। अक्षरब्रह्मणि प्रमेयरत्नार्णवे द्वे दृष्टी वर्णिते, ज्ञानिनो दृष्टिः कूटस्थशाङ्करब्रह्मेव, भक्तदृष्टेस्तु भूयांशोंऽशाः शाङ्करेश्वरे समन्विताः। अन्तर्यामी तु उभयोर्वर्तते, प्रमेयरत्नार्णवे जीवभेदेनापि अन्तर्यामिभेदो निरूपितः, तस्य पञ्चदशीचित्रदीपवर्णितकूटस्थेन सह तुलना संभवति।

## ( ३ ) प्रपञ्चब्रह्मणो सम्बन्धः।

जगतः उपादानं कर्तृ च ब्रह्म, जगदुपादेयं कार्यम्, उपादानोपादेय-योरभेदः, अतः प्रपञ्चब्रह्मणोरुपादानोपादेयभावस्तन्मूलकोऽभेदः, कर्तृकर्म-भावश्च सम्बन्धः, उपादानसत्तातिरिक्तायाः कार्यसत्ताया अभावः, उपादान-सत्तैव कार्येऽवेति, ब्रह्मसदंशस्य प्रपञ्चे समन्वयस्य उभाभ्यामङ्गीकारात्। उपादानं द्विधा परिणामी विवर्तश्च। जगन्माययापि विरच्यते इति माया-परिणामिन्युपादानम्। यस्मिन्सदृशवस्तूनां भ्रमो भवति तदधिष्ठानं विवर्तोपादानं कथ्यते, परिणामिनो विकारित्वाद् ब्रह्मणो विकारित्वस्या-सह्यत्वाद् ब्रह्मणि अध्यस्तं जगत् प्रकाशते इति शाङ्करवेदान्तस्य मान्यता। अयं विवर्तः कुत्रचिद् बौद्धनये भर्तृहरिप्राचीनदार्शनिकग्रन्थे प्राप्यते। अन्यानि वैदिकदर्शनान्यपि नैनं मन्वते। शुद्धाद्वैतं विहाय अन्ये समे परिणा-मिनो विकारित्वम्, तेन चेतनस्यापरिणामञ्चाङ्गीकुर्वते। परिणामवाद्यपि सांख्यं प्रकृतिमेव परिणमयति न चेतनम्। कतिपये दार्शनिकाः कुत्रापि परिणामं न स्वीकुर्वन्ति यथा बौद्धानां संघातवादः, न्यायवैशेषिकमीमांस-कानाम् आरम्भवादश्च प्रसिद्धः।

शुद्धाद्वैते माया सृष्टौ नोपयुज्यते, परिणामिनो विकारित्वनियमो नास्ति, सुवर्णस्यैकस्य कटक-कुण्डल-मुद्रिकादयः क्रमशो निर्मीयन्ते तथापि तदेव सुवर्णम्, तत्रैव समयेन पुनरपि कटकं विनाश्य कुण्डलं निर्मीयते,

तथापि न सुवर्णांशस्य विकारः, तथा च अविकृतपरिणामवादः, एकस्यापि वस्तुन एकस्मिन्नुपादाने पौनःपुन्येन आविर्भावतिरोभावौ, एतदपि अविकृत-परिणामस्य परिचायकम्, विकारेणोपादानपरिवर्तने नैवं स्यात्, एवं कल्प-पादप-चिन्तामणिप्रभृतयो नित्यं नूतननिर्माणनिष्णाता अपि न मनागपि न्यूनतामासादयन्ति। विद्वन्मण्डनपुस्तके महाभारतकथ प्रदर्शनेन परिमार्जि-तोऽयं पन्थाः। तत्र संग्रामसमुत्सृष्टशरीराः वीराः धर्मपत्नीप्रार्थनाभिः प्रसादित-वेदव्यासप्रभावेण समुद्भूता धर्मपत्नीभिः संगताश्च तासां पातिव्रतं न व्यभञ्जयन्। भवतु नाम, अन्येषां दार्शनिकानाम् एकस्य वस्तुनो नास-कृदुत्पादविनाशौ ताभ्यां वस्तुपरिवर्तनञ्च। अत्र नोत्पादविनाशौ किन्तु आविर्भावतिरोभावौ, न च तावसकृदसंभावितौ न वा ताभ्यां वस्तुपरि-वर्तनम्। यदपि एकस्मिन्नुपादानेऽनेकोपादेयवस्तूनां सत्तास्वीकारे तेषां युगपदाविर्भावभयम् तदपि सर्वनियामिकया भगवदिच्छयैव आविर्भाव-तिरोभावयोरपि नियमनान्निरस्तम्। तथा च मायां विनैव शुद्धं ब्रह्म जगदा-कारेण परिणममानं न विकरोति इति स्वीक्रियते।

## (४) मुक्तावस्थायां जीवस्वरूपम्।

मुक्तावस्थायां जीवः सच्चिदानन्दरूपः किन्तु अणुपरिमाण एव, ईश्वरान्न्यूनोंऽशरूपेणैवावतिष्ठते शुद्धाद्वैतस्य। शाङ्करदर्शने तु नाना प्रस्थान-भेदाः समजायन्त, सर्वे च सूक्ष्मविभेदं विदधत्येव। न च तेषां निरूपणमत्र संभवति। समासेन तु बद्धावस्थायामपि जीवो ब्रह्मैव। यथा शुद्ध आकाशो गृहे उपाधौ निर्मिते गृहाकाशो भवति, तथा ब्रह्मापि उपाधिसंपर्काद् जीवो भवति, उपाधिप्रभावेण च परिमाणगुणान् आनन्दतिरोधानादिकञ्च भजते। गृहे उपाधौ विलीने गृहाकाशः शुद्धाकाश एव यथा तथा मुक्तावस्थायामु-पाधिविलये जीवो ब्रह्मैव न पृथग् वर्तते कस्तस्य स्वरूपभेदः स्यात्।

## (५) माया।

अघटितघटनापटीयसी ब्रह्मणः शक्तिः शक्तिमताऽभेदमापन्नवती आवरणं विक्षेपञ्च विदधाना माया न ब्रह्मातिरिक्तसत्तां बिभर्तीति दर्शन-द्वयस्य समानम्। यद्यपि प्रमेयरत्नार्णवे आवरणविक्षोभशब्दौ न वर्तेते किन्तु समानार्थौ स्तस्तेन न विभेदः। ईश्वरेच्छाया अपि मायाशब्देन शुद्धा-द्वैते भूयान् व्यवहारः, सर्जने उपयोगश्च परं न परिणाम्युपादानतया किन्तु निमित्तत्वेन ईश्वराभेदेन वा। ईश्वरेच्छारूपमायायाः शाङ्करदर्शने कर्तृत्वे

उपयोगः, सापि माया वृत्तिप्रतिबिम्बितचैतन्यरूपा। प्राग्व्याख्याकृता वर्णिता अहङ्कारममकाराविद्याजननी मायाऽपि अनादिरेव, अहङ्कारममकारवासनाया अनादित्वात्। अन्यत्तु प्रागुक्तं योजनीयम्।

## ( ६ ) सत्कार्यवादः

ब्रह्मणः सदंशस्याव्ययात् कार्यं सदिति वर्णितमस्ति, उत्पत्तेः प्राक् कारणेषु सूक्ष्मरूपेण कार्याणि तिष्ठन्तीति सत्कार्यवादः प्रसिद्धः। स च दर्शनद्वयेऽपि वर्तते। मायाया सूक्ष्मरूपेण कार्याणां सत्ता, मायाद्वारा ईश्वरेऽपि तथैवेति शाङ्करवेदान्ताभिमतम्। शुद्धाद्वैते तु ब्रह्मण्येव कार्याणां सूक्ष्मात्मना सत्ता प्रथमोद्धृतपञ्चमकारिकाया अवतरणस्वरूपटीकायाम् अनृतपदार्थस्य यथा लयः प्रतिपादितः तथा अनृतपदार्थानामुपादानं मायेति आयाति तद्द्वारा ब्रह्मणोऽपि उपादानता तदा सर्वथा साम्यम्। शाङ्करदर्शने ब्रह्मभिन्नानां समेषां पदार्थानां मिथ्यात्वं शुद्धाद्वैते तु न तथा सर्वेषामिति विशेषः षष्ठकारिकाटीकायां समुद्धृतेन 'प्रमेयरत्नार्णवेन' मायिकवस्तूनां मायोपादानम् इत्यपि ध्वन्यते। परं तत्रैव स्मृता सुबोधिनी मायायाः प्रतीतावुपयोगो न वस्तुरचनायामिति ध्वनति। अनयोः समन्वयः साम्प्रतं सुधियां कर्त्तव्यकोटिमाटीकते।

## एकः समन्वयविशेषः

समेषामास्तिकदर्शनानामपेक्षितः। अस्य पदार्थाः, वेदे पुराणादौ च वर्तन्ते, अस्ति च कुत्रचिद् दर्शने संक्षिप्ता चर्चा, बहुषु दर्शनेषु उपेक्षैव प्रतिभाति, न च सर्वेषां दर्शनानां समान एव एव समन्वयः। श्रमसाध्यश्च कतिपयदर्शनेषु। यथा एका साधारणजनोपयोगिनी पृथ्वी, यत्र मलिनं स्वच्छं च कार्यं क्रियते, मृत्तिकाया बहुविध उपयोगश्च भवति। द्वितीया चेतना देवतारूपा आस्तिकहिन्दूजनानां पूजनीया प्रार्थनीया च। तृतीया च गोरूपधरा दैत्यानामत्याचारेण विषीदति ब्रह्मणो विष्णोश्च पार्श्वे प्रयाति भारोद्धारसमाश्वासनेन प्रसीदति च। एवं सूर्यादिग्रहेष्वपि। एकः सूर्यः सर्वसाधारण आतपं प्रकाशादिकञ्च प्रयच्छति, द्वितीयो ग्रहदेवता तत्तत्स्थानस्थितया शुभमशुभञ्च फलं सूचयति। तृतीयो यम-यमुना-कर्णादीनां जनकः। अत्र दर्शने गङ्गामादाय एव समन्वयः सिद्धान्तमुक्तावल्यां विधीयते। आधिभौतिकरूपा साधारणगङ्गा पानीयप्रवाहरूपा स्नानाद्युपयोगिनी। द्वितीया चेतना देवता आध्यात्मिकी गङ्गा स्नानपानाभ्यां श्रद्धावतः पुनाति दुरितञ्च

दूरीकरोति। तृतीया आधिदैविकी तपःप्रसन्ना भक्ताय साक्षाद् भवति शन्तनुपत्नी भीष्मजननी च। अंशत्रयवती एका गङ्गा। एवं दृष्टःश्रुतो जगत्प्रपञ्चो ब्रह्मण आधिभौतिकं रूपम्। आध्यात्मिकं रूपम्। अक्षरं ब्रह्म। आधिदैविकश्च साक्षात् श्रीकृष्णचन्द्रो भगवान् पुरुषोत्तमः। एतावता सर्वं ब्रह्मेति वादो ब्रह्मवाद इति शुद्धाद्वैतसिद्धान्तो यथामति निरूपितः।

दोषाकरोऽसौ सुधया समेतः क्षारं रसं रत्ननिधिर्बिभर्ति।
वाग्शुद्धिदोषो मम कश्यनायं विद्वद्भिनोदं वितरेदवश्यम् ॥१॥

अहमदावादनागरिकश्रीनरसिंहदासगोबर्धनदासपुत्रीस्मारकवल्लभनिधेः पोषणवृत्त्यासनाथो लेखकः—

बम्बई चिन्तामणि फरवरी ७२ अङ्क २ में प्रकाशित

# शुद्धाद्वैत का ब्रह्मवाद

## आधार

श्रीवल्लभदर्शन में ब्रह्मवाद की दो पुस्तकें उपलब्ध हैं। दोनों आकार में छोटी हैं। सरल संस्कृत भाषा अपनायी गयी है। दोनों का नाम 'ब्रह्मवाद' है। दोनों के रचयिता गोस्वामी श्री हरिरायजी महाराज एक ही हैं। विषय एक होते हुए भी उनके प्रतिपादन में भेद है। तथा एक गद्य में, दूसरा पद्य में है। दोनों ग्रन्थ गोस्वामी श्री दीक्षितजी महाराज की संस्कृत-व्याख्या से विभूषित हैं। व्याख्या भी मायावाद आदि विरोधी मतों के खण्डन में प्रगल्भ मालूम पड़ती है किन्तु मूलाक्षर व्याख्यान में प्रायः उदासीन है। इनसे ब्रह्म-स्वरूप लेना है, कुछ अंश श्रीवल्लभाचार्य महाराजविरचित 'सिद्धान्त मुक्तावली' से भी लिया जायेगा, उपपादन में कुछ औरों का भी सम्बन्ध आ ही जायेगा। विषयों के खोजने में कठिनाई नहीं पड़ेगी इस दृष्टि से पृष्ठ आदि का

उल्लेख नहीं किया जायेगा। विषय की स्फुटता के लिए शाङ्कर दर्शन से साम्यवैषम्य का प्रदर्शन उपयोगी समझा जा रहा है।

## ब्रह्मवाद का परिचय

जिस दर्शन में एक ही ब्रह्म जगत् का उपादान तथा कर्ता है वह दर्शन ब्रह्मवादी दर्शन है। शुद्धाद्वैत में ब्रह्म जगत् का उपादान तथा कर्ता है, अतः शुद्धाद्वैत दर्शन ब्रह्मवादी है। न्याय चेतन ईश्वर को कर्ता और जड़ परमाणुओं को उपादान कहता है। इसलिए ब्रह्मवादी नहीं है। सांख्य केवल प्रकृति जड़ को ही उपादान मानता है। प्रकृति में चैतन्यावेश के लिए केवल चेतन सन्निधान का उपयोग करता है। चेतन से कुछ काम नहीं लेता। ब्रह्मवाद से दूर भागता है। रामानुज दर्शन उपादान और कर्ता को अभिन्न कहता है किन्तु वस्तुतः मानता नहीं केवल ईश्वर चेतन परिणामी न होने से उपादान हो नहीं सकता। केवल कर्तामात्र रह जाता है। परिणामी जड़ प्रकृतिको 'अचित्' शब्द से लेकर अचित्-विशिष्ट उपादान है, अथवा ब्रह्म का शरीर प्रकृति परिणामी है। ऐसा कहने से क्या होगा? वैशिष्ट्य और शरीरशरीरि-भाव कहने से क्या होगा? परन्तु स्वरूप ऐसा ही रहेगा। अतः वह भी नाम का ही ब्रह्मवाद है।

शाङ्कर दर्शन अभिन्न निमित्त उपादान ब्रह्म को कहता है किन्तु उसका भी कहना बनता नहीं है। उसके यहाँ भी चेतन ब्रह्म परिणामी हो नहीं सकता। अतः परिणामी मायाशक्ति की सहायता लेता है। केवल ब्रह्म तो सांख्य के चेतन के सदृश अकिञ्चित् कर है। माया में ही उपादानता रह जाती है। ब्रह्म विवर्त उपादान और माया परिणामी उपादान यह प्रक्रिया भी उसकी ठीक नहीं। विवर्त उपादान का कोई उपयोग नही। विवर्त उपादान मानने पर उपादेय जगत् भ्रमसिद्ध मिथ्या हो जाता है। अतः शाङ्करदर्शन भी ब्रह्मवाद नही है। परिणामी ही वास्तविक उपादान है वैसा शुद्धाद्वैत ही मानता है। अतः शुद्धाद्वैत ही ब्रह्मवाद है। ऐसा ब्रह्मवाद व्याख्याकार का शाब्दिक तथा अभिप्रेत है। शुद्धाद्वैत को छोड़कर और कोई भी दर्शन चेतन को परिणामी नहीं मानता, तब चेतन परिणामवाद ही ब्रह्मवाद हुआ। दूसरे दर्शन ब्रह्म-वादी हो ही कैसे सकते हैं।

## मूल स्वारस्य

सृष्टि के पहले सूक्ष्मरूप से या कारण रूप से जगत् प्रपञ्च ब्रह्मरूप ही रहता है। प्रपञ्च को ब्रह्म से भिन्न नहीं कहा जा सकता, क्योंकि श्रुतियों में ब्रह्म को 'अद्वय' शब्द से विश्लेषित किया गया है। ब्रह्म से भिन्न और कोई दूसरा नहीं है ऐसा उसका अर्थ है। क्रीड़ा के लिए ईश्वर ने स्थूलप्रपञ्च की रचना की है। ईश्वर ही स्थूलप्रपञ्च रूप से प्रकट हुए, अपने को प्रपञ्च रूप बनाये, स्थूल सूक्ष्म सभी प्रपञ्च ब्रह्मरूप है। इस अर्थ में श्रुतियों का तात्पर्य निर्णय ही ब्रह्मवाद है ऐसा मूल का संक्षिप्त अभिप्राय है।

## कुछ सिद्धान्तों की शाङ्कर वेदान्त से तुलना

### (१) सृष्टि के पूर्व की अवस्था

**शुद्धाद्वैत**—सर्वशक्तिसम्पन्न, सभी विलक्षण, अलौकिक कल्याण गुणों से युक्त विरुद्ध-अविरुद्ध सभी धर्मों का धर्मी, सच्चिदानन्दस्वरूप सूक्ष्म प्रपञ्चात्मा जीवों के अदृष्ट से सहकृत होनेपर भी उससे स्वतन्त्र तथा अक्षर परमधाम में रहने वाले श्रीकृष्णचन्द्र भगवान् हैं।

**शाङ्करवेदान्त**—सृष्टि के पहले शुद्धाद्वैत के ब्रह्म के सदृश ईश्वर है। अक्षर-पुरुषोत्तम आदि भेद नहीं है। ईश्वर में दो अंश हैं। एक विशेष्य अंश अथवा उपधेय अंश सत्-चित् आनन्दस्वरूप। दूसरा जड़वर्ग की सृष्टि शक्ति प्रकृति अंश, जिसको माया कहते हैं। उसमें सभी गुण-धर्म और कारणरूप से प्रपञ्च आदि हैं। माया द्वारा ईश्वर में सभी हैं, अतः ईश्वर शुद्धाद्वैत के ब्रह्म के स्थानपर है। सत् चित् आनन्दस्वरूप एक ब्रह्म ही सत् है। दूसरा सत् नहीं है इतने से ही अद्वैत है। सत् से भिन्न मिथ्या माया, माया की शक्तियाँ, माया से होने वाले गुण और धर्म अनेक होने पर भी सत् ब्रह्म एक ही हैं दूसरा सत् नहीं है इतने से ही अद्वैत है। अद्वैत शब्द से सजातीय भेद हटाया जाता है अतः दो-तीन सत् नहीं हो सकते, वृक्ष की शाखा जड़ के सदृश स्वगत भी नहीं माना जाता; जिससे गुणगुणि-भाव और धर्मधर्मि-भाव भी नहीं हो पाता, अतः शुद्ध चेतन ब्रह्म निर्गुण धर्मशून्य प्रपञ्च आदि आकाररहित आनन्द प्रकाशस्वरूप है। वही ब्रह्म माया उपाधि से युक्त होता हुआ सगुण सधर्मा अनन्ताकार है। इसी कारण

अक्षरपुरुषोत्तम आदि भेद नहीं होता। एक ही ब्रह्मरूप सत्ता के सम्बन्ध से सभी जगत् वस्तु सत् होते हैं और व्यवहारदशा में उनकी सत्रूप से प्रतीति होती है। इस प्रकार अक्षर पुरुषोत्तम-ब्रह्मा-विष्णु-महेश घट-पट प्रभृति सभी सत् हैं!

जिसका किसी समय बाध नहीं होता वह सत् है जिसकी किसी समय प्रतीति हो और किसी समय बाध हो वह मिथ्या; मायिक अनृत आदि शब्दों से कहा जाता है। जिसकी कभी प्रतीति नहीं होती ऐसे शश-शृङ्ग, वन्ध्या पुत्र आदि असत्, तुच्छ इत्यादि शब्दों से व्यवहृत होते हैं। मिथ्या वस्तु सत् और तुच्छ दोनों से ही विलक्षण है, 'अब इसका आविर्भाव नहीं होगा' ऐसा निश्चय जिस विषय के लिए हो जाय वह वस्तु मिथ्या है ऐसी शुद्धाद्वैत की परिभाषा के द्वारा मिथ्या पदार्थ का परिचय किया जा सकता है।

उपनिषदों में कहीं ब्रह्म के गुणों का निषेध आता है, दूसरी जगह सगुण ब्रह्म का वर्णन भी मिलता है। शाङ्कर दर्शन गुण निषेध को वास्तविक मानकर सगुण प्रतीति को माया से प्रभावित ईश्वर-विषयक मानता है। शुद्धाद्वैत प्राकृत गुणों का निषेध और अप्राकृत विलक्षण गुणों का विधान मानकर सत्त्व, रज और तम आदि गुणों को भी ब्रह्म में मानता है। शुद्धाद्वैत का ब्रह्म स्वाभाविक गुणवाला हुआ, और शाङ्कर दर्शन का ईश्वर उपाधिवश सगुण हुआ, ईश्वर में ही ऐश्वर्य भी है। इतना अवश्य है कि शाङ्कर दर्शन की व्यवस्था एक प्रकार के लौकिक सत्त्व, रज और तम से बन जाती है शुद्धाद्वैत को दो प्रकार का मानना पड़ता है।

यद्यपि दोनों दर्शनों को मान्य है कि वेद सर्वोपरि प्रमाण है, ब्रह्म केवल वेद से ही विज्ञेय है। तर्कों की अप्रतिष्ठा है, वेद में लक्षणा अनुचित है। इत्यादि अभिमान समान रूप से रखते हैं। तो भी दोनों दर्शन तर्क को शरण बनाते हैं, लक्षणा की उपासना करते हैं, मुख्यार्थ बाध और तात्पर्य निर्णय के लिए प्रत्यक्षादि प्रमाणों को भी अपनाते हैं। तर्क-वितर्क के विविध चक्र में अपनी वासनाएँ और साम्प्रदायिक आग्रह स्थान पा लेते हैं। इसी कारण एक ही उपनिषद्-वाक्य का दो विरुद्ध अर्थों में व्याख्यान चलता है। दोनों दर्शनों की प्रक्रिया का परिचय होने पर तथ्य और अतथ्य के निर्णय के लिए तटस्थ व्यक्ति को अपने मनोवैज्ञानिक स्तर को कसौटी बनाना पड़ जाता है।

इसके बाद 'ब्रह्मवाद' की कुछ कारिकाओं का अनुवाद और व्याख्यान किया जाता है, जिससे व्यवहार-दशा ( ब्रह्मज्ञान से पहले ) में और परमार्थ दशा में ( ब्रह्मज्ञान हो जाने पर ) दोनों दर्शनों में कोई विशेष भेद नहीं है, ऐसा स्पष्ट हो जाय।

सर्वोपनिषदोऽभेदः स्पष्टमेव निरूपितः।
अतोऽस्मत्-प्रत्ययो भ्रान्तो मायावृत्तविलोकनात् ॥ १ ॥

सभी उपनिषदों में प्रपञ्च को ब्रह्म से अभिन्न ( ब्रह्मरूप ) बताया गया है। प्रपञ्च माया से आच्छादित होकर हमलोगों की दृष्टि में आता है, ब्रह्मरूप नहीं दीख पड़ता। इससे हम लोगों के जगत् का अनुभव भ्रम ( भूल ) है। हम लोग कार्य-कारण, अपना पराया इत्यादि ब्रह्म भिन्न नाना वस्तुओं का अनुभव करते हैं।

शाङ्कर दर्शन की परिभाषा में उत्तरार्ध का 'अतः हम लोगों की प्रतीति ब्रह्मज्ञान होने पर बाधित है, क्योंकि मायिक ( मिथ्या ) वस्तु को विषय करती है' यह अर्थ होगा। भाव एक ही है। यह यथाश्रुत अर्थ दोनों दर्शनों को मान्य है। शुद्धाद्वैत की व्याख्या मायिक या मिथ्या शब्द को वस्तु का विशेषण सहन नहीं करती, माया का उपयोग वस्तुओं की प्रतीति में करती है वस्तु-रचना में नहीं। फिर भी उससे विशेष फरक नहीं पड़ता। कारण कि वस्तुओं के स्वरूप का निर्णय प्रतीति के आधार पर किया जाता है। जैसी प्रतीति है वैसी वस्तु नहीं है दूसरे प्रकार की है यह कैसे कहा जा सकता है ?

उत्पन्ने ब्रह्मविज्ञाने सद्यस्तद्बाधदर्शनात्।
अवास्तवं रूपमेतद् वाचारब्धं विकारि तत् ॥ ४ ॥

ब्रह्मज्ञान होने पर तत्काल ही इन ( व्यावहारिक ) प्रतीतियों का बाध देखा जाता है। अतः यह प्रतीति सिद्ध वस्तु ( वास्तविक ) नहीं है, वाचारम्भण नाममात्र विकारी है। यहाँ अवास्तव शब्द प्रतीयमान जगद् वस्तु का विशेषण है, जो मिथ्या शब्द का पर्याय है। इससे मेरी समझ के अनुसार शुद्धाद्वैत को मिथ्या शब्द से तथा मिथ्या-मायिक आदि शब्दों को वस्तु का विशेषण होने से विद्वेष नहीं करना चाहिए।

ब्रह्मबोधेऽनृतस्यापि ब्रह्मत्वात् प्रत्ययस्तथा।
यावद्बोधं तु सत्यस्यासत्यस्य कथनं पुनः ॥ ५ ॥

ब्रह्मज्ञान होने पर अनृत (अवास्तव या मिथ्या) को भी ब्रह्मरूप होने से ब्रह्मरूप से ही प्रतीती होती है। जब तक ब्रह्मज्ञान नहीं हुआ है तब तक शास्त्र के आधार पर ब्रह्म सत्य है और ब्रह्मभिन्न मिथ्या है ऐसा कथन है। कथन मात्र है, ज्ञान में फरक नहीं पड़ता। ज्ञान तो प्रत्यक्षादि प्रमाणों से जैसा प्राप्त है वैसा ही होगा।

इस कारिका में भी 'अनृत' शब्द वस्तु का विशेषण मालूम पड़ता है। इससे मालूम पड़ता है कि शाङ्करवेदान्त के सदृश कारिकाकार भी अनृत-अवास्तव-असत्य—मिथ्या आदि शब्दों को वस्तु का विशेषण बनाना पसन्द करते थे, किन्तु व्याख्याता वर्ग इसको नहीं मानता, माया द्वारा वस्तुओं में एक विशेषता आती है। जिसको विषयता कहते हैं। उस विषयता से विशिष्ट वस्तु को अनृत या मिथ्या कह सकते हैं। उस विषयता के बिना शुद्ध वस्तु ब्रह्मरूप सत्य है, मिथ्या नहीं। इस मत की कुछ तुलना पञ्चदशी के जीवसृष्ट वस्तुओं से तथा सांख्य के प्रत्यय सर्ग से की जा सकती है। क्योंकि यहाँ भी अहंता ममता का उपयोग किया गया है। इन व्याख्याताओं के अनुसार ब्रह्म से पैदा हुआ नामरूप भी सत्य है। जैसा कि सांख्य और न्याय का है। यहाँ भी शुद्धाद्वैत और शाङ्कर दर्शन में विरोध नहीं है। शाङ्कर वेदान्त के अनुसार भी ब्रह्मरूप सदंश के समन्वय से नामरूप भी सत्य है सत्यरूप से उनकी प्रतीति होती है। ब्रह्म का सदंश छोड़कर मिथ्या है। कारिकाकार भी ब्रह्म रूप से ही सबको सत्य मानते हैं। ब्रह्म भिन्नरूप से अनृत अवास्तव ही कहते हैं। व्याख्याकार के मत से कुछ भेद हो जाता है।

जड़वर्ग में ब्रह्म का सदंश आविर्भूत होता है और चित् आनन्द अंश तिरोहित होता है। जीव में सत् और चित् आविर्भूत होते हैं और आनन्दांश तिरोहित रहता है ऐसी शाङ्करवेदान्त की भांति प्रक्रिया 'शुद्धाद्वैतमार्तण्ड' पुस्तक में प्रसिद्ध है।

तो भी कुछ फरक दिखाया जा सकता है। शुद्धाद्वैत का ब्रह्म अनेक प्रकार के धर्मवाला है। ब्रह्म से पैदा हुए जड़वर्गों में ब्रह्म के अन्य धर्मों का भी समन्वय हो सकता है। अतः शुद्धाद्वैत अन्य रूप से भी जगत्-प्रपञ्च को ब्रह्म कह सकता है, जहाँ शाङ्करदर्शन सद्रूप से ही ब्रह्मरूप कह सकता है। सद्भिन्नरूप से मिथ्या ही कहना पड़ेगा। तो भी इस प्रक्रिया पर और विचारना पड़ेगा जो यहाँ छोड़ दिया जाता है।

पश्चात् सर्वस्य सर्वत्वं नानृतं किञ्चिदस्ति हि।
देहादयोऽनृतं तावद्यावत्कार्यतया मतिः ॥ ६ ॥

ब्रह्मज्ञान के बाद सभी ब्रह्म है, मिथ्या कोई वस्तु नहीं है, देह आदि तबतक मिथ्या हैं जबतक ये कार्य हैं ऐसा ज्ञान होता रहता है। ये कार्य हैं, इनके अमुक कारण हैं। ये पैदा हुए हैं, ऐसे ज्ञानों की समाप्ति हो जाने पर जो है सब ब्रह्म है। ऐसा मालूम पड़ता है। यह सामान्य रूप से दोनों दर्शनों का मान्य अर्थ है।

यहाँ भी पूर्व व्याख्या के अनुसार ही व्याख्याताओं का मत है। जब तक अविद्या-सम्बन्ध है तबतक मिथ्या है, ब्रह्मज्ञान होने पर अविद्या-सम्बन्ध छूट जाने से सभी ब्रह्मरूप ही हैं।

ब्रह्मज्ञान के पहले जो वस्तु जैसी मालूम पड़ती है ब्रह्मज्ञान होने पर भी वैसी ही मालूम पड़ती है। किन्तु ब्रह्मज्ञान के पहले सच्ची मालूम पड़ती हैं, ब्रह्मज्ञान होने पर झूठी मालूम पड़ती है ऐसा भाव हो जाता है।

पहले सूचित व्याख्याएँ अविद्या में अहंता-ममता का सम्बन्ध वर्णन करती हैं। उसके अनुसार ब्रह्मज्ञान के पहले 'मैं गोरा हूँ', 'मोटा हूँ', 'यह मेरा शरीर है', 'यह मेरा घर है इत्यादि अभिमान रहता है। ब्रह्मज्ञान द्वारा अविद्या हटने पर ये अभिमान दूर हो जाते हैं, जैसे ब्रह्म से उत्पन्न पर्वत, नदी आदि ब्रह्मरूप हैं वैसे ही शरीर, इन्द्रियाँ मालूम पड़ती हैं। यह अभिप्राय कहा जा सकता है। इसमें भी शाङ्कर-दर्शन का विरोध नहीं है।

## ( २ ) सृष्टि के बाद प्रपञ्च और ब्रह्म का स्वरूप

इसमें भी प्रायः दोनों दर्शनों का मतभेद नहीं है। जगत् प्रपञ्च सत्य है संसार मिथ्या है यह शुद्धाद्वैत की साम्प्रदायिक संज्ञा है, दार्शनिक विचारधारा में उसका कोई उपयोग नहीं है। ब्रह्मज्ञानी के लिए ब्रह्म का कार्य प्रपञ्च ब्रह्म ही है। सभी प्रपञ्चों में सदंश का समन्वय दोनों दर्शन मानते हैं। ब्रह्मज्ञान के पहले प्रत्यक्षादि प्रमाणों द्वारा जो जैसा सिद्ध होता है वह वैसा ही है। वेदशास्त्र द्वारा व्यावहारिक वस्तुओं का भान भ्रान्त बताया जाता है। किन्तु वेदशास्त्रों से होने वाला ज्ञान परोक्ष है। वह प्रत्यक्ष

आदि ज्ञानों का बाधक नहीं बन पाता जिससे व्यावहारिक ज्ञान भ्रान्त या बाधित हो सके। ब्रह्म का प्रत्यक्षात्मक ज्ञान ही ब्रह्मज्ञान है जिससे व्यावहारिक ज्ञान बाधित होता है। यद्यपि ब्रह्मज्ञान के स्वरूप में सूक्ष्म भेद दोनों दर्शन रखते हैं किन्तु उसका विवेचन यहाँ नहीं किया जाता।

उपाधि भेद से ब्रह्मा-विष्णु-महेश आदि ब्रह्म का भेद दोनों दर्शनों को मान्य है। पुरुषोत्तम की तुलना ईश्वर से कर दी गयी है। 'प्रमेयरत्नार्णव' पुस्तक में अक्षर ब्रह्म को लेकर ज्ञानियों की दृष्टि, भक्तों की दृष्टि ऐसा दो भेद किया गया है। ज्ञानियों की दृष्टि शाङ्करदर्शन के कूटस्थ ब्रह्म की भाँति है, भक्तों की दृष्टि का विशेष अंश ईश्वर में समन्वित होता है। दोनों में अन्तर्यामी है। 'प्रमेयरत्नार्णव' में जीव भेद से भी अन्तर्यामी का भेद लिखा है। उसकी तुलना पञ्चदशी-चित्रदीप-वर्णित कूटस्थ से करना चाहिए।

## ( ३ ) प्रपञ्च और ब्रह्म का सम्बन्ध

दोनों दर्शनों में जगत् का उपादान कारण ब्रह्म है और कार्य-जगत् उपादान ब्रह्म से भिन्न नहीं है। उपादान और उपादेय में भेद नहीं होता, अभेद सम्बन्ध होता है। अतः उपादान उपादेय भाव सम्बन्ध हुआ, उसके द्वारा अभेद सम्बन्ध भी हो गया। कार्यों में उपादान सत्ता से अतिरिक्त सत्ता नहीं है। ब्रह्म का सदंश प्रपञ्चों में प्रतीत होता है। ब्रह्म से अतिरिक्त कोई सत्ता नहीं है। ये दोनों दर्शनों में समान हैं।

उपदान दो प्रकार का होता है। एक परिणामी, दूसरा विवर्त। जगत् के पदार्थ माया से भी बने हैं अतः माया जगत् का परिणामी उपादान है। जिसमें सदृश वस्तु का भ्रम होता है ऐसे अधिष्ठान को भ्रम सिद्ध वस्तुओं का विवर्त उपादान कहते हैं, यह विवर्तवाद बौद्ध दर्शनों में तथा भर्तृहरि प्रभृति प्राचीन दार्शनिकों के ग्रन्थों में मिलता है। शाङ्कर दर्शन सम्मत इस विवर्त उपदान को सांख्य, न्याय-मीमांसा आदि वैदिक दर्शन भी नहीं मानते। शुद्धाद्वैत को छोड़कर और सभी दर्शन परिणामी को विकारी मानते हैं। विकार के भय से दूसरे दर्शन चेतन का परिणाम नहीं मानते, सांख्यदर्शन परिणामवादी होता हुआ भी जड़ प्रकृति का ही परिणाम मानता है, चेतन से परिणाम का स्पर्श नहीं होने देता, कुछ दर्शन कहीं भी परिणाम पसन्द नहीं करते, जैसे बौद्धों का संघातवाद, न्यायवैशेषिकमीमांसकों का आरम्भवाद प्रसिद्ध है।

शुद्धाद्वैत सृष्टि में माया का उपयोग नहीं करता, परिणाम होने से विकार हो जाता है इस नियम को नहीं मानता, अतः अविकारी ब्रह्म को भी परिणामी उपादान मान लेता है। जिसका अविकृत परिणामवाद से व्यवहार होता है। सुवर्ण से जब कटक बनता है तब सुवर्ण विकार नहीं होता; कटक को नष्ट करके फिर उससे सुवर्ण कुण्डल बन जाता है। पीछे कुण्डल को नष्ट करके फिर कटक बना लिया जाता है, जिस उपादान में एक वस्तु तैयार होकर बिगड़कर फिर बन सके वह अविकृत परिणामी उपादान है। 'विद्वन्मण्डन' पुस्तक में महाभारत-कथा का उल्लेख करके प्रमाणित किया गया है कि एक उपादान में एक ही वस्तु का अनेक बार आविर्भाव होता है। समराङ्गण में शरीर छोड़ने वाले कौरव वीरों का व्यास-प्रभाव से पुनः प्रादुर्भाव होना, अपनी पत्नियों से समागम, संगत धर्मपत्नियों का पतिव्रत व्रत भङ्ग न होना इत्यादि वर्णित है। इसी प्रकार अनेक बार अनेक वस्तुओं को बनाने पर भी चिन्तामणि कामधेनु में न्यूनता या विकार नहीं होते, ये सब अविकृत परिणाम के सार्थक दृष्टान्त हैं।

एक वस्तु का अनेक बार उत्पाद विनाश नहीं होता, मृतदग्ध शरीर फिर कैसे आ सकता है? दूसरा आयेगा, इत्यादि कठिनाइयां उत्पादविनाश मानने वाले दूसरे दार्शनिकों के ऊपर हैं शुद्धाद्वैत के ऊपर नहीं। वह उत्पाद-विनाश नहीं मानता। अवि-र्भाव-तिरोभाव स्वीकार करता है। एक वस्तु के अनेक बार आविर्भाव-तिरोभाव होने में कोई कठिनाई नहीं है। इसी प्रकार एक उपादान में एक ही समय अनेक उपादेय वस्तु की सूक्ष्मसत्ता स्वीकार करने पर एक समय एक उपादान से अनेक कार्यों के अविर्भाव की प्राप्ति है। सो भी सर्वनियन्ता भगवान् की इच्छा से नियन्त्रित है। अर्थात् जिस समय जिस वस्तु का आविर्भाव भगवान् चाहते हैं उस समय उसी वस्तु का आविर्भाव होता है, अतः कोई आपत्ति नहीं है। जैसे शाङ्कर दर्शन में कई कठिनाइयों से अघटित घटना प्रवीण माया स्वभाव का आश्रय लेकर पार किया जाता है वैसे शुद्धाद्वैत-दर्शन में भगवान् की इच्छारूप माया से।

## ( ४ ) मुक्तावस्था में जीवस्वरूप

मोक्षावस्था में जीव का आनन्द अंश प्रकट हो जाता है। सत्-चित् आनन्दस्वरूप पूर्ण हो जाता है। किन्तु अणुपरिमाण वाला ईश्वर का अंश ईश्वर से न्यून ही रहता है।

शाङ्कर-दर्शन में अनेक प्रस्थान हो गये हैं, सभी में कुछ-न-कुछ सूक्ष्मभेद होता ही है। सभी का यहाँ वर्णन हो नहीं सकता, संक्षेप से यह कहा जा सकता है कि बद्धावस्था में भी जीव ब्रह्मरूप है किन्तु उपाधि से प्रभावित है, जैसे शुद्धाकाश ही गृह बन जानेपर गृह उपाधि से गृहाकाश हो जाता है और गृह नष्ट हो जानेपर गृहाकाश शुद्धाकाश ही रह जाता है। वैसे ही उपाधि प्रभावित ब्रह्म मोक्ष होनेपर उपाधि हट जाने से ब्रह्म ही रह जाता है। उपाधि के प्रभाव से जो परिमाण-गुण और आनन्द का तिरोधान आदि आ गये हैं वे उपाधि हट जानेपर हट जाते हैं। अलग जीव रहता नहीं जिसका स्वरूप वर्णन हो। कोई-कोई जीव का नाश हो जाता है ऐसा आक्षेप करते हैं। वह आक्षेप मात्र है। ब्रह्मरूप जीव का नाश कैसे हो सकता है? हाँ, जीवभाव जीवत्व का नाश कह सकते हैं, वह जीवत्व दोष है। अविद्या या अविद्या सम्बन्धरूप होगा, ब्रह्म का जीवभाव समाप्त हो जाता है ऐसा भाव है।

## (५) माया

अघटित घटना पटीयसी दोनों की माया है। ब्रह्म की शक्ति है। शक्ति और शक्तिमान् में अभेद है, भेद नहीं। अतः ब्रह्म सत्ता से अतिरिक्त माया की सत्ता नहीं है। आवरण और विक्षेप की शक्तियाँ भी दोनों दर्शनों में है। 'प्रमेय रत्नार्णव' में शब्दभेद है किन्तु अर्थभेद नहीं है। ईश्वर की इच्छा को भी 'माया' शब्द से शुद्धाद्वैत अपनाता है उसका सृष्टि में उपयोग भी करता है, किन्तु परिणामी उपादान नहीं मानता और इस पर पूर्व लिखित की योजना यहाँ कर लेनी चाहिए।

## (२) सत्कार्यवाद

कार्यों में ब्रह्म का सदंश अन्वित होने से कार्य सत् है यह लिखा जा चुका है। उत्पत्ति के पहले कारण में सूक्ष्मरूप से कार्य रहता है ऐसा सत्कार्यवाद प्रसिद्ध है। वह इन दोनों दर्शनों में है। शाङ्करवेदान्त माया में सूक्ष्मरूप से कार्यों की सत्ता है और माया के द्वारा ईश्वर में है, ऐसा मानता है। शुद्धाद्वैत के अनुसार ब्रह्म में ही सभी सूक्ष्म कार्यों की सत्ता है। पूर्व लिखित पञ्चमकारिका के अवतरणरूप टीका में अनृत पदार्थों की जो लयप्रक्रिया दर्शायी गयी है उससे मिथ्या पदार्थों का उपादान माया है, ऐसा ध्वनित होता है। जो सर्वथा शाङ्कर दर्शन के समान है। क्योंकि माया द्वारा

ब्रह्म भी उपादान हो जायेगा। शाङ्करदर्शन ब्रह्मभिन्न सभी पदार्थों को मिथ्या मानता है। शुद्धाद्वैत सभी को नहीं मानता इतना भेद है। छठी कारिका की टीका में जो 'प्रमेय रत्नार्णव' का उद्धरण है उससे भी माया मायिक पदार्थों का उपादान है, ऐसा निकलता है। किन्तु वहीं सुबोधिनी का उद्धरण है। जो माया का प्रतीति में उपयोग है, वस्तु रचना में नहीं ऐसा सिद्ध करता है। इसका समन्वय अभी विद्वानों के कर्त्तव्यकोटि में अटका है।

## एक दूसरा समन्वय

यह समन्वय 'सिद्धान्त मुक्तावली के आधारपर उपस्थित किया जा रहा है। यह सभी आस्तिक दर्शनों के लिए उपादेय है। इसके पदार्थ उपनिषद् तथा पुराणों में बिखरे हैं किसी-किसी दर्शन में इसकी कुछ-कुछ चर्चा है, अनेक दर्शनों में इसका स्पर्श भी नहीं है। संक्षिप्त स्वरूप यह है एक पृथ्वी जिस पर स्वच्छ या मलिन कार्य करते हैं, मिट्टी भूमि रूप से अनेक उपयोग में लाते हैं। दूसरी पृथ्वी जिसको चेतन देवता मानकर पूजा प्रार्थना करते हैं। तीसरी वह जो दैत्यों के अत्याचार से पीड़ित होती है, गाय बनकर ब्रह्मा विष्णु के पास जाती है, पाप भार उतारने के आश्वासन से प्रसन्न होती है। वैसे सूर्य आदि नवग्रहों के भी तीन अंश होते हैं। एक सूर्य जो प्रकाश, धूप देता है, अपनी गति के अनुसार प्राणियों के शुभ-अशुभ की सूचना देने वाला ग्रहदेवता है, वह दूसरा हुआ। तीसरा सूर्य वह है जो शरीर धारण कर उपासक भक्तों को साक्षात् दर्शन देते हैं तथा यम-यमुना और कर्ण आदि के जनक होते हैं। सिद्धान्त-मुक्तावली में गङ्गा को लेकर समन्वय किया गया है, एक गङ्गाजल प्रवाहमय स्नान-पान के लिए उपयोगी सर्वजीव साधारण है, जो अधिभौतिक अंश है, दूसरी चेतना देवता आस्तिक हिन्दू जन को भक्ति से पवित्र करती है पापों को दूर करती है आध्यात्मिक है! तीसरी भक्तजनों को शरीर धारण कर दर्शन देनेवाली राजा शन्तनु की धर्मपत्नी तथा भीष्म पितामह की जननी आधिदैविक हैं। तीनों अंशवाली पूर्ण गङ्गा एक है।

सभी ब्रह्मरूप हैं इस प्रकार के ब्रह्मवाद में इसी तरह समन्वय है। ब्रह्म से पैदा हुआ यह स्थूल प्रपञ्च ब्रह्म का आधिभौतिक अंश है, जो भक्त अभक्त, आस्तिक नास्तिक, देव, असुर आदि के लिए साधारण है। सभी को पैदा करने वाला सभी में

सुवर्ण कुण्डल के सदृश अनुस्यूत अक्षर ब्रह्म सभी का अन्तरात्मा आध्यात्मिक हैं। जो ब्रह्मज्ञानियों के लिए उपयोगी हैं। तीसरा पुरुषोत्तम श्रीकृष्णचन्द्र नित्य-लीला विहारी भगवान् आधिदैविक हैं जो ज्ञानी भक्तों के अपेक्षित हैं। तीनों अंशोंवाला परिपूर्ण ब्रह्म एक अद्वैत है। इस रीति से भी ब्रह्मवाद का निरूपण किया गया। इस समन्वय शैली में भी शाङ्कर दर्शन के विरोध की संभावना नहीं करनी चाहिए।

अहमदाबाद नागरिक श्री नरसिंहदास गोवर्धनदास पुत्री स्मारक वल्लभनिधि से पोषणवृत्ति संपोषित केदारनाथ ओझा।

---

पटनासंस्कृतसञ्जीवनम् मासिकसंस्कृतपत्रे विक्रमाब्द २०१९ई० भाद्रपूर्णिमा अक्तुबरखीष्टाब्द १९६२ अङ्के प्रकाशितः।

# चित्राद्वैतप्रकाशवादः

बौद्धदर्शनस्य चित्राद्वैतं कुत्रचिट्टीकादिषु उपलभमानोऽपि तस्य विशेषतो विवरणमभीप्सन्नासम्। ऐषमः पटनास्थकाशीप्रसादजयसवालरीसर्च इन्स्टिट्यूटतः प्रकाशिते रत्नकीर्तिनिबन्धावली-ज्ञानश्री-मित्रनिबन्धावली-पुस्तके मम नयनपथे अवातरताम्, अपठितबौद्धदर्शनसंस्कृतपुस्तकतया पिपठिषा स्वाभाविकी एव, परं प्राचीनन्यायदर्शनसम्बद्धतया समयाभावप्रत्यूहेन प्रतिबध्यमानापि सा वराकी बलवती एव अजायत, ततश्च पुस्तकद्वयीं सहचरीमकरवम्। त्रिलोचनगुरुभिः षड्दर्शनटीकाकृद्वाचस्पतिमिश्रैश्च खण्डितानि प्राचीनबौद्धदार्शनिकमतानि समर्थयितुं पूर्णप्रयासमत्र अपश्यम्, तेषां पङ्क्तीनामुद्धरणपुरस्सरं तेषां खण्डनं दोषोद्धरणञ्च अवागच्छम्, वादे वादे जायते तत्त्वबोध इत्यस्य फलमत्र अन्वभवम्। द्विविधोऽहि ज्ञानानां विषयो ग्राह्यश्च अध्यवसेयश्चेति बहुषु बौद्धन्यायग्रन्थेषु अपठम्, तस्य विवरणमपि क्वचिदवालोकयम्। धर्मोत्तरटीकस्य कर्त्ता स्फुटवक्ता दुर्वेकमिश्रोऽपि तावद् विवेक्तुं न प्राभवत यावद् अध्यवसायतद्विषयत्वयो विवेचने उपपादनं

वर्तते, एतावदुपपादने विषयस्फुटीभावे च नैयायिकानां खण्डनानि सहायकानीत्यपि मन्ये, वाचस्पतिमिश्रकृतखण्डनानाम् एभिः प्रकारान्तरमनुसरद्भिः प्रतिष्ठा कृतेत्यपि प्रत्यायम् । अध्यवसायविषयतायाः कञ्चित्संक्षिप्तं परिचयमपि दातुमना अस्मि, एवं विकल्पस्य अवश्यं शब्दविषयत्वे तत्त्वसंग्रहतत्पञ्जिकादिप्रदर्शितप्रकारं परित्यज्य मार्गान्तरं न्यरूपयद् रत्नकीर्तिः ।

भाषा अनयोः प्राचीना अप्रसिद्धबौधदर्शनपारिभाषिकशब्दबहुलतया समेषामसुबोधा अपि न काठिन्यदोषयुक्ता, स्वतन्त्रग्रन्थनाभावान्निबन्धरूपतया मध्ये मध्ये वचोन्तरव्याख्यानाविला क्लेशेन अनुसन्धानमपेक्षते, अकठिनाऽपि भाषा न वाचस्पतिवचोवत्स्फुटा, तत्रापि न्यायलीलावतीप्रभृतितः स्फुटैव वचनीया, विभेदमावहन्त्यपि काठिन्यस्फुटत्वयोरुदयनाचार्यवचसां साम्यं बिभर्ति प्रायः, परमाचार्यवचनानि चिराद्भारते अध्ययनाध्यापनयोर्व्याख्यानप्रतिव्याख्यानादिषु च प्रचलन्ति न तादृशीमप्रसिद्धिं वधति किन्तु अनयोस्त्वधुनैव समुद्धारः, तत्रापि यदा भारते संस्कृतस्य तदीयशास्त्रविषयस्य च अध्ययनं सर्वथा प्रतिरुद्धम्, ततोऽपि भयानकादस्मात्प्रकाशनाद् वृद्धाः शास्त्रसारहृदया आङ्ग्लभाषानभिज्ञाः पण्डिता बिभीयुः ।

तथापि सम्पादकाः पुस्तकसमुद्धारकाः प्रकाशकाश्च अनयोरवश्यं विद्यानुरागिणां धन्यवादार्हाः प्रशंसनीयाश्च । चिरन्तनानि तिब्बते विलीनानि ताडपत्राङ्कितानि विशीर्णानि अक्षराणि अत्र आनीय क्रियता श्रमेण अवाचयन्, रामयोजयन्, सम्बद्धपुस्तकपाठैः समगमयन् लिप्यन्तरञ्च सम्पादयन् ? ततश्च ग्रन्थान्तरोद्धरणानां पारिभाषिकशब्दानाञ्च प्रतिपृष्ठमालोड्य सूचयो विहिताः, पाठभेदाः प्रदर्शिताः, संस्कृते आङ्ग्लभाषायाञ्च भूमिकाऽपि प्रदर्शिता तैः । सम्पादकस्य श्रीमदनन्तलालठाकुरमहोदयस्य च विद्यायां व्यसनं श्रमो मनोऽवधानञ्च अत्र साधु साक्षात् क्रियते, सुन्दराणि सुपुष्टानि च कर्गदानि स्पष्टानि मुद्रणाक्षराणि च मनो मोहयन्ति । केचन वर्तमाना अपि दोषा एषां स्तवनीयतां न विहन्तुं प्रभवन्ति यतः सुधाकरोऽपि दोषाकरः ।

ग्रन्थस्य प्रकरणस्य च विषयाः सम्यग्विविच्य अनुसन्धाय च न पाठाः संयोजिताः, तेन ग्रन्थाशुद्धिरपि अवशिष्यते, प्रुफरूप-पूर्वरूपसंशोधने कदाचन सम्पादका न प्राभवन्निति प्रतिभाति तेन तत्रापि त्रुटयो मत्कुणायन्ते, रत्नकीर्तिनिबन्धोपरि न्यायवर्सेतिमुद्रितः शब्दो विषयापरिज्ञानं प्रकाशयति फेलामफीत्येवयुक्तमासीत्. प्रकाशनन्त्वस्य राजकीयसंस्कृतद्रव्येण संस्कृतस्य

तादृशपुस्तकस्य च प्रचारावरोधाय स्फुटमुदाहरणम्, पुनश्च प्रकाशनमसंभवि अत्र च प्रतिपृष्ठम् आङ्ग्लभाषा मुद्रिता, अहो भारतेऽपि आङ्ग्लमाध्यमेन संस्कृताध्ययनस्य प्रचारोद्योगः, हा इयं स्वतन्त्रता, हतश्च स्वदेशवस्तुप्रेमा।

## अध्यवसायः

प्रस्तुतरत्नकीर्तिनिबन्धे १२४ पृष्ठादारभ्य उपदशपृष्ठं प्रायः प्रचालितो विवेचितश्चायमध्यवसायः। एवञ्च तत्र प्रतिभाति, अध्यवसायो नाम न प्रसिद्धज्ञानादिभिन्नं ज्ञानान्तरम्। न कश्चित्तस्य आकारः, तथापि फलानुरोधेन कल्प्यते, विषयेण साकं ज्ञानस्य कश्चिद्विलक्षणः सम्बन्ध इति तस्य परिचयमार्गः, प्रसिद्धो विषयस्तु ज्ञानस्य स्वाकार एव, स्वाकार एव ज्ञाने भासते, स एव च ग्राह्यो विषय उच्यते, यश्च न ज्ञानाकारो न च ज्ञाने भासते सोपि कश्चिज्ज्ञानस्य विषयो योऽध्यवसेय इति उच्यते, ततश्च अध्यवसायो विषयेण साकं कश्चित्सम्बन्ध इति निष्कृष्यते। यथा निर्विकल्पकेन्द्रियप्रत्यक्षस्य तदानीन्तनं क्षणिकं वस्तु ग्राह्यम्, न च तदनन्तरजायमानप्रवृत्तेर्विषयः क्षणिकतया अतीतत्वात्, प्रवृत्तिविषयस्तु समसन्तानिकं वस्त्वन्तरम्, न च सन्तानो गृह्यते भवति च—प्रवृत्तिविषयः, ज्ञानस्य च प्रवृत्तिजननमन्तरा न प्रापकत्वं तदायत्तञ्च प्रामाण्यम्, तथा च ज्ञानस्य स्वजन्यप्रवृत्तिविषयेण साकं यः सम्बन्धः सोऽध्यवसायः। अधिकञ्च तदीप्सुभिः शास्त्ररसिकैः पुस्तकं पठनीयं मन्तव्यञ्च तेन च अवगन्तव्यम्, सहसैव च रसेप्सासमृद्धये काश्चन पङ्क्तयः परिवेष्यन्ते—

१२४ पृष्ठे 'अगृहीतोऽपि प्रवृत्तिविषयोऽध्यवसेयः' १३० पृष्ठे 'तथाहि समनन्तरप्रत्ययबलायातस्वप्रतिभासविशेषवेदनमात्रादगृहीतेऽपि परत्र प्रवृत्त्याक्षेपोऽध्यवसायः' 'तथा विकल्पस्याग्निरत्रेत्याविनाकारेणोत्पद्यमानस्य प्रवृत्त्यापेक्षकत्वमेव बाह्याध्यवसानं नाम'। १३३ पृष्ठे यदाह अलङ्कारकारः—कथं तद्विषयत्वं तत्र प्रवर्तनादिति'।

अगृहीतस्य अभासमानस्यापि प्रवृत्तिविषयत्वे प्रवृत्तेरव्यवस्था अत्र समाहिता वर्तते। वैदिकदर्शने तु गृहीतस्य भासमानस्यैव प्रवृत्तिविषयत्वम्। ननु ज्ञानमेव सविषयकं तज्जन्यतयैव प्रवृत्तेर्याचितमण्डनन्यायेन सविषयकत्वम्, बौद्धमते च कथं प्रवृत्तेः सविषयकत्वमिति चेत् प्रवृत्तेरेव स्वाभाविकं सविषयकत्वं तज्जनकतयैव ज्ञानस्य सविषयकत्वं कल्प्यताम्। तथापि ज्ञानं प्रकाशो बौद्धे वैदिके च, न च प्रवृत्तिः प्रकाशः। प्रकाशश्च विषयस्येति ज्ञानस्य सविषयकत्वमावश्यकं न प्रवृत्तेरित्याद्यनुभवः पर्यालोचनीयः।

एवं प्रवृत्त्याक्षेपकत्वमध्यवसायो ज्ञानस्य प्रवृत्त्या सह सम्बन्धो न विषयेणेति स्यात्, यद्यपि तद्विषयप्रवृत्त्याक्षेपकत्वं ज्ञानस्य तद्विषयसम्बन्ध इति वक्तुं शक्यते, तथापि आक्षेपकत्वं जनकत्वम्, यदि तदपि साक्षात् परम्परया वा, परम्परायां कियती परम्परा ? साक्षादसंभवि, अन्यविधत्वे आक्षेपोऽनुमानमारोपो विकल्पो ज्ञानान्तरं वेति विकल्पानां प्रसरे पुनस्त्रिलोचनगुरूणां वाचस्पतिमिश्राणाञ्च विकल्पा विराजन्त इति महान् शास्त्रार्थावसरो रसिकानामिति संसूच्यैव विरमामीतः ।

## चित्राद्वैतप्रकाशवादः

यथा अन्यत्र दर्शने अद्वैतशब्दस्य व्यापको विषयो दर्शनस्य असाधारणः, न तथा अत्र, संकुचित एकदेशिवस्तु-विषयश्च । साकारवादो हि सौगतदर्शनस्य प्रधानोऽसाधारणश्च विषयः, स एव क्वचिच्चित्राकारतां धत्ते । बौद्धमते प्रकाशो ज्ञानं स्वस्यैव प्रकाशः, बाह्यादीनां विषयाणामध्यवसाय एव, ज्ञानव्यक्तीनां परस्परं भेदो न ग्राह्यान्तरविषयसम्पर्कात् किन्तु स्वजनककारणबलायातस्वाभाविकस्वाकारभेदादेव ज्ञाने य आकारः स एव बाह्ये इति तु अविद्यावशात्, बाह्याकारसदृशो ज्ञानस्याकार इति तु सत्यम् । इन्द्रियप्रत्यक्षे यद्यपि वर्तमानो ग्राह्यस्तथापि यो बाह्याकारः स एव न ज्ञानाकारः किन्तु बाह्यसद्वादिमते बाह्यवस्तुना जायमानो ज्ञानस्याकारो न तु स एव । ज्ञानानां स्वाभाविक आकारभेद इत्येव साकारवादः । न्यायादिदर्शने तु ज्ञानानां स्वकारणवशाद् विषयसम्बन्धवशाच्च भेदो न तु स्वाकारभेदात्, ज्ञाने घटादिः स्वसम्बन्धाद् भासते न ज्ञानस्यैव आकारः । अत एव न्यायादिदर्शनानि साकारज्ञानस्य विरोधीनि । न्यायनये नीलपीतयोरेकं समूहालम्बनं ज्ञानं यथा, तथा बौद्धानां नीलपीताकारमेकं ज्ञानम्, एकस्य यत्र आकारभेदस्तत्र चित्रमिति प्रयोगः, यथा नीलपीतादिनानारूपवति वस्त्रे चित्रमिति प्रयोगः, तथैव नीलपीतादिनानाकारभाजि विज्ञाने चित्रमिति व्यवहारः, तच्च विज्ञानमेकमद्वैतं प्रकाश इति चित्राद्वैतप्रकाशपरिचयः ।

न च नीलपीतादिनानाकारा एकविज्ञानस्य अनुपपन्ना आकाराकारिणोर्भेदाऽपत्तेरिति वाच्यम् बाह्यवासनात एव नानाकारव्यवहारात् यत्प्रकाशते तदेकम्, प्रकाशते च नीलं पीतञ्च तदेकम्, बाह्यं हि प्रवृत्त्यादिव्यवस्थया नीलं पीतञ्च नैकं विज्ञानन्तु आन्तरं स्वसंवेदनैकसिद्धमेकमेव एकाकारमेव, विरुद्धदेशकालादिविशेषा बाह्याः सन्तो बाह्यानामेव भेदसाधकाः नान्तरस्य विज्ञानस्य तदाकारस्य वा, यथा नीलपीतादिभिन्नचित्र-

रूपान्तरवादिनामवयविनि एकं चित्रं रूपं तथा नीलपीताकारकमेकं ज्ञानम्, न च चित्रत्वमनेकत्वव्याप्यम् एकस्मिन् रूपे चित्रत्वस्याङ्गीकारात्, प्रकाशमानत्वहेतुना एकत्वस्य साधनाच्च। केचन आश्चर्यार्थकमपि चित्रशब्दं वदन्ति अनेकेषु प्रकाशमानता न सम्भवतीति अत्र साधितमस्ति, एतावतैव विस्तरभिया विरंस्यन् कानिचिद् निबन्धावल्योर्वचनान्येवोपहरामि।

## रत्नकीर्तिनिबन्धावल्याः

१२२ पृष्ठे—यस्य यदा यावदाकारप्रतिभासं यद्विज्ञानं परिस्फुरति तस्य तदा तावदाकारचक्रपरिकरितं तद्विज्ञानं चित्राद्वैतमिति स्थितिः। तदेवं चित्रमद्वैतं विज्ञानमिति पदत्रयमिह प्रत्युपस्थितम्।

साकारविज्ञानसिद्धावेव चित्राद्वैतवादावतारात्, तस्माच्चित्रतेयमद्वैतविरोधिनीतिव्यामोहादेव एकत्वे विप्रतिपत्तिरिति तत्र प्रसाधनं साधनमिदमुच्यते—यत्प्रकाशते तदेकं यथा चित्राकारचक्रमध्यवर्ती नीलाकारः। प्रकाशते चेदं गौरगान्धारमधुरसुरभिसुकुमारसातेतरादिविचित्राकारकदम्बकमिति स्वभावहेतुः।

१३५ पृष्ठे—तदेतदेव चित्राद्वैतं विज्ञानमुच्यते यदनेकाभिमतानां सहोपलब्धानां नीलसुखाद्याकाराणां स्वभावभूताखण्डसंवेदनं नाम।

१३६ पृष्ठे यद्येवं विरुद्धधर्माध्यासतो विज्ञानाकारचक्रवद् व्याप्तोऽपि न भिद्येतेति चेन्न बाह्ये धर्मिणि एकत्वस्य साध्यस्य प्रत्यक्षाविबाधितत्वात्, बुद्ध्याकारकदम्बके तूक्तक्रमेण स्वसंवेदनादिसिद्धैकत्वेऽनेकत्वस्य प्रत्याख्यानाद् बाधकावतार एव नास्ति।

## ज्ञानश्रीमित्रनिबन्धावल्याः

४४५ पृष्ठे—नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक्॥

अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन्॥ प्र. वा. २।२२० अत्र चित्र इत्येकतानिषेधः, विज्ञान इति एकप्रतिपत्तुः, प्रतिभासमानतया एकसंविदन्तर्गमादनेकतानिषेधः, ज्ञानोपाधिरिति जडाद्व्यावृत्त्या ज्ञानात्मतया बाधकाभावः, आकारान्तरं पीतादिमभजन् न शक्यते द्रष्टुमित्यनेन भेदव्यवहारे प्रयोजनाभावमाह, यदि हि ततः पृथगप्येको लभ्यः स्यात्, तस्मात्साध्यसिद्धिश्चैत्रमैत्रादिवदुचितोऽनेकव्यवहारः, न चैवं, तत एक एवोचितः।

यद् यथा भासते ज्ञानं तत्तथैवानुभूयते ।
इति नामैकभाव: स्याच्चित्राकारेऽपि चेतसि ॥ प्र. वा. २।२२१ नाम-संज्ञावाचक: शब्द इत्यर्थ: स एकभावो न तात्त्विक: । भासते इति जायत इत्यर्थ:, प्रकाशमानस्यैव जन्मेत्यभिप्रायात् । तदेवमेकानेकस्वभावविधुरमेव ज्ञानं चित्राद्वैतमपेतबाधम् ।

४४७ पृष्ठे—ननु चित्रमेकमित्यनुभवविरुद्धमेतत्, नीलपीतादीनां भेदेनैव भासनात् । किञ्च चित्रमनेकमित्यनर्थान्तरम्, तच्चैकत्वं दासेन स्थितमिति तत्कथं चित्रमेकम् ? अन्यथा प्रकाशो जड: स्यादिति चेन्न नीलादित्वे हि संवेदनव्यापारो न भेदे, भेदाभेदव्यवस्था तु निबन्धानुसारमर्हति । ननु इदं नीलम् इदं पीतमिति परस्परात्मतयैव प्रतीतिर्भेदप्रतीतिरिति चेत् बाह्यार्थवादे एवमेतत् । अभ्यासवासनावशात्तु बुद्धावारोप्यते, बुद्धौ तु एतानि भिन्नान्यभिन्नानि वेति चिन्तामर्हति ।

४४८ पृष्ठे—सत्यं चेत् संविद: सिद्धमनेकत्वञ्च बाधितम् ।

एकत्वे च तवेवेच्छाक्षतिर्नोभयथापि न: । सत्तासिद्धौ चानेकत्वेनापि नापराधोऽस्माकं कश्चित् । केवलं न्यायानुसारिण एकत्वमनुशिष्म: ।

४४९ पृष्ठे—यत्तु उच्यते एकत्वे नीलं पीतमेव स्यादिति, स बाह्य एव दोष:, तदर्थक्रियार्थिनां तत्रापि प्रवृत्ते: क्रियायाश्च प्रसङ्गात्, क्रियार्थिताव्यतिरेकेऽपि यन्नीलं तत् किं पीतं भवितुमर्हति इति चेत् ? तत् किं स्वरूपसत्तया वियुज्यताम् ? वरमेवमिति चेत् यदि परोक्षता स्यादेवमपि स्यात् । तस्माद् बाह्यत्वे नानात्वमेव नीलपीतयो: मा भूत् प्रवृत्तिसंकरादिरिति । शम् । इति ।



पटना संस्कृतसञ्जीवनम् मासिक संस्कृत पत्रिका के भाद्र पूर्णिमा विक्रमसंवत् २०१९ अक्तुबर १९६२ ई० अङ्क में संस्कृतमयप्रकाशित

# चित्राद्वैतप्रकाशवाद का हिन्दी में संक्षिप्त विषय परिचय

रत्नकीर्ति निबन्धावली और ज्ञानश्री मिश्रनिबन्धावली दोनों पुस्तकों के प्रकाशन का आरम्भ में वर्णन है, त्रिलोचन गुरु और षड्दर्शन टीकाकार प्रसिद्ध दार्शनिक श्री वाचस्पति मिश्र के खण्डनों का खण्डन अथवा समाधान इसमें है, त्रिलोचन मिश्र श्री वाचस्पति मिश्र जी के गुरु थे, उन्हीं का त्रिलोचन गुरु करके उल्लेख है ऐसी परम्परा है, उन लोगों का खण्डन जितना इसमें लिया गया है, उतना नहीं मिलता, कुछ मिलता है। उसके बाद बौद्ध मत में प्रसिद्ध अध्यवसाय का कुछ वर्णन है, उसको यहाँ छोड़ दिया जाता है। दूसरी जगह बौद्धदर्शनों के प्रामाण्यवाद के निरूपण में इसकी चर्चा कई बार की गई है।

बौद्धदर्शन का साकारवाद एक प्रसिद्ध विषय है, ज्ञान का आकार होता है. घट आकार वाला ज्ञान घटज्ञान कहा जाता है, ज्ञान में जो आकार भासता है वही उस ज्ञान का ग्राह्य विषय होता है, इसका विरोधी नैयायिक निराकार ज्ञानवादी हैं, ज्ञान में कोई आकार नहीं होता, विषय का आकार भी ज्ञान में नहीं होता, किन्तु विषय का ज्ञान से सम्बन्ध होता है इसलिये ज्ञानों का भेद होता है, जिस ज्ञान के साथ घट का सम्बन्ध है वह ज्ञान घट का ज्ञान कहा जाता है।

## साकारवाद का खण्डन

लोक में नील और पीत विरुद्ध है, जो नील है वह कभी पीत नहीं, जो पीत है वह नील नहीं होता, किन्तु नील और पीत विरुद्धों का एक समूहालम्बन ज्ञान होता है, यहाँ विषय विरुद्ध दो और ज्ञान एक है, एक दो नहीं हो सकता, विषय का आकार विरुद्ध है, वह एक ज्ञान का आकार नहीं हो सकता, इसलिये ज्ञान विषय नही

हो सकता, ज्ञान और विषय का आकार एक नहीं हो सकता, साकारज्ञानवाद ठीक नहीं है, नैयायिकों के ऐसे खण्डनों के समाधान के लिये चित्राद्वैत प्रकाशवाद का जन्म है।

## चित्राद्वैतप्रकाश

चित्र शब्द से अनेकता का आभास होता है, अनेक में ही चित्र शब्द का प्रयोग होता है अद्वैत शब्द से भेद न होना, अनेक आकार मालूम होने पर भी ज्ञान का भेद न होना कहा गया है, ज्ञान प्रकाश है इसलिये प्रकाश शब्द का प्रयोग है, नील और पीत का समूहालम्बन ज्ञान आकार भेद भासने पर भी एक ही ज्ञान है, ऐसा शब्दार्थ है। एक ज्ञान का अनेक आकार कैसे इस प्रश्न पर अतिरिक्त चित्ररूप मानने वाले नैयायिक एकदेशी के मतानुसार समाधान किया जाता है, चित्र शब्द का अनेक में ही प्रयोग होता हो ऐसा नहीं है, एक में भी प्रयोग होता है, जैसे एक साड़ी के अनेक भागों में शुक्ल, नील, पीत, हरित आदि अनेक रूप होने पर भी अवयवी साड़ी में एक ही चित्र रूप है, वहाँ एक ही रूप के लिये चित्र शब्द का प्रयोग है, वैसे ही यहाँ भिन्न आकार वाले एक ज्ञान में चित्र शब्द का प्रयोग है।

**शङ्का**—नील पीत आदि परस्पर भिन्न और विरुद्ध है, साड़ी के भाग भी परस्पर भिन्न है, भिन्न भिन्न भागों में भिन्न-भिन्न रूप रहते हैं, उन भागों अवयवों से उन भिन्न अवयवी साड़ी भिन्न है, साड़ी में रहने वाला चित्र रूप शुक्ल, नील, पीत आदि स्वरूप नहीं है किन्तु उनसे भिन्न है, अतः वहां विरोध नहीं, यहां तो ज्ञान का आकार ज्ञान से भिन्न नहीं है तब ज्ञान एक और अनेक विरुद्ध आकार यह कैसे संगत होगा ?

**समाधान**—ज्ञान प्रकाश नील पीत का प्रकाश है, वह इससे अधिक नहीं बताता कि नील पीत भिन्न हैं या विरुद्ध हैं, जो प्रकाशमान है वह है, नील पीत है या पीत नील है यह भी नहीं बताता। बाहरी नील पीत आदि में विरोध है तो रहे ज्ञानाकार में विरोध नहीं नीलार्थी की सफल प्रवृत्ति नील में ही होती है पीत में नहीं इसलिये बाहरी नील पीत में भेद या विरोध रहता है रहें, ज्ञानाकार में नहीं, यह संक्षिप्त सार है।

वर्षम् १ भागः १—माघ-जनवरी शक १८८४।१९६३ खीस्त० दरभङ्गा-कामेश्वरसिंह संस्कृत विश्वविद्यालय पत्रिका कालीदास निबन्धाङ्कप्रकाशितम् अत्यल्पं विभेदं दधत् श्रीकालिदासस्य दर्शन स्मृतिनाम्ना चौक पटना सिटी सञ्चालिते संस्कृतसम्मेलने च जनवरी जून १९७२ ईशाब्दसंयुक्ताङ्के प्रकाशितम्

# कालीदासदर्शनम्

दृग्दृश्यैकनिधिः सुधीमुदविधिः साधारणो मेश्वरः

यस्यां भारतदर्शनामृतरसो लीलायते शाश्वतः ।

कालीदासकवेः प्रबन्धरसनानृत्यत्पदा भारती

हृत्पद्मे मम कापि काव्यविलसज्ज्योतिः शुभा भासताम् ।

ननु कोऽयं दुरुद्यमः सत्सु दर्शनानां दर्शनीयविचारसरणिप्रसिद्धेषु प्राधान्येन जगत्कारणादिप्रमेयबहुलेषु महामहिममनीषिणां निबन्धेषु वक्र-वर्त्मप्रहाविष्ट इव रत्यादिवासनाधिवासितस्वान्तानामनुरञ्जनाचणेभ्यः प्रकृतिकृतिचेतनचेष्टारोपनिपुणेभ्यः सरससुकुमारमनोविनोदविपणीभ्यः प्रसादमाधुर्यादिगुणेभ्यो विविधालङ्कृतिचमत्कृतिचपकेभ्यः कविकुलगुरोः कालिदाससुधियो वैदर्भीभ्ञरीमधुवचोभ्यो भक्तस्य योगिनः प्रतिप्रसवोपरी-कृतचेतसो मुमुक्षोर्वा सर्वैषणा विमुक्तस्य समीहितं नीरसस्य परमेशादि-दार्शनिकतत्त्वस्य प्रसह्य निस्सारणं नाम ।

नैतदस्ति कान्ताकान्तसम्बाधमिव हि काव्यं सरसतया मनांसि आवर्जयदपि स्वाभाविकविषयवितृष्णावल्लीसेचनम्, सहृदयस्य विदुषः कवेरन्तःस्थितस्य संस्कृतिभावस्य वर्धकम्, शास्त्ररहस्यस्य मानसभोजनस्य व्यञ्जनम् ।

नैकमतपरम्परागहनवनविप्रकीर्णदर्शनतत्त्वस्य दूरादेव विद्योति चाकचिक्यञ्चास्ति, न परित्यजति तत्त्वविमर्शं श्रीशङ्कराचार्यभगवतः सकलरसस्रोतः स्तोत्रकाव्यम्, शिवभक्तिस्रोतोवहमपि महिम्नः स्तोत्रम्

मधुसूदनसरस्वतीव्याख्यानपथेन समुज्ज्वलमद्वैतदर्शनरत्नं जायते। अधुना हिन्दीभाषायां कामायनीप्रभृतिरहस्यकाव्यं प्रचलति। महान् महिमाऽयं काव्यभगवतः, स्वशरीरे सर्वं सन्निवेशयति सुकुमारोऽपि गाढबन्धवर्मको रौद्रमपि रोपयते, सरसरचनाचातुरीतुरीभिर्ललनावसनवयनपरवशोऽपि प्रसादगुणगरीयश्शान्तनिर्वेदादिगौरवं दधानो न जिह्रेति परमात्मशीलनात्, न संकोचमञ्चति विषयदोषदीपनद्वारा बहिर्मुखप्रवृत्तिपराङ्मुखतापादने।

दर्शनवासनादोष एव दुरुद्यमकारणमिति चेद्धन्त, शृङ्गारादिरसास्वादोऽपि रत्यादिवासनादोषवशंवदः, प्रकृतिरेव दोषो रञ्जयति मोहयति विरागाय च प्रभवति। स्वाभाविकवर्णनविभवा समाजसन्निहिता सती कालिदासकृतिर्लोकाननुरञ्जयति विदूरं हि तस्या दार्शनिकं गूढं रहस्यमिति चेदहो रससिद्धान्ताद् दूरापसरणं जायते।

कञ्चुकाञ्चितमेव कामिनीकुचं मनो हरति नागूढम्, कवेरात्मस्वरूपं हि दार्शनिकं चैतन्यं तद्भासितञ्च बुद्धिविलसितं काव्ययोजनम्, मुधैव दूरत्वारोपः।

जडचैतन्यात्मकं हि जगत् काव्यस्य दर्शनस्य च विषयः। जडप्रकाशावेवादाय सर्वाणि दर्शनानि भारतीयानि वैदेशिकानि च परिस्फुरन्ति। जडप्रकाशवासना च भारतीयजलाहरणदक्षासु दासीष्वपि विरूढा न भारतीयं किमपि वाङ्मयं दूरीकर्तुं समर्था किमुत कविकुलगुरोः रचनाम्? बलादेव प्रवर्तयन्ति दार्शनिकीं वृत्तिं तद्वासनावतां सहृदयानां चेतस्सु इमानि पद्यानि—

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि सम्पदः॥१॥
इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः॥२॥

अस्ति भाति प्रियमित्यादिश्लोके सच्चिदानन्दरूपनामपञ्चात्मके संसारे सच्चिदानन्दा ब्रह्मणो नामरूपे मायायाः प्रकृतेर्जडस्येति वर्णितमास्ते तद्वासनया च प्रथमं पद्यम्, नारूपात्मकं जगत् पार्वती निनिन्द। प्राकृतिकानि हि जडानि वस्तूनि नामरूपात्मकानि जडसम्बन्धायैव प्रभवन्ति, न तु चेतनपरमशिवसंसर्गाय, जडाभिमानिनो हि शरीरात्मभ्रान्तिविह्वलाः प्रिया नामरूपयोराशेरते। शुद्धश्चेतनः शिवो नैताभ्यां प्रसीदति इति व्यर्थे एने परमशिवं प्रतीति अभिप्रेयाय। कथमन्यथा रूपसंपदो निन्दा सफला,

शारीरिकं रूपं शिवमनावर्जयदपि नावर्जनं प्रत्यबध्नात्, पश्चादपि शिवावर्जनसमये तत्सहैव बभूव, समाधिना च किं कथं स्यात् ?

नामरूपविषयिणी चेतोवृत्तिर्बन्धः, नामरूपविषयविधुरा च चैतन्याकारा वृत्तिर्बन्धापहारिणी विवेकख्यातिः। अतो मनसो नामरूपात्मिकां वृत्तिं परित्यक्तुमियेषेति द्वितीयपद्यस्यार्थः, किञ्चान्यद् रूपे बन्ध्यत्वमबन्ध्यत्वञ्च वर्णितं भवेत् ? तथाविधे तादृश इति पदे च तदेवाभिप्रेतं प्रकाशयतः। नैवं विचारणा काव्यमार्गेषु चेत् बत रसास्वादोऽपि काष्ठकुड्यादिसाधारण एव। साधारणा अपि जनाः काव्यरसं स्वादयन्तीति वार्तैव न वस्तु, प्रसादगुणदोषाद् भाषाशिक्षार्थं बालेभ्यो दीयमानं रघुवंशादिकाव्यं न रसास्वादाय किन्तु भाषाज्ञानाय, अनुद्भूतस्थायिभावेषु कुमारेषु रसासंचारात्। साम्प्रतन्तु असाम्प्रतमाचरन्तः शिवपार्वतीताण्डवं पश्यन्ति, संस्कृतमनवबुध्यमाना अपि संस्कृताभिनयं समीक्षमाणाः संस्कृतकाव्यं वा अनुवादादिभिः पठन्तो रसमास्वादयाम इति वृथा विप्रलब्धाः। शब्दार्थयुगलस्य काव्यस्य हि भावनया रसनिष्पत्तिः, शब्दपरिज्ञानं विना कुतः शब्दभावना ? किन्तु अभिनेतृकलानां साक्षात्कारं कवीनामर्थयोजनाप्रकारं वा काव्यरसं मन्यन्ते न तु रसमहिमानं रसनिष्पत्तिप्रक्रियाञ्च स्पृशन्ति। अभिनेयनायकादि न अनुसन्दधते विदूरञ्च तस्य स्वात्मनि योजना।

एवमेव निम्नाङ्कितयोः शाकुन्तलपद्ययोः सांख्यवेदान्तसिद्धतमोगुणस्य तद्वृत्तेश्च वर्णनं गुरुवरणकमेव तम इति रीत्या आवरणं तमसः कार्यं स्फुटं दर्शयति—

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि।
उपरागान्ते 'शशिनः समुपगता रोहिणी योगम्' ॥
(अभि० शा० ७।२२)

अत्र स्मृतिपदं प्रत्यभिज्ञादर्शनप्रसिद्धां प्रत्यभिज्ञां सूचयतीति कृतं पल्लवनेन।

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत्।
प्रबलतमसामेवं प्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥
(अभि० शा० ७।२४)

शुभानि धार्मिककृत्यानि सत्त्वगुणप्रयुक्तानि तमसा प्रतिबध्यन्ते इति स्फुटमुक्तं दार्शनिकम् ।

इत्थमेव रघुवंशनवमसर्गे ६९ पद्यात् ७४ पद्यं यावत् कारणपरिणाम-परिपूरितमृगयाव्यसनस्य वर्णनम्—

इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी ॥ रघु० ९।६९

चतुरा कामिनीति सादृश्येन शारीरिकव्यायामलोभेन मृगयाया रोचकत्वम्, अनुबन्धसेवया परिवृद्धरागमित्यनेन न जातु कामः कामानामुपभोगेन शाम्यतीति श्लोकार्थञ्च सूचयति । विस्मृतान्यकरणीयमित्यतो मृगयाहरणस्य परिणामं कर्तव्यपराङ्मुखत्वं दर्शयति, जडाधिपत्वद्योतकं धराधिपपदं तमःप्रतापं प्रदर्शयदेतदनुकूलम् । स्फुटमेव अनुपदं रजस्तमःशब्दौ प्रयुङ्क्ते । अतः परं त्वरितगत्या गाढं तमः प्रापेति अग्रिमपद्येन वर्णयति—

अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरङ्गमेण ॥ रघु० ९।७२

अत्र तपस्विनदीश्रमादिशब्दा एतदनुकूलमर्थं व्यञ्जयन्ति ।

नृपतेः प्रतिषिद्धमेव तत् कृतवान् पङ्क्तिरथो विलङ्घ्य यत् ।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ७४ ॥

इत्यनेन रजस्तमसोः प्रवृद्धयोर्निषिध्याचरणं फलं प्रदर्शितम् । कियत्प्रदर्शनीयम् ? पदे पदे दार्शनिकोपदेशः, काव्यफलं प्रमादरक्षणम् ।

न मयकैव एवं प्रयस्यते, अन्येऽपि दार्शनिका एवं दृष्टवन्तः परिपश्यन्ति च । विंशशताब्द्याः प्रारम्भे, वार्धक्येऽनुवर्तमानो न्यायधुरन्धरः स्वःश्रीराख्यालदासभट्टाचार्योऽधोनिर्दिष्टपद्याभ्यां सरस्वतीभवनप्रकाशिते तत्त्वसारपुस्तके मनसि अभिलाषसंदेह-निर्णयादिवर्णनेन मन आत्मवादमुदाहरति शाकुन्तलप्रथमाङ्क २१।२६ पद्याभ्याम्—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥२१॥
भव हृदय साभिलाषं सम्प्रति संदेहनिर्णयो जातः ।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ २६ ॥

अन्ये नैयायिकास्तु मनोऽवच्छिन्ने आत्मनि वर्णयन्तीत्यन्यत्, आधुनिकोऽपि विद्वान् श्रीवासुदेवशरणोऽग्रवालो हिन्दीलेखे मेघदूते शिवस्वरूपवर्णनमधीते, योगप्रक्रियया च अध्यात्मं नाडीक्रियाविलासे शिवपार्वतीपरिणयं सम्पादयति।

अतः परं दृग्दृश्ययोर्जडचैतन्ययोः सर्गोपादानस्य ब्रह्मविष्णुमहेश्वरादिस्वरूपे च कीदृशी कवेर्धारणेति संक्षेपेण प्रदर्श्य समापयामि प्रबन्धम्।

तत्र रघुवंशदशमसर्गस्य षोडशात् पश्चात् त्रयस्त्रिंशपद्यं यावद् वर्तमानां देवस्तुतिमुपस्थापयामि—

नमो विश्वसृजे पूर्वं विश्वं तदनुबिभ्रते।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ १६ ॥

एक एव आत्मा त्रिधा स्थितः पूर्वं विश्वं सृजति तदनु बिभर्ति अथ च संहरति इत्युक्तम्, तत्र एकस्य त्रिधाभवने परिणामस्तेन च त्रिक्रिया आयातीतिसमाधानार्थमाह—

रसान्तराण्येकरसं यथादिव्यं पयोऽश्नुते।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ १७ ॥

दिव्यैकरसस्य पयसो विक्रियावत्त्वेन विविधदेशस्थमृत्तिकारससम्पर्कात् नैकरसत्वं परिणामादिविक्रियावशादपि संभवतीति नोपमामात्रेण निर्वाह इत्यविक्रिय इत्युक्तम्। अपरिणामी कूटस्थ इति तदर्थः। तत्रापि एकस्यां रज्जौ सर्प-जलधारामालावंशात्रिविवर्तवत् त्रिरूपं विवर्तो मिथ्या मायाकार्यं वा वेदान्तमतेन, अथवा सांख्यसरण्या कूटस्थस्य प्रकाशरूपस्य साक्षितामात्रत्वम्? पूर्वमते तु मिथ्यात्रिभवनस्य अधिष्ठानमेकमात्मानमन्तरा न तत्त्वान्तरस्य अपेक्षा। परं द्वितीयमते तु परिणामिनः कारणस्यावश्यकता यस्य परिणामास्त्रयो भवेयुः प्रकाशकश्च साक्षी स्यात्, तदर्थं गुणेष्विति वचित। गुणाः सत्त्वरजस्तमांसि त्रिपरिणमन्ति त्रिधा भवन्ति, तदुपाधिकः साक्षी त्रेधा भवतीति भावः। वेदान्तिनोऽपि त्रिगुणा माया परं मिथ्या तत्कार्यमपि मिथ्या, सांख्यस्य गुणास्तु परिणामिनः सन्तः सत्कार्याणि प्रसुवते।

ननु नेदं सांख्यमतेन वेदान्तमतः कविर्वर्णयति, सांख्ये पुरुषातिरिक्तपरमात्मनोऽनङ्गीकारात्, स्वीकृतानामपि पुरुषाणामसङ्गत्वेन कर्तृत्वादिकारणत्वप्रतिषेधात्, स्वयं पुरुषाणामनेकत्वेन त्रिधाभवनस्यानुपयोगाच्च।

तत्र पुराणादिसमन्वयशालिनो विज्ञानभिक्षव एवं ब्रुवते—परेणेरितं विषमत्वं प्रयाति प्रभृतिश्रुतिस्मृतिभिः सृष्टिप्रकृतिप्रवृत्तिवैषम्यहेतुरीश्वरः सांख्यसम्मतः, स च साक्षितयैव प्रकृतेरधिष्ठानम्। प्रकृतिश्च सकार्या प्रलये परमेश्वरे लीना न पृथङ्नामरूपे बिभर्ति, अविभागञ्चापाद्यते, तदानीं प्रकृतेरद्वैतमाश्रितः परमात्मा सृजति इति व्यवहारः। यद्यपि कृतिशक्तिः प्रकृतावेव तथापि तदविभागापन्न ईश्वरोऽपि सर्गस्य कर्ता भवति। अग्रे च यथा मायोपाधेरसङ्गस्य चेतनस्य सर्वोऽपि व्यवहारस्तथा प्रकृत्युपाधेः परमात्मनोऽपि मम मते, वेदान्तिमते मायाकार्यत्वेन जगतो मिथ्यात्वं, मम मते च सत्यत्वम्। पुरुषाणाञ्च जात्यैक्यादेकत्वव्यवहारः शास्त्रेषु। इति।

मम त्वेवं प्रतिभाति—अस्ति स्वतन्त्रजडपरिणामवादि निरीश्वरमपि सांख्यमतम्। तन्मते स्वतन्त्रपरिणामशक्तिः प्रकृतिः पुरुषस्य भोगापवर्गार्थं प्रवर्तते इति तस्याः स्वभावः, भोगमोक्षौ फले अपि प्रवृत्तेर्हेतू 'फलमपीह हेतुरध्ययनेन वसति' इत्यादिव्याकरणवत् पुरुषभोगापवर्गयोर्हेतुत्वे पुरुषो हेतुर्बलादायात एव। तथैव हेतुत्वं पुराणादौ काव्ये च वर्णितम्। परेणेरितमित्यादिश्रुतेरपि तथैवार्थः। परेण परपुरुषभोगप्रयोजनेनेति श्रुत्यर्थः। एनमेव केचन सन्निधानमात्रेण हेतुरिति ब्रुवते, असङ्गस्य पुरुषस्य कारणत्वनिषेधस्तु परिणामविक्रियापादकस्योपादानत्वस्य कर्तृत्वस्य च निषेधः, साक्षात्काररूपं भोक्तृत्वमिव कर्तृत्वं कारणत्वं वा पुरुषस्येष्यते एव। इत्थञ्च मायां विना वेदान्तस्य चिदात्मनि यथा असङ्गत्वस्वप्रकाशत्वाकर्तृत्वाभोक्तृता तथा सांख्यस्य पुरुषेऽपि, मायामादाय यथा तत्र सर्वज्ञत्वसर्वकर्तृत्वादिव्यवहारास्तथा सांख्येऽपि प्रकृतिमादाय प्रायः समे व्यवहाराः।

ननु मायाया मिथ्यात्वेन अतिरिक्तसत्त्वस्याभावात् परमार्थतोऽद्वैतम्, सांख्यस्य तु प्रकृतेः सत्त्वेन नैवं संभवति चेत्, अस्तु नामैवम्, सांख्यं वस्तुवादिदर्शनं वेदान्तस्तु भानवादी। पृथक् प्रक्रिया युज्यत एव। उभयमतसिद्धं स्वयंप्रकाशत्वसत्त्वमादाय अतिरिक्तप्रकाशाप्रकाश्यत्वरूपमद्वैतमपि निरुच्यतां का हानिः? किञ्च वेदान्तमते द्वैतं मिथ्या, अद्वैतं परमार्थः। सांख्ये अद्वैतम् अविवेकवशोपपन्नं बन्धः, द्वैतं सत्यं यतो विवेकख्यातिः पुरुषार्थः। वेदान्ते द्वैतमूलका जडचेतनयोरध्यासमूलकाश्च व्यवहाराः, सांख्ये जडचेतनयोर्नाध्यासोऽपि तु विवेकख्यात्यभावरूपाविवेकमूलकजडचेतनमिश्रिता व्यवहाराः। विवेकख्यात्यभावादेव पुरुषाणां प्रकृतिपुरुषयोर्वा अद्वैतव्यवहारः शास्त्रपुराणादिषु प्रवर्तते, अतएव सदेव सोम्येदमग्र आसीत्; इत्यादावेकवचनम्, सृष्टेरारम्भे भेदप्रकाशिकाया वृत्तेरभावाद् द्वित्वाद्यभावाद् द्विवचन-

प्रयोगानुपपत्तेः। अन्यानि चेतनाचेतनकारणत्ववादीनि श्रुतिवचनानि न विरुध्यन्ते, प्रकृतिपुरुषाद्वैतस्य सृष्टिकारणत्वात्। अयमेव च दर्शनमार्गः कवेरभिप्रेतः प्रतीयते यतोऽविवेकदशायां पुरुषं प्रकृतिं विवेकख्यातौ च पुरुषमुदासीनं स्फुटं वर्णयति कुमारसंभवद्वितीयसर्गत्रयोदशपद्येन—

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥

तत्र प्रकृतिपदेन उपादानत्वमात्रं न विवक्षितं पुरुषार्थप्रवर्तकत्वेन गुणात्मकत्वस्याभिप्रेतत्वात्।

सत्त्वादिगुणोपाधिकास्ते एव त्रयः पुरुषा ये सृष्टेः प्राक् सत्त्वाद्युपाधेरभावाद् अविविक्ताः सामान्यरूपेण प्रकाशमात्रशरीरा आसन्, इदञ्च त्रिधाभवनं महत्तत्त्वसृष्टेरनन्तरम्, अत एव प्रारम्भिकमहत्तत्त्वसृष्टौ आत्मरूपेण त्रयाणां प्रकृतित्वं वर्णितम्। तादृशा एव ब्रह्मविष्णुमहेशाः एकविधस्य पुरुषस्य भेदमापन्नाः। कविनाऽपि रघुवंशे विष्णोः कुमारसंभवे च वेधसः समानैव स्तुतिर्वर्णिता। हिमालयं प्रति ऋषिभिः शिवपरिचयप्रदानमपि तथैव कृतम्। ऐश्वर्यादिकन्तु वेदान्तदर्शने यथा मायाप्रयुक्तं तथा सांख्येऽपि प्रकृतेरविवेकाच्चिदात्मनि न विरुध्यते। स्वाभाविकैश्वर्यस्यैव पुरुषेषु निषेधात्। पुरुषेषु सांख्यस्यैकत्वव्यवहारस्तु उपाधेरभावे भेदकाभावेन अनेकत्वव्यवहारसामग्रीवैधुर्यादेव न तु वस्तुत एकत्वात्। उपाधीनां भेद एव पुरुषभेदव्यवहारप्रयोजकोऽस्तु कृतं पुरुषाणां भेदेनेति चेत्–न, अन्यभेदस्य इतरभेदप्रयोजकत्वे प्रमाणाभावादतिप्रसञ्जकत्वाच्च। व्यवहारस्य कथञ्चित्समर्थनेऽपि भोगानां विरुद्धानामसङ्गत्यापत्तेः। वेदान्तिमते तु मिथ्यात्वास्त्रेण सर्वोऽपि विरोधः परिह्रियेत। वस्तुसद्वादिनस्तु सांख्यस्य वस्तुभेद एव विरोधपरिहाराय शरणम्।

अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः।
अजितो जिष्णुरत्यन्तम् अव्यक्तो व्यक्तकारणम्॥ रघु० १०।१८

अत्र चेतनेऽव्यक्तपदं रूपादिराहित्येनेन्द्रियाद्यग्राह्यत्वम्, अव्यक्तप्रकृतेरद्वैतं वा आदाय प्रवृत्तम्। व्यक्तकारणमिति तु व्यक्ताव्यक्तसर्वकारणस्य सङ्कुचितकारणत्वप्रतिपादनं न युक्तमिति व्यक्तानां कारणादभिव्यक्तानां समेषां प्रत्यक्षाणामप्रत्यक्षाणाञ्च कारणत्वं वर्णनीयम्। अनुपदमेव च विंशश्लोके सर्वयोनिरिति विशेषयिष्यति। कुमारसंभवे (२।४–१५ पद्येषु) वेधसः स्तुतौ जगत्कारणस्वरूपवर्णनं प्रायः एवमेव वर्तते–

नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४ ॥

सर्गात् प्राक् केवलात्मा गुणत्रयाणां विभागे जाते पश्चाद् भेदं प्राप्तवान् त्रिमूर्तिर्वेधा इति वर्णितम् । वेदान्तमते मायायाः पृथक्सत्त्वाभावात् ब्रह्म केवल आत्मा सम्यगेव । सांख्यमते केवलत्वं पूर्वोक्तरीत्या विवेकाभावरूपाद्वैतमादाय समन्वेयम् । परं केवलचेतनादपि जडचेतनसर्गं वर्णयन्ति बाह्यसद्वादीनि अपि दर्शनानि सन्ति यथा प्रत्यभिज्ञादर्शनम् । परमस्य परिणामे वेदान्तसाङ्ख्यसमतामेव प्रपश्यामि । तथा हि—

प्रथममेकं शिवतत्त्वं प्रकाशमात्रशरीरम् । परं स्वरूपग्रहणरूपविमर्शमन्तरा स शिवो जडप्रायोऽकिञ्चित्कर इति द्वितीयशक्तितत्त्वं वर्तते । शक्तिश्च अकृत्रिमाहंस्फूर्तिर्विमर्शः, सृष्टिस्थितिप्रलयशक्तिः, चित्, चैतन्यस्वातन्त्र्यकर्तृत्वादिरूपा स्फुरत्तासारहृदयस्पन्दादिशब्दवाच्या । द्वयोः सम्मेलनेन सदाशिवः सर्वज्ञः सर्वशक्तिमान् स्वतन्त्रश्च भवति । तथा च शिवः प्रकाशमात्रशरीरः सांख्यस्य पुरुषरूपो ब्रह्मस्वरूपो वा वेदान्तस्य । शक्तिश्च माया प्रकृतिर्वा । तेन शक्तिशक्तिमतोरभेदरीत्या अद्वैतं वर्ण्यते । अन्येन अन्यविषयेति विशेषः ।

अभिनवं स्वर्गीयश्रीरामावतारविदुषाऽवतारितं प्रायो वैदेशिकदर्शनवासनया संमिश्रं परमार्थदर्शनं स्वाभाविकं चैतन्यस्य वैचित्र्यमङ्गीकरोति । एकमेव चेतनं सर्वप्रकाशकं सर्वप्रकृतिः सदा च कमप्याकारं बिभ्रदेव वर्तते । एकाकारस्य विगमे अन्योऽप्याकारस्तत्र आयात्येव न कदाचिदपि निराकारमिति शाङ्करमतखण्डनमुखेन वर्णयति पञ्चमाध्यायप्रथमाह्निकतृतीयचतुर्थसप्तमाधिकरणेषु—

जातु वैचित्र्यमात्रस्य ब्रह्मण्युपरमो न वा ।
निर्वैचित्र्यं ब्रह्म शुद्धं मुक्तौ प्राग्वाऽपि सृष्टितः ॥ १ ॥
लुप्तेऽप्येकत्र वैचित्र्ये परेषामिह दर्शनात् ।
सृष्टेरनाद्यनन्तत्वात् ब्रह्मवैचित्र्यवत्सदा ॥ २ ॥
वैचित्र्यं मायिकं सर्वं पारमार्थिकमेव वा ।
विलोपान्मायिकं सर्वं न हि किञ्चिदनीश्वरम् ॥ १ ॥

पारमार्थिकमेवेदं व्याघातरहितं यतः ।
विलोपाद् वस्त्यसन्नैव न मत्यत्वात् सुतो ह्यसन् ॥ २ ॥
निर्गुणः प्रकृतेर्भिन्नः ईशः प्रकृतिरेव वा ।
नियन्ता प्रकृतेः कश्चिन्निर्गुणः संभवत्यसौ ॥ १ ॥
प्रकृतिर्नियतैवेयं विनियम्या न केनचित् ।
सर्वाकारेश्वराऽभिन्नासावित्येव विनिश्चयः ॥ २ ॥

अदसीयवार्तिकेषु स्फुटतरमिति तत एवावगन्तव्यम् । सृष्टिप्रलयौ परमात्मनः स्वाभाविकमविकारित्वमुपाधितश्च भेदं वर्णयन्नयं दार्शनिकः कविरेतादृशं दार्शनिकमतं नाङ्गीकुरुत इति धिया प्रादर्शयम् । अतएव वैशेषिकदर्शनवासनाप्रभावोऽत्र दर्शन इत्यवोचमेव । यद्यपि पूर्वमीमांसकः सृष्टिप्रलयौ विरुणद्धि, परं न किमपि भारतीयं दर्शनं चैतन्यस्य स्वाभाविकं वैचित्र्यं वर्णयति । विकारित्वमन्तरा स्वाभाविकवैचित्र्यानुपपत्तेः, बौद्धदर्शनं क्षणिकसन्तानं वर्णयदपि परिणामवैचित्र्यं तिरस्करोत्येव । पुराणेषु यथा सांख्यवेदान्तयोर्वर्णना तथैव प्रायः प्रकृतकवेरपि दर्शनवर्णनं प्रतिभाति । अन्यच्चावश्यवक्तव्यमपि लेखविस्तरभिया परित्यजामि ।

शाकुन्तलमङ्गलाचरणे तु विराजो भगवतः प्रत्यक्षास्तनवो निर्दिष्टाः । समेषां विराड्रूपत्वेऽपि न्यूनता प्रत्यक्षाभिरिति विशेषणेन परिहृता । एतद्विशेषपरिचयाय त्वमर्कस्त्वं सोम इत्यादिमहिम्नःस्तोत्रस्य मधुसूदनीटीका द्रष्टव्या । भूमिरापोऽनल इत्यादिगीतया तु तुलनाऽस्य न समीचीना । तत्र प्रकृतीनां वर्णनात्र च समेषां प्रकृतित्वासंभवाच्छरीरत्वेनोपन्यासाच्च ।

विक्रमोर्वशीयमङ्गलाचरणे तु उपनिषद्वर्णितसर्वान्तर्यामि परं ब्रह्म शिवस्वरूपं पूर्ववदेव दर्शितम् । वेदान्ता उपनिषदस्तन्मूलानि च सर्वाणि वैदिकदर्शनानि । एवञ्च क्वचिद्वेदान्तमतं क्वचिच्च सांख्यं काव्ये प्रायाति । समन्वयस्तूभयमतेनेति प्रतिपाद्य विरमामि ।

कविकुलगुरुवाचा पद्मपुञ्जाधिवासा
स्थिरमृदुलविलासा तत्र का मे दुराशा ।
ननु भवति हृदब्जे कृष्णचन्द्रस्य चञ्चत्
कठिनमुपलरत्नं शोभनं सारवच्च ॥

वर्ष १ भाग १। माघ. जनवरी। शक १८८४।१९६३ खीस्त.। कामेश्वरसिंह संस्कृत विश्वविद्यालय दरभङ्गा संस्कृत-पत्रिका-१ कालिदास निबन्धाङ्क में प्रकाशित, और थोड़े फरक के साथ चौक पटना सिटी सञ्चालित संस्कृत सम्मेलनम् के जनवरी. जून १९७२ ई० संयुक्ताङ्क में प्रकाशित कालिदास दर्शनम् की हिन्दी।

## कालिदास का दर्शन

जब कि दर्शनीय विचार रीतियों से प्रसिद्ध, प्रधान रूप से जगत् के कारण आदि बहुत प्रमेयवाले बहुत बड़े विद्वानों के दर्शनों के निबन्ध विद्यमान हैं, तब रति आदि वासनाओं से अधिवासित-हृदय वालों को अनुरञ्जन करने में प्रवीण, प्राकृतिक कार्यों में चेतन की चेष्टाओं के आरोप में निपुण, सरस कोमल हृदयवालों के मनोविनोद के लिये बाजार, प्रसाद-माधुर्य-आदि गुणगणों से अनेक प्रकार के अलङ्कार चमत्कारों के प्याले, कवि कुलगुरु कालिदास सुधी के वैदर्भी रीति की झरीवाले मधुर वचनों से, भक्त-योगी-या तीनों एषणाओं से मुक्त नीरस भावना से उपर किये गये चित्तवाले मुमुक्षुओं का चाहा हुआ नीरस परमात्मा आदि दर्शन तत्त्वों को जबरदस्ती वक्रमार्ग के आग्रह में ग्रस्त के ऐसा निकालना क्या यह कठिन उद्योग है ?।

यह नहीं है, कान्ता के सुन्दर संवाद के ऐसा काव्य सरस होने से मनों को आकृष्ट करता हुआ भी स्वाभाविक विषयों के वैराग्यलताओं को सीचने वाला है, सहृदय विद्वान् कवि के अन्तः करण में रहने वाले संस्कार वस्तुओं को वर्षाने वाला है, शास्त्रों के रहस्य रूप मानस भोजन का व्यञ्जन है, अनेक मतों की परम्परा रूपी गहन वनों में बिखरे हुए दर्शनो के तत्त्वों का दूर से ही चमकने वाला चाकचिक्य है। श्रीशङ्कराचार्य भगवान् के सभी रसों का स्रोत स्तोत्र काव्य तत्त्व विचार को नहीं

छोड़ता, शिवभक्ति के स्रोतो को बहाने वाला महिम्न स्तोत्र, मधुसूदन सरस्वती जी के व्याख्यान मार्ग से तेजस्वी अद्वैत दर्शन रत्न हो जाता है। इस समय हिन्दी भाषा में रहस्य काव्य चलता है, काव्य भगवान् की यह बहुत बड़ी महिमा है जो अपने शरीर में सभी का सनिवेश करते हैं, सुकुमार भी गाढ़बन्ध कवच वाला होकर रौद्र को भी दृढ़ करते हैं, सरस रचनाओं की चतुराई तुरीयों से ललनाओं की शाड़ीयां बनाने में लगे हुए भी प्रसाद आदि गुणों से अधिक गुरु शान्त निर्वेद आदि गौरव को धारण करते हुए परमात्मा के परिशीलन से लजाते नहीं, विषयों के दोषों को साफ दिखाने से बाहरी प्रवृत्तियों से पराङ्मुख करने में संकोच नहीं करते।

दर्शनों की वासना ही दोष इस कठिन उद्योग का कारण कहें तो क्या किया जाय ? खेद है कि श्रृङ्गार आदि रसों का आस्वाद भी रति आदि वासना दोष के अधीन ही है, प्रकृति ही दोष खुश करती है, मोह में डूबोती है, वैराग्य वितरण में भी बहुत समर्थ है, स्वाभाविक वर्णन का वैभव वाली समाज के पास रहती हुई कालीदास की कृति लौकिक मनों का अनुरञ्जन करती है, दार्शनिक गूढरहस्य उससे बहुत दूर है ऐसा समझना रस सिद्धान्त से दूर भागना है, चोली से सुशोभित ही कामिनी का कुच मनोहर होता है खुला हुआ नहीं, कवि का आत्मस्वरूप ही चैतन्य दर्शन तत्त्व है, उसी से प्रकाशित काव्य की योजना रूप बुद्धि का विलास है, उसको दूर समझना वे समझका होगा।

जड़ और चेतन का मिश्रण संसार काव्य तथा दर्शन का विषय है, जड़ और उसकी समझरूप प्रकाश को ही लेकर भारतीय अथवा विदेशीय सभी दर्शन खिले हुए हैं, जड़-प्रकाश की वासना रूपी दार्शनिकता भारत में पानी भरने वाली दाईयों में जड़ जमाई हुई किसी भी भारतीय साहित्य को दूर करने में समर्थ नहीं है कविकुल गुरु की रचना को क्या कहना है ?

नीचे लिखे ये पद्य दर्शन वासना वाले सहृदयों के चित्तों में दार्शनिक वृत्ति को जबरदस्ती करते हैं।

'इस प्रकार सामने कामदेव को जलाते हुए शंकर जी से अभिलाषा भंग को पाई हुई पार्वती ने हृदय से अपनी शारीरिक सौन्दर्य सम्पत्ति की निन्दा की, क्योंकि सम्पत्ति वह हो सकती है जो प्रिय को खुश कर सके, इसने ऐसा नहीं किया, इसलिये

इसमें गंदगी है, तपाने लायक है इसलिये अच्छी सम्पत्ति नहीं है। इसमें रथ और भंग शब्द से रथ टूट गया, इससे आगे कैसे बढ़े? भाव निकलता है।

'समाधि लगाकर तपस्याओं से वह पार्वती अपने को बन्धन रहित करना चाही, नहीं तो दोनों कैसे पाये, वैसा आत्म प्रेम और वैसा परमात्मा पति शरीर आदि में आत्मा का अभिमान रूप बन्ध रहने पर शुद्ध आत्मा में अनुराग नहीं हो सकता, जब आत्मा को ही नहीं समझा तब परम आत्मा को कैसे समझे और पावे?

वेदान्त में अस्ति भाति प्रियम् इत्यादि श्लोक प्रसिद्ध है, उसमें कहा गया है कि—सत् चित् आनन्द नाम रूप ये संसार के पांच रूप हैं, पहले तीन ब्रह्म हैं, अन्तिम दो नाम रूप माया प्रकृति जड़ के हैं, इसी वासना से पहला पद्य है, पार्वती नामरूप जगत् की निन्दा की, क्योंकि प्रकृति से बने हुए नाम रूप जड़ वस्तुएं जड़ों से सम्बन्ध के लिये ही समर्थ हैं चेतन शिव सम्बन्ध के लिये नहीं, जड़ के अभिमानी शरीर आदि में आत्मा के भ्रम से विह्वल उसी प्रेमी नाम रूपों में आस्था रखते हैं, शुद्ध चेतन शिव इनसे प्रसन्न नहीं होते, इसलिये ये परम शिव के लिये व्यर्थ हैं, ऐसा अभिप्राय बनायी, नहीं तो कैसे रूप सम्पत्ति की निन्दा सफल हो? शारीरिक रूप शिव को आकृष्ट नहीं करता हुआ भी शिव के आकर्षण को रोकने वाला नहीं हुआ, क्योंकि तपस्या के बाद भी शिव के आकर्षण के समय साथ ही था, तब समाधि से क्या किया गया? सोचना चाहिये और अवन्ध्य शब्द पर ध्यान देकर बन्धन हटाया गया ऐसा समाधान करना चाहिये, नाम रूप आकार वाली चित्त की वृत्ति बन्ध है, और नाम रूप से रहित चैतन्य शिवस्वरूप वाली मन की वृत्ति विवेक ख्याति बन्ध को हटाने वाली है? इससे मन की नाम रूप आकार वाली वृत्ति को छोड़ना चाहीये यह दूसरे पद्य का अर्थ है, और रूप में वन्ध्यत्व और अवन्ध्यत्व क्या कहा जा सकता है। तथाविध और तादृश शब्द वैसे अभिप्राय को प्रकाशित करते हैं।

यदि ऐसे विचार काव्य में न किये जांय तो रस का आस्वाद भी सुखी लकड़ी और भीत को होने लगे, साधारण जन भी काव्यों के रस का आस्वाद करते हैं यह केवल गप है वस्तु नहीं, प्रसाद गुण का दुरुपयोग से भाषा शिक्षा के लिये बालकों को दिया जाता हुआ रघुवंश आदि काव्य रस के आस्वाद के लिये नहीं होता किन्तु भाषा-

ज्ञान के लिये होता है, जिसमें स्थायी भाव प्रगट नहीं हैं ऐसे कुमारों में रस का सञ्चार नहीं संभव है, इस समय तो अनुचित आचरण करते हुए शिव पार्वती के ताण्डव नृत्य को देखते हैं, संस्कृत भाषा को नहीं समझते हुए भी संस्कृत अभिनय को देखते हुए रस के आस्वाद का अभिमान करते हैं, वैसे ही संस्कृत काव्य को अनुवाद आदि से पढ़ते हुए रसास्वाद की विडम्बना करते हैं, ये लोग व्यर्थ ठगे गये हैं, क्योंकि शब्दार्थ युगल काव्य की भावना से रस बनता है, शब्द ज्ञान के विना शब्द भावना कहां से होगी ? किन्तु अभिनय करने वाले नट नटी के कलाओं के साक्षात्कार की अथवा कवियों की अर्थ योजनाशैली को काव्य का रस समझते हैं, रसों की महिमा और रस निर्माण की प्रक्रिया को नहीं छूते, अभिनेय नायक आदि कौन है इसका भी अनुसन्धान नहीं कर पाते, उसको अपनी आत्मा से सम्बन्ध करना तो बहुत दूर है।

इसी प्रकार नीचे लिखे शाकुन्तल पद्यों में सांख्य और वेदान्त दर्शन में प्रसिद्ध तमोगुण और तमोगुण की वृत्ति का वर्णन है। गुरुता और आवरण तमोगुण हैं इस सांख्य कारिका के अनुसार तमोगुण का कार्य आवरण दिखाता है—

'हे सुमुखि ? भाग्यवश स्मरण से मेरे घोर तमोगुण अन्धकार का नाश हो जाने पर तुम मेरे सामने ठहरी हो, जैसे कि चन्द्रग्रहण के बाद चन्द्रमा से सम्बन्ध की हुई रोहिणी हो' अभि० शा. ७।२२। तमो गुण विषयों को ढक देता है, सामने रही हुई वस्तु भी नहीं दीख पड़ती, इससे तमोगुण का आवरण कार्य सूचित किया गया, उस तमोगुण के नाश से विषय का प्रकाश दिखाया गया, यहाँ पहचान का प्रसङ्ग है इसलिये स्मृतिशब्द प्रत्यभिज्ञा दर्शन में प्रसिद्ध प्रत्यभिज्ञा की सूचना देता है, विस्तार से क्या ? 'हे सुतनु ? तुम्हारे हृदय से मेरे द्वारा निराकरण का दुःख हट जाय, उस समय मेरे मन का विलक्षण संमोह बलवान् हो गया था, प्रायः प्रबल तमोगुण वाले की शुभ कर्मों में इस प्रकार की ही वृत्तियाँ हो जाती हैं, अन्ध मनुष्य शिर पर फेंकी हुई माला को भी सर्प के संदेह से हटा देता है, अभि० शा० ७।२४ यहाँ तमोगुण का काम महा अज्ञान जिससे अच्छे काम रुक जाते हैं तथा हित अहित और अहित हित मालूम पड़ता है, इसलिये प्रकाश लाने वाले सत्त्वगुण का अर्जन करना चाहिये, यह उपदेश भी दिया गया, सत्त्वगुण से धार्मिक कृत्य होते हैं और तमोगुण से रोके जाते हैं, यह दर्शन स्पष्ट कहा गया।

इसी प्रकार रघुवंश के नवम सर्ग में ६९ से ७४ श्लोक तक कारण परिणाम आदि से साङ्गोपाङ्ग शिकार व्यसन का वर्णन है—

'इस प्रकार अपने दूसरे कर्त्तव्यों को भूले हुए राज्यभार को मन्त्री के अधीन किये हुए इस दुर्व्यसनों के उपयोगी वस्तुओं के सेवन से बढ़े चढ़े राग वाले राजा को चतुर कामुक स्त्री के ऐसी मृगया हर ली। ९।६९ चतुर कामिनी अपनी शोभा सजावट तथा अपनी आकर्षक चेष्टा से जैसे कामुक के अनुराग को बढ़ाती है, उसी प्रकार मृगया के उत्तेजक शारीरिक व्यायाम शरीर लाघव चञ्चल लक्ष्य पर निशान जमाना आदि का वर्णन से मृगया में अनुराग बढ़ा, अनुबन्ध सेवा से जोश बढ़ाने वाले मदिरा आदि का सेवन सूचित होता है, कभी भी कामना की शान्ति उपभोग से नहीं होती इत्यादि गीता श्लोक के अर्थ की सूचना देते हैं, विस्मृतान्य इत्यादि से मृगया से हरण का परिणाम बताया गया कि अपने कर्तव्यों को भूलकर कर्तव्य से पराङ्मुख हो गया, जड़ अधिप द्योतक धराधिप पद से तमोगुण का प्रभाव बताया, विस्मरण भी तमोगुण का फल है, प्रवृद्धराग रजोगुण की वृद्धि से चञ्चलता बताया। पास ही के पद्य में रजः तमः शब्द स्फुट कहा गया है, इसके बाद द्रुतगति से गाढ़ तमोगुण को पाया यह आगे के पद्य से वर्णन करते हैं।

'इसके बाद कभी जंगल में मृग के मार्ग का अनुसरण किये हुए दूर जाने से सहायक सैनिकों द्वारा नहीं दीख पड़ते हुए परिश्रम से फेन फेकने वाले शीघ्रगामी घोड़े से तपस्वियों से अवगाहन की हुई तमसा नदी को पाये' रघु ९।७२ यहाँ शब्दों से तथा पहले तमोगुण और रजोगुण के उल्लेख से गाढ तमोगुण को अथवा गाढ अज्ञान पाना सूचित हुआ, जिससे आगे निषिद्ध आचरण होगा, तपस्वी शब्द ताप वाले को सूचित करता है, नदी शब्द से अज्ञान का प्रवाह ले सकते हैं, श्रम तुरङ्गम आदि शब्द रजोगुण से व्यर्थ अथवा अज्ञान से क्रिया विशेष सूचित करता है।

'राजा के लिये निषेध के योग्य मृगहनन का उल्लङ्घन करके जो दशरथ उसको किये वह तमोगुण और रजोगुण का प्रभाव है, क्योंकि शास्त्र पढ़े हुए भी रजोगुण से अभिभूत होकर कुमार्ग पर पैर देते हैं' रघु ९।७४ इससे रजोगुण तमोगुण के बढ़ने का निषिद्ध का आचरण फल बताया गया है, कितना दिखाया जाय? पद पद पर दार्शनिक उपदेश है, काव्य का फल प्रमाद से रक्षा करना है।

केवल मैं ही ऐसा प्रयास नहीं करता हूँ, दूसरे भी दार्शनिक ऐसा देखे हैं और देख रहे हैं। विशवीं शताब्दी के शुरुग्रात में वृद्ध काशीवासी स्वर्गीय न्याय धुरन्धर श्री राखालदास भट्टाचार्य थे, उनकी एक तत्त्वसार पुस्तक है जो काशी सरस्वती भवन से कविराज जी के सम्पादन में प्रकाशित है, उसमें नीचे लिखा पद्य मन आत्मवाद के लिये उदाहरण दिया गया है, और अणुआत्मा के प्रत्यक्ष के लिये कार्यकारण भाव दिखाया गया है, इन पद्यों में अभिलाषा संदेह निर्णय आदि का वर्णन मन में ही है।

'निश्चय ही यह क्षत्रिय पत्नी होने के योग्य है, क्योंकि मेरा मन इसमें अभिलाषा वाला है, क्योंकि सज्जनों के संशय के विषय वस्तुओं में अन्तःकरण की वृत्तियाँ प्रमा ज्ञान करा देने वाली हैं' अभि शा० १।२१ 'हे हृदय तुम अभिलाषा वाला हो, इस समय संदेह से निर्णय हो गया, जिसको तुम आग का संदेह कर रहा था वह स्पर्श के योग्य रत्न है' अभि. शा. १।२६ दूसरे नैयायिक मन से अवच्छिन्न आत्मा में वर्णन करते हैं यह दूसरी बात है।

आधुनिक विद्वान् भी श्री वासुदेव शरण अग्रवाल हिन्दी में जैसा लिखे हैं उससे मालूम पड़ता है कि मेघदूत में शिवस्वरूप का वर्णन पढ़ते हैं, आन्तरिक योग प्रक्रिया से नाड़ी की क्रियाओं के विलास में शिव पार्वती का विवाह सम्पन्न करते हैं।

इसके बाद दृग्दृश्य = जड़ चेतन की सृष्टि के उपादान के विषय में और ब्रह्मा विष्णु महेश्वर के स्वरूप के विषय में कवि की कैसी धारणा है? इसको संक्षेप से दिखाकर प्रबन्ध को समाप्त कर रहा हूँ, उसपर रघुवंश के १० में सर्ग के १६ वें श्लोक से २३ वें तक वर्णित देव स्तुति को उपस्थित कर रहा हूँ, 'पहले संसार की सृष्टि करने वाले उसके बाद संसार का भरण करने वाले, उसके बाद संसार का संहार करने वाले तीन प्रकार से स्थित आत्मा वाले आप को नमस्कार है' रघु० १०।१६ एक ही परमात्मा की तीन प्रकार से स्थिति बताई गई, एक ही का तीन प्रकार से होने में परिणाम आ जाता है, उससे विकार की आपत्ति आती है उसके समाधान को नीचे के पद्य से कहते हैं—

'जैसे एक रसवाला आकाश का पानी उन उन देशों में दूसरे रसों को पाता है वैसे ही तुम अविकारी एक स्वरूप होता हुआ भी रजोगुण के सम्बन्ध से स्रष्टारूप से

सत्त्वगुण के सम्बन्ध से पालक रूप से और तमोगुण के सम्बन्ध से संहाररूप से क्रमशः ब्रह्मा विष्णु महेश होकर रहते हो' रघु० १०।१७ आकाश का पानी अनेक भिन्न मिट्टियों के सम्पर्क से अनेक रस वाला बनता है, वहाँ परिणाम तथा विकार है, उपमा से अविकार भाव नहीं आता इसलिये अविक्रिय शब्द दिया गया, परिणामी नहीं होना कूटस्थ अर्थ है। उसपर भी –एक ही रस्सी मन्द अन्धकार में कभी किसी के लिये जैसे माला जल की धारा सांप बांस बन जाती है, रस्सी जैसे की तैसी रहती है कुछ उसमें विकार नहीं होता, वैसे ही एक ही शुद्ध आत्मा में तीन रूप विवर्त है। मिथ्या माया का कार्य है, ऐसा वेदान्त मत हुआ। इस मत में मिथ्या तीन होने के लिये एक अधिष्ठान आत्मा को छोड़कर दूसरे तत्त्व की अपेक्षा नहीं है। सांख्यमत में कूटस्थ प्रकाशरूप साक्षी मात्र है, इसमें दूसरे परिणामी कारण की अपेक्षा है जो तीन हो सके, और प्रकाश साक्षी हो उसके लिये यहाँ गुणेषु कहते हैं, सत्त्व रज तम तीन गुण परिणामी है, उससे तीन होते हैं। उसी से उसके साक्षी चेतन भी तीन हो जाते हैं, वेदान्ती भी त्रिगुण माया मानते उससे भी समन्वय हो जाता है, किन्तु माया मिथ्या उसके कार्य भी मिथ्या है, सांख्य के परिणामी तीनों गुण सत् हैं और सत् कार्य पैदा करते हैं।

इस पर कहा जाता है कि वेदान्त भक्त कवि सांख्यमत का वर्णन नहीं करते, सांख्य के पुरुषों से भिन्न कोई परमात्मा नहीं माना जाता, असङ्ग पुरुषों में भी कर्ता आदि कारणों का निषेध है, और जब स्वतः पुरुष अनेक हैं तब उनको तीन होना कहने का उपयोग नही होता।

सांख्य में ऐसे प्रश्नों पर पुराण आदि के समन्वयकारी विज्ञान भिक्षु ऐसा कहते हैं, 'प्रकृति पर ब्रह्म की प्रेरणा से विषम होती है,' इति श्रुति-स्मृतियों से सृष्टि के लिये प्रकृति की प्रवृत्ति के उपयोगी वैषम्य का कारण ईश्वर सांख्य सम्मत है, और वह साक्षी रूप से ही प्रकृति का अधिष्ठान है, प्रलय दशा में कार्यों के साथ प्रकृति परमेश्वर में लीन हो जाती है, पृथक् नाम और रूपों को नहीं धारण करती अविभाग को पा जाती है। उस समय प्रकृति से अद्वैतभाव को पाया हुआ परमेश्वर सृष्टि करता है ऐसा व्यवहार होता है, यद्यपि कृतिशक्ति प्रकृति में ही है, तो भी उससे अविभाग पाया हुआ परमेश्वर भी सृष्टि का कर्ता हो जाता है, आगे जैसा वेदान्तमत में असङ्ग चेतन का माया उपाधि से वैसा सभी व्यवहार होता है वैसा मेरे मत से परमात्मा का भी प्रकृति उपाधि से

व्यवहार होता है, वेदान्त के मत में माया का कार्य होने से संसार मिथ्या है मेरे मतमें सत्य प्रकृति का कार्य संसार सत्य है, पुरुषों का शास्त्रों में एकत्व व्यवहार जातीय एकत्व को लेकर है इति।

मुझे तो ऐसा मालूम पड़ता है-- स्वतन्त्र जड़ प्रकृति के परिणाम को मानने वाला निरीश्वर भी सांख्यमत है, उनके मत में स्वतन्त्र परिणाम स्वभाव वाली प्रकृति का पुरुष के भोग और अपवर्ग के लिये प्रवृत्त होना स्वभाव है, पुरुष का भोग और मोक्ष फल भी उसकी प्रवृत्ति के हेतु हैं, 'जैसे व्याकरण में अध्ययन से रहता है इत्यादि प्रयोग के लिये फल भी यहाँ हेतु है' ऐसा कहा जाता है, पुरुष का भोग-अपवर्ग फल हेतु होने पर पुरुष भी हेतु हो ही गया, उसी प्रकार का हेतुत्वकाव्य और पुराण आदि में वर्णित है, 'पर पुरुष या परमात्मा से प्रेरित होकर विषमता को पाती है' इत्यादि श्रुतियों का वही अर्थ है, इसी को कोई सन्निधान मात्र से हेतु कहता है. असङ्गपुरुष का कारणत्व निषेध तो परिणाम या विकार की आपत्ति करने वाले उपादानत्व या कर्तृत्व का निषेध है; विषय आकारवाली वृत्ति के सामान आकार होने से साक्षात्कार रूप भोक्तृत्व के ऐसा कर्तृत्व या कारणत्व पुरुष का इष्ट ही है, इस प्रकार वेदान्त में माया के विना चिदात्मा में जैसा असङ्गत्व-स्वप्रकाशत्व अकर्तृत्व अभोक्तृत्व हैं वैसे सांख्य के पुरुष में भी हैं, माया को लेकर जैसे उसमें सर्वज्ञत्व-सर्वकर्तृत्व आदि का व्यवहार है, वैसे सांख्य में प्रकृति को लेकर प्रायः सभी व्यवहार हैं।

माया को मिथ्या होने से अतिरिक्त सत्ता का अभाव होने से वास्तविक अद्वैत हैं, सांख्य की प्रकृति के सत्य होने से वैसा अद्वैत नहीं होता, यह फरक है तो रहे, सांख्य वस्तुवादी दर्शन है, वेदान्त भाववादी दर्शन है तो इनकी प्रक्रिया या सिद्धान्त में भेद होना युक्त ही है। दोनों मतों में सिद्ध स्वयंप्रकाश सत्व को लेकर अतिरिक्त प्रकाश का प्रकाश्य न होते हुए प्रकाश को ही अद्वैत कहें। क्या हानि है ?। और भी—वेदान्त में द्वैत मिथ्या है और अद्वैत परमार्थ है, सांख्य के मत में जड़प्रकाश के अविवेक से उपपन्न अद्वैत बन्ध है, द्वैत सत्य है क्योंकि विवेक ख्याति पुरुषार्थ है। वेदान्त में व्यवहार द्वैतमूलक और जड़चेतन के अध्यासमूलक हैं, सांख्य में अध्यास वैसा नहीं है, जड़चेतन का मिश्रित व्यवहार अविवेकमूलक है क्योंकि विवेक ख्याति नहीं है। शास्त्र-पुराण आदि में अद्वैत का व्यवहार विवेक ख्याति से पहले की अवस्था को लेकर है,

पुरुषों का अथवा प्रकृति-पुरुषों का अद्वैत व्यवहार है, यह युक्त भी है कि पुरुष अनेक हैं, विवेक ख्याति व्यष्टि में होगी समष्टि में नहीं, विवेक ख्याति जड़ चेतनों की भिन्न समझ है, पहले तो मिले-जुले ही हैं। इसीलिये 'सृष्टि के पहले 'हे सौम्य यह सब सत् ही था' इत्यादि श्रुतियों में एक वचन का प्रयोग सार्थक है, नहीं तो जड़ चेतन अंश को लेकर द्विवचन होता। सृष्टि के आरम्भ में भेद का प्रकाशक वृत्ति न होने से द्विवचन युक्त नहीं होता, दूसरे चेतन या अचेतन को कारण कहने वाले प्रमाण वचन इससे विरुद्ध नहीं जायेंगे ? क्योंकि प्रकृति और पुरुष का अद्वैत कारण है, यही दर्शन का मार्ग कवि को अभिप्रेत मालूम पड़ता है, क्योंकि कुमार संभव द्वितीय सर्ग तेरहवें पद्य से अविवेक दशा में पुरुष को प्रकृति और उसी को विवेक ख्याति होने पर उदासीन पुरुष स्फुट बताते हैं।

'पुरुष के भोग और अपवर्ग प्रयोजन को सिद्ध करनेवाली प्रकृति तुम्हीं को कहते हैं, और प्रकृति का विवेक प्रत्यक्ष हो जाने पर तुम्हीं को उदासीन पुरुष कहते हैं'। यहाँ प्रकृति पद से उपादान-मात्र की विवक्षा नहीं कर सकते, पुरुष के प्रयोजनों का साधक त्रिगुणात्मक प्रकृति ही स्पष्ट कही गई है।

सत्त्व आदि गुण उपाधि वाले वे तीनों पुरुष वे ही हैं जो सृष्टि के पहले सत्त्व आदि उपाधि के न होने से प्रकृति भिन्न रूप से नहीं मालूम पड़ते हुए सामान्य रूप से प्रकाशमात्र शरीर थे, यह तीन प्रकार का होना महत्त्व तत्त्व की सृष्टि के बाद संभव है, इसीलिये पहली महत्-तत्त्व की सृष्टि में आत्मरूप से तीनों को प्रकृति बताया गया है, वैसे ही ब्रह्मा-विष्णु-महेश एक प्रकार के पुरुषों के भेद को पाये हैं। कवि भी रघुवंश में विष्णु की तथा कुमार संभव में ब्रह्मा की समान ही स्तुति करते हैं, हिमालय के पास ऋषियों द्वारा शिवजी का परिचय उसी प्रकार ईश्वर रूप से किया गया है। वेदान्त में चिदात्मा के माया प्रयुक्त ऐश्वर्य के ऐसा सांख्य के पुरुष में भी प्रकृति के अविवेक से विरुद्ध नहीं पड़ते, स्वाभाविक ऐश्वर्य का ही असङ्ग पुरुष में निषेध है, सांख्य के पुरुषों में शास्त्र-पुराण आदि का एकत्व का व्यवहार उपाधि के अभाव में भेद करनेवाला न होने से अनेकत्व व्यवहार की सामग्री का अभाव से है वास्तविक एकत्व से नहीं है। उपाधियों के भेद को ही पुरुष भेद के व्यवहार का प्रयोजक मानना ठीक नहीं है,

व्यर्थ व्यवहार को मिथ्या मानना पड़ेगा ? श्रुति समस्त बद्ध-मुक्त व्यवस्था पुरुष भेद से ही उपपन्न होगी, दूसरे के भेद से दूसरे के भेद व्यवहार का उपपादन करने से दूसरी जगह अनिष्ट की भी आपत्ति संभव हैं, वेदान्त मत में तो मिथ्यात्व अस्त्र से सभी विरोधों का परिहार सुलभ है, वस्तुवादी सांख्य दर्शन का तो भेद व्यवहार के लिये वस्तुओं का भेद ही शरण है।

'अपरिमित होते हुए लोक को परिमित करने वाले हो, निष्प्रयोजन होते हुए दूसरे की प्रार्थना को धारण करते हो, तुम किसी से जिता नहीं जाता किन्तु सबको जितने वाले हो, अव्यक्त होते हुए व्यक्तों के कारण हो, रघुवंश १०।१८ यहां चेतन में अव्यक्त पद रूप आदि के न रहने से इन्द्रियों से अग्राह्य का सूचक है, अथवा अव्यक्त प्रकृति के अविवेक से चेतन को अव्यक्त कहा गया है, व्यक्तं कारणम् इसके व्यक्त शब्द से प्रत्यक्ष विषय ही नहीं लेना है, और प्रत्यक्ष अप्रत्यक्ष सभी का कारण है तब प्रत्यक्ष मात्र कारण कहना ठीक नहीं होगा, कारणों से अभिव्यक्त कार्य मात्र को व्यक्त पद से लिया जायेगा, अभी विशर्वें में सर्वयोनि विशेषण देंगे जो सभी का कारण बताता है कुमार संभव के २।४—१५ पद्यों द्वारा ब्रह्मा की स्तुति में प्रायः ऐसा ही जगत् के कारण का वर्णन है; 'सृष्टि के पहले केवल आत्म रूप होते हुए भी सृष्टि के लिये तीन मूर्ति बने हुए आप के लिये नमस्कार है, जो आप सम अवस्था वाली प्रकृति में वैषम्य द्वारा तीनों गुणों के विकाश के लिये पीछे भेद को पाये है। कु. सं. २।४ सर्ग के पहले केवल आत्मा तीनों गुणों के विभाग से पीछे भेद को पाये हैं। ऐसे तीन मूर्ति वाले आप ब्रह्मा हैं, यह वर्णन किया गया है। वेदान्त मत में माया की पृथक् सत्ता नहीं होने से ब्रह्म केवल आत्मा है यह ठीक है; सांख्य मत में कैवल्य कथित रीति से विवेक न होने के कारण अद्वैत को लेकर समन्वय करना होगा। लेकिन केवल चेतन से भी जड़ चेतन की सृष्टि को वर्णन करते हुए ब्राह्मसद्वादि दर्शन है जैसे प्रत्यभिज्ञा दर्शन, तो भी उनके निष्कर्ष में वेदान्त सांख्य की समानता ही देखी जाती है जैसे कि—

पहला एक प्रकाश मात्र शिव तत्त्व है, किन्तु अपने स्वरूप के परिज्ञान रूपी विमर्श के विना जड़ प्राय कुछ नहीं करने वाला हो जाता है इससे दूसरा शक्तितत्त्व माना जाता है, और वह शक्ति स्वाभाविक अहं की स्फूर्ति विमर्श है, सृष्टि स्थिति प्रलयों की शक्ति है, चित् चैतन्य स्वतन्त्रता कर्तृत्व स्फुरण सार हृदय स्पन्द आदि शब्दों से भी

उसका व्यवहार होता है, दोनों के मिलने से सदाशिव सर्वज्ञ सभी शक्ति वाला स्वतन्त्र होता है। उस प्रकार शिव प्रकाशमात्र शरीर सांख्य का पुरुष या वेदान्त का ब्रह्म है, शक्ति भी माया या प्रकृति है, शक्ति और प्रकृति है; शक्ति और शक्तिमान् में अभेद है इस रीति से अद्वैत का वर्णन है, दूसरे दर्शन दूसरी रीति से अद्वैत का वर्णन करते हैं, यही फरक है।

स्वर्गीय रामावतार शर्मा बड़े विद्वान् से अवतारित प्रायः विदेशीय दर्शनों की वासना से मिला जुला नया एक परमार्थ दर्शन नाम का दर्शन है, वह चेतन का स्वाभाविक वैचित्र्य मानता है, एक ही चेतन सभी का प्रकाशक सभी की प्रकृति हमेशा किसी न किसी आकार को रखता ही है, एक आकार के नाश के बाद दूसरा आकार उसमें आता ही है, कभी भी निराकार नहीं होता, ऐसा शाङ्करमत के खण्डन के द्वारा पांचवां अध्याय प्रथम आह्निक तृतीय चतुर्थ सांतवें अधिकरणों में वर्णन करता है। 'कभी भी ब्रह्म में सभी वैचित्र्यों का अभाव होता है या नहीं ? यह संशय हुआ। सृष्टि के पहले या मुक्ति में शुद्ध ब्रह्म में कोई भी वैचित्र्य नहीं रहता। १। यह पूर्वपक्ष है, ब्रह्म में एक वैचित्र्य का लोप होने पर भी दूसरे वैचित्र्य मालूम होने से और सृष्टि का आदि अन्त न होने से हमेशा ब्रह्म में वैचित्र्य है। २। यह सिद्धान्त हुआ।

'ब्रह्म में वैचित्र्य माया वश है या वास्तविक है ? ऐसा संशय है, कभी-कभी वैचित्र्य का लोप होता है इसलिये मायावश है, क्योंकि कोई वस्तु ईश्वर के बिना नहीं है। १। ऐसा पूर्व पक्ष हुआ, किसी प्रकार का व्याघात दोष न होने से ब्रह्म में वास्तविक ही वैचित्र्य है, वस्तु का लोप होने से वस्तु असत् नहीं होता, लड़का मरने लायक है इससे असत् नहीं होता। २। ऐसा सिद्धान्त हुआ। 'प्रकृति से भिन्न निर्गुण ईश्वर है या ईश्वर प्रकृति ही है ? यह संशय हुआ। प्रकृति को नियन्त्रण में रखने वाला कोई निर्गुण ईश्वर संभव है, यह पूर्वपक्ष है। १। प्रकृति स्वयं नियत है, किसी से नियन्त्रण की जरूरत नहीं है, सभी आकार वाले ईश्वर से वह प्रकृति अभिन्न ही है, ऐसा निश्चय है, यह सिद्धान्त हुआ। इसके वार्तिक ग्रन्थ में यह अधिक स्फुट है, वहां से अधिक समझनाचाहिये। परमात्मा से सृष्टि प्रलय स्वभाव से ही विकार न होना, उपाधि से भेद आदि का वर्णन करते हुए ये दार्शनिक कवि ऐसे नूतन दार्शनिक मत को नहीं

पसन्द करते इस दृष्टि से इस दर्शन के स्वरूप को दिखाया हूं। इसलिये विदेशीय दर्शन का प्रभाव इस दर्शन पर है कह ही चुका हूं। यद्यपि पूर्व मीमांसक सृष्टि प्रलय का विरोध करते हैं तो भी कोई भी भारतीय दर्शन चैतन्य प्रकाश में स्वाभाविक वैचित्र्य नहीं मानता, विकार माने विना स्वाभाविक वैचित्र्य का उपपादन नहीं हो सकता, बौद्ध दर्शन क्षणिक विज्ञान का सन्तान बताता हुआ भी परिणाम वैचित्र्य का विज्ञान में निषेध ही करता है। पुराण आदि में जैसा सांख्य और वेदान्त का वर्णन आता है वैसा ही प्रायः इस कवि का भी दर्शन मालूम होता है, और भी दूसरे अवश्य वर्णनीय विषयों को भी लेख विस्तार के भय से छोड़ता हूं।

शाकुन्तल मङ्गला चरण में तो विराट् भगवान् के प्रत्यक्ष शरीर दिखाये गये है, प्रत्यक्ष-अप्रत्यक्ष सभी विराट् के अवयव हैं, यहाँ न्यूनता का परिहार प्रत्यक्ष इस विशेषण से किया गया है, इसके विशेष परिचय के लिये त्वमर्कस्त्वं सोमः' इस महिम्न स्तोत्र की मधुसूदनी टीका देखनी चाहिये। 'भूमिरापोऽनलो' इत्यादि भगवद्गीता से इसकी तुलना अच्छी नहीं है, वहां प्रकृतियों का वर्णन है, यहां ये सब प्रकृति नहीं हो सकते, तथा शरीर रूप से वर्णन भी हैं। विक्रमोर्वशीय मङ्गलाचरण में उपनिषद् में वर्णित सभी में अन्तर्यामी परब्रह्म शिव का स्वरूप पहले के ऐसा ही दिखाया गया है। उपनिषदों का नाम वेदान्त है, तन्मूलक सभी वैदिक दर्शन हैं, इस प्रकार कहीं वेदान्त मत और कही सांख्यमत काव्य में आता है, किन्तु स्थूल बोधक शब्दों से आता है जिसका समन्वय दोनों मतों से हो जाता है, इतना ही कहकर विरत होता हूं। इति।

काशीस्थसूर्योदयपत्रस्य ४० वर्षे सप्तमाङ्के १९६४
जुलाई मासे प्रकाशितः

# सांख्यसप्ततिः सांख्यकारिका वा

यस्य प्रकाशवशतो जगतो विधानं कृत्वा प्रधानपदवीं चितिमप्यवाप्ता ।
श्लेषं ददाति सरसाऽपि रसा च भोगे मुक्तिं प्रयच्छति नटी श्रयते च लज्जाम् ॥ १ ॥
प्राग् प्रौढतां तदनु मुग्धकलां चरन्ती मोहं विनाशयति सत्त्वमयप्रदीपा ।
तं सत्प्रकाशममलं परिणामशून्यं रज्जुप्रदीपमिव भास्वरमाश्रयामः ॥ २ ॥

गतवर्षे प्रकाशितस्य म० म० श्री विद्याधरगौडस्य स्मृतौ 'महामहोपाध्याय-स्मारकग्रन्थस्य' तृतीयखण्डे ८५ पृष्ठतः ९२ पृष्ठं यावन्मुद्रितो हिन्दीभाषामयो माननीय-महामहोपाध्याय डा० श्रीमदुमेशमिश्र-महोदयानां गवेषणागरीयान् विवेचनीयः 'सांख्यसप्तति की एक अनुपलब्ध कारिका' लेखः । तदन्ते च महानुभावेन लेखकेन दयया विविधविचारप्रियतया च 'सम्प्रति इस छोटे से विवन्ध के द्वारा मैं इस समस्या को अन्य सुयोग्य विद्वानों के पर्यालोचन के लिए छोड़ देता हूँ' इति शब्देन अवसरो दीयते, अयोग्योऽपि तदनुगृहीतस्तस्य विदुषः सत्कारायैव किञ्चिदुपहरामि ।

संक्षेपतश्च निम्ननिर्दिष्टेषु चतुर्दशसु उपविभागेषु स्वमतं प्रदर्शयामि—

( १ ) एका अनुपलब्धा कारिका ।

( २ ) व्यक्ताव्यक्तज्ञानां क्रमशो दृष्टानुमानाप्तवचनैर्गम्यत्वम् ।

( ३ ) चार्वाकमते प्रत्यक्षमेव प्रमाणम् ।

( ४ ) अनुमानेनैव अव्यक्तपुरुषयोः सिद्धौ पुरुषातिरिक्तज्ञपदार्थं विना आप्तवचन-प्रमाणस्य वैयर्थ्यम् ।

( ५ ) गौडपादाचार्यभाष्ये ज्ञपदार्थस्य एकत्वमुक्तम्, अतः पुरुषातिरिक्तो ज्ञपदार्थः ।

( ६ ) बहवः पुरुषा न निर्लिप्ताः, न वा त्रिगुणातीताः, न च अलिङ्गाः ।

( ७ ) सांख्ये द्वौ पुरुषौ ।
( ८ ) पञ्चविंशतितत्त्वेभ्योऽवहिर्भूतानां देवस्वर्लोकादीनाम् अनुमानेनैव सिद्धिः ।
( ९ ) पुरुषभिन्न-ज्ञसिद्धिमन्तरा सांख्यशास्त्रं न परिपूर्णम् ।
( १० ) शाङ्करवेदान्ते केवलेन आप्तवचनेन चैतन्यं सिद्ध्यति ।
( ११ ) मुक्तानामपि प्राकृतिकः सम्बन्धो वर्तत एव ।
( १२ ) मुक्तावस्थायामपि सांख्ये द्वैतमामम्, न तु शाङ्करवेदान्ते ।
( १३ ) सांख्यं बौद्धिकं शास्त्रं लौकिकजगतः परान् अर्थान् विवेचयति ।
( १४ ) न्यायशास्त्रं स्थूलजगता सम्बन्धं करोति ।

एते विषयास्तत्र लेखे स्वयं साध्यतया अन्यस्य साधकतया चोपात्ताः, तल्लेखपाठेनैव पाठकैरवसेयाः ।

उपलभ्यन्ते हि द्वासप्ततिरार्याः सांख्यकारिकायाम्, व्याख्याताश्च तत्त्वकौमुद्याम् । सत्यम्, अष्टाषष्टौ कारिकासु सांख्यतत्त्वानि परिसमाप्तानि । एकोनसप्ततितमायां कारिकायां परमर्षिसमुपदिष्टतया शास्त्रमभिनन्दितम् । एवं प्रकृति-पुरुषविवेकमात्रस्य पुरुषार्थत्वे किमिति स्थूलजगतां भूतानां सर्गादयश्चिन्त्यन्त इति समाहितम् । कौमुद्यां तथा व्याख्यातमपि । तथा चेयं कारिकाऽपि शास्त्राङ्गमिति आयाति । सप्ततितमायाञ्च कपिलपरमर्षेः षष्टितन्त्रात्मके शास्त्रे सम्प्रदायवर्णनेन सम्बन्धः प्रतिपाद्यते । तथा चेयमपि शास्त्रप्रामाण्यप्रतिपादिका शास्त्रस्याङ्गम् ईश्वरकृष्णनिर्मितत्वे न विरोधमञ्चति । तन्निर्मितत्वे च ग्रन्थान्तर्गता । एकसप्ततितमायाञ्च ईश्वरकृष्णः स्वकृत्यं प्रादर्शयत् । यथा अन्येषु बहुषु ग्रन्थकारस्यैव लेखः— 'अन्येन केनचित् योजितम्, न ग्रन्थकारस्येदमि'ति न सन्दिह्यते, तथा 'नेयमीश्वरकृष्णस्य अन्ययोजिते'ति संशयो निश्चयो वा प्रेक्षावता उपेक्ष्येत । अन्येन कदाचन न प्राप्ता, तेन नेश्वरकृष्णनिर्मितेति तदुक्तिः, तदनुसृत्य च अन्येषामपि तादृशी उक्तिरुपेक्षणीयैव । द्वासप्ततितमायाञ्च स्वीयं संक्षेपप्रकारं प्रदर्शयति । अल्पाध्ययनेनैव गुरुतरसांख्यतत्त्वानामधिगतिरिति ग्रन्थस्योपादेयता वर्णिता । तत्र च 'सप्तत्यां किल येऽर्थास्तेऽर्था कृत्स्नस्य षष्टितन्त्रस्य' इति ग्रन्थकृदुक्तिः सम्यगेव, समेषां तत्त्वानां सम्प्रदायस्य च सप्तत्यां समाप्तत्वात् ।

ये किल एकामार्यां परिभ्रष्टां मन्वते, तेषामपि मते तत्त्ववर्णनपरिपूर्तिरेकोनसप्तत्यामेव जायते, न सप्तत्याम्, तैरपि परमर्षिसम्प्रदायवर्णन-

परयैव आर्यया सप्ततिः पूरणीया। एका च सम्प्रदायवर्णिका कारिका ग्रन्थान्तर्गता, अपरा ग्रन्थबहिर्भूतेति अर्धजरतीयस्तस्य न शोभेत, षष्टितन्त्र-पर्यन्तं सम्प्रदायवर्णनम् ईश्वरकृष्णस्य समीहितम्। तावत्पर्यन्तञ्च शास्त्रस्य निरूपणीयताम् असावनुसन्धत्ते। तावतश्च सप्ततिशब्देन ग्रन्थ-कृतो व्यवहारो न विरुद्ध्यते। अन्तिमं कारिकाद्वयं ग्रन्थाङ्गं भवदपि न शास्त्राङ्गम्। तथा च शास्त्राङ्गमादाय आदौ ग्रन्थकृता सप्ततिव्यवहारः कृतः, तद्दर्शनेनैव अन्येऽपि सांख्यसप्ततिं सुवर्णसप्ततिं वा व्यव॰हरित्येव कल्पनापथो निष्कण्टकः। अन्तिमं कारिकाद्वयं कारिकात्रयं वा अन्येन योजितमिति कल्पनन्तु निष्प्रमाणताकण्टकितम्। अन्यथा षष्टितन्त्रस्य सांख्यशास्त्रस्य संक्षेप ईश्वरकृष्णस्य निर्मितिश्च केनाद्दश्यत येन तथा मन्येत?

एवञ्च सम्पूर्णं ग्रन्थमलभमानाः केचन प्राक्तनाः सामग्रीविधुरा यद-कल्पयन्, तदधुना सम्पूर्णग्रन्थलाभे सामग्रीसाकल्ये व्याहृतं त्याज्यमेव, न तु तदनुरोधेन असत्कल्पनापरम्परा प्रसारणीया। तेन दार्शनिकसार्वभौमेन षड्दर्शनटीकाकृता श्रीवाचस्पतिमिश्रेण यावती कारिका उपलब्धा व्याख्याता च, तावती सन्दर्भसुन्दरी अपेक्षितपदार्थपूर्णा परिपूर्णा ईश्वरकृष्णकृतिः। गौडपादाचार्यैस्तिसृणामनुपलम्भेन व्याख्येयत्वानवगमेन वा न व्याख्या-तास्तिस्र इति यथारुचि कल्प्यताम्। नहि अन्येषामनुपलब्धिर्वाचस्पतेरुप-लब्धौ बाधिका।

कतिपये तु यथारुचि सांख्यशास्त्रस्य पदार्थं कल्पयन्ति, प्रतिष्ठितासु आसु कारिकासु यस्य पदार्थस्य अनुपलम्भात् 'खण्डिता कारिके'ति आरोप-यन्ति। न तदनुरोधेन शास्त्रं परिवर्तनीयम्।

श्रीमन्तो न॰ ऐयास्वामिशास्त्रिणस्तु कारिकाणां सप्ततिं रक्षितु-मभिनिविशमाना उपयोगिनीं 'रूपैः सप्तभिरेव' इत्यादिकां त्रिःषष्टितमाम् आर्यामिव बहिष्कुर्वन्ति इति एतल्लेखात् प्रतिभाति।

इत्थम् एका कारिका अनुपलब्धा इति प्रथमोंऽशः पर्यालोचितः।

(२) अथ व्यक्ताव्यक्तज्ञानां क्रमशो दृष्टानुमानाप्तवचनैर्गम्यत्व-मिति द्वितीयोंऽशः पर्यालोच्यते। दुःखत्रयविघातो व्यक्ताव्यक्तज्ञज्ञानात् वर्णितः। व्यक्तेभ्यः स्थूलशरीरेन्द्रियादिभ्यः, अव्यक्तान्मूलकारणात् पुरुषस्य विवेकोऽभीप्सितः। अग्रे च दृष्टमनुमानमाप्तवचनञ्च इति प्रमाणानि वर्णितानि। प्रमाणप्रमेययोस्तुल्यसंख्याकतया आपाततो यथा-संख्यक्रमः। परं तत्राभिनिवेशो न युज्यते, व्यक्तानामेव परिज्ञाने प्रमाण-

त्रयस्योपयोगात् 'अतिदूरात् सामीप्यादि'त्यादिसप्तमकारिकयैव समेषां व्यक्तानां प्रत्यक्षं न भवतीति ग्रन्थकृता स्फुटमुक्तम्। नापि प्रत्यक्षानुमानाभ्यामेव व्यक्ताः समाप्स्यन्ति, लोकान्तराणि ग्रहतारादीनि व्यक्तान्यपि बहूनि आप्तवचनगम्यानि। प्रत्यक्षं सकलव्यक्तग्राहीति न किमपि शास्त्रं भवितुं शक्नोति। नापि अतिसामान्यमात्रग्राहिणा अनुमानमात्रेण समे अव्यक्तविशेषा ग्रहीतुं शक्याः; नैकविशेषाणां शास्त्रग्राह्यत्वात्। वचनानि तु विज्ञानभिक्षुणा संगृहीतानि, नेह प्रतन्यते। पुरुषस्यापि जडातिरिक्तप्रकाशत्वं बहुत्वञ्च अनुमानेन साधितमत्र। तदनुसारिभिरनुमानान्तरैरन्येऽपि केचन विशेषाः कथमपि अवगन्तुं शक्यन्ते। परं सर्वो विशेषो नानुमानेन ग्रहीतुं शक्यः, तदर्थमुपनिषदस्तदनुसारीणि अन्यानि च वचनानि। न च तावता आगममात्रेण सूक्ष्माग्राहिणा सन्तुष्यन्ति दर्शनानि। आगमास्तु तदुन्मुखीकरणाय आद्रियन्ते। सर्वविशेषग्राहि पुरुषस्य प्रत्यक्षमिच्छन्ति। तदर्थं निदिध्यासनमुपदिशन्ति उपायम्। तथा च प्रमाणानां सम्प्लवो वात्स्यायनानुसारी ग्राह्यो न तु व्यवस्था।

(३) चार्वाकमते प्रत्यक्षमेव प्रमाणमिति प्रमाणशक्तिमननुसन्दधताम् आलोचकानाम् आलोचना। चार्वाका हि मनुष्या दार्शनिकाश्च। प्रत्यक्षमात्रेण व्यवहर्तुं संशेतुं निश्चेतुं खादितुं जीवितुञ्च न शक्ष्यन्ति, किमुत दार्शनिकतां ख्यापयितुम्। चार्वाकस्य पूर्णं दर्शनग्रन्थमलभमानानां यत्र कुत्रचित् कस्यचिल्लेखं दृष्ट्वा तत्सिद्धान्तावस्थापनं तस्य दृष्टान्तीकरणञ्च दार्शनिकानां न शोभते। वर्ण्यन्ते च प्रतिपक्षिभिरपि तन्मतलेखकैः 'चतुर्णां भूतानां परमाणवः इन्द्रियाणि मनश्च अतीन्द्रियाणि। कीदृग् भवेन्नाम चार्वाकाणां प्रत्यक्षम्, येनेमानि विषयीक्रियेरन् ?' लिखिता च तत्त्वसंग्रह-टीकाकृता पुरन्दरस्य अनुमानमान्यता।

अस्माकं प्राचीनाः केचन नैयायिकास्तु चार्वाकमते अनुमान-शब्दाभ्यां संभावनात्मकं ज्ञानमिति लिखन्ति। तदपि कथञ्चिन्मार्गं। अनिश्चितप्रामाण्यकं हि ज्ञानं संभावनोच्यते। न सर्वा संभावना भ्रमो भवति। न च ज्ञानानां प्रामाण्यनिश्चयः प्रवृत्तिमात्रं प्रति हेतुः, किन्तु अधिकधन-श्रमव्ययसाध्य एव दुष्करकर्मणि प्रवृत्तिं प्रति प्रामाण्यनिश्चयोऽपेक्ष्यते। अस्मदादिवत कठिनशास्त्रमात्रगम्ये परलोकसाधनादौ न प्रवर्तन्ते चार्वाकाः। एतावानेव विशेषः—अन्यविधस्तु येन प्रमाणेन यथा अस्माकं व्यवहारस्तथा तेषामपि। प्रामाण्यस्य अनिश्चयो न प्रवृत्तेः प्रतिबन्धकः, अप्रामाण्यस्य संशयो निश्चयो वा प्रतिबन्धकः। यावच्च अप्रामाण्यसंशयनिश्चयौ न

जायेते, तावच्चार्वाका निष्प्रत्यूहं सर्वत्र प्रवर्तन्ते अनुमानशब्दाभ्यामिति तेषामतिसंक्षिप्तमभिप्रेतम् ।

मम तु एतावान् विशेषः प्रतिभाति—वात्स्यायनो यथा 'प्रत्यक्षागमाभ्यामीक्षितस्य अनु ईक्षणम् अन्वीक्षा इति आस्तिकानुमानं व्याख्याति, तथा प्रत्यक्षेण ईक्षितस्य अनु ईक्षणम् चार्वाकस्य अनुमानम् । अप्रामाण्यसंशयनिश्चयापनोदाय आस्तिकैः प्रत्यक्षागमावीक्ष्येते । चार्वाकेण तु प्रत्यक्षमात्रम् । तदपि सुदूरमपि परम्परायामिति प्रत्यक्षमात्रप्रमाणप्रवादस्य मूलम् । सर्वथा पशवोऽपि अनुमानं विना न जीवितुं शक्ताः, किमुत समीक्ष्यकारी दार्शनिक इति ।

( ४ ) 'अनुमानेनैव अव्यक्तपुरुषयोः सिद्धौ किमाप्तवचनेन' विषयेऽस्मिन् द्वितीयांशविवेचनायामेव उक्तं पर्याप्तम्, इति न प्रपञ्चयामि । तत्र समेषां व्यक्तानामेव आप्तवचनं विना न सिद्धिरित्यादि दर्शितमास्ते ।

( ५ ) गौडपादाचार्यलेखे पुरुषस्य एकत्वम् उक्तमिति तदपि आलोच्यताम् ।

पुरुषबहुत्वं सिद्धमिति पश्यन्नपि गौडपादाचार्यः ग्रन्थविरुद्धं वदन् कथन्न उपेक्ष्यते ? अथवा न तादृशो ग्रन्थविरुद्धस्तस्य लेखः, किन्तु संशोधकेन सम्पादकेन वा केनचित् स्वमनसा योजित इति कथन्न कल्प्यते ?

ननु सांख्यस्य द्विविधौ पुरुषौ—प्रथम एकविधः, द्वितीयश्च कारिकानुसारी बहुविधः । तत्र प्रथममनुसृत्य आचार्यस्य एकत्वत्वे इति चेद्; हन्त ! नात्र गौडपादाचार्यः सांख्यस्य द्रष्टा, अपितु कारिकाणां व्याख्याता । कारिकाविरुद्धं कथं सावधानो लिखेत ? खण्डितामनुपलब्धां त्रिपर्यिणीं कारिकां दृष्टवानसौ इति चेत्; कीदृशीयं कल्पना ? अन्तिमस्य कारिकात्रयस्य अन्यैर्व्याख्यातस्य गौडपादाचार्याव्याख्याततया प्रक्षिप्तं कारिकात्रयमिति मन्यते । या च अन्यैरदृष्टा गौडपादाचार्याणां व्याख्यया च अस्पृष्टा, सा ग्रन्थान्तर्गता इति दुराग्रहते । व्याख्यातार्ऽपि सा न तद्व्याख्यानमुपलभ्यत इति चेत्; कारिकात्रयस्य व्याख्यानेऽपि तथा किं न स्यात् ? लघुभूतं पुरुषस्यैकत्वमिति लेखस्यैव प्रक्षिप्तत्वकल्पनं कथं न न्यायः ?

वाचस्पतिस्तस्यैव व्याख्येयग्रन्थस्य व्याख्याने पुरुषस्य अनेकत्वं ब्रूते, गौडपादाचार्यश्च तस्यैव व्याख्याने पुरुषस्य एकत्वमिति । तथा च उभयोर्व्याख्ये आलोचनीये—काऽत्र समीचीनेति ? 'तद्विपरीतस्तथा च पुमानि'ति व्याख्येयग्रन्थः । तत्रस्थ 'तत्'पदेन किं केन परामृश्यते ? गौडपादाचार्यस्त-

त्पदेन व्यक्तं परामृश्य तद्विपरीततया पुरुषस्यैकत्वं ब्रूते। परं तथा चेत्यत्र तत्पदेनापि व्यक्तमेव परामृश्य पुरुषस्यानेकत्वं कथन्नावोचत्? यदि तत्पदेन अव्यक्तं परामृश्येत, तदा तद्विपरीततया पुरुषस्य अनेकत्वमेव आगच्छेत्। 'तद्विपरीत' इत्यत्र एकादशकारिकोक्तं व्यक्तम्, तथा चेत्यत्र च दशमकारिकोक्तम् अव्यक्तमिति तत्पदेन गृह्णाति आचार्य इति तु क्लिष्टम्। युक्तञ्च सन्निहिततरं पठितयोर्व्यक्ताव्यक्तयोरुभयोः उभयत्र तत्पदेन ग्रहणम्। तथा च व्यक्ताव्यक्तविपरीतो व्यक्ताव्यक्तसदृशश्च पुमान् इति शब्दस्वारस्यम्। आपाततश्च तद् विरुद्धं भासते। धर्मभेदेन च व्यवस्था कार्या, पुरुषस्य बहुत्वं त्रैगुण्यविपर्ययादि च अन्यत्र कारिकासु स्फुटं प्रतिपादितम्, तदनुरोधेन च व्यवस्थापनीयम्।

किञ्च—इदानीमनुपलब्धकारिकाम् एकपुरुषविषयिणीं गौडपादाचार्यो यद्यपस्यत्, तदा पुरुषद्वयमुपलब्धवानसौ कस्य पुरुषस्यैकत्वमिति स्फोरयेत्? यतः पुरुषशब्देनैव पुरुषबहुत्वमुपलभमान आसीत्।

अन्यच्च—अव्यक्तपुरुषयोर्बहुषु कारिकासु चर्चा, अनुपलब्धकारिकोक्तश्च ज्ञपदार्थो नान्यासु कारिकासु सम्बन्धं करोतीति विचित्रम्। एवञ्चासौ निर्लिप्तो येन तस्य स्वीकारे प्रयोजनम्, अस्वीकारे अनुपपत्त्यादिः, एकत्वे उपपत्त्यादिकं किमपि वर्णनीयं नाभवत्। एवं विलक्षणा वा असावनुपलब्धा कारिका या एतावत्सर्वं लघुन्युदरेऽगोपयत्। तथा च विचारे नोपपद्यते तादृशी कारिका।

कदाचन अनेकेष्वपि प्रत्येकमेकत्वं वर्तत इत्यभिप्रायो भवेत्तस्य। अनेकत्वमपि प्रत्येकं घटादावव्याप्तम्, गुणानां सत्त्व-रजस्तमसां भेदेन अव्यक्ते च अतिव्याप्तम्। तथा च अनेकत्वमपि परिष्करणीयम्। एतादृशस्थले मुक्तावल्यादौ यथा वर्णितं तथाऽत्रापि वर्णयितुं शक्यते; तथापि अवश्यं परिष्करणीयत्वे अत्र अनेकोपादानोपादेयत्वमपि वर्णयितुं शक्यते। यथा चिरन्तनोक्त्या भाषापरिच्छेदे प्राचीने प्रायो वैशेषिकसूत्रे तदीये प्रशस्तपादीये भाष्ये च अनेकद्रव्यवत्त्वादिपदमायाति। 'हेतुमदि'त्यादौ कारणमात्रम्, अत्र तु उपादानमात्रस्य सम्बन्ध इति न पुनरुक्तिः, तस्योपादेयत्वमात्रे पर्यवसानम्। तद्विपरीतमनुपादेयत्वमव्यक्ते पुरुषे च।

(६) बहवः पुरुषाः न निर्लिप्ताः, न त्रिगुणातीताः, न च अलिङ्गा इति अधुना विवेचनीयम्। तत्र लेखे ९० पृष्ठे उक्तमस्ति यत् 'ज्ञनाम्ना एकः पुरुषश्चैतन्यरूपो निर्लिप्तः सदैव मुक्तश्च; जीवात्मानश्च पुरुषा बहवो

जन्मवन्तः संसारान्तरसञ्चारिणश्चे'त्यादि। अत्रेदं विचारणीयम्—बहवो जीवात्मानः पुरुषा निर्लिप्ता न वा ? यदि निर्लिप्तास्तदा नित्यमुक्ताश्चेति ज्ञ-पुरुषात् तेषां को विशेषः ? केषां च मुक्तये सांख्यशास्त्रम् ?

"तस्मान्न बद्ध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।
संसरति मुच्यते बद्ध्यते च नानाश्रया प्रकृतिः ॥"

इति कारिकया पुरुषाणां संसारान्तरसञ्चारित्वं कथं न विरुद्ध्यते ? न च ज्ञ-नामधारिपुरुषस्यैवेदं स्वरूपवर्णनमिति वाच्यम्; कश्चित् पदस्वारस्य भङ्गापत्तेः। स्फुटञ्च संसरणादिकं प्रकृतेरत्र उच्यते। तथा च पुरुषाणां संसरणादिकं कारिकया विरुद्धम्। ये पुरुषा बहवो वर्णितास्तेषामेव बन्धाविराहित्यमत्रोच्यते। पुरुषे तु अविवेककृतो व्यवहारः।

किञ्च—लेपपदार्थः क इत्यालोच्यतां यो हि ज्ञपुरुषे नास्ति अन्यपुरुषे च वर्तते। अनया कारिकया तु परिणामिन्येव बन्धादिकमुच्यते, यतो नानाश्रयत्वं हेतुः परिणामिन्येव संभवति। तेन पुरुषाणां सलेपत्वं ब्रुवाणास्तेषां परिणामित्वे पर्यवसानं कुर्युः। तथा च कारिकाविरोधस्तेषां स्फुट एव। न क्वापि व्यक्ताऽव्यक्ते विहाय पुरुषाणां परिणामित्वं कारिकायामुक्तम्।

अपरञ्च—ज्ञनामा पुरुषः सदैव मुक्तः कीदृशः सन् क्व तिष्ठति, येन विभुना प्रधानेन न संयुज्यते ? संयोगे च कथं न प्रकृतिनिष्ठः संसारः ? विवेकवशादिति चेत्; वृत्त्यात्मको विवेको बुद्धेरभावान्मुक्ते कथं संभवति ? प्राग् बुद्धिर्यदाऽऽसीत् तदानीमेव विवेको जातः। तद्वशादेव अधुनाऽपि न प्रकृतिगतः संसार इति चेत्; प्राग्बुद्धेः संसर्गस्वीकारे सदैव मुक्तत्वं व्याहतम्। 'चेतनोऽहं करोमी'ति बुद्धेरविवेकाख्यवृत्तेरभाव एव विवेक इति चेद् रोचेत; तदा अन्येषामपि पुरुषाणां मुक्तावस्थायां तादृशवृत्तेरभावात् कथं नासंसारित्वम्, कथञ्च न निर्लिप्तत्वम् ?

अन्यच्च - कश्चित् पुरुषो नित्यमुक्तः, अन्ये च नित्यसंसारिण इति स्वीकारे शास्त्रं व्यर्थम्। कस्य विवेकज्ञानं किंफलकञ्च ? मुक्तेरभावे च कस्य आत्यन्तिक एकान्तिकश्च दुःखत्रयविघातः ? एवञ्च एतादृशपुरुषस्वीकारे कारिकाः विरुद्ध्यन्ते, शास्त्रञ्च असमञ्जसं जायते।

( ७ ) इदानीं सांख्ये द्विविधौ पुरुषाविति विषयेऽपि पूर्वोक्तमसामञ्जस्यं संयुज्यते एव। पुराणादिषु च सांख्यं योगञ्च एकीकृत्य वर्णनमुप-

लभ्यते। तत्र योगस्यैकं पुरुषमादाय सांख्यनाम्नाऽपि पुरुषद्वयवर्णनम्, सङ्घातपरार्थत्वादिना जडातिरिक्त-जडप्रकाशकतया पुरुषाणां सिद्धौ तैरेव जडानां प्रकाशोपपत्तौ एकस्य नित्यमुक्तस्य स्वीकारो वृथैवेति आपतति।

( ८ ) पञ्चविंशतितत्त्वेषु समागतानां देवादीनामनुमानेनैव सिद्धौ आप्तवचनप्रमाणस्य ज्ञ पुरुषं विना वैयर्थ्यमित्युक्तिर्न समीचीना। तेषां व्यक्तत्वेऽपि अनुमानेनैव सिद्धिरिति कथनं व्यक्तं प्रत्यक्षसाध्यमिति पूर्वोक्त-प्रतिज्ञाविरुद्धम्। कथञ्चित् परलोकत्वमात्रेण अनुमानेनैव सिद्धावपि येन विशेषेण शास्त्रेषु वर्णिता देवादयो न तेन विशेषेण अनुमानेन अतिसामान्य-मात्रग्राहिणा सिद्ध्यन्ति। अधिकन्तु प्रमाण-प्रमेययोर्यथासंख्येन वर्णन-प्रस्तावे उक्तमेव।

( ९ ) अतिरिक्त-ज्ञसिद्धिं विना शास्त्रमपरिपूर्णम्, इत्यभिप्रायोऽपि कारिकाविरोधाद् युक्तिविरोधात् शास्त्रसामञ्जस्य विरहेण शास्त्रविरोधाच्च उपेक्ष्य एवेति पूर्वमुक्तादेव अवसेयम्।

( १० ) शाङ्करवेदान्ते केवलेन आप्तवचनेन चैतन्यं सिद्ध्यतीति शारीरक-भाष्यस्थश्रीशङ्कराचार्यभगवतो वचनं विरुद्धम्। एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्वते ईश्वरकारणिनः। 'ननु इहापि तदेवोपन्यस्तं जन्मादिसूत्रे? न:, 'वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणामि'त्यादिना सूत्रोद्देश्यभेदमभिधाय 'तदर्थग्रहणदार्ढ्याय वेदान्त-वाक्याविरोधि अनुमानमपि प्रमाणं भवन् न निवार्यत' इत्याद्युक्तम्। अन्ते च युक्तिमभिधाय 'अनुभवादयश्च यथासंभवमिह प्रमाणमि'त्युपन्यस्तम्। 'धार्मिकाण्येव वस्तूनि शास्त्रमात्रगम्यानि' इत्यप्युक्तम्। द्वितीयविषय-विचारे सामान्यग्राहिणा अनुमानेन तादृङ् न सिद्ध्यतीत्यादि प्रागेव लिखितम् अधुना न वितन्यते।

( ११ ) अतः परं मुक्तानामपि प्राकृतिकः सम्बन्धो वर्तते इति प्रत्या-लोचनीयम्। अस्यापि भूयानंशः षष्ठविषयविचारे समायात एवास्ति। तथापि किञ्चिदत्रापि आलोच्यते।

जीवन्मुक्तानां विदेहमुक्तानां वा इत्थमापाद्यते प्राकृतिकः संसर्गः? विदेहमुक्तानामिति चेत्, सदैव मुक्तस्य ज्ञनाम्नः पुरुषस्य विभुप्रकृत्या सम्बन्धः कथं नावलोक्यते? संसरणोपयोगी सम्बन्धो मुक्तानां पुरुषाणां न वर्तते इति चेत्; कीदृशश्च संसरणोपयोगी, कश्च तद्विरुद्धः सम्बन्ध इति वक्तव्यं स्यात्। संसरणोपयोगिसम्बन्धस्वीकारे मुक्तत्वं कथं न व्याहतम्?

कालसम्बन्ध कैसे रहेगा ? इत्यादि शङ्कायें भी सांख्यदर्शन में ठीक नहीं हैं सत्कार्यवादी सांख्य में कारण रूप से अथवा सूक्ष्म रूप से सभी वस्तुए सर्वदा हैं।

सत्कार्यवादी सांख्य और असत्कार्यवादी न्याय के मत में एक प्रकार का सत्त्व कैसे हो सकता है ? इत्यादि केवल भीति है, दोनों के केवल तुच्छ गगन कुसुम आदि व्यावर्तनीय हैं तो सत्त्व भी समान क्यों नहीं हो सकता ?, उत्पत्ति के पहले भी कार्य सूक्ष्म रूप से या कारण रूप से रहता है यह सत्कार्यवाद है, उत्पत्ति के पहले किसी रूप से कार्य नहीं रहता किन्तु कार्य का कारण रहता है यह असत्कार्यवाद है, कार्य सत् है तथा सभी का काल सम्बन्ध है इसमें विवाद नहीं, उत्पत्ति के पहले कार्य स्वरूप से नहीं रहता यह दोनों का समान व्यवहार है, उत्पत्ति के पहले कार्य कारण रूप से रहता है यह व्यवहार सांख्य ही का है यह विशेष है, वास्तव में कार्य कारण का भेद न्याय में है, सांख्य में कार्य कारण का तादात्म्य है, इतना ही फरक है, तादात्म्य भी भेद और अभेद दोनों है, केवल अभेद नहीं, उसमें भो भेद प्रधान है या अभेद प्रधान है इसमें अनेक व्याख्यान है, उसको विस्तार के भय से छोड़ा जाता है।

न्याय अन्यथाख्यातिवादी है, सांख्य सदसत् ख्याति मानता है, तब सांख्य में असत् का भी भान होता है, इससे भी सत्त्व के लक्षण में फरक नहीं पड़ता, असत् का भान भले हो किन्तु काल सम्बन्धी असत् हो और काल का असम्बन्धी सत् हों ऐसा फरक नहीं होता इससे सत्त्व के लक्षण में भी फरक नहीं है, व्याख्या और विवेचन करें तो वह भी वैसा नहीं है, जैसे शुक्ति में रजतत्व भ्रम होने पर सत् इदन्त्व का और असत् रजतत्व का भान होता है यह व्याख्या है, उसी में ऐसा कहें कि वहां नहीं रहने वाले रजतत्व का भान होता है तो न्याय से फरक नहीं पड़ेगा, वहां नहीं रहने वाले रजतत्व या रजतत्व सम्बन्ध का भान न्याय मत में भी है, चेतन विषय में भेद होने पर भी जड़ पदार्थों में बौद्ध और सांख्य का बहुत साम्य है, जैसे सभी क्षणिक हैं यह सुगत सिद्धान्त है वैसे प्रतिक्षण परिणामी भाव हैं ऐसा सांख्य का है, परिवर्तन अवश्य है, दूसरे क्षण में हो या तीसरे क्षण में हो, परिवर्तन दोनों में है, सांख्य के परिणामवाद में गुण का परिवर्तन होने पर भी गुणी द्रव्य का परिवर्तन नहीं होता, बौद्ध के संघातवाद में निरन्वय विनाश होने से सर्वथा परिवर्तन है ऐसा फरक बताना स्थूल

दृष्टि से है, गुण और गुणी में अभेद मानने वाले परिणामवाद में गुणों का परिवर्तन होने पर गुणी अपरिवर्तित कैसे सिद्ध होय ?, निरन्वय विनाश और सान्वय विनाश भेद हो किन्तु परिवर्तन अवश्य होता है, प्रकृति के परिणाम स्वभाव का कहीं रोक नहीं।

बहुत पहले काशी वाले संस्कृत रत्नाकर पत्र में प्रकाशित मेरे 'सान्वयवाद' लेख में कुछ विशेष विचार किया गया है, इससे यहां नहीं फैलाता, आगे पीछे होने वाले कार्य और कारणों में सांख्य सर्वथा भेद नहीं मानता, बौद्ध सर्वथा भेद मानता है, इतनी ही आस्था है, उसमें भी विशेष दृष्टि देने पर 'वही कल का यह फूल' इत्यादि स्थिरता के प्रभा का मूल जैसे सांख्य में द्रव्यस्वरूप है वैसा सौगत मत में भी कुछ है, भले उनके मत में वह ज्ञान भ्रम हो, दण्ड घट आदि कार्य और कारणों में वैसी प्रत्यभिज्ञा नहीं है, पहले और पीछे के पुष्प क्षणों में वह प्रत्यभिज्ञा होती है, अतः उस प्रत्यभिज्ञा का कारण कुछ है, भ्रम का विषय असत् हो किन्तु भ्रम और भ्रम का कारण सत् है, इत्यादि विवेचन का मार्ग सान्वयवाद लेख में परिष्कृत हुआ है, न्यायविन्दु धर्मोत्तर व्याख्यान के प्रकाशन के बाद तम की उत्पत्ति प्रक्रिया के परिशीलन के बाद विचार शीलों को आगे विवेचन करना चाहिये।

इसी प्रकार अबाधित्व सत्त्व का भी विचार करना है, शाङ्कर वेदान्त में तीनों काल में अबाधित व्यवहार काल में अबाधित प्रतिभास काल में अबाधित तीन प्रकार का सत् का लक्षण प्रसिद्ध है, तीनों में अनुगत अबाधितत्व यह सत्त्व सामान्य का लक्षण सिद्ध होता है, इसी का विशेष—जो तीनों काल में अबाधित है वह सर्वदा सत् अथवा परमार्थ सत्य है, जो व्यवहार काल में अबाधित है वह व्यावहारिक सत्य है, जो प्रतिभास काल में अबाधित है वह प्रातिभासिक सत्य है, नित्य वस्तु सर्वदा सत् है, विभु सभी जगह सत्य है, अनित्यों में कालिक अव्याप्यवृत्ति सत्त्व है, परिच्छिन्न वस्तुओं में दैशिक अव्याप्य वृत्ति सत्त्व है, वेदान्त के प्रातिभासिक रजत में प्रतिभास काल और शुक्ति देश को अवच्छेद करके सत्त्व है, दूसरों के मतों में शुक्ति देशावच्छेदेन सत्त्व नहीं है। वेदान्तियों का पारिभाषिक मिथ्यात्व पारमार्थिक सत्त्व का विरोधी है, सत्त्व सामान्य का विरोधी नहीं है, दूसरों के मत में वैसा मिथ्यात्व ही नहीं है, इनका भी व्यावर्तनीय शशशृङ्ग आदि तुच्छ ही है, उनका प्रतिभास काल में भी बाध है, कभी

अबाधितत्व नहीं है, वेदान्तियों ने सत्त्व का लक्षण काल घटित शुरू किया है इससे काल सम्बन्धित्व के सदृश ही इनको समझना चाहिये।

शून्यवादी माध्यमिक के मत में सभी असत् है तब तुच्छ शशशृङ्ग आदि और घट आदि में क्या फरक होगा? ऐसा संशय नहीं करना चाहिये उनके यहां भी सांवृत्तिक सत्त्व प्रसिद्ध है, उस मत का इस प्रकार विश्लेषण करना चाहिये—तीनों काल में जिसका बाध न हो ऐसा कोई सत्त्व वे नहीं मानते, इतने ही से सभी असत् है ऐसा व्यामोह है। वेदान्तियों के मिथ्यात्व के ऐसा दूसरों के साम्वृतिक सत्त्व को माध्यमिक भी मानते हैं, जैसे वेदान्ती तुच्छ में मिथ्यात्व नहीं मानते वैसे ही तुच्छ में साम्वृत्तिक सत्त्व भी नहीं मानते, व्यवहार दशा में जैसे दूसरी वस्तुयें हैं वैसे काल भी है। अतः काल सम्बन्धित्व रूप सत्त्व में उनका भी विरोध नहीं है।

यह सत्त्व और असत्त्व के विचार के सार का मार्ग विद्वानों को रुचना चाहिये, यदि उनको नहीं पसन्द हैं तो उनका क्या कैसा मन्तव्य है? वह ज्ञात हो ऐसी मेरी अभिलाषा है, अथवा शास्त्रों के अर्थ समुद्र को पार करने वाले छात्रों के हृदयकमल को विकसित करने वाले सूर्य रूपी पवित्र गुरु चरणों की वन्दना करता हूं तथा अपनी बुद्धि का संशोधन करता हूं।

---

पटना संस्कृतसञ्जीवनं पत्रिकायाः २३ वर्षे द्वितीयाङ्के जुलाई १९६२ ईसाब्दे प्रकाशितः।

## संस्कृतस्य अभिनवः दार्शनिकग्रन्थः

पटनाविश्वविद्यालयस्य भूतपूर्वहिन्दीविभागाध्यक्षभारतप्रसिद्धविदुषः स्वर्गीयश्रीनलिनविलोचनशर्मणः पितृचरणाः महामहोपाध्यायाः स्वर्गीयश्रीरामावतारशर्माणः स्वकीयैः शिष्यप्रशिष्यैर्निबन्धादिभिश्च नाविदिता

विशेषवैदुष्यभाजाम्, तेषामेव दर्शनस्य आकरभूतः परमार्थदर्शनभाष्यं संस्कृतग्रन्थोऽधुनापि अमुद्रितो वर्तते ।

अस्य पाटलिपुत्रनगरस्य विंशशताब्दीसमुद्भूतं संस्कृतरत्नं तत् । अत्रैव नगरे चिरमध्यापयन्तो रामावतारशर्ममहोदयाः प्राच्यप्रतीच्यदर्शनोदधिं मथितवान् । ततश्च सारभूतं परमार्थदर्शनं नाम अमृतं सुरगवीचरणेषु समर्पितवान् । तदपि क्रमशः सूत्रेषु अधिकरणेषु भाष्यरूपे वार्तिकेषु च प्रसारितवान् । यत्र षडध्यायाः प्रत्येकम् आह्निकद्वयम्, षट्चत्वारिंशदधिकचतुश्शती (४४६) सूत्राणि, विंशत्यधिकशतम् (१२०) अधिकरणानि, षड्विंशत्यधिकाष्टशती ( ८२६ ) वार्तिकश्लोकाश्च सन्ति ।

एतेषु वार्तिकयुता अधिकरणन्यायमाला त्रयोदशाधिकैकोनविंशतिशततमे ईसाब्दे (सन् १९१३ ई०) काशीस्थमहामण्डलमुद्रणालयतः प्रकाशिता विद्यते । तत एव मम भूयानस्य दर्शनस्य परिचयः । अमुद्रितो भाष्यग्रन्थस्तु तत्कर्तृमहोदयानां करकृतलिपिकः सकृदेव दर्शनपथं गतो महांश्च प्रतीतः । कतिपय एव संदर्भास्त्वरया दृष्टाः । दृष्टा अपि च ते सहसा मनसि न प्रविष्टाः ।

यद्यपि बहवो दार्शनिकपण्डिता नास्तिकदर्शनमिति मुखमुद्रणं विधास्यन्ति, धर्मं खण्डयतीति अक्षीणि सङ्कोचयिष्यन्ति, यतश्चार्वाक इव जन्मान्तरं निषेधति, आर्यसमाज इव श्राद्धादिकं विनिन्दति; परं संस्कृतरत्नमिदमिति संस्कृतप्रणयिनामवश्यमपेक्षितम् । अस्माकं पूर्वजा आचार्याः चार्वाकजैनबौद्धदर्शनानि सम्यगधीतवन्त इति तेषां लेखाः साक्षिणः, किमुत एतान्येव दर्शनानि ? साम्प्रतन्तु भाषान्तरेभ्यो वैदेशिकदर्शनानि अनालोचयन्तो दार्शनिका न परिगण्यन्ते । ईङ्गलिशभाषानभिज्ञैरपि संस्कृतदार्शनिकैः कथमपि यथासौविध्यं वैदेशिकदर्शनानि अवश्यं परिचेयानि आलोचनीयानि खण्डनीयानीति गले पतितम् । अतो नास्तिकं धर्मविरुद्धमिति वचोभिर्दूरेविद्रावणमुपेक्षणं वेति न निर्वाहाय ।

किञ्च विलक्षणमिदं स्वतन्त्रं दर्शनम् । न चार्वाकं अनुमानविद्ययोरपि प्रामाण्यात् । न बौद्धानां क्षणिकविज्ञानवादः नित्यविभुचैतन्यस्थापनात् । नापि वैदेशिकदर्शनानुकारि वेदान्तस्येव चैतन्यस्य स्वयंप्रकाशतास्थापनात् । इदमपि तथ्यं यद् ईङ्गलिशभाषायां हिन्दीभाषायां वा लिखितमभविष्यच्चेद् अद्यावधि प्रचुरं प्रचारमाप्स्यत् । अधुना दुर्ग्रहगृहीतायां संस्कृतभाषायामेव लेखनस्य प्रभावो येन न कश्चित् पृच्छति, महता श्रमेण संभृतोऽयं ग्रन्थ

एवमेव विशीर्यंते। अतः पाठकान् प्रार्थये यत् सत्यवसरे चर्चया अस्य प्रचारो विधीयताम्। विस्तीर्णा पृथिवी जनश्च विविधः किं किं न संभाव्यत इति न्यायेन कदाचनास्य प्रकाशनावसरः समेयात्।

बहूनां देशनेतॄणां संस्कृतस्य माहात्म्यवर्णनात्, राज्यसञ्चालकानां श्रद्धाप्रदर्शनात्, विद्यालयमहाविद्यालयविश्वविद्यालयानां समुद्घाटनाच्च शुभावसरोऽयं संस्कृतगिर इति महान कोलाहलः; परं सम्यगवधाय पश्यामि तदा एवं प्रतिभाति यद् यथावेगेन सुरगिरो ह्रासोऽधुना प्रचलति, न तथा प्राक्कदाचन अभूत्। संस्कृतगीर्भाषा, न उपलस्य रजतस्य सुवर्णस्य वा मूर्तिर्येन स्तुतिमाहात्म्ययोगगानेन मन्दिरप्रासादादिनिर्माणेन वा प्रतिष्ठिता पूजिता वा भवेत्। भाषा तु भाषाकार्येणैव परिपोषिता स्यात्, तत्तु यथा अधुना अवरुध्यते न तथा प्राक्। संस्कृतमाध्यमेन संस्कृतशिक्षायै समुचितां प्रतिष्ठां न ददाति, आङ्लभाषामाध्यमेन संस्कृतशिक्षायै प्रतिष्ठामर्पयति। एष अन्यायो यदा राज्येन जनतया वा न दूरीक्रियते तदा मुधा मोहः संस्कृतोन्नयनस्य। अनेन अन्यायप्रचारेण व्याकुलाश्छात्राः संस्कृताध्ययनादुदासते, संस्कृतविद्यालयाश्छात्रविहीनाः सञ्जायन्ते, संस्कृतभाषया संस्कृतग्रन्थानां प्रकाशनं भूमिकालेखनं सम्पादनञ्च सहसा वेगेन अवरुद्धम्। संस्कृतनाम्ना निःसारितानि राजकीयद्रव्याणि ईङ्लिशभाषाया हिन्दीभाषाया वा साहित्यवर्धनाय उपयोज्यन्ते। अस्तु एतत् नातिप्रासङ्गिकम्।

उपर्युक्तदर्शनस्य मूलाधारविषये सूत्रे ऋष्युपनिषद्वासुदेवबादरायणवैश्वानरपूर्वत्वमनुशासनस्य ६।२।३४ प्रमत्तव्याख्यातृविकलीकृते जगत्यभ्यासनिरासोऽनुशासनस्य परमं प्रयोजनम् ६।२।३६ तत्रैव अधिकरणम्—

एतद्दर्शनतत्त्वानि पूर्वैर्दृष्टानि वा न वा?<br>
न दृष्टान्येव भिन्ना हि गतिरस्योपलभ्यते ॥ १ ॥<br>
दृष्टानि पूर्वजैर्नूनं ऋषिप्रभृतिभिश्चिरात्।<br>
संग्रहोऽत्रकृतस्तेषां स एवाभिनवः स्फुटम् ॥

वार्तिकानि—ऋषिरुपनिषदश्च वासुदेवः स च भगवानथ बादरायणश्च<br>
सुविमलमतिरार्यवल्लभश्च प्रकटममी परमार्थिनश्च रत्नाः ॥ ४४ ॥

उपदिदिशुरमी पृथक् पृथग्यत्<br>
पितृचरणैर्गुरुभिश्च यत्तथोक्तम्।<br>
अखिलमिति परीक्ष्य तत्प्रणीतम्<br>
नवमनुशासनमेतदार्यतुष्ट्यै ॥ ४५ ॥

अयं समाम्नाय उदेति पूर्वजो-
पदेशमन्त्रानवलम्ब्य निर्मितः।
जनादितो भूम्नि भवात्मकेऽर्पितो
यदात्मिका यस्य समष्टिरूर्जिता ॥ ४६ ॥

सहेतुकभक्तेर्निन्दनं भक्तेर्बीजस्याद्भूतस्य प्रदर्शनञ्च सम्यक् प्रतिभातीति द्वितीयाध्यायप्रथमाह्निकद्वितीयाधिकरणे—

भक्तेर्बीजं पितृत्वादि वाह्यहेत्वनपेक्षणात्।
यद् वाह्यफलसापेक्षं तद्वाणिज्यं स्फुटं मतम् ॥ २ ॥

वार्तिकानि—नृपे जनन्यां जनके गुरौ तथा परेऽपि च श्रेयसि कोऽपि योऽद्भुतः।
हृदेकगम्योऽतिशयः स केवलं नरेषु भक्तेरिह बीजमुच्यते ॥ ६ ॥
अयं पुरा खेदयतीति जाग्रतीं निरस्य शङ्कां तनयं प्रपुष्णते।
अहैतुकं सेवनमाचरन् परं श्रमेण पित्रोः समुपैति निष्कृतिम् ॥ १० ॥

द्वितीयाध्याये द्वितीयाह्निकतृतीयचतुर्थाधिकरणयोः सृष्टिप्रक्रिया वर्णिताः। तद् यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवदित्याद्युपनिषदः सृष्टिप्रक्रियैव आधुनिकभौतिकवैज्ञानिकैराद्रियत इति दर्शितम्। भाष्ये विस्तरेण समुपपादनमन्वयौ वर्तेते। अत्र संक्षेपेण तत्रत्यानि वार्तिकान्युदाहृत्य विरमामि—

तप्तवाष्पपटलादथेदृशात् सारमण्डमुदभूत्कुतश्चन।
आद्यमण्डमिति यद्विपश्चितः कीर्तयन्ति महसा हिरण्मयम् ॥ ७ ॥
तद्विभज्यत च यात्यनेहसि प्रादुरास च रविस्तदन्तरे।
त्रुट्यतश्च परिधेर्ग्रहादयो जज्ञिरेऽस्य वियदङ्गणाश्रयाः ॥ ८ ॥
इत्थमेष तपनो मृताण्डजो रश्मिभिश्च किल सर्वतोमुखः।
एष सौरजगतश्च सर्जनाद् विश्वसृड्विदित एष च स्वभूः ॥ ९ ॥
भज्यमानपरिधावथाण्डके तस्य केन्द्रमभवद्विभाकरः।
सृज्यतेस्म च ततः क्रमाद्ग्रहोपग्रहादिनिकरो नभोङ्गणे ॥ ११ ॥
निस्सरत्सु रवितो ग्रहेष्वयं भूग्रहोऽपि समये विनिर्गतः।
तप्तवाष्पमयपिण्डतां दधत् प्राणमस्त्यतिविरोधिनीं चिरम् ॥ १२ ॥

वाष्पवायुमयतेजसः शनैरुष्मनिर्गमभवैस्ततो घनैः ।
सान्द्रवारिपरिणामिभिः कृता भूरियं सलिलपूरसंप्लुता ॥ १३ ॥
सान्द्रतां यति च वारिणः शरे प्रस्तरीभवति सागरैर्नगैः ।
व्यज्यमानविलसन्नतोन्नता कामिनीव वसुधा व्यराजत ॥ १४ ॥
त्रसकेन्द्रपिठराशिलास्तरप्रायवारिशरवेष्टनोद्धता ।
भूरभूत् क्रमविकासशालिभिर्भूरिजीवनिकरै रथाचिता ॥ १७ ॥
सर्गमौपनिषदं त्वमूलिकां कल्पनामय नरादिमूर्तिताम् ।
स्रष्टुरत्र किल कल्पयन्ति ये दुर्धियस्त उभयेऽत्र धिक्कृताः ॥ १९ ॥

एवं विविधविषयै रचनाकलाभिर्दर्शनतत्त्वैश्चावश्यमुपकरिष्यति प्रकाशितः सन्निति किमधिकेन ।

---

दारागंज० प्रयाग० संस्कृत साहित्य परिषत् प्रकाशित संस्कृत त्रैमासिक संगमनी पत्रिकाया द्वितीय वर्ष प्रथमांके श्रावण २०२३ वैक्रमवत्सरे प्रकाशितम् ।

# दर्शनेऽभिनवचिन्तनं परमार्थदर्शनम्

बहुविधवाणीवृत्तोऽनेकापारशास्त्रपारदृश्वा, कवितामिनीललितवल्लभः, तर्ककर्कशविचारचातुरीतुरीवितीर्णपाण्डित्यपटो विभिन्नेषु विषयेषु सरसतया सरलया च सुरगिरा हेलयैव विविधमौलिकनिबन्धानां निबद्धा, परतन्त्रेऽपि भारते विचारे स्वतन्त्रः, प्राचीनाचार्येषु श्रद्धापरवशोऽपि दोषज्ञः, मूलान्वेषी, समुदारचेता, मर्मग्राही, वक्तृविशेषनिःस्पृहः, क्षीरनीरविवेकी, सारस्वतहंसः, निर्व्याजसुरगवीसमुपासकः, स्वर्गीयपण्डितश्रीरामावतारशर्मा अस्या विंशशताब्द्याः पूर्वार्धे एव अभिनवमिदम् अनिदर्शनं सुदर्शनं परमार्थदर्शनं सुरगवीपदेषु प्रासारयत् ।

अद्वितीय एवायं भूदेवः कृतसंस्कृतसेवो देवगवीसनाराधक इति वचो न केषाञ्चित् कोपाय न वा प्राचामाक्षेपाय भवेत् किन्तु सर्वथा सत्यार्थकम्। पश्यन्तु पाठकाः, प्राचाम् आचार्याणां सविधे शास्त्रप्रसाराय अर्थस्य यशसो वा अधिगमाय सुरसरस्वती एव शरणमभवत् न आङ्गलभाषा इव प्रजाराजप्रिया देशविद्योतिनी धनेन यशसा च विमोहिनी कापि भाषा बभूव, यत्र तेषां लेखनी विहरेत्। विंशशताब्द्यान्तु राजमहिषीव मनीषिमनोमोहिनी प्राच्यप्रतीच्यविपणीवीथीषु विचरन्ती आङ्गलगीरेवं नृत्यं दर्शितवती येन तन्मुग्धा भारतीया अपि विद्वांसो विदेशीयभाषाविपणौ मातरमपि सुरगवीं तद्घृदयानीव शास्त्रविषयाँश्च निर्दयं विक्रीय धनिनो यशस्विनो मनस्विनश्च अभवन् भवन्ति च। तदानीमेव धन्यो वदान्योऽयं विज्ञवरो विदेशीयभाषा-प्राङ्गणपरिशीलनपटुरपि सुरभारतीभावबद्धो धनादिपरिग्रहपरिपन्थी अपि देशे विदेशे यत्र कुत्रापि विप्रकीर्णानां समीचीनविषयाणां सङ्ग्रहग्रहिलो विदेशीयभाषायै भारतीयं हृदयं शास्त्रं न विक्रीतवान्। अपि तु सर्वविधैरपि ज्ञानरसैः सुरसरस्वतीमेव अस्नपयद् इति कोऽन्योऽस्य सुरगवीसमुपासनायां तुलामधिरोहेत् ?

अस्य च महापुरुषस्य काव्यनाटकादीनि दरभङ्गामिथिलासंस्कृतविद्यापीठतः क्रमशः प्रकाशयितुं समारब्धानि संस्कृतप्रणयिनां मनो मोदमेष्यन्ति।

परमार्थदर्शनग्रन्थस्तु दर्शनविषयाणां महान् आकरः। यत्र (४४६) षट्चत्वारिंशदधिकचतुश्शतकसूत्राणां विरचनाकला सूत्रप्रणयिन ऋषीन् स्मारयति। प्राञ्जलं भाष्यन्तु अस्य भाष्यशैल्या पातञ्जलं महाभाष्यमेव। यद्यप्यमुद्रितस्यास्य अल्पीयांस एवांशा मया दृष्टास्तावताऽपि रीत्यनुकृतिकला महीयसी अस्य विबुधः साक्षात् कृता। तत्रापि दार्शनिकपदार्थपथे प्रसरन्त्यपि अस्य सरस्वती समुचितसदृशशब्दसमुन्नतामस्य प्रथयति, अमुकपदसमवधाने नैकपर्यायेष्वपि अस्यैव पदस्य समभिव्याहारो मनोहारीति विषये मुद्रिते सति वाचस्पतेरिव वाचस्पत्यमस्य साक्षात्क्रियेत सुरसरस्वतीसमुपासकैः। परं दुर्निवारे सुरगवीदुर्दिनेऽस्मिन् कदा आयास्यति अस्य प्रकाशनशुभावसरः ?

श्लोकवार्तिकानुसारिणां पद्यबद्धानां वार्तिकानां षड्विंशत्यधिकाष्टशतसंख्याकानां ( ८२६ ) प्रणयनमस्य कुमारिलभट्टतां भासयति। प्रकृष्टरोचना अधिकरणविंशत्यधिकशतसंख्याक—( १२० ) न्यायमालारचना

जैमिनिन्यायमालामनुहरति । ऐतिहासिकाः सूत्रकालो भाष्यकालो वार्तिककालश्चेत्यादिक्रमेण विकाशं निर्णयन्ति । परमस्मिन् परमार्थदर्शनीयग्रन्थे युगपदेव समेषां सर्जनं सर्वविधं पाण्डित्यं समुद्द्योतयति ।

एतेषु वार्तिकयुता अधिकरणन्यायमाला त्रयोदशाधिकैकोनविशंतिशततमे (१९१३) ईशाब्दे काशीस्थमहामण्डलमुद्रणालयतः कथमपि प्रकाशमुपगताऽस्ति ।

तत एव च भूयसो दर्शनस्यास्य मम परिचयः, अधिकरणन्यायमालायाः समाप्तिपद्यमिदम्—

'मालीव रामेण मनोज्ञबन्धा, विनिर्मितेयं लघुरत्नमाला ।'

वार्तिकस्य हि द्विधा सम्प्रदायः । किमपि हि वार्तिकं भाष्यं व्याख्याति, अपरं च सूत्राणि विवृण्वद् भाष्येण व्याख्यायते । अत्र हि तृतीयः क्रमः, स्वतन्त्रो हि वार्तिकग्रन्थो न कस्यचिद् व्याख्यानरूपः । भाष्यसारांशः सरलेन सुन्दरेण पद्येन उद्ध्रियते । एतादृशस्य स्वतन्त्रग्रन्थस्य प्राचीनतरशैल्या निर्माणमुपद्वादशशताब्द्या अनन्तरमतिचिरेण समभूदिति अभिनवं सुरगवीनवनीतमिदं कस्य सहृदयस्य संस्कृतरसिकस्य तोषाय न भवेत् यद्यपि जीवस्य विनाशित्वं जन्मान्तराऽस्वीकारश्चेति नास्तिककल्पनमस्तथापि तदपि अवलोकनीयतया निरसनीयतया च संस्कृतविदुषामपेक्षितमिति क्व अन्यत्र उपलभ्येत ? पटनाविश्वविद्यालयदर्शनविभागाध्यक्षः श्रीहरिमोहन झा महोदयः विदेशीयहेंगलदर्शनस्य प्रभावोऽत्रेति ब्रवीति । तदा हन्त अवश्यमवलोकनीयमिदम् । अन्यथा कुत्र प्राप्स्यामः सरससुरसरस्वतीविपणिप्रसारितानि महार्घाणि वैदेशिकदर्शनवस्तूनि? एवञ्च भाषाकौतुकेन विषयलिप्सया च असाधारणं संस्कृतरत्नमिदम् । चार्वाकदर्शनस्य पूर्तिमेव प्रथमं चतुर्थाध्यायद्वितीयाह्निकसप्तमाधिकरणमवलोकयन्तु पाठकाः ।

स्तन्यचूषकशक्त्यादि पैतृकं वान्यजन्मजम् ।
जन्मान्तराभ्यासजं तत्स्फुटमुक्तं मनीषिभिः ॥ १ ॥
पैतृकन्तु मनुष्याद्याकृतिवत्तत्समञ्जसम् ।
अलं तदर्थं जीवस्य जन्मान्तरविकल्पनैः ॥ २ ॥

शरीराध्यात्मवादे बालस्य स्तन्यपाने प्रवृत्तिर्न स्यादित्युच्यते ग्रन्थकारैः । तदुपरिकल्पनेयमस्य । अस्यापि खण्डनमस्तीति त्वन्यत् । नायं चार्वाकपक्षपाती प्रामाण्यनिरूपणे चार्वाकमुखमुद्रणात् । नापि नास्तिक एव

नित्यस्य विभोश्चैतन्यस्य स्वीकारात् । नापि वेदनिन्दकोऽहैतुकविधेः स्वतः प्रमाण्याङ्गीकारात् ।

अतः परं सृष्टिप्रक्रिया द्वितीयाध्यायद्वितीयाह्निके द्रष्टव्या, मूलोपनिषदः सृष्टिप्रक्रिया आधुनिकवैज्ञानिकप्रक्रियाऽनुकूलैव । 'तद्यदपांशर आसीत्तत्समहन्यत सा पृथिव्यभवत्' इत्युपनिषदः शरशब्दार्थं विवृण्वद् ब्रवीति चतुर्थमधिकरणम्—

य औपनिषदः सर्गस्तस्य वैज्ञानिकाद् भिदा ।
समन्वयो वा भेदः स्याद् भूतादिक्रमभेदतः ॥ १ ॥
वैचित्र्ये शाश्वतेऽप्यत्र व्यक्तेः सर्गक्रमः स्थितः ।
समन्वयश्च तत्रास्ति प्राचां वैज्ञानिकैः सह ॥ २ ॥

## वार्तिकानि तत्र

भज्यमानपरिधावधारके तस्य केन्द्रमभवद् विभाकरः ।
सृज्यते स्म च ततः क्रमाद् ग्रहोपग्रहादिनिकरो नभोऽङ्गणे ॥ १ ॥
निःसरत्सु रवितो ग्रहेष्वयं भूग्रहोऽपि समये विनिर्गतः ।
तप्तवाष्पमयपिण्डतां दधत्प्राणमस्थितिविरोधिनीं चिरम् ॥ १२ ॥
वाष्पवायुमयतेजसः शनैरुष्मनिर्गमभवैस्ततो घनैः ।
सान्द्रवारिपरिणामिभिः कृता भूरियं सलिलपूरसंप्लुता ॥ १३ ॥
सान्द्रतां यति च वारिणः शरे प्रस्तरीभवति सागरैर्नगैः ।
व्यज्यमानविलसन्नतोन्नता कामिनीव वसुधा व्यराजत ॥ १४ ॥
तप्तकेन्द्रपिठरा शिलास्तरप्रायवारिशरवेष्टनोद्धता ।
भूरभूत्क्रमविकाशशालिभिर्भूरिजीवनिकरैरथाचिता ॥ १७ ॥
सर्गमौपनिषदं स्वमूलिकां कल्पनामथ नरादिमूर्तिताम् ।
स्रष्टुरत्र किल कल्पयन्ति ये दुर्धियस्त उभयेऽत्र धिक्कृताः ॥ १८ ॥

शरशब्दार्थः सूर्यः स एव ब्रह्मा स्वयंभूरिति तृतीयाधिकरणे वार्तिकम्—

तप्तवाष्पपटलादथेदृशात्सारमण्डमुदभूत्कुतश्चन ।
ब्राह्ममण्डमिति यद्विपश्चितः कीर्तयन्ति महसा हिरण्मयम् ॥ ७ ॥

तद्विभज्यत च यात्यनेहसि प्रादुरास च रविस्तदन्तरे।
व्युट्यतश्च परिघेर्ग्रहादयो जज्ञिरेऽस्य वियदङ्गणाश्रयाः॥ ८॥
इत्थमेष तपनो मृताण्डजो रश्मिभिश्च किल सर्वतोमुखः।
एष सौरजगतश्च सर्जनाद् विश्वसृड् विदित एष च स्वभूः॥ ९॥

पाखण्डमतखण्डनं दर्शनस्यास्य प्रथममुद्देश्यं तत् प्रथमाध्यायप्रथमाह्निके वार्तिकैर्वर्णयति—

यत्प्रत्यक्षोपलम्भेनानुमितार्थेन वा पुनः।
प्रत्याहृतं तन्मिथ्यैव न तस्यानुगमः शुभः॥ ६२॥
नगरं दर्शयामीति प्रतिज्ञाय यथा व्रजन्।
जनोऽनुगम्यते बालैर्न पुनः सरितं विशन्॥ ६३॥
व्याकृतिं पाठयामीति पाठयन्ननुगम्यते।
मन्त्रसिद्धया भवेर्विज्ञ इत्युक्तो समुपेक्ष्यते॥ ६४॥
शास्त्राभ्यासेन शिल्पेन समुद्योगैस्तथापरैः।
न भक्त्या सिद्धमूर्खाणां वास्तवी सिद्धिराप्यते॥ ६७॥
जुगुप्समानाः सम्मानाद् ब्राह्मणा ब्रह्मवादिनः।
शिल्पशास्त्रकलोद्योगैः सिद्धिं व्याचक्षते पराम्॥ ७०॥
प्रामाण्यमविधौ नैव परिनिष्ठितवस्तुनि।
शब्दस्येत्यविजानन् हि विमुह्यति मुहुर्मुहुः॥ ७८॥
वस्मानय फलानीति स्वाध्यायोऽध्येय इत्यपि।
सद्यो हेत्वनपेक्षैव पित्राद्याज्ञा विधीयते॥ ८०॥

सहेतुकभक्तेर्निन्दनं द्वितीयाध्याय-प्रथमाह्निकद्वितीयाधिकरणे—

भक्तेर्बीजं पितृत्वादि बाह्यहेत्वनपेक्षणात्।
यद् बाह्यफलसापेक्षं तद्वाणिज्यं स्फुटं मतम्॥ २॥

वार्तिकम्

नृपे जनन्यां जनके गुरौ तथा परेऽपि च श्रेयसि कोपि योऽद्भुतः।
हृदेकगम्योऽतिशयः स केवलं नरेषु भक्तेरिह बीजमुच्यते॥ ६॥

प्रतारयत्सु प्रचुरान्मृषोक्तिभिर्न सिद्धधूर्तेषु तु भक्तिमान् भवेत् ।
अमीषु भक्त्या स्वजनं हि सादयन् पतत्यवश्यं निरये विपन्मये ॥ ७ ॥

अयं पुरा खेदयतीति जाग्रतीं निरस्य शङ्कां तनयं प्रपुष्णते ।
अहेतुकं सेवनमाचरन्नरं श्रमेण पित्रोः समुपैति निष्कृतिम् ॥ १० ॥

अल्पमज्ञं जडमन्धमुद्धतं पतिं निजं वा जनकं निषेवते ।
कलत्रतोकादि यथा तथा वयं स्वपूर्वजत्वेन चिरन्तनान् नुमः ॥ १७ ॥

व्रणांस्तु भक्तोऽपि यथाऽवधानवान् गुरोः पितुर्वा विदयं विदारयेत् ।
चिरन्तनानामपि निष्ठुरस्तथा परीक्षको दोषमुदस्यति ध्रुवम् ॥ १८ ॥

यथा तु सभ्याः पितरः कृतोद्यमाः स्वकालिकानां विदुषां धुरि स्थिताः ।
तथाद्य विज्ञानविदां धुरीणतां स्वबन्धुताया घटेम यत्नतः ॥ २० ॥

कर्मसंन्यासमरोचयन् स्वकर्मणि प्रवृत्तये भृशं प्रोत्साहयति चतुर्थाध्यायद्वितीयाह्निकद्वादशाधिकरणे वार्तिकैः—

स्वर्गादिचिन्तारहितस्तदित्थं विज्ञानदृष्ट्या जगतः शिवाय ।
ज्ञानेन भक्त्या च विशुद्धचित्तः सत्कर्म कुर्वीत सदैव साधुः ॥ ६४ ॥

अयं जनो नैव परस्तु कश्चिद्यः स्वार्थमित्थं प्रतिपद्य कर्मी ।
भूमानमानन्दमयं श्रमेण विवेश्य सोऽल्पीयसि बन्धमेति ॥ ६६ ॥

अस्थायिलोकस्य शरीरनाम्नः परस्य लोकस्य च भूमनाम्नः ।
अंशांशिभावन्तु विदन् महात्मा सर्वस्य मुक्तः कुशलं करोति ॥ ६७ ॥

इदं हि धर्मार्थ-सुखस्य साधनं शरीरमाद्यं न ममत्वमत्र च ।
कथं तदेतत्सकलात्मनो धनं विनाशयेत् स्वैरमकर्मणा सुधीः ॥ ७० ॥

अनपेक्ष्य विधेः प्रामाण्यम् प्रथमाध्यायप्रथमाह्निकचतुर्थाधिकरणे—

अनपेक्ष्योपपत्तित्वाद्विधिः स्वीक्रियतां जनैः ।
अपेक्षितोपपत्तित्वादर्थवादः परीक्ष्यताम् ॥ २ ॥

नियन्तुः सर्वज्ञस्य सर्वशक्तेरनङ्गीकारात् प्रायो नास्तिकतां द्योतयतीति चतुर्थाध्यायप्रथमाह्निकवार्तिकेषु—

चेतनमचेतनञ्च प्रकृतौ उभयं यतो दृष्टम् ।
न च सर्वज्ञः कश्चिद्विभाव्यते सर्वशक्तिर्वा ॥ ७२ ॥

नियता नतु विनियम्या प्रकृतिर्दृष्टा यतश्चैषा।
तस्मात्प्रकृतेर्भिन्नो न नियन्तास्यास्तु कोऽप्यस्ति ॥ ७६ ॥

**चतुर्थाध्यायद्वितीयाह्निके तृतीयाधिकरणे परलोकगमनस्य खण्डनम्—**

स्वर्गाधिकारी स्वमतेन सर्वः परैः प्रपन्नो नरकाधिकारी।
कस्यार्थवादेषु तदीदृशेषु वचः प्रमाणं भविता जनस्य ॥ १६ ॥
स्वर्गाद्यभावेऽपि शिखादिकस्य त्यागो न निष्कारणधर्मभाजाम्।
तडित्प्रवेशाय सुरस्त्रियै वा तदस्य निर्वेदमुपैतु सोऽज्ञः ॥ १७ ॥

**तत्रैव चतुर्थाधिकरणे जीवस्य स्वरूपविनाशयोर्वर्णनम्—**

सर्वात्मके ब्रह्मणि काययष्टिर्वियत्ययमेये किल नालिकेव।
सूचीप्रचारस्वनशक्तिवच्च कायानुगा राजति जीवशक्तिः ॥ १८ ॥
वियत्समं स्थाणु च सर्वगं च देहात्कथं ब्रह्म परैतु देहम्।
शरीरमेतन्ननु नालिकेव शीर्यत्यवश्यं गमनं न तस्य ॥ १९ ॥
पुञ्जोद्भवत्वाद् भविता क्व जीवः पुञ्जे विशीर्णे निधनस्य काले।
नाशं व्रजन्त्यां नहि नालिकायां तस्याः स्वनं चुम्बति नालिकान्या ॥ २० ॥

सर्वधूमज्ञानं विना वह्निव्याप्तिज्ञानं न भविष्यतीति चार्वाकस्य पूर्वपक्षम् एकेन नखनिकृन्तनेन ज्ञातेन सर्वं कृष्णायसं ज्ञातं भवतीत्यादिवेदान्तवाक्यमुखेन तदुत्तरञ्च प्रतिपादयति—

ज्ञाने सर्वस्य धूमादेर्व्याप्तिज्ञानं न चान्यथा।
इति चार्वाककल्पस्तु सर्वथा व्याहतः स्फुटम् ॥ ८१ ॥
एकस्य नखकर्तस्य ज्ञानात् कार्ष्णायसं नृणाम्।
विज्ञातं सर्वमेव स्यादित्यारुणिरपीष्यते ॥ ८२ ॥ १ ॥ २ ॥ ७ ॥

**स्वर्गादिविषये ४।२।८ अधिकरणे—**

तस्मादियं काञ्चनपर्वताभा प्रकल्पना स्वर्निरयादिकानाम्।
ऊर्ध्वं सुमेरावथलिम्पशैले पूरे पयोधेर्वसुधोदरे वा ॥ ४७ ॥
धर्मे भयार्थं किल बालिशानां सत्येति तां केचन घोषयन्ति।
आपातरम्यं सुफलं मृषोक्तेस्तन्न स्मरन्तः प्रतिरोचयन्ते ॥ ४८ ॥

प्रमाणविषये १ । १ । २ अधिकरणे—

प्रमाणमस्ति वा नास्ति नास्ति सर्वविलोपतः ।
अर्थोऽस्ति परिणामेऽपि प्रमाणत्रयगोचरः ॥ १ ॥
प्रत्यक्षमनुमानञ्च तथाप्ताज्ञेति तत्त्रयम् ।
तस्मात्प्रमाणमस्त्येव सहकारि परस्परम् ॥ २ ॥

वार्तिकम्—

यः प्रत्यक्षोपलम्भेनानुमितार्थेन वा पुनः ।
व्याहतोऽपरमार्थः स प्रहेयः पारमार्थिकैः ॥ २० ॥
प्रत्यक्षे चानुमाने च कदाचिद् बाधसम्भवः ।
तस्मात्तु नाविधावन्यत् प्रमाणं भवितुं क्षमम् ॥ २१ ॥
चरणाभ्यां प्रचरतः सति स्खलनसम्भवे ।
कः पुनर्ना सया गन्तुमनुन्मत्तोऽध्यवस्यति ॥ २२ ॥
आज्ञानुष्ठीयते पुत्रैः पितॄणां जीवतां यथा ।
मृतेष्वपि तदादेशान्निवापो न तु तृप्तये ॥ २५ ॥

श्राद्धं स्वीकरोति ।

अस्य दर्शनस्य आधारविषये सूत्रम् ऋष्युपनिषद्वासुदेवबादरायण-वैश्वानरपूर्वत्वमनुशासनस्य ६ । २ । ३४ ।

प्रमत्तव्याख्यातृविकलीकृते जगत्यभ्यासनिरासोऽनुशासनस्य परमं प्रयोजनम् ६ । २ । ३६ ।

अधिकरणम्—

एतद्दर्शनतत्त्वानि पूर्वैर्दृष्टानि वा न वा ।
न दृष्टान्येव भिन्ना हि गतिरस्योपलभ्यते ॥ १ ॥
दृष्टानि पूर्वजैर्नूनमृषिप्रभृतिभिश्चिरात् ।
संग्रहोऽयं कृतस्तेषां स एवाभिनवः स्फुटम् ॥ २ ॥

वार्तिकानि—

ऋषिरुपनिषदश्च वासुदेवः स च भगवानथ बादरायणश्च ।
सुविमलमतिरार्यवल्लभश्च प्रकटममी परमार्थिनश्चिरत्नाः ॥ ४४ ॥

उपदिदिशुरमी पृथक् पृथग्यत् पितृचरणैर्गुरुभिश्च यत्तथोक्तम् ।
अखिलमिति परीक्ष्य तत्प्रणीतं नवमनुशासनमेतदात्मतुष्ट्यै ॥ ४५ ॥
अयं समाम्नाय उदेति पूर्वजोपदेशमन्त्रानवलम्ब्य निर्मितः ।
जनादितो भूम्नि भवात्मकेऽर्पितो यदात्मिका यस्य समष्टिरूर्जिता ॥ ४६ ॥
यद् व्याहृतं तु विदितं जनतासु हन्त ऋष्यादिनामभिरपि प्रसभं स्वचित्तात् ।
एतन्निरस्य सुमतिः परमार्थभक्तः सम्यग्विवर्धयति तत् पितृभिः कृतं यत् ॥ ४७ ॥

न कपिलमुनिकाले ब्रह्मसूत्राण्यतिष्ठन्
कपिलमतमपश्यद् ब्रह्मसूत्रप्रणेता ।
कपिल इह सदोषोऽपि प्रशस्योऽसहायो
न तु कपिलसहायो ब्रह्मसूत्रप्रणेता ॥ ५३ ॥
सति महति सहाये न स्तुतिः सम्प्रणेतुः
कृतिरपि तु तदीया श्रेयसी कार्यकाले ।
शतिनमधनपुत्रं श्लाघमानोऽपि तातम्
भजति निजसहस्रे नूनमास्थां सहस्री ॥ ५४ ॥

पञ्चमाध्यायप्रथमाह्निके वेदान्तिनामिव स्वप्रकाशं चैतन्यं साधयति प्रथमाधिकरणेनापरमग्रिमाधिकरणैः स्वाभाविकं चैतन्यस्य वैचित्र्यं परिवर्तनञ्च मायां विनैव वर्णयति—

प्रथमाधिकरणम्—

चितो निषेधसंशीति विषयत्वं भवेन्न वा ?
सर्वत्र संशये सर्वाभावे वा संभवेदिदम् ॥ १ ॥
संशयो वा निषेधो वानुपलब्धो न सम्भवेत् ।
उपलब्धिस्वरूपायां सम्भवो नैतयोश्चितौ ॥ २ ॥

वार्तिकेऽपीदमेव—

चिदियं निषेधविषयो न भवेन्न च संशयस्य विषयः किल सा ।
उभयं चिदात्मकमिदं हि यतश्चिदतोऽक्षरात्मकतयाधिगता ॥ ४ ॥
यदि सर्वमस्ति चितिरस्ति तदाऽनुपलब्धिरस्ति विषयो हि कथम् ।
अथ नास्ति सर्वमुपलब्धिरियं न चितिर्निषेधविषयस्तु ततः ॥ ५ ॥

तृतीयाधिकरणेन सदातने वैचित्र्ये दर्शयति—

लुप्तेऽप्येकत्र वैचित्र्ये परेषामिह दर्शनात् ।
सृष्टेरनाद्यनन्तत्वाद् ब्रह्म वैचित्र्यवत्सदा ॥ २ ॥

वार्तिकम्—

समुदेति बुद्बुदतरङ्गनिभं सकलं स्वसाक्षिणि चिदम्बुनिधौ ।
प्रविलीयते पुनरिहैव यतः सकलात्मतास्फुटममुष्य यतः ॥ १२ ॥
समुदेतु वा विलयमेत्वपि वा परिणाम एक इह साक्षितनौ ।
परिणाममात्रविकलस्तु न सोऽविरतोर्मिकःकिल चिदम्बुनिधिः ॥ १४ ॥

चतुर्थाधिकरणे वैचित्र्यस्य पारमार्थिकत्वम्—

पारमार्थिकमेवेदं व्याघातरहितं यतः ।
विलोपाद्वस्त्वसन्नैव न मर्त्यत्वात्सुतो ह्यसन् ॥ २ ॥

मायाया भ्रमरूपत्वं पञ्चमाधिकरणे—

मायाऽनादिरनिर्वाच्या सतो व्यतिकरोऽथ वा ।
भ्रस्त्वनादिरनिर्वाच्या भिक्षवोऽपि तथाविदुः ॥ १ ॥
सतो व्यतिकरस्त्वेषा यस्या नामान्तरं भ्रमः ।
नासतो विद्यते भावो नाभावो विद्यते सतः ॥ २ ॥

असतो नाध्यास इति वार्तिकेन वक्ति २२-२३ वार्तिके—

सति कुत्रचिद् यदितरस्य सतः प्रतिपत्तिरिष्टमिदमध्यसनम् ।
असतस्तु नापि सति नैव सतोऽसति जातु चिद्भ्रम इह प्रथितः ॥ २२ ॥
न कदापि सद् यदि जगद् वदसि स्मृतिरप्यमुष्य कथमाविरभूत् ।
अनुभूतपूर्वविषयस्मरणं विषये परत्र तव चाध्यसनम् ॥ २३ ॥

ज्ञानिनां कर्माचरणविषये षष्ठमधिकरणम्—

ज्ञानेऽपि कर्मसातत्यमुच्छेदः कर्मणोऽपि वा ?
ज्ञाने कर्म न सम्भाव्यं भवत्येतदहन्तया ॥ १ ॥
ज्ञानेऽपि कर्मसातत्यं न्यायपूर्वन्तु तद् भवेत् ।
नाकर्म वासुदेवस्य जीवन्मुक्तस्य योगिनः ॥ २ ॥

तत्रत्यं वार्तिकम्—

तनये निजे सममतो जनको न परस्य पुत्रमुपलालयति ।
अथ स प्रशास्तृपदवीं तु भजन् स्वसुते परत्र च समो भवति ॥ २६ ॥
ज्ञतया तथैव समतां दधतः क्षतपक्षपातमखिलं चरतः ।
तनुरक्षणं भवति विज्ञतया सकलात्मनस्तनुमिमां विदतः ॥ २८ ॥

चेतना परमेश्वराभिन्ना प्रकृतिरिति सप्तमाधिकरणे—

प्रकृतिर्नियतैवेयं विनियम्या न केनचित् ।
सर्वाकारेश्वराभिन्नासावित्येव विनिश्चयः ॥ २ ॥

सपरिच्छिदा प्रकृतिरंशधिया निखिला तु न प्रमितिमर्हति सा ।
अपरिच्छिदा चितिमयी प्रकृतिर्न्नंदरात्मजस्य निखिलात्मसमा ॥ ३७ ॥
पुरुषस्य या प्रकृतितस्तु भिदा कपिलप्रमादलहरी ननु सा ।
विविनक्ति हन्त पुरुषं प्रकृतेर्न्न ततेर्मुनिर्विसुमरत्वमिव ॥ ३८ ॥

नैयायिकानां कालसम्बन्धित्वमिव सतो लक्षणं प्रथमाध्यायप्रथमाह्निकवार्तिके—

यत्कदाप्यस्ति तत्सर्वं सदित्येव विनिश्चयः ।
क्षणिकत्वं स्थिरत्वं वा सत्तायामप्रयोजकम् ॥ ३५ ॥

परिचयार्थं कानिचिद् भाष्यवाक्यानि समुद्धरामि—कानि पुनः परमार्थानुशासनस्य प्रयोजनानि ? संग्रहविवेकव्यवस्थोद्योगानाग्रहोदयाः प्रयोजनम् । संग्रहस्तावत् ऋषिर्ब्राह्मणं सूत्राणि व्याख्यानान्यनु चेति भारते शास्त्रक्रमः । तत्र विविधानि प्रायः परस्परविसंवादीनि विज्ञानानि । तानि समन्वयदर्शिभिर्याज्ञवल्क्यवासुदेववादरायणवैश्वानरप्रभृतिभिः पुनः पुनः परीक्ष्य जनेषु प्रख्यापितानि प्रमत्तैर्व्याख्यातृभिस्तु मुहुर्मुहुर्विप्लावितानि, तानि संग्रहान्तरमपेक्षन्ते कालवशात् विज्ञानतत्त्वानि च नवाविष्कृतानि सुबहूनि असंगृहीतान्यस्मदीयैरद्यापि तान्यपि संग्रहं प्रतीक्षन्ते । स संग्रहोऽत्र सूत्रकृता विहितः । ऋष्यादिविस्तरे दुर्व्याख्यानगहनेऽभिनवे च व्यतिकीर्णे विज्ञानप्रपञ्चे तत्त्वसंग्रहो दुष्करः । अत्र पुनः सुखेन तत्त्वसंग्रहो भविष्यति । तस्मात्संग्रहार्थमध्येयं परमार्थानुशासनम् ।

एवमेव विवेकव्यवस्थाप्रभृतीनां पञ्चानां व्याख्यानं विधाय पुनराह—इमानि खलु भूयः परमार्थानुशासनस्य प्रयोजनानि । इयं मित्रम्, अहं

मनुः, स्थाणुरयम्। उत त्वं सख्ये। कलिः शयानः, हिरण्यमयेन, असूर्या-नाम, धर्मार्थौ, पुराणमिति, या शिल्पशास्त्रादि प्रतारकारणम्। इदं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः, एकं सद् बहु वैचित्र्यं विजानन्तो विप्राः स्यामेत्यध्येयं परमार्थानुशासनम्। इदं मित्रम् इत्यादिभाष्यलक्षणलक्षितमं महाभाष्यमनुहरति भाष्यम्।

इत्थञ्चात्र चिन्तयामि—बालकस्य स्तन्यपाने प्रवृत्तिं प्रति पित्रोर-भ्यासं शरीराकृतिमिव हेतुं निर्देशयति, तत्र आकृतयः परम्परया भूतनिष्पन्ना-स्तत्र जनकयोः कारणत्वं युक्तं किन्तु बुभुक्षावशादिष्टसाधनताज्ञान-जन्या प्रवृत्तिस्तु चेतनस्य कथं नाम भौतिकी संभवेत्? न च भूतनिष्पन्नं चार्वाकस्यैव चैतन्यं नित्यचैतन्याङ्गीकारात्, कथमन्यथा पितृभ्यामभ्यस्ता अन्ये विषयाः न स्फुरेयुः? अन्येषान्तु परलोकमङ्गीकुर्वाणानां कार्यानुमेय-वैचित्र्यम् अदृष्टमेव नियामकम्, अनुभवस्मरणे हि चैतन्यं विना न संभवतः।

जन्मान्तरानभ्युपगमोऽपि न सम्यक् प्रतिभाति, अन्येऽपि दार्शनिकाः शरीरविनाशेऽपि जन्मान्तरं स्वीकुर्वन्ति, तथा अत्रापि कथन्न स्यात्। यस्तु नित्यचेतनः काययष्टिनालिकायां प्रविष्टो जीवतामापन्नस्तादृश-नालिकायां विशीर्यन्त्यामपि स्वयमविनश्यन् कथन्न शरीरान्तरग्रहणं जन्मान्तरमनुभवति? विनाशं यन्ती काययष्टिर्न जीवः किन्तु तदुपाधि-कश्चेतनः, न च उपधेयो विनश्यति, नैयायिकानामात्मनि अदृष्टमिव इदमपि दर्शनं चेतने वैचित्र्यमनुभवति, न्यायस्य नित्यं परमाणु मनः इव सांख्यस्य बुद्धिरिव च शरीरान्तरमनुसरत् किमपि नाङ्गीकरोतीति प्रति-भाति, स्फुटन्तु सम्पूर्णभाष्यपर्यालोचनया सेत्स्यति। प्रायो वैदेशिकदर्श-नानि शरीरावयवमेव शरीरसमानयोगक्षेमं मस्तिष्कशब्दवाच्यमुररी-कुर्वन्ति तत एव सर्वं व्यवहारमुपपादयन्ति। परं नित्यं चैतन्यं किमपि न स्पृशन्ति, इदन्तु दर्शनं तादृशं चैतन्यमङ्गीकुर्वत् न तादृङ्मस्तिष्केण सर्वं व्यवहारमुपपादयेत्, मस्तिष्कस्य प्रायो जडप्रकाशतामेव मन्वीत। मनुते चेत् तादृगेव स्थवीयः स्यात्। तथाहि न विश्वसितु नाम जन्ममरणपरम्परया शरीरान्तरसम्पर्कं परन्तु बालयौवनस्थविरभावेषु स्फुटः शरीरभेदः परिमाण-गुरुत्वादिभिः स्फुटं भेदात्, तदेवेदं शरीरमिति प्रत्यभिज्ञया प्रत्यक्षबाधप्रति-हतया शरीराभेदप्रतिज्ञानं न दार्शनिकस्य स्यात्। बालावस्थायामविद्यमानैः

पश्चाज्जातैः खाद्यपदार्थैर्युवस्थविरशरीरयोर्जायमानत्वात्, कारणभेदे च कार्यभेदस्य अवश्यं पातात्। कौमारस्यापि काचिदाकृतिरनुवृत्ता प्रतिभाति चेत् भिन्नाऽपि प्रतिभाति, कारणान्तरजन्यत्वात्पूर्वप्रतिभानस्य भ्रमत्वं कल्प्यताम्; केचन कौमारशरीरस्यापि सूक्ष्मा अवयवविशेषा उत्तरशरीरेषु कारणमिति चेदस्तु तथापि तेन किं स्यात्? न बालशरीरमेव स्थविर-शरीरम्, शरीरस्य भेदे मस्तिष्कस्यापि भेदः, कथमन्यथा युवमस्तिष्कं बालापेक्षया अधिकग्राहि? ननु आरम्भवादे वृद्ध्यपचयाभ्यां वस्तुभेदः, परिणामवादे तु गुणादीनामेव परिवर्तनमितिवाच्यम्। नैतत्सारम् गुणा अपि कारणानि ये बालमस्तिष्के गुणा न ते युवमस्तिष्के, तथा बाल्येऽधीतस्य यौवने स्मरणं न स्यात्। न सम्भवः शरीरभेदे शरीरावयवस्य मस्तिष्कस्याभेद इति। अभेदे वा विभिन्नकार्यकारित्वस्यानुपपत्तिः, तथा च स्थिरं शरीरतदवयवभिन्नं चेतनं विना नैहिकमपि कार्यं संभवतीति तादृशाभ्युपगमे जन्मान्तराभ्युपगमे न बाधः।

सृष्टेरनाद्यानन्तत्वादेकवैचित्र्यस्य विरामेऽपि वैचित्र्यान्तरस्योदयात् विचित्रमेव विभु भूमेति अन्येऽपि स्वीकुर्वन्ति, वेदान्तिनो मायावैचित्र्य-वशात्। सांख्या अविवेकात्, प्रकृतिवैचित्र्यात्, प्रत्यभिज्ञायां विमर्शपदार्थ-वैचित्र्यवशात्। नैयायिका गुणपरिवर्तनं प्रतिपादयन्ति। गुणगुणिनो-र्भेदात् नित्यत्वं परिरक्षन्ति। अत्र स्वाभाविकं वैचित्र्यमभ्युपगम्यत इति विशेषः तत्रापि क्रमिकमनन्तवैचित्र्यं तथापि तस्य कथं नित्यत्वमिति न प्रतिभाति। तथाहि—वैचित्र्यं वैचित्र्यवतो भिन्नमभिन्नं वा?; प्रथमे वैचित्र्यस्य कारणं वैचित्र्यवानेव तद्भिन्नं सहकारि वा? नाद्यः समेषां वैचित्र्याणां युगपदुत्पादप्रसङ्गात् समर्थस्य क्षेपायोगात्, द्वितीये चेतन-भिन्नप्रकृतिसिद्ध्या सांख्यमतखण्डनासम्भवात्। प्रथमविकल्पद्वितीये अनेकात्मकस्यैकत्वायोगात्।

यद्यपि कालिदासः कविः 'त्वामेव प्रकृतिमाहुः पुरुषार्थप्रवर्तनीम्। तद् दर्शिनमुदासीनं त्वामेव पुरुषं विदुः' इत्यादिना प्रकृतिपुरुषयोरैक्यं वर्णयति तथापि तद् दर्शिनमित्यादिना दृग्दृश्यत्वेन विवेकं प्रदर्शयति एव। अविवेकादेव द्वयोरद्वैतं दर्शयति। दृश्यं जडमितिव्याप्तेरव्यभिचाराद् दृश्य-भिन्नद्रष्टुः सिद्धेः कपिलमतमपि सम्यगेवास्ति। अत एव विस्मरत्वयोरंशांशि-भावः, अतस्तयोर्न विवेकः। जडा दृश्या च प्रकृतिर्न द्रष्टुरपरिणामिनः कूटस्थस्यांश इति तयोः कथं न विवेकः?।

सद्वस्तुन एव कुत्रचित् सदन्तरेऽध्यासः, असतः स्मृतिरेव कथं समुदेत् ? इति अस्य मतम् । अध्यस्तस्य मिथ्यात्वमेव, अधिष्ठानस्य तु अधिष्ठेयापेक्षाया सत्यत्वमिति वेदान्तग्रन्थेषु सयुक्ति समुपपादितमस्ति, तेषां समन्वयः खण्डनम् उपेक्षा वेति भाष्यावलोकनं विना न निर्णेतुं शक्यत इति विरम्यत एव तादृशविवेचनायाः ।



दारागंज. प्रयाग. संस्कृत साहित्य परिषत् प्रकाशित संस्कृत त्रैमासिक संगमनी पत्रिका द्वितीय वर्ष प्रथम अङ्क श्रावण २०२३ वैक्रमवत्सर प्रकाशित ।

## 'दर्शनेऽभिनवचिन्तनं परमार्थदर्शनम्' की हिन्दी

अनेक प्रकार की भाषाओं में अभ्यस्त अनेक बड़े-बड़े शास्त्रों के पारदर्शी कविताकामिनी के सुन्दर नायक तार्किक कठिन विचार की चतुराई रूपी छुरी से पाण्डित्यपट का निर्माता विभिन्न विषयों पर सरस सरल संस्कृतवाणी से कौतुकवश अनेक प्रकार के मौलिक निबन्धों के रचयिता परतन्त्र भारत में विचार में स्वतन्त्र प्राचीन आचार्यों में श्रद्धालु भी दोष देखने वाले, मूल को खोजने वाले उदारचित्त वाले मर्म को पकड़ने वाले, वक्ताओं की विशेषता की उपेक्षा करने वाले दूध और पानी को अलग करने वाला शास्त्र सरोवर के हंस, निष्कारण संस्कृतभाषा के समुपासक स्वर्गीय पण्डित श्रीरामावतारशर्मा ने इस विशवीं शताब्दी के पूर्वार्ध में ही नये इस अनुपम सुन्दर दर्शनीय परमार्थदर्शन को देववाणी के पदों में फैला दिया ।

संस्कृत की सेवा किये हुए ये भूदेव अद्वितीय सुरभाषा के समुपासक हैं, ऐसा कहना किसी के कोप के लिये अथवा प्राचीनों पर आक्षेप के लिये न हो किन्तु सर्वथा सत्य है इसलिये है, पाठक ? देखें, प्राचीन आचार्यों के पास शास्त्र प्रसार के लिये

अथवा धन या यश पाने के लिये केवल संस्कृतवाणी शरण थी, अंग्रेजी भाषा के ऐसी प्रजा और राजाओं के प्रिय धन और यश से मुग्ध करने वाली कोई भाषा नही थी। जहां उनकी लेखनी विहार करे, बीशवीं शताब्दी में तो रानी के ऐसे विद्वानों के मन को मोहने वाली पूर्वी, पश्चिमी बाजारों की गलिओं में घूमती हुई अंग्रेजी भाषा ऐसा नृत्य दिखाई जिससे उस पर मुग्ध भारतीय विद्वान् भी विदेशीय भाषा के बाजारों में माता के ऐसा सुरभाषा को उसके हृदयों के ऐसे संस्कृतशास्त्र के विषयों को निर्दयता पूर्वक बेच कर धनी यशस्वी और मनस्वी हो गये तथा होते हैं, उसी समय धन्य उदार ये महाविद्वान् विदेशीय भाषाओं के परिसरो में विहार करने में प्रवीण भी देववाणी की भक्ति में संयत अर्थों के उपार्जन का विरोधी होते हुए देश में विदेश में भी जहां कहीं बिखरे हुए अच्छे विषयों के संग्रह का हठ किये हुए भारत के हृदयरूपी शास्त्रों को विदेशीय भाषा के लिये नहीं बेचें, और क्या सभी प्रकार के ज्ञान रसों से संस्कृतवाणी को ही नहवाये, इस प्रकार कौन दूसरा इनकी संस्कृत समुपासना की बराबरी कर सकता है ? इस महापुरुष के काव्यनाटक आदि का क्रमशः प्रकाशन दरभङ्गा संस्कृत-विद्यापीठ से शुरु हुआ है, संस्कृत प्रेमीओं के मनःप्रसाद को लायेगा।

परमार्थदर्शन ग्रन्थ तो दर्शनविषयों का बड़ा आकार है, जिसमें चार सौ छीयालीस सूत्रों ४४६ की रचना की कला सूत्र बनाने वाले ऋषिओं का स्मरण कराती है, इनका प्राञ्जल भाष्य तो भाष्य शैली से मानो पतञ्जलि का महाभाष्य ही हो, यद्यपि अमुद्रित इस पुस्तक के बहुत थोड़े ही अंश देखे गये, उनने से भी अच्छो शैलीओं के अनुकरण की इनकी बहुत बड़ी कला प्रत्यक्ष हुई, उसमें भी दार्शनिक पदार्थों के मार्ग पर फैलती हुई भी इनकी संस्कृतवाणी इनको योग्य सदृश शब्दों का समुद्र सिद्ध करती है, अनेक पर्यायों के होने पर भी इस पद के रहने पर इसी पद का सन्नियान सुन्दर होगा इसको संस्कृत के समुपासक लोग वाचस्पति के वाचस्पत्य ग्रन्थ के ऐसा इसका प्रकाशन होने पर देख सके, किन्तु संस्कृत भाषा के दुर्निवार इस दुर्दिन में इसके प्रकाशन का शुभ अवसर कब आयेगा ?।

श्लोकवार्तिक के अनुसार पद्य बद्ध आठ सौ छबीस ८२६ वार्तिकों की रचना इनमें कुमारिल भट्टपना को प्रकाशित करती है, सुन्दर शैली से श्लोक बद्ध १२० एक सौ बीस अधिकरणों का निर्माण जैमिनीय न्यायमाला का अनुसरण करता है, ऐतिह-

सिक लोग सूत्र-भाष्य-वार्तिकों का क्रमिक विकाश के अनुसार समय का निरूपण करते हैं; किन्तु इस परमार्थ दर्शन पुस्तक में एक ही साथ सभी का सर्जन सभी प्रकार के पाण्डित्य की घोषणा करता है।

इनमें वार्तिक सहित अधिकरण न्यायमाला उन्नीस सौ तेरह ई० में १९१३ ई० काशी के महामण्डल प्रेस से किसी प्रकार प्रकाशित हो पाई है।

समाप्ति का यह पद्य है—'राम से सुन्दर जोड़ाई वाले पुल या क्यारी के ऐसा यह छोटी सुन्दर रचनावली रत्नमाला बनाई गई है।

वार्तिक का दो प्रकार का सम्प्रदाय है, कोई वार्तिक भाष्य का व्याख्यान होता है, दूसरा सूत्रों का व्याख्यान करनेवाले वार्तिक का भाष्य व्याख्यान करता है, यहाँ तीसरा ही प्रकार है, यह वार्तिक स्वतन्त्र है किसी का व्याख्यान नहीं है, भाष्य का सारांश सुन्दर सरल पद्यों से उद्धृत किया गया है, ऐसे स्वतन्त्र ग्रन्थ का विशेष प्राचीन शैली से निर्माण करीब बारह सौ वर्ष के बाद बहुत विलम्ब से हुआ इसलिये नया यह मक्खनरूप किस संस्कृत भाषा प्रणयी सहृदय के तोष के लिये न होगा?। यद्यपि जीव का विनाश जन्मान्तर न मानना करीब-करीब नास्तिकता है, तो भी वह भी दर्शनीय और खण्डन योग्य होने से संस्कृत विद्वानों का अपेक्षित है, दूसरी जगह कहाँ मिले?, पटना विश्वविद्यालय दर्शनविभाग के अध्यक्ष पं० श्रीहरिमोहनझा जी इसमें विदेशीय हेंगल दर्शन का प्रभाव कहते हैं, तब तो अवश्य ही यह दर्शनीय है, अन्यथा सरस संस्कृत बाजार में सजाये गये बहुमूल्य दार्शनिक विदेशीय वस्तुओं को कहाँ पायेंगे?, और ऐसी भाषा की उत्सुकता से तथा विषयलोभ से यह संस्कृत रत्न असाधारण है, चार्वाकदर्शन की पूर्ति ही पहले चतुर्थ अध्याय द्वितीय आह्निक सप्तम अधिकरण में पाठक देखें—

'बालकों में स्तन को चूसने की शक्ति आदि पिता से इस जन्म में ही आई है या दूसरे जन्मों के अभ्यास से है?' यह संशय है। 'विद्वानों ने स्पष्ट कहा है कि यह दूसरे जन्मों के अभ्यास से हुआ है।' यह पूर्वपक्ष है॥ १॥ 'पिता की मनुष्य आदि आकृति बालक में आती है जैसे वैसे स्तन पान की शक्ति भी पिता से आई है यही ठीक है, उसके लिये जीव की जन्मान्तर की कल्पनायें व्यर्थ हैं।' यह सिद्धान्त है॥ २॥

शरीर आदि अनित्य आत्मवाद में बालक की स्तन्यपान में प्रवृत्ति नहीं होगी ऐसा ग्रन्थकारों से कहा जाता है, उस पर इनकी यह कल्पना है, इसका भी खण्डन है यह तो दूसरी बात है, ये चार्वाक के पक्षपाती नहीं हैं, प्रामाण्य निरूपण में चार्वाक का खण्डन किये हैं, नास्तिक ही भी नहीं कहा जा सकता, नित्य विभु चैतन्य स्वीकार करते हैं, वेदनिन्दक कभी नहीं विना हेतु के विधि में स्वतः प्रामाण्यवादी हैं।

इसके बाद सृष्टि प्रक्रिया द्वितीय अध्याय के दूसरे आह्निक में देखना चाहिये। मूल उपनिषद् की सृष्टि प्रक्रिया आधुनिक वैज्ञानिक प्रक्रिया के अनुकूल ही है, वह जो पानियों का शर था वह संघात हुआ, वह पृथिवी हो गई, इस उपनिषद् के शरशब्द के अर्थ का विवरण करते हुए चतुर्थ अधिकरण को कहते हैं—

'उपनिषद् और वैज्ञानिक सृष्टि प्रक्रिया में भेद है या समन्वय है' यह संशय है, 'आकाश आदि भूतों में भेद होने से सृष्टि प्रक्रिया में भी भेद है' यह पूर्वपक्ष हुआ ॥१॥ 'मूल प्रकृति में कुछ न कुछ परिवर्तन रूप वैचित्र्य हमेशा रहता है, किन्तु तत्वों की अभिव्यक्ति में क्रम है, उसमें भी प्राचीन उपनिषदों का वैज्ञानिकों के साथ समन्वय है,' यह सिद्धान्त है, ॥ २ ॥

## वार्तिक

'उस अण्डाकार शर के किनारे के कुछ झरने पर सूर्य प्रगट हुआ, वही सृष्टि का केन्द्र बन गया, उससे क्रमशः आकाश आंगन में ग्रह उपग्रहों के समुदाय की सृष्टि हुई,' ॥ ११ ॥

'इस प्रकार सूर्य से ग्रहों के निकलने के क्रम में किसी समय पृथिवी रूप ग्रह भी निकला; वह पृथिवी ग्रह बहुत गरम वाष्प का पिण्ड था, बहुत समय तक चञ्चल घूमता हुआ लटका रहा,' ॥ १२ ॥ 'उसमें वायु के मिलने से उस वाष्प-वायुमय तेज से धीरे २ गर्मी निकलने लगी, तथा वाष्प पानी बनने लगा, पानी के प्रवाह से धीरी हुई यह पृथिवी हो गई' ॥ १३ ॥ 'उस पानी के शर को गाढ़ा होने तथा पत्थर होने पर सागर और पर्वतों से प्रगट नीचे ऊंचे भागेवाली पृथिवी कामिनी के ऐसा शोभने लगी' ॥ १४ ॥ 'सूर्य केन्द्र से कुछ तेज अङ्गार टुकड़े होकर गिरे, वे पानी के संघातों से घेरे गये, पत्थर के ऐसे कड़े रहे, उनमें बढ़ना-घटना होने लगा, क्रमशः कुछ आकार

भी हो गये, वे सब जीव समूह हो गये, उससे अभिव्याप्त पृथिवी हो गई' ॥ १७ ॥ 'जो लोग उपनिषद् की सृष्टि प्रक्रिया को निर्मूल कहते हैं, अथवा जो लोग स्रष्टा की मनुष्य रूपता आदि की कल्पना करते हैं, वे लोग अच्छे समझदार नहीं हैं यथा वैसे दोनों का यहाँ खण्डन किया गया है' ॥ १९ ॥

शरशब्द का अर्थ है, वही ब्रह्मा स्वयम्भू हैं ऐसा तृतीय अधिकरण वार्तिक है—

'वैसे पानी से बने हुए गरम वाष्प समूह से किसी कारणवश सारभूत अण्ड प्रकट हुआ, उसको विद्वान् लोग ब्राह्म अण्ड ब्रह्माण्ड कहते हैं, उसमें बहुत प्रकाश तेज होने से उसको हिरण्मय कहने लगे,' ॥ ७ ॥ 'कुछ समय जाने पर वह भी फूटा, उसके अन्दर सूर्य प्रकट हुए उसके भी किनारे झरे, उससे आकाश आङ्गन में ग्रह उपग्रह आदि पैदा हुए' ॥ ८ ॥ 'इस प्रकार विभक्त अराड से प्रकट यह सूर्य चारो तरफ फैलने वाले किरणों से युक्त है, और सौर जगत् की सृष्टि करता है इसलिये विश्वसृट कहा जाता है, स्वयं होने से स्वभू या स्वयंभू प्रसिद्ध हुवा' ॥ ९ ॥

पाखण्डमत का खण्डन इस दर्शन का प्रधान उद्देश्य है, उसका प्रथम अध्याय प्रथम आह्निक में वार्तिकों से वर्णन करते हैं,—जो प्रत्यक्ष उपलब्धि से तथा अनुमान से सिद्ध पदार्थ से व्याघात वाला है, वह मिथ्या है, उसका अनुसरण अच्छा नहीं है' ॥६२॥ 'किसी से नगर की दिशा या मार्ग पूछने पर वह कहता है कि चलो दिखाता हूँ, तब जाते हुए उसके पीछे चला जाता है, यदि वह वैसा कहकर भी नदी में घुसने लगता है तब बालक उसके पीछे नदी में नहीं घूसता' ॥ ६३ ॥ 'कोई पण्डित कहता है कि चलो व्याकरण पढ़ाता हूँ, और कहकर पढ़ाता है तो उसका अनुसरण किया जाता है, यदि कोई कहता है कि चलो एक मन्त्र और उसकी सिद्धि का विधान बतादूँ, सिद्धि हो जाने पर व्याकरण स्वयं सब आ जायेगा, इस प्रकार कहने पर उसका अनुसरण नहीं किया जाता, किन्तु उपेक्षा की जाती है' ॥ ६४ ॥ 'शास्त्रों के अभ्यास से, कारीगरी से, और दूसरे उद्योगों से जैसी वास्तविक सिद्धि मिलती है वैसी सिद्धि सिद्ध मूर्खों से नहीं मिलती' ॥ ६७ ॥

'ब्रह्म का उपदेश करनेवाले ब्राह्मण मूर्खों के सम्मान से घृणा करते हुए शिल्प-शास्त्र-कला-उद्योगों से बड़ी सिद्धि का व्याख्यान करते हैं' ॥ ७० ॥ 'शब्दों का प्रामाण्य

सिद्ध वस्तुओं में और विधिभिन्न में नहीं होता इसको नहीं जानता हुआ ही वार'वार मोह में पड़ता है' ॥ ७८ ॥ 'हे बच्चों ? फलों को लाओ, वेद को पढ़ो, इत्यादि विधि हैं, यह प्रमाण है, ऐसी पिता आदि की आज्ञा को 'क्यों-किसलिये' इत्यादि कारणों की अपेक्षा विना जल्दी पालन की जाती है, उन कामों को कर दिया जाता है' ॥ ८० ॥

कारण या फल की अपेक्षा वाली भक्ति की निन्दा दूसरा अध्याय प्रथम आह्निक दूसरे अधिकरण में है । 'भक्ति का कारण पितृत्व मातृत्व आदि है, बाहरी धनसम्पत्ति या सजाय आदि का निवारण भक्ति के कारण नहीं हैं, जो बाहरी फल की अपेक्षा करके सेवता है वह बनीओं का व्यापार है । 'राजा माता पिता गुरु दूसरे उत्तम पुरुषों में कोई अद्भुत केवल मन से मालूम होने वाला केवल मनुष्यों में रहने वाला विशेष वस्तु यहां भक्ति का कारण कहा जाता है, ॥ ६ ॥ 'जो सिद्धधूर्त झूठे उपदेशों से बहुतों को ठग रहे हैं उनका भक्त न होय, इनकी भक्ति से अपने जनों को दुःखी करता हुआ विपत्तिरूप नरक में अवश्य गिरता है' ॥ ७ ॥ 'यह बालक अभी बड़ा कष्ट देता है, पीछे क्या करेगा ? इत्यादि पहले होने वाली आशङ्काओं को हटाकर विना फल की अपेक्षा से जो माता पिता बालक को पोपते हैं, उन माता-पिता की परिश्रम के साथ विना बाहरी कारणों के उचीं सेवा करता हुआ लड़का उनसे ऋण-मुक्त होता है' ॥१०॥ 'जैसे मेरे पूर्वज पत्नीयां अरूप अज्ञानी जड़ अन्ध और उद्धत पति की सेवा करती हैं, और सन्तान वर्ग अरूप अज्ञानी जड़ अन्ध और उद्धत पिता की सेवा करते हैं, वैसे ही हम लोग अपने पूर्वज हैं इसलिये प्राचीनों को नमस्कार करते हैं' ॥ १७ ॥ जैसे सावधान शल्यचिकित्सक भक्त गुरु या पिता माता के कष्ट दायी घावों को निःसंकोच चीर दे, वैसे गुण दोषों का परीक्षक भी भक्त प्राचीनों के दोषों को अवश्य हटायेगा' ॥ १८ ॥ 'जैसे मेरे पितर लोग उद्योग करते हुए सभासद रहे, अपने समय के विद्वानों में अग्रगण्य रहें, वैसे ही हम लोग प्रयास से अपने वर्ग को वैज्ञानिकों में अग्रसर करें' ॥२०॥

कर्म सन्यास को नहीं पसन्द करते, कर्म करने के लिये बहुत प्रोत्साहित करते हैं, चौथा अध्याय दूसरा आह्निक बारहवें अधिकरण में वार्तिक—

'सज्जनों को स्वर्ग आदि की चिन्ता से रहित होकर इस प्रकार संसार के कल्याण के लिये विज्ञान दृष्टि से ज्ञान और भक्ति द्वारा शुद्ध चित्त होकर हमेशा अच्छा

कर्म करना चाहिये' ॥ ८४ ॥ 'यह जन मेरा है वह दूसरा है ऐसा स्वार्थ समझकर जो काम करता है, वह भ्रम से आनन्दमय भूमपरमात्मा को छोड़कर थोड़े में प्रवेश करके बन्ध को पाता है' ॥ ६६ ॥ 'यह शरीर नाम का अनित्यलोक आनन्दमय भूम-नाम वाले परलोक का अंश है ऐसा समझता हुआ महात्मा जीते हुए मुक्त है, और सबका कल्याण करता है, ॥ ६७ ॥ 'यह शरीर धर्म' अर्थ और सुख का पहला साधन है, यह मेरा ही है दूसरे का नहीं है ऐसी ममता इस पर नहीं करनी चाहिये, बुद्धिमान् मनुष्य इसलिये सकल आत्माओं के धन इस शरीर को स्वच्छन्द कर्मपरित्याग से कैसे नष्ट करें' ॥ ७० ॥

दूसरे कारणों की विना अपेक्षा किये विधि शब्द प्रमाण है, इस पर पहला अध्याय पहला आह्निक चौथा अधिकरण है। 'उपपत्ति की अपेक्षा न होने से मनुष्यों को विधि का स्वतःप्रामाण्य स्वीकार करना चाहिये। अर्थवाद के प्रामाण्य में दूसरी युक्तियों की अपेक्षा रहती है इसलिये उसकी परीक्षा करनी चाहिये ॥ २ ॥ वार्तिक—

प्रकृति चेतन और अचेतन भी है, क्योंकि सृष्टि रूप कार्य द्वारा प्रकृति में दोनों देखे गये हैं, उस प्रकृति से भिन्न कोई सर्वज्ञ या सर्व शक्तिमान् नहीं मालूम पड़ता' ।७२। क्योंकि प्रकृति स्वयं नियत देखी गई है, यह किसी से नियम्य नहीं है, इसलिये प्रकृति से भिन्न प्रकृति का नियम करने वाला कोई नहीं है' ॥ ७६ ॥

चौथे अध्याय दूसरे आह्निक के तीसरे अधिकरण में स्वर्ग आदि के गमन का खण्डन—वार्तिक 'अनेक प्रकार के बहुतधार्मिक सम्प्रदाय हैं, अपने सम्प्रदाय के अनुसार स्वर्ग का अधिकारी सभी बनते हैं, सम्प्रदायों के धर्मों में परस्पर भेद भी है, सभी दूसरे सम्प्रदाय के धर्मों का नरक फल मानते हैं, तो ऐसे अर्थवादों में किस मनुष्य का वचन प्रमाण होगा' ॥ १६ ॥ स्वर्ग आदि के अभाव में भी विना कारण के धर्म सेवियों को अपने गृहीत धर्मों का त्याग नहीं करना चाहिये। इसीलिये बिजली में प्रवेश के लिये अथवा सुराङ्गनाओं के आश्लेप के लिये जो इस लोक में वैराग्य पावे वह अज्ञानी' है ॥ १७ ॥

वहीं पर चौथे अधिकरण में जीव का स्वरूप और उसका विनाश वर्णित है, वार्तिक 'सभी आत्म स्वरूप ब्रह्म में यह शरीर दण्ड अपरिमित आकाश में नल के ऐसा

है, नल में सुई के प्रवेश के ऐसा और ध्वनिशक्ति के ऐसा इस शरीर दण्ड में उसके अनुसार ही जीवशक्ति शोभ रही है ॥ १८ ॥

'आकाश के ऐसा सभी जगह रहने वाला स्थिर ब्रह्म एक देह से दूसरे देह में कैसे जाय ? नल के ऐसा यह शरीर तो अवश्य नष्ट हो जाता है, उसका गमन नहीं होता' ॥ १९ ॥ 'मरते समय पुंज से पैदा होने वाला जीव पुञ्ज नष्ट होने पर जीव कहां हो ? नष्ट ही हो जाय, नल का नाश हो जाने पर उसका शब्द दूसरे नल में नहीं जाता' ॥ २० ॥

सभी धूम के ज्ञान के विना वह्नि की व्याप्ति का ज्ञान न होगा, इस चार्वाक के पूर्वपक्ष का ( एक नोह काटने की नोहरनी के ज्ञात होने से सभी काला लोहा ज्ञात होता है ) इत्यादि वेदान्त वाक्य के द्वारा उत्तर कहते हैं—'सभी धूमों का ज्ञान होने पर व्याप्ति ज्ञान होगा अन्यथा नहीं, यह चार्वाक की कल्पना स्पष्ट विरुद्ध है ॥ ८१ ॥ 'एक नख काटने वाली के ज्ञान से मनुष्यों को सभी काला लोहा ज्ञात हो जाता है, ऐसा सभी जगह हो सकता है, ऐसा आरुणि भी देखते हैं' ॥ ८२ ॥ १।२।७ ॥

स्वर्ग आदि के विषय में ४।२।८। अधिकरण में वार्तिक 'इसलिये यह सुमेरु के उपर देवताओं के पर्वत पर समुद्र के प्रवाह में अथवा पृथिवी के भीतर स्वर्ग और नरक आदि की कल्पना सोने के पर्वत के ऐसा है' ॥ ४७ ॥ 'मूर्खों को पाप से डराने के लिये धर्म में प्रवृत्ति के लिये इनको सत्य कहा जाता है ऐसा कुछ लोग कहते हैं, इस झूठी उक्ति का आपात सुन्दर फल है, इसको याद करते हुए इसको नहीं पसन्द करते ॥४८॥ प्रमाण विषय पर १।१।२। अधिकरण में 'प्रमाण है या नहीं ? यह संशय हुआ, सभी का विनाश है तो प्रमाण का भी विनाश है, प्रमाण न होने पर भी परिणाम में भी तीनों प्रमाणों के विषय अर्थ हैं' ॥ १ ॥ यह पूर्वपक्ष हुआ 'प्रत्यक्ष अनुमान तथा आप्त का उपदेश ये तीन प्रमाण हैं ही, और ये परस्पर सहकारी हैं' ॥ २ ॥ यह सिद्धान्त हुआ। वार्तिक = 'जो प्रत्यक्ष अथवा अनुमान से विरुद्ध अर्थ है वह मिथ्या है परमार्थ नहीं है, परमार्थ का अनुसरण करने वालों से वह त्याज्य है' ॥ २० ॥ 'प्रत्यक्ष और अनुमान में भी कभी बाध संभव है, इसलिये विधि वाला आप्त का उपदेश शब्द प्रमाण मानना है, जिसमें विधि नहीं है, और उसका अर्थ प्रत्यक्ष या अनुमान से विरुद्ध है, वैसा शब्द

प्रमाण होने योग्य नहीं हैं' ॥ २१ ॥ 'पैर से चलते हुए का कहीं स्खलन संभव है इसलिये जो उन्मत्त नहीं है वह नाक से चलने के लिये प्रवृत्त नहीं होता, उसी प्रकार प्रत्यक्ष और अनुमान से व्यवहार में बाध संभव होने पर सभी शब्द प्रमाण नहीं हो सकते' ॥ २२ ॥ 'जीते हुए पिता आदि की आज्ञा का जैसे पुत्र आदि पालन करते हैं वैसे ही उनकी आज्ञा होने से उनके मरने पर भी श्राद्ध तर्पण आदि करना चाहिये, उनकी तृप्ति को उद्देश्य करके नहीं' । २५ ॥ इस प्रकार श्राद्ध स्वीकार करते हैं। इस दर्शन का मूल आधार के विषय में सूत्र-वेद-उपनिषद्-वासुदेव वादरायण-वैश्वानर-इस अनुशासन के पूर्ववर्ती आधार हैं, ७।२।३४। सूत्र प्रमादी व्याख्याताओं से विफल किये जगत् में आदतों को हटाना इस अनुशासन का परम प्रयोजन है' ।६।२।३६। अधिकरण—'इस दर्शन के तत्त्व पहले के विद्वानों से ज्ञात हैं या नहीं ? यह संशय हुआ, इसकी भिन्न गति मिलती है इसलिये नहीं ही ज्ञात हैं' ? यह पूर्वपक्ष है, बहुत पुराने ऋषि आदि से जरूर ज्ञात हैं, उनका संग्रह किया गया है, यही नया स्फुट है' यह सिद्धान्त हुआ ॥ २ ॥

## वार्तिक

'वेद उपनिषद वासुदेव भगवान् वादरायण स्वच्छमति आर्य वल्लभ ये सभी पुराने प्रकट परमार्थ के द्रष्टा हैं,' ॥ ४४ ॥ 'वे लोग जो अलग-अलग उपदेश दिये हैं, और जो पितृपाद और गुरुओं से अलग-अलग कहा गया था, उन सभी की परीक्षा करके अपने संतोष के लिये नये इस अनुशासन को बनाया है' ॥ ४५ ॥ 'पूर्वजों के उपदेश मन्त्रों को आधार बनाकर बनाया हुआ यह समाम्नाय उदय पा रहा है, जनों से लेकर संसाररूप भूमा आत्मा में अर्पित किया गया है, जिन आत्माओं का तेज समुदाय वह भूमा है' ॥ ४६ ॥ 'खेद है कि कुछ विरुद्ध अर्थ ऋषि आदि के नाम से भी जो जनता में प्रसिद्ध हो गया है उसको तुरंत अपने चित्त से हटाकर बुद्धिमान् परमार्थ का भक्त पिता आदि पुराने से जो किया गया है उसको अच्छी तरह बढाता है' ॥ ४९ ॥ 'कपिल मुनि के समय में ब्रह्मसूत्र नहीं थे, ब्रह्मसूत्र को बनाने वाले कपिल सूत्रों से कपिल मुनि के मत को देखें, कपिल का कोई सहायक नहीं था, ब्रह्म सूत्रकार का कपिल सूत्र सहायक रहा, ब्रह्म सूत्रकार से कपिलमत में दोष देने पर भी असहाय कपिल मुनि

प्रशंसनीय हैं, उतने ससहाय ब्रह्म सूत्रकार प्रशास्य नही हैं' ॥ ५३ ॥ 'बड़ा सहायक रहने पर उसकी सहायता से अच्छे रचयिता की उतनी प्रशंसा नहीं है, नई रचना के पहले पुरानी असहाय रचना अपने समय में काम आती थी, बहुत श्रेष्ठ थी, सौ रूपैया मात्र मूल धन वाले सहायक पुत्र से रहित असहाय पिता की प्रशंसा करता हुआ भी हजार धनवाला लड़का अपने सहस्र धन में अवश्य आस्था रखता है,' ॥ ५४ ॥

पांचवे अध्याय प्रथम आह्निक पहले अधिकरण से स्वप्रकाश चैतन्य को सिद्ध करते हैं. उसके आगे के अधिकरणों से माया के विना ही चैतन्य का स्वाभाविक वैचित्र्य और परिवर्तन वर्णन करते हैं. पहला अधिकरण—'चैतन्य निषेध भ्रम और संशय का विषय है या नहीं ? यह संशय हुआ, जब सभी में संशय है, और सभी का अभाव होता है तो संभव है कि चैतन्य का भी संशय और निषेध भ्रम हो, यह पूर्वपक्ष हुआ ॥ १ ॥ 'संशय या निषेध समझ के बिना नहीं संभव हैं, समझ स्वरूप चैतन्य में संशय और निषेध भ्रम संभव नहीं है,' ॥ २ ॥ वार्तिक में भी यह है—'यह समझ निषेध रूप चैतन्य निषेध भ्रम और संशय का विषय नहीं हो सकता, क्योंकि ये दोनों समझ ही हैं, इसलिये चैतन्य अविनाशी रूप से ज्ञात है,' ॥ ४ ॥ 'यदि सभी हैं तो उनकी समझ भी है, यदि समझ नहीं है तो उसके विषय सभी कैसे हैं ?, यदि सभी नही हैं ऐसा कहो तो यह भी समझ है. इससे सिद्ध हुआ कि चैतन्य निषेध भ्रम का विषय नहीं होता' ।।५।। तीसरे अधिकरण से नित्य चैतन्य में वैचित्र्य दिखाते हैं—'एक वैचित्र्य के तिरोधान से भी दूसरे वैचित्र्य देखे जाते हैं, और सृष्टि का आदि तथा अन्त नहीं होता, इसलिये ब्रह्म हमेशा वैचित्र्य वाला है' ॥ २ ॥ वार्तिक—चैतन्यरूप समुद्र में बुद्बुद तरङ्ग के ऐसा सम्पूर्ण विषय प्रगट होते हैं, फिर इसी में लीन होते हैं, इन कारणों से इस महा चैतन्य का सकल आत्मरूप होना स्फुट है' ॥ १२ ॥ 'साक्षी स्वरूप चैतन्य परिणाम में एक ही है, कोई वैचित्र्य लीन हो, कोई प्रगट हो, चैतन्य समुद्र सतत परिवर्तन शील चैतन्य लहर वाला है, उसमें कोई भी परिणाम वैचित्र्य न हो ऐसा वह कभी भी नहीं होता' ॥ १४ ॥ इसके चौथे अधिकरण में वैचित्र्य को पारमार्थिक मानते हैं—'चैतन्य के वैचित्र्यों का किसी प्रमाण से व्याघात न होने से वैचित्र्य पारमार्थिक हैं, विनाश मात्र से असत् नहीं होता, जैसे मरण के योग्य सुत असत् नही होता' ॥ २ ॥ माया भ्रमरूप है ऐसा ५।१।५ अधिकरण में—

के लिए हानिकारक हो सकते हैं या माने गये हैं, अथवा उनसे हानि सम्भव मानी गयी है, वे सभी अपराध इन 'धैर्य, क्षमा, अनुचित विषयों से मन को रोकना, चोरी न करना, पवित्र होना, विषयों का लम्पट इन्द्रियों को न होने देना, विवेक-बुद्धि, अन्तिम परिणाम तक विचार करने वाले दर्शनशास्त्रों का परिज्ञान, सत्य, क्रोध न होना आदि के अभाव में ही हो सकते हैं। इन सभी के अभाव में या इनमें से किसी एक के अभाव में ही विभिन्न अपराध देखे जाते हैं। यह भी देखा जाता है कि इन धर्मों के नान्तरीयक इनके विना न होने वाले इनके साथ रहने वाले गुणों के अभाव में भी ये अपराध होते हैं। सारांश यह है कि ये धर्म, राष्ट्र, समाज, व्यक्ति आदि के धन-जन-जीवन, संगठन और सुख-शान्ति के उत्पादक तथा रक्षा करने वाले हैं, हानिकारक नहीं हैं। इन धर्मों के न रहने पर विवाद, मान, मद, मोह, इन्द्रियों की विषयलम्पटता, आलस्य, लोभ तत्त्वपरिचायक दर्शन-विद्या के सम्पर्क का अभाव आदि दोष प्रगट होते हैं, उन दोषों से राष्ट्र समाज आदि के धन, जीवन, सुख शान्ति आदि के विनाशक अपराध मनुष्यों से हो जाते हैं।

ये दोष उचित विवेक के विना पैदा होते हैं, अपराधी जन समाज, राष्ट्र की हानि की उपेक्षा करता है और यह निर्णय नहीं कर पाता कि अपने कुत्सित कर्म के द्वारा वह लाभ कितना उठा सका तथा अपने भविष्य जीवन को कितना कष्टमय बना दिया। यह अविवेक का प्रभाव है। ऐसे अवसर पर दार्शनिक विद्या सिद्ध कर देती है कि तात्कालिक लाभ थोड़ा होता है और आगे का कष्ट अत्यधिक होता है।

सर्वथा अशिक्षित ही अपराधी नहीं होते; किन्तु इस समय के शिक्षित विशेष अपराध करते हैं। मूर्खों की चोरी या लूटपाट किसी प्रकार विशेष सावधानी, जागरण और पुलिसों की सहायता से रोकी जा सकती है; किन्तु रक्षक के रूप में भक्षक बने हुये अधिकांश शिक्षित विभिन्न पदों का बाना पहिन कर इतना उपद्रव कर रहे हैं कि अवरोध दर्शनशास्त्रीय विचारप्रणाली के विना अशक्य हो रहा है। यहाँ तक कि बहुमत निर्वाचित अनेक जनप्रतिनिधि भी स्वार्थान्ध हो जाते हैं और अपनी मान्यताओं को छोड़कर प्रतिदिन दल-बदल करते रहते हैं। अपने कर्तव्यों का पालन नहीं कर पाते।

अधिकांश वेतनभोगी वेतन मात्र से संतुष्ट होकर अपना कार्य नहीं करते, अतिरिक्त घूस की अपेक्षा रखते हैं। घूस लेकर भी कहीं विपरीत कर देते हैं। यह

अर्जनपिशाची उसको इतना परेशान करती है कि उन्हें शान्तिबिन्दु भी दुर्लभ है, अविवेक इतना बढ़ा-चढ़ा है कि अपने जीवन के दश वर्ष की परिस्थितियों के अनुसन्धान में वर्तमान के अधिकांश शिक्षित असमर्थ पाये जाते हैं। यह सम्भव है कि भोग-लिप्सा के कारण वे स्वर्ग-मोक्ष न चाहें; किन्तु जीवनपर्यन्त सुख-शान्ति तो अवश्य ही चाहते हैं; पर उनकी कार्य-प्रणाली क्षणिक सुख का आभास मात्र कराती है, इसी जीवन में अपना अनुसरण कर दुःख का भागी उन्हें बनाती है, इसलिए तत्त्वविवेक-शास्त्र का अध्ययन, परिशीलन ही उपयुक्त उद्योग की ओर प्रवृत्त कर उन्हें सुख-शान्तिमय जीवन से परिपूर्ण कर सकता है।

मुमुक्षुओं के लिये पुत्रैषणा, वित्तैषणा, लोकैषणा-पुत्र, धन और यशःख्याति की इच्छा तीनों का परित्याग आवश्यक है। भोगार्थियों को तीनों अपनाना है; किन्तु लोकैषणा—यशलोभ इन तीनों में से कुछ अच्छी है, क्योंकि प्रशंसा के लोभ से कुछ सज्जन अन्याय नहीं करते; पर वह लोकैषणा बेचारी अपमानित होकर रसातल में चली गयी है। वह यदि अपने शुद्ध रूप में पूर्णतया रहती तो इतना उपद्रव नहीं होता; परन्तु धनलिप्सा विकराल रूप धारण कर कीर्तिपिपासा को पीती जा रही है। लोक-कल्याण की सभी बातें शान्त होकर सो रही हैं वे कुछ नहीं कर पा रही हैं।

अज्ञान इतना बलिष्ठ हो गया है कि राष्ट्र, समाज या अपनी हानि करता हुआ भी मनुष्य अपनी या किसी की क्षति कर रहा हूँ यह नहीं समझ पाता। अज्ञानविभूषित मानव की धनार्जन-अभिलाषा जल तरङ्ग के समान उठा करती है, जीवन की तो बात ही क्या है भोग और भोगसामग्री को भी वह स्थिर रूप में दर्शाती है। चलञ्चला (लक्ष्मी) को भी पतिव्रता के सदृश अचला और अहार्य दिखाती है।

ईमानदारी तो मानो लाभ-अवसर को खो देने जैसी मूर्खता है। सत्य और अहिंसा सभा में भाषण के भूषणमात्र हैं, आचरण के साथ उनका क्या सम्बन्ध? सन्ध्या-पूजन, सदाचार तो दूर है। उनकी बातें करना भी बीसवीं शताब्दी से पीछे भागना है, अथवा प्रगतिशील वैज्ञानिक युग को न समझना है। आधुनिक लोग आराम-देह वैज्ञानिक युग की प्रशंसा करते हैं; किन्तु यह नहीं सोचते कि वैज्ञानिक उन्नति में लगे हुए विदेशी विद्वान् हम लोगों के समान आलसी तथा भोग-लम्पट हैं अथवा रात-दिन परिश्रम और चिन्तन में लगे हुए कर्मठ हैं। स्वार्थ से अन्धे हैं या अपने राष्ट्र और

समाज की उन्नति के प्रेमी हैं ? भोग, लोभ महाराज इतने प्रबल हो गये हैं कि सन्तोष के लिये अब स्थान ही नहीं है। वे अधिकांश कर्मचारियों में कर्म-चिन्ता को हटाकर बड़ी वेतन चिन्ता को बढ़ावा देते हैं और इसके लिये उचित अनुचित सभी उपायों को प्रेरणा प्रदान करते हैं। बड़े वेतनों से भी उनको सन्तोष कहाँ ? अनुचित उपायों से भी धन का अर्जन ही उन्हें प्रिय है।

सभी मनुष्यों का स्वभाव पड़ गया है कि अपने शरीर और मन में कितना या कैसा बल है इसकी चिन्ता वे नहीं करते; लेकिन अतिशयित सुख सामग्री चाहते हैं। वे परिश्रम की शक्ति और बुद्धि की योग्यता में समता लाना नहीं सोचते; किन्तु भोग-सामग्री एवं आराम में समानता जन्मसिद्ध अधिकार मानते हैं।

इससे सिद्ध होता है कि विवेक को विशद करने वाली ऐसी दर्शनविद्या की आवश्यकता है जो वर्तमान मानव को मानवतासम्पत्ति से सम्पन्न करे जिससे लोभ, प्रमाद, मान, मोह आदि दोष हट जायें, धृति-क्षमा आदि मानवगुण विकसित हों, तभी समष्टि, व्यष्टि या राष्ट्र में समुन्नति या सुख-शान्ति विराजेगी, मानव धर्मों को विकसित करने वाली विद्या की शिक्षा अनिवार्य होनी चाहिए। छात्र जीवन में मानव धर्मों का परिपालन अनिवार्य होना चाहिए। जैसे प्राचीन ऋषिकुलों में राजकुमार, मन्त्रिकुमार और धनहीन दीन द्विजकुमार समान रूप से आश्रम नियमों का पालन करते थे, वैसे ही अब भी होना चाहिए। अभी भी कालेजों में सीट तो समान ही रहती है; किन्तु और आचरणों में जमीन आसमान का अन्तर रहता है। चाटुकारिता तो महा अनर्थ का कारण बन जाती है; यद्यपि आधुनिक शिक्षा भी किसी न किसी विशेषता का कारण बनती ही है; किन्तु वह मानव गुणों की पोषिका नहीं होती। अपेक्षा ऐसी विद्या या विचारधारा या शिक्षा की है जो चोरी आदि अमानवीय कार्यों को सर्वथा हानिकर सिद्धकर उनके दुःखमय परिणाम को स्पष्ट कर सके। इतना ही नहीं—

"न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥"

( कभी भी कामनाएँ इष्ट वस्तुओं के उपभोग से नष्ट नहीं होतीं; हविष्य आग के समान बढ़ती ही हैं। ) आदि वचनों को २×२=४ की तरह स्पष्ट प्रमाणित किया जाय, जैसे—

"दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥"

( तीनों प्रकार के दुःखों के टक्कर से उनके विनाश के उपायों की जिज्ञासा होती है, दृष्ट उपाय की जिज्ञासा व्यर्थ है, क्योंकि दृष्ट उपायों से दुःखों का अवश्य तथा सर्वदा अभाव नहीं हो पाता ) इन सांख्यकारिका से बताया गया—'समुचित भी सर्व प्रकार के लौकिक उपाय मूल से तीनों दुःखों को नष्ट नहीं कर सकते'—तथ्य तर्क की कसौटी पर परीक्षा करके सिद्ध किया गया है। प्रचलित दुःखों के क्षणिक विनाश करने वाले कारणों का दार्शनिक रीति से विश्लेषण करने पर विभिन्न उपद्रवी अविवेक ठहर नहीं सकते। ऐसी दर्शनविचारधारा से तुच्छ लोभों के कारण असत्य और हिंसा आदि में होने वाली प्रवृत्ति रोकी जा सकती है। आज भी सत्य, अहिंसा आदि धर्मों की वास्तविकता अथवा महत्ता विलुप्त नहीं है, भले ही आचरण में वे उपेक्षित हों तथा उनके विपरीत आचरण किया जाय। सभा में तो व्याख्यान-कौशल तथा विद्वत्ताप्रदर्शन के लिये इनका महत्त्व सुन्दर स्वरों में स्पष्ट किया ही जाता है। अतएव भारतीय शास्त्रकार इस विवेकशास्त्र दर्शनविद्या की सभी अवस्था एवं सभी अवसरों में उपयोगिता बताते हैं। महाभारत का वचन है—

"विषमावस्थिते दैवे पौरुषे ह्यल्पतां गते।
विषादयन्ति नात्मानं सत्त्वोपाश्रयिणो नराः ॥"

सत्त्व बल का आश्रयण करने वाले सज्जन भाग्यवश कठिनाई आने पर पुरुष सामर्थ्य की कमी होने पर भी अपने में विषाद नहीं पैदा होने देते।

सांख्यशास्त्र में वर्णित सत्त्व गुण का आश्रयण अथवा सत्त्व का सञ्चय या सत्त्व शुद्धि विषाद के अभाव का कारण है, रजोगुण और तमोगुण के अभिभव से सत्त्व शुद्धि या सत्त्वसञ्चय होता है। रजोगुण के कारण होने वाली चञ्चलता में दोष दृष्टि होने पर रजोगुण का अभिभव होगा, चञ्चलता के परिणामों में हानि समझने पर चञ्चलता दोष मानी ही जायगी। इसी प्रकार तमोगुण का फल अविद्या को दुष्ट समझने पर तमोगुण का अभिभव सम्भव है। अविद्याकार्य भ्रम, संशय, राग और द्वेषादि को दुष्ट समझने पर अविद्या दुष्ट साबित होगी—ये सब दर्शन परिशीलन के परिणाम होते हैं। विषाद

से धैर्य तथा कर्मनिष्ठा नष्ट होती है। गीता में भी पहले अर्जुन का विषाद ही बताया गया है, उसके बाद दार्शनिक विचारों द्वारा विषाद का विनाश और कर्मनिष्ठा का समुदय माना गया है। सत्त्वशुद्धि सर्वातिशायिनी शक्ति है। सभी को सत्य, शिव तथा सुन्दर बनाती है। सत्त्वशुद्धि मानससम्पत्ति है, दूसरे के मन से कैसे समझी जा सकेगी? दर्शनवासना से सुवासित चित्त ही सत्त्वबल को पहचान पायेगा। अभी भी कदाचित् ऐसे व्यापारी, उपदेशक, लोकनायक अथवा राज्याधिकारी पुरुष मिलते ही हैं, जिनमें मानवधर्म कुछ न कुछ लक्षित होते ही हैं। वे अनेक आपत्तियों से परेशान रहने पर भी कर्तव्य मार्ग से च्युत नहीं होते। विपन्न होकर भी धैर्य नहीं छोड़ते। बड़े-बड़े लाभों से भी उन्मत्त नहीं होते। निष्ठा से कर्मों को करते हैं और उनके सुन्दर फलों को अपनाते हैं।

अतएव शासक राजा के लिए भी दर्शनविद्या की आवश्यकता भारतीय राजनीतिज्ञ विद्वान् मानते हैं। प्राचीन नीतिवाक्यामृत ग्रन्थ में भी सोमदेवसूरि लिखते हैं—

"प्रकृतिपुरुषतत्त्वज्ञो हि राजा सत्त्वबलमवलम्बते।
रजः फलं चापलं परिहरति तमोभिर्नाभिभूयते॥"

प्रकृति-पुरुष तत्त्व को जानने वाला ही राजा सत्त्वबल का अवलम्बन लेता है, रजोगुण के फल चञ्चलता को छोड़ता है, तमोगुण के कार्यों से मुग्ध नहीं होता इत्यादि। यहाँ प्रकृति पुरुष की अविवेक ख्याति का संसार यात्रा के निर्वाह में आवश्यक उपयोग बताया गया है। इन्द्रियों पर विजय सत्त्वसञ्चय का सोपान है, इसीलिए इन्द्रियों का निग्रह शासकों के लिए आवश्यक समझा गया है। श्रीमद्भागवत में कहा है—

"यस्यात्मानुवशश्चेत् स्यात् सर्वे तद्वशगा इमे।
लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः॥"

जिसका अन्तःकरण वश में है उसके वश में लोकपालों के साथ सभी लोग हो जाते हैं। सभी सावधानी से उसको बलि देते हैं। आदिशासक मनु राजा भी ऐसा मानते हैं—

"इन्द्रियाणां जये योगं समातिष्ठेत् दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥"

हमेशा इन्द्रियों के जय के लिये चित्तवृत्तिनिरोधरूप योग का अनुष्ठान करें। क्योंकि जितेन्द्रिय ही प्रजा को वश में रख सकता है। यह दार्शनिक प्रक्रिया है, सत्य और अहिंसा मानवता है। मानव के लिये दर्शनशास्त्र है पशु के लिये नहीं। वास्तविक में सत्य महाबली है, भीरु लोग किसी डर से सत्यच्युत होते हैं। निर्लोभी कर्मशील को किसका भय होगा? कर्मपूर्ति के अतिरिक्त कर्मठ का क्या इष्ट हो सकता है? इष्ट के विघातक की हिंसा की जाती है, कर्मपूर्ति का विरोधी ही शत्रु हो सकता है, औरों के प्रति शत्रुता एवं हिंसा का भाव सम्भव नहीं। निर्भीक ही सत्यवादी हो सकता है, अतएव सत्यवादी सबसे प्रबल है।

भगवद्गीता में लोककल्याण की एषणा का उपदेश है, भगवान् कहते हैं—

"यद्यहं न वर्तेय जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते पृथिव्यां सर्वमानवाः ॥" इत्यादि ।

यदि सदा सावधानी से कर्तव्यों का अनुपालन न करूं तो इस संसार का उच्छेद हो जायगा, क्योंकि पृथ्वी पर सभी मनुष्य मेरे मार्ग का अनुसरण करते हैं। सर्वथा कर्मफल को न चाहते हुए भी लोक-कल्याण मात्र की अपेक्षा से कर्मों का अनुष्ठान करना लोककल्याणैषणा है। ऐसा ही योगी सत्य कर्मठ हो सकता है, ऐसे लोकनायक या राजा की अपेक्षा है। उसी तथ्य का सत्फल स्पष्ट है।

"सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ॥"

इस संसार में सभी सुखी हों, सभी नीरोग हों, सभी कल्याण को देखें, कोई भी दुःखी न हो, लोककल्याण की भावना से अनुष्ठित कर्म ही सफल होता है। यही जनता-जनार्दन की वास्तविक सेवा है, ईश्वरार्पणबुद्धि से कर्मानुष्ठान का यही स्वरूप है। इस प्रकार दार्शनिक विचारधारा सभी कर्मक्षेत्रों को सींचती हुई सस्यश्यामल सुखद फल हमें देती है।

यद्यपि मोक्ष इच्छा, ऐहिक पारलौकिक फल भोग का परित्याग, शम आदि सम्पत्तियां और त्याग, सन्तोष आदि मोक्ष में उपयोगी दार्शनिक पदार्थ कर्म मार्ग के विरोधी क्यों नहीं होते ? आदि प्रश्न भी विचारकोटि में आते हैं; पर लेखकलेवर के विस्तृत होने के भय से यहाँ इन पर विचार नहीं किया जा रहा है। पाठक एतदर्थ दूसरे लेख की कृपया प्रतीक्षा करें।

---

दारागंजप्रयागस्थसंस्कृतसाहित्यपरिषत्परिचालितत्रैमासिकसंस्कृत-संगमनोपत्रिकायां २०२५ वैक्रमाब्दे चतुर्थे वर्षे प्रथमद्वितीयसंयुक्ताङ्के प्रकाशितः।

## भारतीयदर्शनानि किमु राष्ट्रोन्नतेः प्रतिबन्धकानि ?

भारतीयानि हि दर्शनानि मोक्षोद्देशेन प्रवृत्तानि निवृत्तिमार्गोपयोगीनि न विदेशीयानीव समाजवाद-साम्यवाद-साम्राज्यवादादिमूलकतया राष्ट्रोपकारकाणि सन्ति ऐहिकोन्नतिसाधकानीति नैकविदेशीयशैलीशिक्षित-दार्शनिकसदस्सु परिशील्यते, तत्र ऐहिकोन्नतेर्न प्रतिबन्धकानि प्रत्युत मानवतासमुत्कर्षधिया साधकानीमानि भारतीयदर्शनानि इति यथाशक्ति संस्थाप्यते। सुखं जीवेच्चिरं जीवेद् ऋणं कृत्वा घृतं पिबेदित्याद्यनुसारं चार्वाकदर्शनं सुखान्वितं चिरजीवनमैहिकफलमेवोद्घोषयतीति तदितर-दर्शनानि विचारविषयीक्रियन्ते।

तत्त्वसाक्षात्कारोपयोगिशास्त्रत्वम्, तत्त्वसाक्षात्कारोपयोगिमनन-शास्त्रत्वम्, मोक्षोपयोगितत्त्वदर्शनजनकमनन-शास्त्रत्वम् इत्यादीनि दर्शन-लक्षणानि प्रकृतविचारानुपयुक्तानि नाश्रयामि किन्तु चरमपरिणामपर्यव-सायिविचारपरम्परासाधकशास्त्रत्वमिति दर्शनलक्षणमवलम्बे। तेन विदेशी-यानि अपि दर्शनानि ऐहिकोन्नतेः साधनतया प्रसिद्धानि मोक्षस्पर्शं परिहरन्ति संगृहीतानि, तानि अपेक्ष्यैव भारतीयदर्शनेषु न्यूनता प्रापाद्यते अतस्तेषां

संग्रह आवश्यकः, भारतीयदर्शनानामपि विचारपरम्परायाश्चरमपरिणामपर्यवसायितया नाव्याप्तमिदं दर्शनलक्षणम्, चरमः परिणामो मोक्ष ऐहिकः समाजादिर्वार्थः, चरमपरिणामस्य तत्तद्बुद्ध्यधीनतया बुद्धिभेदेन दर्शनभेदो नापद्यते परमिष्यते, विदेशे बुद्धिभेदेनैव दर्शनानां बहुविधत्वं प्रसिद्धम्, अधुना भारतेऽपि गान्धिदर्शनं नेहरूदर्शनम् इत्यादि विशेषाणां प्राकट्योपक्रमः प्रचलत्येव। प्राचीनभारतीयदर्शनस्य तु मोक्षैकचरमोद्देश्यतया उपनिषद्गीतादिसमन्वयनियन्त्रित्वाच्च नानियन्त्रिता संख्या, तथापि व्याख्यातृबुद्धिबलापेक्षया अवान्तरप्रस्थानभेदोऽनेकधा जागर्त्येव।

(१) तत्र प्रथमं मोक्षोद्देश्येन प्रवृत्तानां दर्शनानां कथमन्यत् फलं भवेत्? यवोद्देशेन प्रवृत्तस्य तदनुकूलमाचरतः कथं गोधूमलाभः? ननु तण्डुलोद्देशेन प्रवृत्तस्य कृषीवलस्य व्रीहिभिः समं पुलालस्यापि लाभस्तेन वृषभस्य भोजनसमाधानम् एवमेव ऐहिकः संसारी मुमुक्षुर्मोक्षमार्गेऽग्रेसरन् संसारोन्नतिमपि संपादयिष्यतीति चेन्न पुलालव्रीह्योर्यथा नान्तरीयकभावस्तथा राष्ट्रोन्नतिमोक्षयोर्नास्ति राष्ट्रोन्नतिमन्तरापि मोक्षस्य सम्भवात्। मोक्षार्थमपि मुमुक्षूणां सभ्यसमाजः समाजस्य सुखशान्तिः, ततश्च सद्गुरव उपदेष्टारः सत्सङ्गमण्डली, दर्शनसाहित्यम् निवासस्थानम्, जलप्रकाशादीनां सुप्रबन्धो भिक्षालाभप्रभृतयोऽपेक्षिताः, एते च राष्ट्रोन्नतिमपेक्षन्ते, तथा च मुमुक्षूणामपि अवश्यं विधेया राष्ट्रोन्नतिः, धान्यपुलाकन्यायेन मोक्षसाधनसामग्रीनान्तरीयकी राष्ट्रोन्नतिः। एवमेव विजयार्थं राज्यस्य सैनिका राज्यान्तरेषु गच्छन्तः सामग्रीनयनाय मार्गं निर्मिमते, नदीं पाटयन्ति, सेतुं बध्नन्ति, वनानि विनाशयन्ति, चलन्ति चाग्रे, गतेषु च सैनिकेषु जनपदीया अन्ये तेन मार्गेण गच्छन्ति सर्वं कार्यञ्च सम्पादयन्ति, तथा च विजिगीषवोऽन्येषां हितञ्च नावदधतोऽपि सैनिका यथाऽन्येषां हितं कर्म सम्पादयन्ति तथा मुमुक्षवो मोक्षानुकूलमाचरन्तोऽपि अन्येषां बुभुक्षूणां हिताय राष्ट्रोन्नतिं विधास्यन्ति न तां प्रतिभन्त्स्यन्ति।

(२) त्यागभावना हि मुमुक्षूणां प्रधानम्, न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरित्यादिश्रुत्या त्यागस्य आवश्यकत्वात्। साधनान्यपि मोक्षस्य कृते कार्यं मुमुक्षूणां हेयानि, हेये वस्तुनि न तादृशी अपेक्षाबुद्धिरासक्तिर्वा, आसक्तिमन्तरा च कर्मासंभवात् साफल्यानवाप्तेश्च न मोक्षमार्गो राष्ट्रोन्नतेरनुकूलः।

तथापि चिन्तनीयम्, तेन त्यक्तेन भुञ्जीथा इत्यादिश्रुत्या भोगस्यापि त्यागपूर्वकस्यैव विधानात्, न जातु कामः कामानामुपभोगेन शाम्यतीति

गीतया निरवग्रहभोगस्य निन्दाश्रवणात्, न चैतन्मोक्षमार्गस्य विधानम् मोक्षे भोगस्य वर्जनात्, भोगार्थिनामेव भोगे त्यागपूर्वकत्वस्य विधानम्, गीताया अपि कामनाशान्तिः सुखं न कामानुसारी भोगः, भोगमात्रेण न कामनाशान्तिः किन्तु मनसोऽवधानेनेति तात्पर्यम्, तथा च त्यागपूर्वको भोगः मनसोऽवधानञ्च संसारिणामपि सुखाय न मुमुक्षुणामेव। अन्यथा भोगलम्पटाः शारीरिकमैन्द्रियकञ्च बलं विनाशयन्ती जगतो भारभूताः कथं जगदुन्नतये कल्पन्ते। तथा च मोक्षानुकूलं ज्ञानं मानवशक्तिसंवर्धनद्वारा देशसमृद्धये न तु अवनतये इति सिध्यति।

किञ्च एकस्य ह्यानमपरस्योपादानं संसारिणां मुमुक्षूणाञ्च समानम्। संसारिणोऽपि एकं हित्वैवापरमुपाददते, द्वितीयसोपानारोहेण प्रथमं परित्यजन्ति, यौवनयोगेन बालतावियोगः, लाभनधिकमपेक्ष्य शाकविक्रयं विहाय पटविपणिम्, एवमेव मुमुक्षवोऽपि श्रवणमननसिद्धये गुरून् आश्रमादींश्चोपाददते, निदिध्यासनाय च वाचो विग्लापनानि शास्त्राण्यपि परिहरन्ति, तथा च सामाने अनयोर्हानोपादाने।

(३) मुमुक्षाया वैराग्यकवलितत्वात्, मुमुक्षया हि इहामुत्रफलभोगमात्रविरक्ता न खलु कर्मस्वनुसज्जन्ते, विरक्ता हि किमपेक्ष्य किमपि कुर्युः? तथा च का आशा मुमुक्षुधनैर्दर्शनैर्लोकहितस्य।

एतदपि आपाततः, भोगवैराग्यं मुमुक्षूणां न सर्वथा रागाभावः, मुमुक्षाया अपि रागरूपत्वात्, तत्त्वज्ञाने शान्तवातावरणे भोजने पानीये सदुपदेशे सतां विदुषां सङ्गे साधनसम्पत्तिप्रभृतिषु रागस्य जागरूकत्वात्, रागे संसारिमुमुक्षोरेतावानेव विशेषो यत्संसारी यत् किमपि स्वहितं पारिवारिकं जनपदीयं राष्ट्रीयं वा हितमाचरति तेन साक्षात् परम्परया वा इह जन्मनि जन्मान्तरे वा सुखमवश्यं लिप्सति, मुमुक्षुस्तु भविष्यति सुखलिप्सां न बिभर्ति परं तत्त्वज्ञानस्य अर्जनरक्षणे दयादाक्षिण्यादिवशादन्यस्य सुखं वा कथन्नाभिलषेद् येन राष्ट्रोन्नतिं न वाञ्छेत्?

किञ्च वैराग्यानुरागौ नित्यसहचरितौ संसारिणां मुमुक्षूणाञ्च समानौ, संसारिणोऽपि प्रेक्षापूर्वकारिण एकस्मादपरज्यैव अपरस्मिन्ननुरज्यन्ति, प्रवेशिकां परीक्षां समुत्तीर्य तदर्थानां राजकीयसेवावृत्तिं तत्प्रयुक्तं सुखञ्च वैराग्येण परित्यज्य उपाधिपरीक्षायामध्येतुम् उत्तमसेवावृत्तिसमीहया आसज्जन्ते, व्यापारिणोऽपि स्वल्पलाभप्रदात् कार्याद् विरज्यैव उत्तमव्यापारे विशेषफलप्रदातरि आसक्ता भवन्ति, एवमेव मुमुक्षवः पूर्व-

पूर्वतरसाधनसम्पत्तौ प्रथमाद्विरज्य अग्रिमसाधनेषु अनुरज्यन्तः प्रवर्तन्ते। एष एव विशेषो यत् सांसारिका मोक्षसुखमजानानाः ऐहिकान्यतमसुखेषु विरागानुरागौ बिभ्रति, मुमुक्षवः सांसारिकसुखादुत्तमं मोक्षमभिप्रयन्तस्तत्र अनुरज्यन्ति, यावच्चमोक्ष-सुखमनिष्पन्नं तावच्छरीरेन्द्रियमनोबुद्धिधारिणोऽन्न-पान- वस्त्र-वसति- सत्सङ्गपठन व्याख्यान- कलहाभाव- सम्पर्किजन सुख-शान्ति-तत्साधनाद्यभिलाषिणस्तत्तत्साधनेषु यथासाध्यं श्रममाणाः संसारिणो नातिरिच्यन्ते, मुक्ताश्च न व्याप्रियन्ते मृताइव संसारिणो यथा, तथा च मुमुक्षुसहायकानाम् एषां भारतीयदर्शनानां कथमैहिकोन्नतिविरोधः ?

(४) भोगानुरागमात्रविरागौ क्रमशः संसारिमुमुक्ष्वोर्विशेषः, भोगानुरक्ता हि संसारिणः सदैव तत्साधनेषु व्याप्रियन्ते, उत्तमकक्षायामधिजिगांसवो नान्तरीयकतया साधनतया च प्रथमां मध्यमाञ्च कक्षामाश्रयन्ति, प्राप्तायाञ्च उत्तमकक्षायां कृतकर्तव्यतया तत् परित्यजन्ति न तु वैराग्येण, तत्फलभोगस्योत्तमफलभोगेन गतार्थत्वात्, न संसारिणां फलभोगविरागः, साधनस्य कस्यचिदननुष्ठानन्तु अशक्त्या उपायान्तरेणोपेयसिद्धया तत्फलभोगस्य फलान्तरभोगेषु अन्तर्गत्या च, मुमुक्षायाञ्च सत्यां फलभोगविरागस्य जागरूकत्वात् सांसारिकवस्तूनां मोक्षसाधनतयैव न तु भोगसाधनतयोपादानम, बुभुक्षारहितानां कृते भोगसाधनवस्तूनां क उपयोगः ? इति का आशा मोक्षमार्गनिर्मापकैर्भोगभीरुभिर्दर्शनैरैहिकोन्नतेः ?

अत्रापि मुमुक्षूणां न सर्वथा भोगविराग इत्युक्तप्रायम्, अन्नपानादिना बुभुक्षापिपासाशान्तिप्रभृतिभोगा वर्तन्ते एव। अन्यदपि-सांसारिकवस्तूनामुपादानमुभयेषां समानम् एकस्य भोगस्य साधनतया अपरस्य मोक्षसाधनतया, उपादानन्तु अस्त्येव। उपादाने सांसारिकवस्तूनामुन्नयने न विशेषः, किञ्च भोगलम्पटा न जागतिकोन्नतिं सम्पादयितुं शक्ष्यन्ति, कविकर्मणि संगीते राजनीतिमार्गे धनार्जने वैज्ञानिकाविष्कारे च समुन्नतिसम्पादका नैकविधभोगविरागा शारीरकं मानसञ्च कष्टं सहमाना मनसा सावधाना दरीदृश्यन्ते, अन्ये च तादृशात् कष्टाद् बिभ्यति। अत एव न भवन्ति समुन्नायका तथा च यावच्छरीरधारणं संसारिणां मुमुक्षूणाञ्च संसारोन्नयने नास्ति विशेषः, मुमुक्षवश्च दर्शनपरिशीलिनो नानाविधशमदमादिसम्पत्तिशालिनो जागतिककर्मसु अपि कुशला भविष्यन्ति।

(५) मुमुक्षूणाम् एषणात्रयपरित्यागः समुद्योगप्रतिबन्धक इति विशेषः। लोकैषणा वित्तैषणा पुत्रैषणेति तिसृभिरेषणाभिर्भूषिता हि

मानवास्तत्कर्मसु प्रवर्तमाना जागतिकवस्तूनि समुन्नयन्ति, केचन यशः समीहया अन्ये भोगाय धनेच्छया अपरे उभयलोकजितीर्षया सन्तानवाञ्छया सांसारिक-व्यापारे सज्जन्ते, मुमुक्षवो हि किमभिप्रेत्य प्रवर्तेरन् ।

अत्रापि मुमुक्षयाऽपि प्रवृत्तिरिति लिखितप्रायम्, बहवो दार्शनिका ज्ञानकर्मसमुच्चयवादिनः कर्मणामुपयोगं मोक्षेऽपि वर्णयन्ति, अन्येऽपि तत्त्वज्ञानार्थं कर्मणामावश्यकतामामनन्ति, कर्मणामुपयोगे सांसारिकवस्तूनामुपादानं समायातम् एव । सर्वाणि वस्तूनि शरीरिणामुपभोगाय मुमुक्षवोऽपि शरीरधारिणः ।

एवम् एषणात्रयविभिन्नापि एषणा लोककल्याणैषणा नाम । यस्य सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः, सर्वे भद्राणि पश्यन्तु मा कश्चिद दुःखभाग्भवेत्, इत्यादि भावना । अथवा लोकैषणा द्विविधा—यश-एषणा लोककल्याणैषणा च । यथा वा-यद्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते पृथिव्यां सर्वमानवाः । इत्यादि गीतानुसारं स्वस्य फलभोगेच्छाविरहेऽपि लोककल्याणार्थमेव कर्मानुष्ठानम्, लोकनायका अपि लोककल्याणैषणया परमोत्साहेन कर्माणि कुर्वन्तः सफला भवन्ति, ये च यशोलिप्सया जनताहितं साधयन्ति न ते तादृशाः सफला व्यापारेण विडम्बिनश्च लोके भण्यन्ते, तथा च लोककल्याणैषणया कर्तव्यनिष्ठाया महत्त्वं फलप्रदत्वञ्च, मन्ये जनताजनार्दनसेवया एवैव ईश्वरार्पणबुद्धिः, एवञ्च लोककल्याणैषणया मुमुक्षवोऽपि जगदुन्नेष्यन्ति ।

( ६ ) शमदमादिसम्पत्तयो हि न मुमुक्षामात्रसम्पत् किन्तु मानवतासम्पत्तिः, इन्द्रियाणां निग्रहः, शीतातपादिद्वन्द्वसहनं मनसोऽवधानञ्च समेषु कर्मसु अपेक्ष्यन्ते, भोगलम्पटाः चञ्चलमनसः सुकुमारशरीराः स्वशरीररक्षाभारमन्येषां स्कन्धे स्थापयन्तो धरण्या भारभूता न कार्यधुरन्धराः । एवञ्च दर्शनाहिता मुमुक्षूणां बहवो गुणा मानवताभूषणा कर्मनिष्ठाया जीवातव इति दर्शनानां प्राधान्यं जगदुन्नयने । मानवता च धृतिः क्षमा दमोऽस्तेयमित्यादिदशानां गुणानां मानवेषु समन्वयः ।

(७) दार्शनिकपदार्थपरिशीलनेन आत्मनो विभुत्वभावनया अहन्ताया ममतायाश्च विस्तारो जायते, यद्यपि अनयोरपसारणं दर्शनानामुद्देश्यम्, परं तदपसारणं न सहसैव सम्भवति किन्तु सामग्रीसपत्क्रमेण, श्रवणमननाभ्यां निर्दोषशुद्धबिम्बात्मनः परोक्षभावनायां दृढतां नीतायाम् अहन्ताममतयोर्विस्तार एव जायते न तु समुच्छेदः, अपरोक्षभ्रमरूपयोस्तयोस्तत्त्वप्रत्यक्ष-

मन्तरा परोक्षात्मज्ञानेनानिवृत्तेः। विस्तारोऽप्ययं प्रदीपज्वाला-विस्तार इव समुच्छेदप्राग्वर्ती, परोक्षयाऽपि दृढात्मभावनया संकोचो निवर्तते। विस्तारस्यास्य दिक्प्रदर्शनं ब्रह्मसूत्राध्यासभाष्ये पुत्रकलत्रादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वा इति शङ्कराचार्यभगवद्भिः कृतम्। शरीरेन्द्रियादिषु साक्षाद् अहन्ताममते, शरीरसम्बन्धात् पुत्रकलत्रधनादिषु ततोऽपि परम्परया सपिण्डकुटुम्बादिषु प्रसरतः। दार्शनिकानां समेषु मानवेषु सादृश्यवशात्तयोर्विस्तारो जागर्ति, शुनि चैव श्वपाके च पण्डिताः समदर्शिनइत्यादिरीतिः, सर्वेषु मानवेषु जीवेषु वा प्रेमा प्रजायते, एषैव अवस्था भूतदया उदारता प्रभृतिभिर्व्यवह्रियते। एषाऽवस्था किमपि फलमनपेक्ष्यैव जायते स्वाभाविकी सोच्यते, या अतीवश्रेयस्करी क्रमशो मोक्षाय कल्पते जगतः समुन्नतये च। कुत्रचिद् यशो लोभमन्तर्निधाय जायते ततोऽपि नेतारो भवन्ति। एषा यशोलिप्साऽपि लोकैषणा पुत्रवित्तैषणयोः शिथिलतायामेव विजयते, ललनालालनलुब्धस्य सुते चित्तेऽपि उपेक्षा जायते, पुत्रकलत्रादिपरिपालनपरवशस्य क्वास्ते यशोऽर्जनावसरः? पुत्रवित्तैषणयोः शिथिलतायां दार्शनिकभावनायाः साहाय्यम्। एवमेव यशएषणायां क्रमशो निर्बलायां सत्यां लोककल्याणैषणा विजृम्भते, एषा यथा सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि इति भावयतो मुनेर्भवति तथा यथाऽहं मम प्रियस्तनयो वा शरीप्राणधारी दुःखानपेक्षी सुखार्थी तथा इमे समे मानवा इत्यादि सादृश्यभावनाप्ररूढो ममताविस्ताररूपः संसारिणो दार्शनिकस्यापि। तिसृषु एषणासु संकुचितास्वेव एषा लोककल्याणैषणा जागर्ति, संकोचे च दार्शनिकभावना अवलम्बनः।

(८) सत्यम् अहिंसा च मानवतेति दशधर्मलक्षणवर्णनं चिरन्तनी सूचना, गान्धिमहात्मना च द्वयमिदमाचरितं जनतायां पुनः प्रतिष्ठापितञ्च, तदनुयायिन आधुनिकाः संगठनद्वारा राष्ट्रोन्नतेः साधिके सत्याहिंसे इति उद्घोषयन्ति, असत्यवादिनोऽसत्याचारा हिंसकाश्च न भवन्ति मुमुक्षवः, न च दर्शनानि असत्यहिंसे उपादेयतया वर्णयन्ति, किन्तु सत्याहिंसे मानवता, मानवतामन्तरा च पशुतया न मोक्षेऽधिकारः, मानवतामादायोपक्रमन्ते दर्शनानि न पशुताम्। भयाद्धि सत्याद् भ्रंसते एषणात्रयविमुक्तस्य शरीरानपेक्षिणो मुमुक्षोः कुतः स्याद् भयम् इष्टापहाराच्च भयं भवति यथा मुमुक्षोर्मोक्षेतरन्नेष्टं तथा कर्मठस्य मानवस्यं कर्मपूर्तेरन्यन्नेष्टम्, क्वचिच्च मनसो विनोदाय परिहासादिषु असत्यभाषणं विद्वांसोऽपि विदधति परमवहितमनसो न विनोदापेक्षा, इष्टापहारिणो हिंसा क्रियते, मुमुक्षोः किमिष्टम्? यस्यापहारो भवेत्, समाजसेवामात्रमभिलषतः कर्मनिष्ठस्य कर्मैव इष्टम्, 'सर्वभूतस्थमात्मानं

सर्वभूतानि चात्मनि' इति भावयतः कस्माद्भयम् ? द्वितीयाद् वै भयं भवति, अन्यस्मिश्च द्वेषः, द्विट् च हन्यते ।

( ६ ) सांख्यं हि रजस्तमसोरभिभवेन सत्त्वोपचयं शिक्षयति,
विषमावस्थिते दैवे पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं सत्त्वोपाश्रयिणो नराः ।। इति भारतवचः सत्त्वोपाश्रयस्य विषादाभावं फलमुद्घोषयति । विषादाभावो हि ऐहिकं फलम्, विषादाभावं विना कर्मनिष्ठता न समुदेति, विषादश्च समेषां कर्मणामन्तरायः, विषादाभावं विना मुमुक्षा हि बालस्य चन्द्रग्रहणगर्धा, सत्त्ववृद्धिः सत्त्वशुद्धिर्वा दार्शनिकी सम्पत्, तया मानवतोत्कृष्यते, सर्व-विधायिनी सा शक्तिः, सर्वं शिवं सुन्दरं कर्तुं क्षमते, किमुत लोकोन्नतिं समाजं राष्ट्रं वा, मानसी एषा सम्पत्तिः, अन्येन मनसा कथं परिचीयेत ?, दर्शनवासनावासितमनोवृत्तीः केचन क्वचित् परिखेष्यन्ति । अधुनाऽपि केचन व्यवहारिण उपदेशकाः लोकनायका राज्याधिकारिणो वा भवेयुः, विविधा-पदाऽपि कर्तव्यमार्गान्न च्यवन्ते, आपदि धैर्यं धारयन्ति, बलवता लाभेनापि न उन्मदन्ते, कर्तव्यनिष्ठतया सुखेनानुतिष्ठन्ति फलञ्चाप्नुवन्ति । काममस्य सत्त्वसंचयस्योद्देश्यं व्यापारः पाण्डित्यप्रसारः सदाचारप्रचारो लोकसंग्रहः समाजसंगठनं शान्तिपूर्णं जीवनयापनं क्रमिकमुक्तिमार्गेऽग्रेसरणं वा भवेत्, एतादृशा हि मानवा अनुचिते मार्गे न प्रचलन्ति, चौर्याद्बिभ्यति न रक्षि-पुरुषेभ्यः, अधिकव्ययाद्विरमन्ति, अनुदारताप्रवादञ्च सुखं सहन्ते, याचनायाः पराजयन्ते नहि कष्टेन जीवनयापनात्, आत्मदोषान् पश्यन्ति न परदोषगणनया समयं यापयन्ति, नम्रतया विभूष्यन्ते नाभिमानेन महत्तां नीयन्ते ।

अतएव शासकस्यापि दार्शनिकतामभीप्सन्ति बहवः—यथा नीति-वाक्यामृते श्रीसोमसूरिः --प्रकृतिपुरुषतत्त्वज्ञो हि राजा सत्त्वबलमवलम्बते, रजःफलं चापलञ्च परिहरति, तमोऽभिर्नाभिभूयते, इत्यादिः । इन्द्रियजयादिः सत्त्वसंचयस्य सोपानम्, तत एव शासकस्य कृते सोऽपि अभिप्रेयते यथा श्रीमद्भागवते—

यस्यात्मानुवशश्चेत् स्यात् सर्वे तद्वशगा इमे ।
लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः ॥
एवं मनुरपि—इन्द्रियाणां जये योगं समातिष्ठेद् दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः । इति



दारागञ्ज प्रयाग संस्कृतसाहित्यपरिषद् से सञ्चालित त्रैमासिक संस्कृत संगमनी पत्रिका के चतुर्थवर्ष प्रथम द्वितीय संयुक्त अङ्क २०२५ विक्रमवर्ष में संस्कृतमय 'भारतीयदर्शनानि किमु राष्ट्रोन्नतेः प्रतिबन्धकानि ?' नाम से प्रकाशित ।

# भारतीय दर्शन क्या राष्ट्र उन्नति के प्रतिबन्धक हैं ?

भारतीय दर्शन मोक्ष को उद्देश्य बनाकर चले हैं निवृत्तिमार्ग के उपयोगी हैं, जैसे विदेशीयदर्शन समाजवाद-साम्यवाद-साम्राज्यवाद आदि नीतिमूलक होते हुए राष्ट्र के उपकारक इस लोक की उन्नति के साधन है, वैसे भारतीयदर्शन नहीं हैं, इस प्रकार अनेक विदेशीय शिक्षाशैली से शिक्षित दार्शनिक विद्वानों की सभाओं में चर्चा होती है, उस पर भारतीयदर्शन ऐहिक उन्नति के प्रतिबन्धक नहीं हैं बल्कि मानवता की समुन्नति का साधक होते हुए इस लोक में भी बहुत उपयोगी हैं, ऐसा यथाशक्ति सिद्ध किया जाता है ।

तत्त्व साक्षात्कार के उपयोगी शास्त्र, तत्त्वसाक्षात्कार का उपयोगी मनन शास्त्र, मोक्ष का उपयोगी जो तत्त्व का प्रत्यक्ष उसका कारण मननशास्त्र, इत्यादि दर्शन के लक्षण प्रस्तुत विचार के उपयोगी नहीं हैं इसलिये इनको नहीं ले रहा हूं, किन्तु अन्तिम फल तक पहुंचने वाली जो विचारों की परम्परा उसका साधक शास्त्र दर्शन शास्त्र है, इसी दर्शन लक्षण को ले रहा हूं, मोक्ष को नहीं छूते हुए लौकिक उन्नति के प्रसिद्ध साधक विदेशीयदर्शन भी इस लक्षण से संगृहीत होते हैं, उनकी ही अपेक्षा भारतीय दर्शनों में पूर्वोक्त न्यूनता दिखाई जाती है, इसलिये उनका संग्रह आवश्यक है, भारतीय दर्शनों की भी विचार परम्परा अन्तिम परिणामतक पहुंचती है, इससे यह लक्षण अव्याप्तिग्रस्त नहीं होता । अन्तिम फल मोक्ष हो या लौकिक समाज आदि की उन्नति हो, सभी में लक्षण जायेगा । उन उन बुद्धियों के अधीन चरम फल होगा, वह बुद्धि भेद से भिन्न होगा, इस प्रकार बुद्धि भेद से दर्शनों की बहुरूपता आयेगी, सो इष्ट है,

उसको आपत्ति नहीं समझना चाहिये। विदेशों में बुद्धियों के भेद से दर्शनों की अनेक-रूपता प्रसिद्ध ही है, इस समय भारत में भी गान्धीदर्शन-नेहरूदर्शन इत्यादि विशेष दर्शनों के आविष्कार का उपक्रम चल ही पड़ा है। भारतीयदर्शनों के मोक्ष ही एक अन्तिम फल है, उपनिषद्-भगवद्गीता-सूत्र आदि आर्षग्रन्थों का समन्वय सभी दर्शनों को करना पड़ता है, यह भारतीयदर्शनों पर नियन्त्रण है, उसकी संख्या वैसी नहीं बढ़ती, तो भी व्याख्याताओं की बुद्धि और बल की अपेक्षा से अपनी सीमा के अन्दर अनेक प्रकार का प्रस्थान विशेष जागरुक ही है।

( १ ) **पूर्वपक्ष**—जब मोक्ष के उद्देश्य से भारतीयदर्शन चले हैं तब उनका मोक्ष से दूसरा फल हो कैसे सकता है, यव के उद्देश्य से प्रवृत्त यव के लिये ही उपाय करते हुए कृषक को गेहूँ का लाभ कैसे होगा ?, यद्यपि चावल के उद्देश्य से प्रवृत्त कृषक धान के साथ पुआल भी पाता है; जिससे बैल की भोजनसमस्या समाहित होती है, उसी प्रकार लौकिक संसारी मुमुक्षु मुक्ति के लिये आगे चलता हुआ संसार की उन्नति भी कर देगा, ऐसा कह सकते हैं, तो भी धान और पुआल में जैसा नान्तरीयकभाव = एक के विना दूसरे का न होना है वैसा संसार की उन्नति और मोक्ष में नहीं है, पुआल के विना धान नहीं मिल सकता, किन्तु संसार की उन्नति के विना भी मोक्ष संभव है।

**उत्तर पक्ष**—मोक्षार्थियों का मोक्ष के लिये संसार और उसकी उन्नति अपेक्षित है, अतः मुमुक्षु संसार की उन्नति भी करते हैं और करेंगे। मोक्ष के लिये सभ्य समाज की सुखशान्ति, और उससे उपदेश करने वाले अच्छे गुरु, सत्सङ्ग की मण्डली दर्शन का साहित्य, निवास स्थान पानी प्रकाश आदि का अच्छा प्रबन्ध भिक्षा का लाभ आदि अवश्य अपेक्षित हैं। और ये सभी अपेक्षित राष्ट्र उन्नति को अवश्य चाहते हैं। उसके विना ये सब नहीं हो पाते। इसलिये मुक्ति चाहने वालों का भी राष्ट्र की उन्नति अवश्य कर्तव्य है। धान पुआल रीति से भी मोक्ष के उपाय की सामग्री के भीतर राष्ट्र की उन्नति अवश्य आ जाती है। इसी प्रकार जैसे राज्य के सैनिक विजय की इच्छा से दूसरे राज्यों में जाने के लिये, सामान ढोने के लिये सड़क बनाते हैं, नदी को पाटते हैं या पुल बनाते हैं, वनों को भी काटकर आगे चले जाते हैं, उनके जाने के बाद वहां के लोग उस मार्ग से जाते आते हैं तथा और कामों को करते हैं, वहां सैनिकों का विजय मात्र उद्देश्य है, वहां के वासीयों का हित या सुविधा की

इच्छा नहीं है तो भी सैनिकों द्वारा दूसरों का हित जैसे होता है, वैसे ही मोक्षार्थी लोग मोक्ष के अनुकूल आचरण करते हुए दूसरे भोगार्थियों के लिये राष्ट्र का उत्कर्ष करेंगे, राष्ट्र की उन्नति को रोकेंगे कैसे ?।

(२)पूर्व पक्ष—मुमुक्षुओं में त्याग भावना प्रधान है, 'कर्म से, प्रजा से और धन से मोक्ष को नहीं पाये कुछ लोग त्याग से मोक्ष को पाये' इत्यादि श्रुतियों से मोक्ष के लिये त्याग आवश्यक बताया गया है। मोक्ष के लिये जिन साधनों को अपनाते हैं, काम हो जाने पर वे भी उनके हेय ही हैं। हेय वस्तुओं में अपेक्षा या आसक्ति नहीं होती, आसक्ति के बिना कर्म नहीं हो पाता अथवा कर्म में सफलता नहीं मिलती, इसलिये मोक्ष मार्ग राष्ट्र की उन्नति के अनुकूल नहीं है।

उत्तर पक्ष—तो भी सोचना चाहिये—'इसलिये त्याग पूर्वक भोग करो' इत्यादि ईशावास्योपनिषद् द्वारा त्याग पूर्वक भोग का विधान है। 'कभी भी कामना की शान्ति उपभोग से नहीं होती' इत्यादि भगवद्गीता से बिना नियन्त्रण के भोग की निन्दा सुनी जाती है, ये सभी श्रुति स्मृतियाँ मोक्ष मार्ग का विधान नहीं करती, मोक्ष में भोग का स्थान नहीं है, भोगार्थी संसारियों के लिये उपदेश हैं, रागप्राप्त भोग में त्याग पूर्वकत्व का विधान है, त्याग के साथ भोग करो यह उपदेश है, पूर्वोक्त गीता का भी तात्पर्य है कि कामना की शान्ति सुख है, कामना के अनुसार भोग सुख नहीं है। केवल भोग से कामना की शान्ति नहीं होती किन्तु मन को सावधान करने से कामना शान्त होती है, उस प्रकार त्याग पूर्वक भोग और मन की सावधानी सभी के लिये समान रूप से कल्याणकारी हैं चाहे मुमुक्षु हो अथवा बुभुक्षु संसारी हो, नहीं तो भोग लम्पट शरीर और इन्द्रियों के बलों को नष्ट करते हुए संसार के भारभूत होते हैं जगत् की उन्नति के लिये कैसे हो सकेंगे ? तब मोक्ष का साधन होता हुआ भी त्याग बल मानव शक्ति को बढ़ाकर देश की समृद्धि का कारण है अवनतिका नहीं यह सिद्ध होता है।

और भी—एक का त्याग और दूसरे का ग्रहण सभी भोगार्थी मोक्षार्थियों के लिये समान है, संसारी भी एक को छोड़ ही कर दूसरे को अपनाते हैं, द्वितीय सोपान पर चढ़कर पहली सीढ़ी छोड़ देते हैं, जवानी पाकर बाल्य का परित्याग करते हैं, अधिक लाभ देखकर तरकारी की बाजारी छोड़कर कपड़े की दूकानदारी करते हैं।

इसी प्रकार मुमुक्षु भी श्रवण और मनन के लिये आश्रम गुरु और शास्त्र आदि को लेते हैं, और निदिध्यासन साधन के लिये वाणियों के विलापन रूपी शास्त्र विस्तारों को छोड़ देते हैं, इसलिये इन दोनों में त्याग और उपादान बराबर है।

( ३ ) **पूर्वपक्ष**—मोक्ष की इच्छा वैराग्य से आक्रान्त है, इस लोक तथा परलोक के सभी प्रकार के सभी भोगों से विरक्त ही मोक्ष की इच्छा करते हैं, विरक्त कर्मों में आसक्त नहीं हो सकते, विरक्त लोग किसकी अपेक्षाकर कर्म करें ? तब मुमुक्षुओं के इन दर्शनों से लोक हित की क्या आशा हो ?।

**उत्तरपक्ष**—यह भी विचार आपातरमणीय है। मुमुक्षुओं का भोग वैराग्य है किन्तु सर्वथा राग का अभाव नहीं है, मोक्ष की इच्छा भी राग ही है, तत्त्वज्ञान में शान्त वातावरण में-खानपान में-अच्छे उपदेश में-सज्जन-विद्वानों के समागम में-साधन सम्पत्ति आदियों में राग जागरूक है, संसारी और मोक्षार्थिओं के राग में इतना ही फरक है कि संसारी जो कोई अपने हित का आचरण करता है अथवा परिवार-जनपद—या राष्ट्र के हित का आचरण करता है; उससे साक्षात् या परम्परा से इस जन्म में या जन्मान्तर में सुख अवश्य चाहता है, मुमुक्षु तो भविष्य में होने वाले सुख का लोभ नहीं रखता, किन्तु तत्त्वज्ञान के अर्जन और रक्षण को तथा दया और उदारतावश दूसरे के सुखों को क्यों नहीं चाहे ? जिससे राष्ट्र की उन्नति को न पसन्द करें।

और क्या—वैराग्य और अनुराग हमेशा साथ रहने वाले हैं सभी संसारी और मोक्षार्थी के समान हैं, किसी का अनुराग है तो दूसरे का वैराग्य है, विचारशील संसारीजन भी एक से विरक्त होकर दूसरे में अनुरक्त होते हैं, प्रवेशिका परीक्षा अच्छी तरह पास करके उससे मिलने वाली राजकीय सेवा वृत्ति को तथा उससे होने वाले वेतन सुख को वैराग्य से छोड़कर उत्तम नोकरी की अभिलाषा से उपाधि कक्षा के अध्ययन में आसक्त होते हैं, व्यापारी भी थोड़े लाभ वाले कार्य से विरक्त होकर ही अधिक मुनाफावाले उत्तम व्यापार में आसक्त होते हैं, वैसे ही मोक्षाभिलाषी पहली-पहली साधन सम्पत्ति में पहले साधन से विरागी होकर आगे के साधन के अनुरागी होते हैं, यही फरक होता है कि संसारीजन मोक्ष से अपरिचित होता हुआ इन सांसारिक सुखों में ही किसी का विराग और दूसरे का अनुराग रखता है, मुमुक्षु तो सांसारिक सुख से उत्तम मोक्ष सुख को समझता हुआ उसी का अनुरागी रहता है और का विरागी

ही रहता है। जबतक मोक्ष सुख सम्पन्न नहीं हुआ तबतक शरीर-इन्द्रिय-मन और बुद्धि आदि को धारण करता है, खान-पान-निवास-वस्त्र-सत्सङ्ग-पढ़ना-व्याख्यान-कलहों का अभाव अपने सम्पर्कीजनो की शान्ति, उनके उपाय आदि की अभिलाषा रखता है, इन सबको सम्पन्न करने में यथासाध्य परिश्रम करता हुआ प्रायः संसारी के ऐसा ही रहता है, मुमुक्षु मुक्त हो जाने पर व्यापार नहीं करता जैसे संसारी मर जाने पर व्यापार नहीं करते, उस प्रकार मुमुक्षुओं के सहायक इन भारतीयदर्शनों का ऐहिक उन्नति से विरोध कैसे हो सकता है।

( ४ ) पूर्वपक्ष—संसारी को भोग में अनुराग है, मोक्षार्थी को भोगमात्र से वैराग्य है, यह फरक है, भोग के प्रेमी संसारी सदा ही भोग साधनों के उपार्जन का अनुष्ठान करते हैं, उत्तम कक्षा में पढ़ना चाहने वाले प्रथम और मध्यम कक्षा के बिना उत्तम कक्षा में जा नहीं सकते इसलिये प्रथम-मध्यम कक्षा को अपनाते हैं, उत्तम कक्षा में जाने पर कृतकार्य होने से पहले के कक्षाओं को छोड़ते हैं, कोई वैराग्य का वहाँ अवसर नहीं है, प्रथम-मध्यम कक्षा का फल भोग उत्तम कक्षा में अध्ययन के फलभोग से गतार्थ हो जाता है, संसारियों को फलभोग का विराग नहीं है, किन्हीं उपायों का वे अनुष्ठान दूसरे कारणों से नहीं करते, वैराग्य से नहीं करते ऐसा नहीं है, कहीं अशक्ति से-कहीं उसका फल प्रकारान्तर से सिद्ध हो जाने से, कहीं उसके फलभोग को दूसरे के फलभोगों में अन्तर्भूत हो जाने से किसी उपाय का अनुष्ठान नहीं करते। मोक्ष की इच्छा होते ही भोग का वैराग्य जाग जाता है, मुमुक्षुओं का सांसारिक वस्तुओं का उपादान मोक्ष साधन होने से होता है, भोग साधन होने से नहीं, भोग की अभिलाषा से विधुरों के लिये भोग साधन वस्तुओं का क्या उपयोग है ?, इस प्रकार मोक्षमार्ग के कारीगर भोग के भिखार इन दर्शनों का इस लौकिक उन्नति से कैसा सरोकार होगा ?।

उत्तरपक्ष—इस विषय में भी मोक्षार्थियों का सर्वथा भोग विराग नहीं है, ऐसा प्रायः कह ही दिया गया है, खान-पान से भूख-प्यास की शान्ति आदि भोग है हीं, पहले-पहले अपनाये हुए वस्तुओं का कृतकार्य होने से अथवा दूसरे कारणों से त्याग संसारी और मुमुक्षुओं का समान ही है, दूसरे भी सांसारिक वस्तुओं का उपादान दोनों का बराबर है, एक का भोगसाधन होने से दूसरे का मोक्षसाधन होने से, उपादान तो हुआ ही, यदि उपादान बराबर है तो सांसारिक वस्तुओं की उन्नति में कोई फरक नहीं

पड़ेगा, दोनों समान रूप से उन्नति कर सकेंगे, और क्या—संयम के बिना भोगलम्पट जगत् की उन्नति कर भी नहीं सकते, देखा जाता है कि कविता करने वाले संगीत के अभ्यासी-राजनीति के अनुसार चलने वाले धनार्जन में तत्पर वैज्ञानिक आविष्कार के प्रणयी अनेक प्रकार के भोगों की उपेक्षा करते हैं, शारीरिक और मानसिक कष्टों को सहते हैं, चिरकाल तक मन की एकाग्रता का निर्वाह करते हैं, तभी सफल होते हैं, दूसरे जो ऐसे कष्ट से डरते हैं वे सफल नहीं होते। उससे सिद्ध होता है कि जबतक शरीर का धारण है तबतक मोक्षार्थी हो या भोगार्थी हो संसार की उन्नति में कोई फरक नहीं पड़ता, दोनों समान रूप से करते हैं, कुछ प्रक्रिया में भले ही कहीं फरक पड़े। मोक्षार्थी लोग दार्शनिक होंगे, शम-दम सहन आदि सम्पत्ति से सम्पन्न संसार की उन्नति के कामों में भी कुशल होंगे।

( ४ ) पूर्वपक्ष—मुमुक्षु लोग तीनों एषणाओं को छोड़ दिये हैं, एषणायें उद्योगों के उत्तेजक हैं, एषणा का परित्याग उद्योगों का प्रतिबन्धक है, यह मोक्षार्थियों का संसारियों से फरक है, अनुराग-आसक्ति-अभिलाषा-अभिनिवेश आदि एषणा शब्द से लिये जाते हैं; लोक=यश की एषणा-धन की एषणा-पुत्र की एषणा इन तीनों एषणाओं से विभूषित लौकिक लोक अपने-अपने उपयोगी कर्मकलापों में प्रवृत्त होते हुए संसार की वस्तुओं की उन्नति करते हैं, कोई यश की अभिलाषा से दूसरे भोग के लिये धन की इच्छा से, और दोनों लोकों से उद्धार चाहने वाले सन्तान की कामना से संसार के कामों में आसक्त होते हैं, मोक्षार्थी लोग किस अभिप्राय से प्रवृत्त हों ?।

उत्तरपक्ष—मोक्ष की इच्छा होने पर भी किसी २ कर्मों में प्रवृत्ति होती है ऐसा प्रायः लिखा गया है, उसको इस पर भी जोड़ना चाहिये, बहुतेरे दार्शनिक ज्ञान-कर्म समुच्चयवादी हैं, कर्मों का भी उपयोग मोक्ष में बताते हैं। दूसरे दार्शनिक भी तत्त्वज्ञान के लिये कर्मों की आवश्यकता मानते हैं, यदि कर्मों का उपयोग है तो मोक्ष के लिये सांसारिक वस्तुओं का उपयोग आही गया। सभी संसार की वस्तुएँ शरीर-धारियों के उपभोग के लिये हैं, मुमुक्षु भी शरीर धारी हैं।

इसी प्रकार तीनों एषणा से भिन्न भी एक लोककल्याण एषणा है, जिसकी भावना 'यहाँ सभी सुखी हों, सभी नीरोग रहें, सभी कल्याणों को देखें, कोई दुःख का भागी न हो', है। अथवा लोकैषणा में ही इसका अन्तर्भाव है, लोकैषणा दो प्रकार की,

पहली यश की एषणा दूसरी लोककल्याण की एषणा, 'यदि मैं आलस के बिना कभी भी कर्म में प्रवृत्त न होऊँ, तो पृथिवी पर सभी मनुष्य मेरे मार्ग का अनुसरण करते हैं, वे सब नष्ट हो जायेंगे, इत्यादि भगवद्गीता से अपने फलभोग की इच्छा न होने पर भी लोककल्याण की भावना से ही कर्मों का अनुष्ठान सूचित हुआ है। ऐसे नेता भी लोककल्याण की भावना से पूर्ण उत्साह पूर्वक काम करते हुए सफल होते हैं, जो लोग यश के लोभ से जनता के हित को सिद्ध करते हैं वे वैसे सफल नहीं होते, व्यापारी विडम्बना वाले लोक में कहे जाते हैं, उस रीति से लोककल्याण की एषणा से कर्मनिष्ठा का महत्व और सफलता है। मालूम पड़ता है जनताजनार्दन की सेवा से यही ईश्वर में कर्तव्यों की अर्पण बुद्धि हैं, इस प्रकार लोककल्याण की भावना से मुमुक्षु भी जगत् की उन्नति करेंगे।

(६) शम, दम, तितिक्षा आदि मुमुक्षुओं की ही सम्पत्ति नहीं है किन्तु मानव मात्र की सम्पत्ति मानवता है। इन्द्रियों का निग्रह सर्दी गर्मी आदि द्वन्द्वो का सहन, और मन की एकाग्रता सभी कामों में अपेक्षित हैं, भोग लम्पट चञ्चल चित्त वाले और आरामी सुकुमार शरीर वाले अपने शरीर की रक्षा का भार दूसरे के कन्धों पर रखते हैं, पृथिवी का भार होते हुए कार्य धुरन्धर नहीं हो सकते। इस प्रकार दर्शन परिशीलन से होने वाले मुमुक्षुओं के बहुत गुण मानवता के भूषण तथा कर्तव्य निष्ठा के जीवन हैं, तब जगत् की उन्नति में दर्शनों की प्रधानता है। धृति, क्षमा, दम, चोरी न करना इत्यादि दश गुणों का मनुष्यों में समन्वय ही मानवता है।

(७) दार्शनिक पदार्थों के परिशीलन से अपनी आत्मा में विभुत्व की भावना जागती है, सभी जगह अपनी आत्मा की सत्ता स्फुरित होती है, अहंपना का विस्तार होता है, बहुतों में मैं बुद्धि हो जाती है। ममता आत्मसम्बन्ध का विस्तार होता है, जिससे बहुतों में अपनैती हो जाती है, यद्यपि अहन्ता और ममता को हटाना दर्शनों का उद्देश्य है, तो भी वह क्रमशः सामग्री आने पर होगा सहसा नही हट सकता, श्रवण और मनन से निर्दोष शुद्ध विभु आत्मा की भावना दृढ होने पर अहन्ता तथा ममता का विस्तार ही होता है उच्छेद नहीं होता, अहन्ता और ममता प्रत्यक्ष भ्रमरूप है शुद्ध आत्मतत्त्व के प्रत्यक्ष के विना परोक्ष ज्ञान से उसकी निवृत्ति नहीं हो सकती, उसका विस्तार भी दिवे के भभक के ऐसा विनाश की पहली अवस्था है, परोक्ष भी दृढ आत्मा

की भावना से उन दोनों का संकोच हट जाता है, इस विस्तार दिशा का प्रदर्शन ब्रह्म सूत्र अध्यास भाष्य 'पुत्र कलत्र आदि के विकल या सकल होने पर मैं ही विकल या सकल हूँ' इत्यादि शङ्कराचार्य भगवान् के वचनों से किया गया है, शरीर और इन्द्रियों में साक्षात् अहन्ता ममता होती है, मैं मोटा जवान यह शरीर में अहन्ता है, मैं बहरा यह इन्द्रिय में अहन्ता है, मेरा शरीर मेरा कान इत्यादि में ममता है, शरीर सम्बन्ध से पुत्र कलत्र आदि मे उनका विस्तार है, उससे भी अधिक बढ़ने पर सपिण्ड कुटुम्ब आदि में फैलते हैं, दार्शनिकों की अहन्ता और ममता का सादृश्य वश सभी मानवों में विस्तार होता है, 'कुत्ता और चण्डाल आदि जीवों में भी पण्डित समदर्शी होते हैं' इत्यादि गीता में यह रीति दीखाई गई है, सभी मानव जीवों में प्रेम प्रगट होता है, यही अवस्था भूत दया उदारता आदि शब्दों से व्यवहृत होती है, यह अवस्था विना किसी फल की अपेक्षा किये हुए प्रगट होती है, इस लिये स्वाभाविक कही जाती है, वह क्रमशः मुक्ति के लिये और जगत् की उन्नति के लिये उत्तम कल्याणकारी अवस्था है। कहीं यश का लोभ भीतर छीपाकर भी लोक कल्याण का काम करने से नेता हो ही जाते हैं, यह यश का लोभरूप लोकैषणा भी पुत्रैषणा और वित्तैषणा की शिथिलता आने पर जागती है, ललना लालन के लोभी की पुत्र और धन में भी उपेक्षा दीख पड़ती है, पुत्र कलत्र आदि परिवार के पालन में परवश को यश कमाने का अवसर कहां, पुत्रैषणा और वित्तैषणा की शिथिलता में दार्शनिक भावना सहाय होती है, इसी प्रकार क्रमशः लोकैषणा को भी शिथिल होने पर लोक कल्याण की एषणा उठती है, 'सभी भूतों में अपनी आत्मा की और अपनी आत्मा में सभी भूतों की भावना' करने वाले मुनि को जैसे यह लोक कल्याण एषणा होती है वैसे ही जैसे मैं तथा मेरा प्रिय पुत्र शरीर प्राण को धारण करने वाला दुःख को नहीं चाहता सुखार्थी है वैसे ही ये सभी मनुष्य हैं ऐसी सादृश्य भावना से बड़ी बड़ी ममता का विस्तार रूप लोक कल्याण की एषणा दार्शनिक संसारी को भी हो जाती है, तीनों एषणाओं का संकोच होने पर इस लोक कल्याण एषणा का जागरण होता है, उनको दार्शनिक भावना के अवलम्ब पर तीनों का संकोच होता है।

(८) सत्य और अहिंसा मानवता है ऐसा दश धर्म लक्षणों का वर्णन बहुत पुराणो सूचना है, गान्धी महात्मा ने इन दोनों का दृढ़ता से आचारण किया न

जनता में फिर प्रतिष्ठित किया, इस समय के उनके अनुयायी संगठन द्वारा राष्ट्र उन्नति का साधन सत्य और अहिंसा है ऐसी घोषणा करते हैं. झूठा बोलनेवाले असत्य आचरण वाले हिंसक मुमुक्षु नहीं हो सकते, दार्शनिक चिन्तन मानसिक युक्तियों के द्वारा असत्य और हिंसा को अहित कर दोष सिद्ध करता है तथा सत्य और अहिंसा को हितकर मानव गुण मानवता बताता है, सत्य और अहिंसा के बिना मानवता नहीं आती, मानवता के बिना पशुता रहती है, पशुओं का मोक्ष में अधिकार नहीं है। मानवता को लेकर दर्शन शुरू होवे हैं पशुता को नहीं, क्योंकि भय के कारण लोग सत्य से भ्रष्ट होते हैं, तीनों एषणा से विमुक्त शरीर का भी परवाह नहीं करने वाले मुमुक्षु को किससे भय है ?। इष्ट वस्तु के अपहार से डर रहता है, जैसे मुमुक्षु का मोक्ष से दूसरा इष्ट नहीं है वैसे कर्मठ मानव का कर्म पूर्ति से दूसरा कोई इष्ट नहीं होता, कहीं मानसिक विनोद के लिये परिहास आदि में विद्वान् भी असत्य भाषण कर बैठते हैं, किन्तु मनः प्रणिधान वाले को विनोद की क्या अपेक्षा है ?, इष्ट का अपहार करने वाले की हिंसा की जाती है, मुमुक्षु को क्या इष्ट है ? जिसका अपहार हो सके, समाज सेवामात्र चाहने वाले का सेवामात्र इष्ट है, सभी भूतों में अपनी आत्मा का और सभी भूतों की अपनी आत्मा में भावना करने वाले को किससे डर हो ?, दूसरे से भय होता है; दूसरे में द्वेष होता है, द्वेषी मारा जाता है।

( ६ ) सांख्य तो रजो गुण और तमो गुण के अभिभव से सत्त्व गुण को बढ़ाना सिखाता है, 'भाग्यविपरीत होने पर पुरुष श्रम को विफल हो जाने पर भी समृद्ध सत्त्व पर आश्रित मनुष्य अपने को विषाद से युक्त नहीं करते' ऐसा महाभारत का वचन सत्त्वबल के आश्रय का विषाद का अभाव फल घोषित करता है, विषाद का अभाव लौकिक फल है, लोककार्य के लिये दर्शन का उपयोग दिखाता है, विषाद के अभाव के बिना कर्मों में निष्ठा नहीं होती, विषाद सभी कर्मों का विघ्न है, विषाद विनाश के बिना मोक्ष की इच्छा मानो बालक की चन्द्रमा पकड़ने की तृष्णा है, सत्त्व की वृद्धि या शुद्धि दर्शन की सम्पत्ति है, उससे मानवता का उत्कर्ष होता है, सभी को सिद्ध करने वाली यह शक्ति है, सभी को शिव सुन्दर बनाने में समर्थ है, लोक-समाज-या राष्ट्र की उन्नति को क्या कहना है ?, यह मन की सम्पत्ति है, इसका दूसरे मन से कैसे परिचय हो सकता है, कोई २ कहीं दर्शनवासना से विशुद्ध मन की वृत्तियों को पहचानेगा।

अभी भी कोई २ व्यवहार निपुण उपदेशक-लोकनेता या राज्य के अधिकारी हो सकते हैं जो अनेक प्रकार की आपत्ति से भी कर्तव्यच्युत नहीं होते, आपत्ति के समय धैर्य को नहीं खोते, बड़े लाभ से भी उन्नत नहीं होते, कर्तव्य में निष्ठा से कर्मों को करते हैं तथा फल को पाते हैं, चाहे इस सत्वसञ्चय का उद्देश्य व्यापार-पाण्डित्य का प्रसार-सदाचार का प्रचार-लोकसंग्रह-समाज संगठन-शान्ति पूर्ण जीवन को बिताना अथवा क्रमशः मोक्ष मार्ग में आगे बढ़ना हो, सभी में सफलता मिलती है, ऐसे मनुष्य अनुचित मार्ग पर नहीं चलते, चोरी से डरते हैं पुलिस से नहीं, अधिक खर्च से रुकते हैं, कृपणता प्रवाद को सरलता से सहते हैं, याचना से हार मानते हैं किन्तु कष्ट के साथ जीवनयापन से नहीं हारते, अपने दोषों को देखते हैं, दूसरे के दोषों की गिनती से समय नहीं बिताते, नम्रता से शोभते हैं, अभिमान से बड़प्पन को नहीं पाते।

इसीलिये नीतिनिपुण शासक की दार्शनिकता पसन्द करते हैं, जैसे नीति-वाक्यामृत में श्रीसोमसूरि कहते हैं—प्रकृति और पुरुष के तत्त्व को जानने वाला सत्त्व-बल का आश्रय लेता है, रजोगुण के फल चञ्चलता को छोड़ता है, तमोगुण से अभिभूत नहीं होता इत्यादि।

इन्द्रियों का जय आदि सत्त्वसञ्चय का सोपान है, जैसे कि श्रीमद्भागवत में—'जिसका अन्तःकरण वश में है, उसके ये सभी वश में हैं, लोकपालों के साथ लोक साव-धानी से उसको बलि देते हैं।

ऐसे ही मनुजी भी कहते हैं—'इन्द्रियों के जय के लिये रात-दिन उपाय करना चाहिये। क्योंकि जितेन्द्रिय राजा प्रजाओं को वश में रख सकता है'। इति



काशीसंस्कृतरत्नाकरसंस्कृतपत्रप्रकाशित:

# सान्वयवादः

मदन्तरङ्गेङ्गितमासृजन्तं सन्तं परात्मानमखण्डबोधम् ।
बोधं परीप्सुर्भजते भवानीजानिं सदा सान्वयवादनुत्यै ॥ १ ॥
श्रीबालकृष्णगुरुपादसरोजपांशुः निष्पांशुतां रचयताच्छिरसोह्यमानः ।
मानप्रभावशुचिसान्वयवादभानुभानुप्रसारमधिदर्शनमद्य वक्ति ॥ २ ॥

## सान्वयवादपदार्थः

जीवानां जन्मावसानयोर्न सर्वथा नूतनं प्राकट्यं विनाशो वा अपि तु नूतनजन्मन्यपि प्राक्तनः कश्चिदंशः समन्वेति विनाशे चावशिष्यते । तथा चोत्पादविनाशौ सान्वयाविति । यथा घटपटादिषु मृत्तन्त्वादयः ।

## नाममूलम्

ब्रह्मसूत्रशारीरकभाष्ये २–२–२२ सुगतमतविमर्दनवेलायां 'न हि भावानां निरन्वयो विनाशः संभवति, प्रत्यभिज्ञाबलेनान्वय्यविच्छेददर्शनात्'

उदबिन्दौ च सिन्धौ च तोयभावो न भिद्यते ।
विनष्टेऽपि ततो बिन्दावस्ति तस्यान्वयोऽम्बुधौ ॥

भाष्ये परिणामवादमनुसृत्य भावमात्रस्यैवोत्पत्तिविनाशयोः सान्वयवादः स्थापितः । भामत्याञ्च अन्वयिनः सत्यत्वम्, उत्पादविनाशशालिनामवस्थाविशेषाणाञ्च मिथ्यात्वमुपपाद्य समुद्धृतेन पद्येन जलभावस्य सर्वास्ववस्थासु अन्वयः प्रतिपादितः ।

परमुक्तं प्राचीनं पद्यमारम्भवादिनोऽपि मन्वते उभयत्रापि अन्वयस्याविच्छेदात् । नैयायिका अपि उदबिन्दौ सिन्धौ च तोयतामभ्युपगच्छन्ति, जलत्वसामान्यस्याविच्छेदात् । यद्यप्युत्तरार्धपद्येन स्फुटितं पूर्वापरयोरवस्थयोः कश्चिदंशः समन्वेतीति तथापि तत्परिणामारम्भवादयोरुभयोरपि वर्त्तत एव । उपादानोपादेययोरभेदात्परिणामवादे उपादानेनैवोपादेयस्यान्वयः आरम्भवादे तु तयोर्भेदादुपादानतद्गुणानामुपादेयतद्गुणयोरन्वयासम्भवेऽपि

तयोः साजात्यमस्त्येव, सजातीयता चैकजातेरन्वयं समपेक्षत एव। तथा च आरम्भवादेऽपि सान्वयवादोऽप्रतिहत एव। लोकेऽपि यथावस्थितादेव बीजान्नाङ्कुरोत्पत्तिरपि तु धरणीजलादिसंयोगेनावयविनाशानन्तरमेवेति प्रत्यक्षसिद्धम्, तत्रापि यवाङ्कुरं गोधूमाङ्कुरमिति प्रत्यक्षीक्रियते व्यवह्रियते च। एवं पाषाणभस्मरजतभस्मेत्यादिष्वपि द्रव्यान्वय ऊहनीयः। अत एव महापटध्वंसजन्ये खण्डपटे गृहीतसहचारप्रयोज्या पाषाणे पृथ्वीत्वसाधनं प्रयोजयन्ती द्रव्यध्वंसजन्यद्रव्यत्वनिष्ठा स्वाश्रयजनकध्वंसप्रतियोगिद्रव्योपादानोपादेयत्वनिरूपिता व्याप्तिरभ्युपेयते नैयायिकैः। अस्त्वेतद् द्रव्यान्तरेषु निबन्धनीयन्तु जीवानामेवोत्पत्तिविनाशयोः सान्वयवादसाम्राज्यम्।

## वार्ड जेम्समहोदयस्य आस्तिकवादः

एकोनविंशशताब्द्या अनुभववादी विदेशीयो दार्शनिको विद्वान् वार्ड जेम्समहोदयः स्वीये दार्शनिकरीतिप्रकरणे 'येन स्वीकृतेन विचारितेन वा मनुष्यस्य प्रयोजनं सिध्यति तदेव सत्यमिति साधयितुम् उदाहरणरूपेण 'आस्तिकवाद आशायाः सन्तोषस्य च दर्शनम्, नास्तिकवादसूर्यस्तु नैराश्यसमुद्रेऽस्तं गच्छति', इति स्फुटं लिखति। तदपि सान्वयवादरहस्यमनुसृत्यैव।

तथा हि आस्तिकाः बालकस्य जातमात्रस्यैव सुख-दुःखे अवगत्य तृप्त्यर्थंभोजनप्रवृत्त्यादिना जन्ममात्रस्यैव सनिमित्तकत्वेऽसंदिग्धाः तयोः सुखदुःखयोरपि सहेतुकत्वं निर्णयन्ति। मधुरकटुपानादिकर्मणा सद्य एव अपथ्यसेवनादिना च रोगद्वारेण चिरेण सुखदुःखोत्पादमिहैव जन्मनि असकृदालोचितवन्तः कर्मजनकप्रवृत्तिनिवृत्ती समानाधिकरणे सुखदुःखे प्रयोजयत इत्यत्र न विचिकित्सन्ते। कथमन्यथा एकस्यैव सुचरितेन जगत्कर्मणां न वैयर्थ्यम् कथन्नवा एकस्यैव दुराचारेण जगत्या बन्धः। इदञ्च जातमात्रं नाधुना किमपि कप्यमकप्यं वा समाचरत्। अनुभवति च सुखदुःखे। न चेमे अहेतुके, अतो नूनमनेन शरीरान्तरेणैव एतत्फलोपयोगि किमपि आचारि। योग्यश्च सन्नाचरन् परत्रापि उपभोक्ष्यते। जीवो म्रियमाणो न सर्वथा विनश्यति अपितु कश्चिदंशोऽवशिष्यते यो जन्मान्तरेणान्वेति। जायमानोऽपि न सर्वथा नूतनः किन्तु प्राक्तनेनांशेनान्वित एव।

यथा इहैवानुचितमाचरन् तच्च गोपयन्नपि समयेन गुप्तचरादिना प्रसिद्धि गते दुष्कर्मणि भृशं राजपुरुषैर्दण्ड्यते तथा दुष्कृतस्य इहापक्वस्य परत्र लोके दुष्परिणाममवश्यमवाप्स्यते। तदेव च उपनिषदा जेगीयते

कपूयचरणाः कपूयां योनिमापद्यन्त इत्यादिना । तादृशमेव वर्ण्यते प्राचीन-दर्शनेषु कृताभ्युपगमपदेन ।

उचितञ्च समाचरन् कदाचित् सद्यः कदाचन च चिरेण पुरस्कार-समज्ञाप्रभृतीनि सुफलानि उपभुङ्क्ते तथा जन्मान्तरेऽपि सुफलमाप्स्यति। तथैव अकपूयचरणा अकपूयां योनिमित्यादिनोपनिषदभिप्रेतम् । तस्मादा-जन्मसुकृतं समुपार्जनीयमिति चिन्तयन्ति ।

नास्तिकास्तु—नास्ति जन्मान्तरसम्बन्धः, ऐहिको बाल्यकालिकः समुपभोगः अकस्मादेव पितृभ्यास्वोपनतः, यावज्जीवनं चौर्येण ऋणेन वा आनन्दोऽनुभूयताम्, ऐहिकदुःखोपनिपातप्रतीकाराय कूटनीतिराचर्यताम् ? सत्यमपलप्यताम्, असत्यं समर्थ्यताम्, अहिंसया हिंसा संगोप्यताम्, नास्ति परो लोकः, तदर्थं कस्तोकोऽपि शोकः, साम्प्रतं समुपस्थितस्यैकस्य लोकस्य प्रतरणमेव दुस्तरम्, किमु दुस्तरपरलोकोपार्जनम् न मूर्खता ? अनुपस्थि-तात्परलोकभयात्प्राप्तप्रमोदपरित्यागो न कातरता, सुखहेतूनां चौर्यादि-कर्मणां सन्न्यासो नालसिता ? पापभयात्परवञ्चनचञ्चुतापरिमोचनं न चित्तस्य मन्थरता ? इत्यादिकं विमृशन्ति ।

तेन च नास्तिकवादेन जगति अकर्मण्यतासाम्राज्यम्, समाजराष्ट्र-विघटनपाटच्चर्यम्, शान्तेर्विद्रावणम्, अशान्तेः संश्रयणम्-अहिंसाह्रासः, मात्सर्यविकास इत्यादिका आपतन्ति ।

आस्तिकवादेन च ऐहिकसुखसामग्रीसमुपस्थितावपि आमुष्मिक-सुगुणतरुसंस्तृत्ये कर्मण्यतामृतसेचनम्, हिंसापरित्यागः, अहिंसोपासना, सत्यनिष्ठा, असत्यापनोदनम्, सर्वेषु जीवेषु अभिन्नात्मवादद्वारा सदृशात्म-वादद्वारा वा साजात्यस्थापनेन सौहार्दम्, ततः समाजराष्ट्रसुव्यवस्था समुदेति । अतः सूक्तिजेम्समहोदयस्य चरितार्था ।

सान्वयवादो यथा गतेषु जन्मसु आत्मीयतां स्फीरयति तथा आग-मिष्यत्स्वपि जन्मसु आत्मान्वयेनात्मीयतां सम्पादयति । एवं विद्यमानेषु सर्वेषु मनुष्येषु स्वगतमनुष्यत्वान्वयेन चेतनमात्रेषु स्वीयचैतन्यान्वयेन च बन्धुतां ख्यापयति ।

प्रायो विदेशीयेषु समाजशास्त्रेषु एवमुद्घोष्यते यत्प्रथमं वन्यप्रायाः स्वार्थमात्रपरायणा अज्ञानिनो मनुष्या आसन् ये हिंस्रस्वभावा अनियमित-कामवासनाः पशव इव आचरन्तिस्म । शनकैः सुज्ञानोदयात्परस्वातन्त्र्यमपि

आवश्यकीयं विविच्य स्वार्थसंकोचेन परबाधमपराधं मन्यमाना वैवाहिक-नियमनिबद्धाः क्रमेण सभ्याः सामाजिका राष्ट्रीयाश्चाराजन्त ।
अत्र हैंगेलमतम्—

सर गार्ट जर्मननिवासी आसन्नोनविंशशताब्दीकः प्रत्ययवादी दार्शनिको हैंगेलनामा विद्वान् स्वीये पुस्तके एवमपि लिखति यथा—नैतिक-दण्डादिना क्रोधकामादीनां दमनेन क्रमशः औचित्यविचारचर्चा समुदिते तेन कुटुम्ब-समाज-राष्ट्र-जीवानानां विकास इति ।

## अत्र भारतीय सिद्धान्तः

पूर्वप्रदर्शितरीत्या जीवत्वमनुष्यात्वाद्यन्वयेन स्वार्थताया न संकोचोऽपि तु स्वार्थतायाः पूर्णविस्तारेण 'वसुधैव कुटुम्बकमिति' भावनया समष्ट्युप-चिकीर्षया समाजस्य राष्ट्रस्य वा कुटुम्बस्येवोद्भवः । वैदेशिकानां स्वार्थ-संकोचेन औचित्यचर्चा भारतीयानान्तु स्वार्थविकाशेन । स्वमात्मा सर्वत्र समदर्शितया आत्मभावं भावयतः सर्वमेव स्वम्, समेषाञ्चार्थः स्वार्थ इति स्वार्थविकाशः ।

सर्वत्रैव चानुभूयतेऽयं स्वार्थविकाशः । यथाहि सर्वथा पित्रादिहीन-स्तरुणः स्वीयशरीरेन्द्रियादिष्वेव स्वत्वमनुभवति शनैर्जायायुतो जायायामपि स्वत्वमनुमन्यमानस्तदर्थं हृष्यति क्लिश्यति च । ततः संततिमनुभवतः स्वत्वे सन्तानोऽपि अनुवर्तते । एवं सपिण्डे स्वगोत्रे ग्रामे मण्डलादिषु च आत्मीयता अपेक्षाकृता अन्वेति । तथाचायं न स्वार्थसंकोचः किन्तु स्वार्थविकाशः ।

एतादृशश्चात्मीयतान्वयो दार्शनिकाचार्यमतभेदेन अविद्यया विद्यया च कृतो भवतीति त्वन्यत् । भारतीयं दर्शनन्तु शुद्धमपि आत्मानं शरीरात्मा-ध्यासवशात् न जातु तिष्ठत्यकर्मकृदित्यादिन्यायेन कर्मपरम्परया लिप्त-मात्मानम्, नित्यमुक्तमपि अविद्याविभवेनानादिबद्धम्, बुद्धमपि अविद्याऽऽ-वरणशक्तिसमावृतप्रकाशं जड़तां प्राप्तमिव प्रद्योतयन्न किमपि व्यावहारिकं बलादवरुन्धे प्रत्युत आत्मस्वरूपाननुरूपं बाह्याध्यासवशोपपन्नमपारमार्थिकं सांसारिकं कल्पयदनौचित्यात्परावर्तयति । अतः श्रीकृष्णमुखाच्छुद्धबुद्धमुक्त-स्वभावमात्मानं श्रुत्वाऽपि क्षत्रियः सांसारिकभोगवितृष्णः श्रीकृष्णानुचरः स्वीये कर्मणि युद्धे प्रावर्ततेति विस्तरभयान्नेह वितन्यते ।

## शेपलिङ्गमते प्रायः स्फुट एव सान्वयवादः

१८३१ तः १९१० विक्रमसम्वत्सरकालिकः फिक्टशशिष्यशिष्यः स्पिनोजानुगामी लियनवर्गजर्मननिवासी प्रत्ययवादी दार्शनिकः शेलिङ्गनामा

लिखति-सर्वत्रैवात्मशक्तिर्निर्जीवः कश्चिदपि न वर्तते । जड़द्रव्याद्वुद्भिजं ततश्च प्राणिनो जायन्ते । अतः सर्वत्रैव जीवः प्रकृतिस्तु मूकात्मा इत्यादि ।

जड़द्रव्ये धरणीजलादौ जीवस्यान्वयः । ततोऽङ्कुरावस्थायां फलावस्थायां भोजनानन्तरं रसावस्थायां वीर्यस्वरूपे मनुष्याद्याकृतिरूपतायाञ्चान्वेति इति तस्याभिप्रायः प्रतिभाति । तस्य विशेषतः स्फुटता तु उपनिषदि कर्मिणां कर्मक्षये चन्द्रलोकात्परावर्तनसमये स्तम्भीभवति, व्रीहीभवति इत्यादिना प्रतीयते । पुण्यकर्मक्षये पुनर्जन्मने स्तम्भ-फल-रस-वीर्य-कलल-बुद्बुदाद्यवस्था जीवानां जायन्ते इति तदभिप्रेतम् । तथा चैकस्य जीवस्य नानाऽवस्थाप्रदर्शनेन सर्वत्र जीवान्वयं द्योतयन्ती श्रुतिर्न जीवानां निरन्वयो विनाशो न वा सर्वथा नूतनस्य समुत्पाद इति वक्ति स्फुट एव सान्वयवादः ।

श्वेताश्वतरोपनिषदि चतुर्थाध्याये तृतीयमन्त्रे एकस्य आत्मनः शारीरिकावस्थाभेदेऽपि अन्वयं प्रदर्शयति श्रुतिः—

त्वं स्त्री त्वं पुमानसि त्वम् कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चयसि त्वं जातो भवसि विश्वतोमुखः ॥

तथा च शरीरगतबाल्याद्यवस्थाभेदेऽपि नात्मनो भेदः परन्त्वेकस्यैवान्वयस्तथा शरीररूपावस्थाभेदेऽपि कथं भेद आत्मन आपतेत् ?

यद्यपि शेलिङ्गमते जडाच्चेतनस्योत्पत्तिरुक्ता तथापि न सान्वयवादस्य विरोध उदभावनीयः । जडेष्वपि मूकजीवत्वस्य तेन स्फुटं स्वीकारात् । सर्वेष्वपि चैतन्यमनुस्यूतं मन्यते शेलिङ्गेन । एतावानेव विभेदो यन्मनुष्यादिषु विशिष्टेन्द्रियसम्बन्धादुद्भूतं वाचालाभिधं चैतन्यम्, प्रकृतिष्वपि तादृशोद्भवकारणाभावादनुद्भूतं मूकाभिधानं चैतन्यम् ।

यद्यपि दार्शनिकमतभेदेन स्वप्रकाशं स्वांशे चैतन्यम् तथापि विषयसम्बन्धप्रयोजकमुद्भूतत्वं विशिष्टेन्द्रियबलादेवेति उपनिषद्वृत्तादपि प्रतीयते। तथाहि एकस्य कस्यचिच्छकुनेराहारशिथिलीकरणादल्पप्राणत्वे जाते सर्वथैवाहारनिरोधे एवं शिथिलः संजातो येन न शृणोति न पश्यन्नपि अवलोकयति न जिघ्रति केवलं श्वसित्येव । क्रमश आहारप्रदाने तु नामोच्चारणे शृणोतीत्यादिवृत्तं तत्रावलोक्यते । तेन स्वतन्त्रमपि चैतन्यं भौतिकपरिणामविशेषावेशोद्भवाख्यं विषयग्रहणसामर्थ्यं धत्ते इति स्फुटं प्रतीयते । तदनुसार्येव चार्वाकस्य कतिपयवैशेषिकविदुषां च भूतचैतन्यवाद इतित्वन्यदेव ।

अर्हद्दर्शनेऽपि अनेकान्तवादितया सर्वेषां नित्यत्वमनित्यत्वञ्च। तच्चैकरूपेण विरुद्धमिति विरोधपरिहाराय पर्यायाभिधाः केचनावस्थाविशेषाः प्रायशो बहूनां मतेऽनित्या इति तद्विशिष्टत्वेन द्रव्याणामस्थिरत्वञ्च। परं द्रव्यरूपेण नित्यत्वं स्थिरत्वञ्च। अन्यथा द्रव्यस्य पर्यायिणोऽभावे कस्य पर्यायाः स्युः। तथा च पर्यायेषु परिवर्तमानेष्वेकस्य पर्यायिणो द्रव्यस्यान्वयः स्फुट एवेति सर्वेषु भावेषु सान्वयवादोऽर्हन्मतसम्मतः। अत एव जन्मान्तराणि स्वर्नरकौ बद्धमुक्तभावौ चाभ्युपयन्ति आर्हताः। पुराणवृत्तानीव बहुधा जन्मान्तरीयाः कथा जैनागमेष्वपि। पुराणेषु बहुधा स्तुत्यादिप्रसङ्गे दर्शनस्वरूपवर्णनेऽपि दर्शनस्वरूपाणां समन्वयः कथाभागैः सह तादृशो नोपलभ्यते यथा जैनागमेषु इति विशेषः। आत्मन उभयत्रान्वयादेव य एव बद्धः स एव मुक्त इति व्यवस्था उपपद्यते। यादृशो बद्धस्तादृशो मुक्त इति तु कस्यापि मते न समन्वेति बन्धावस्थाविगमे एव मुक्तभावस्य समुदयाद् इति।

भारतीयदर्शनेषु चार्वाकदर्शनं जन्मान्तरं नाभ्युपैति इति प्रसिद्धिः। भूतचैतन्यवाद इति तेषां सिद्धान्तः। प्रत्यक्षमात्रञ्च प्रमाणम्। प्रसिद्धञ्चेदमन्यत्रेति नेह वितन्यते। तथा च भौतिकशरीरस्य विनाशसमये भूतपरिणामविशेषचैतन्यस्वरूपजीवस्यापि विनाशाज्जीवस्य निरन्वयनाश इति सान्वयवादो मतेऽस्मिन् न वर्तते इत्यापतति।

## चार्वाकमते किञ्चिन्निवेदनम्

दर्शनमिदं भारतीयं न विदेशीयमिति चिरात्प्रसिद्धम्। भारतीयदर्शनेषु न किमपि दर्शनान्तरमेवं विशृङ्खलितपदार्थकमुपलभ्यते यथेदं चार्वाकदर्शनम्। चिराच्च प्रचलितमिदमेवं सर्वदाऽतिष्ठदिति न मनसो मान्यता। विदेशीयदर्शनानि तु तादृशान्येव सन्तो यानि न सर्वान् पदार्थान् यथाकथञ्चिदङ्गाङ्गीभावेन योजयन्ति अपितु केचन विषयाः केषाञ्चिद्विदुषां मनोनियोगात्प्रादुर्भूताः संगृहीताः सन्तो दर्शनतामागता इत्येव प्रतिभाति। भारतीयानि तु दर्शनानि जीव परमात्मसृष्टिप्रलय—बन्ध-मोक्ष प्रमाण-प्रमेयादीनि प्रतिपादयन्ति न लौकिकाद् व्यवहारात् प्रतीपमञ्चन्ति। खण्डनीयतयोद्धरन्तस्तैर्थिकाः प्राय एतान् पदार्थान् असदीयतया प्रदर्शयन्ति परं तत्र केचन पदार्थाः कल्पिता इति प्रतिभाति। परस्परविरुद्धानि च प्रतिपाद्यानि विराजन्ते। तथाहि प्रत्यक्षमात्रं प्रमाणयतोऽप्रत्यक्षेभ्यो भौतिकपरमाणुभ्यः संसारसर्जनम्। शब्दमप्रमाणयतः शास्त्रप्रणयनम्, अनुमान-

शब्दावनङ्गीकुर्वतः पराभिप्रायपरिज्ञानपुरस्सरं प्रत्युत्तरप्रदानम् इत्यादि। खण्डनमपि व्यवहारविलोप-मूकत्व-बधिरत्वाद्यापादनेन, मदशक्तिवत्परिणामविशेषो भूतानां चैतन्यमिति प्रतिपाद्यापि चतुर्भूतपरमाणवः संहतानि भूतानि वा चेतनानि इत्यादि विकल्पेन, एकस्य शरीरावयवस्य च्छेदे चैतन्यनाशप्रसञ्जनादिना च। नैवं खण्डनमण्डनादीनि दर्शनानाम्।

## तत्र मम धारणा

प्रत्यक्षमनुमानं शब्दश्च प्रमाणं चार्वाकमते। तेन न सांसारिकस्य कस्यचिद् व्यवहारस्य विलोपः। नापि प्रत्यक्षमात्रप्रमाणप्रवादविलोपप्रसङ्गः, प्रत्यक्षत यैव त्रयाणां प्रमाणत्वस्वीकारात् प्रमाणद्वयवादिनो वैदिकस्य वैशेषिकस्येव।

मदशक्तिवद्भौतिकपरिणामविशेषस्तु चैतन्यं विशेषरूपेण जीवाणुवादवन्मतभेदेन मस्तिष्के हृदये वा तिष्ठति प्रभावञ्च अपेक्षाकृतमन्यत्रापि सर्वाङ्गेषु पातयति। बाल्यतः शरीरस्योन्नतिः; स्थविरे च शरीरापचयादपचयश्चैतन्यस्यानुभूयत एव। क्वचिच्च स्थूले जने चैतन्यस्य न्यूनता कृशे च विशिष्टता भूतविशेषकृतैव तैजसबुद्धिवादिनां बुद्धिविभव इव इति।

## प्राच्यपाश्चात्यदर्शनयोरुद्देश्यभेदः

अपि च आस्तिकानामपि भारतीयदर्शनानामैहिकी शान्तिरेवोद्देश्यभूता न तु पाश्चात्यदर्शनानामिव समाजसंघटनादिना राष्ट्रोन्नतिप्रभृतिराजन्मतृष्णासन्तर्पणमेव। परमनास्तिकस्यापि शून्यवादिनः—

> सर्वसंकल्पहानाय शून्यतामृतदेशना।
> तस्यामेव यदि ग्राहः स त्वया ह्यवसादितः॥ इति

वचनं मनसः सर्वसङ्कल्पहानायैव शून्यतोपदेशं बोधयति ;

## आस्तिकनास्तिकयोर्दृष्टिभेदः

परमास्तिका हि नित्यमात्मानमुपदिशन्तः शरीरादिभेदञ्च ग्राहयन्तः शरीरादिकृतकुकर्मणा आत्मा दुःखमुपभुङ्क्ते तस्मात्सुखभोगाय सुचरितान्येवाचरितव्यानि वृथा विषयसंग्राहककर्मभिर्नात्मा जन्मपरम्परायां पातनीयः, भोगतृष्णातोयजे तुषारासार एव वरः, कर्माङ्कुराणां तत्त्वज्ञानाग्निरेव दावाग्निः, आत्मग्रह एव सांसारिकपरिग्रहदुर्ग्रह इति प्रचारयन्ति।

नास्तिकाश्च तारुण्यशक्तिसञ्चयसतृष्णा भविष्णवो बाला रात्रिन्दिवं चेष्टन्ते, तरुणाः स्थिरास्थिरसम्पत्तिरागरोगेणार्जनज्वरशरणा जर्जरी-क्रियन्ते, जराजीर्णा अपि चिरञ्जीविताग्रहमात्रेण गृहीता जीवननिर्वाह-लिप्साललनाः पुत्रपौत्रादिषु आत्मग्राहग्रसिता क्षणमात्रमपि सुक्षणं न मन्वते। तथा च चार्वाकस्य चेतनशरीरात्मग्रहो बन्ध एतावतीं भोगपरम्परापोषिणीं तृष्णातरङ्गिणीं प्रसुवानो बन्धश्चेन्नित्यात्मवादोऽनेकजन्मभोगतृष्णाविभव-संवादः सन् महाबन्ध इति निश्चितमिति चिन्तयति। तस्मान्नाहमासं न चाग्रे भविष्यामि, अकस्मादुपनतस्य मे कथमपि शरीरयात्रैव निर्वहनीयेति तृष्णां संकोचयतश्चार्वाकस्य मतमेव नित्यात्मवादमतापेक्षया वरम्, प्रति-क्षणञ्च भिन्नम्, आत्मीयताया अवसरमेवानासादयत् अनिवार्ये स्वाभाविके च क्षणिकत्वे कथं स्याद् रागरोग इति सुगतमतमेव वरीय इति तदनुयायि-नोऽनुसरन्ति।

तस्मादुभयविधानामपि दर्शनानां तृष्णाक्षयरूपा शान्तिरेव परमार्थः। नैष्कर्मण्यन्तु भोगरागरूषितमेवारुन्तुदति अन्यथा तु पुरुषार्थ एवेत्यवधेयम्।

## चार्वाकमते सान्वयवादः

ततश्च चार्वाकमतेऽपि सान्वयवाद ऊहनीय एव। तथाहि जन्मान्तर-मपि चार्वाकमते वर्तत एव किमपि वैलक्षण्यमावहत्। यतो भौतिकमेव जीवस्वरूपम्। तच्च सन्तत्यादावन्वेत्येव सूक्ष्मांशेन। अतो रूपाकृत्याद्यन्वयः स्थूलोऽपि साक्षात् क्रियते। यथा रूपादिसूक्ष्मांशानामन्वयस्तथा जनक-चैतन्यां सूक्ष्मरूपस्यापि अन्वयो भौतिकत्वाविशेषात्। अतएव श्वसिति हृष्यति रोदिति च। बहुभिरुपपादितं जातमात्रस्येष्टसाधनतास्मरणं विना स्तन्यपानाप्रवृत्त्यापादनमपि चैतन्यान्वयेन समाहितं विवेचनीयम्। अन्यविषयकप्रवृत्त्यापादने च दर्शनान्तराणामपि प्रायः समानो योगः क्षेमश्च।

## तत्र विशेषः

भौतिकीनां परिणतीनामयं स्वभावो यत् स्वांशेन व्यक्त्यन्तरं सृजन्त्योऽपि आंशिकव्ययेन न सर्वथा अपचयं यन्ति किन्तु अनुकूलभौतिकाहारेण स्वांशान् पूरयन्ति उपचयञ्च यन्ति। अतएव वृक्षादिच्छेदने पुनः प्ररोहो दृश्यते। अतः कतिपयसन्ततिसमुत्पादने उत्पादकविलयसम्भावनैव विलीना। अत एव परमार्थदर्शनचतुर्थाध्यायद्वितीयाह्निकस्य षष्ठमधिकरणम्—

स्तन्यचूषणशक्त्यादि पैतृकं वान्यजन्मजम् ।
जन्मान्तराभ्यासजं तत्स्फुटमुक्तं मनीषिभिः ॥ १ ॥
पैतृकन्तु मनुष्याद्याकृतिवत्तत्समञ्जसम् ।
मलं तदर्थं जीवस्य जन्मान्तरविकल्पनैः ॥ २ ॥

यद्यपि भौतिकातिरिक्तव्यापकचैतन्यवादिपरमार्थदर्शनन्तथापि शरीरनाशमनु चैतन्यनाशमङ्गीकुर्वदेतदंशे समानमेव । नापि चेतनशरीरस्य निरन्वयनाशेन सान्वयवादो न घटत इति वाच्यम्, परिणामवादाभ्युपगमे भौतिकान्तरविनाशवत् भौतिकस्य शरीरस्य निरन्वयविनाशासम्भवात् । अवस्थाविशेषाणां परिवर्तनेऽपि मौलिकद्रव्यस्यावस्थानाङ्गीकारात् । आरम्भवादेऽपि पूर्वोक्तरीत्या पाषाणभस्मनि पार्थिवत्ववत् कायकरीषेऽपि शरीरोपादानपरमाणुपरिणतेरुक्तप्रायत्वात् ।

शरीरमनुविनाशिनं जीवं वदद् अपि परमार्थदर्शनं सर्वात्मकमाकाशवद् विभु ब्रह्माऽङ्गीकरोति । शरीरनालिकायां गगनमिव विशद् ब्रह्म जीवसंज्ञां लभते । शरीरमन्तरा न लभते । शरीरमन्तरा तु ब्रह्मैव न जीवः । नालिकाविनाशे गगनच्छिद्रमिव शरीरविनाशे जीवोऽपि न विनश्यति तथा च वेदान्तिमते यथोपाधिनाशस्तथाऽत्र शरीरनाशः । उपाधिनाशे जीवत्वं विनष्टन्तु जीवो ब्रह्मेत्यौपनिषदा निगदन्ति । परमार्थदर्शनन्तु जीवोऽपि विनश्यतीति ब्रूते परं वेदान्तवज्जीवत्वस्यैव विनाशे पर्यवसानं तत्प्रक्रियया आयाति भूम्न उच्छेदासम्भवे चतुर्थाध्यायस्य द्वितीयाह्निकस्य द्वितीयमधिकरणं यथा—

परिणामितया भूम्न उच्छित्तिः सम्भवेन्नवा ।
उच्छित्तिः संभवेदेव परिणामात्प्रकल्पिता ॥
सर्वस्य परिणामित्वात्सर्वोच्छेदाद्यसम्भवात् ।
उच्छित्तिः संभवेन्नैव कदापि सकलात्मनः ॥

जीवविषयेऽपि चतुर्थमधिकरणन्तत्रैव तद्यथा—

भूम्नः कायस्य जीवस्य कस्याप्यस्त्युत्क्रमो नवा ।
अस्तु कस्यापि वस्त्रादिरयागौपम्यस्य दर्शनात् ॥
भूम्नः सर्वात्मकत्वं यच्छरीरं तु विशीर्यति ।
शरीरानुविनाशी च जीवः कस्योत्क्रमोऽस्त्वतः ॥

वार्तिकमत्रत्यं स्फुटं दर्शनस्वरूपं प्रदर्शयति यथा—

सर्वात्मके ब्रह्मणि काययष्टिर्वियत्यमेये किल नालिकेव ।
सूचीप्रचारस्वनशक्तिवच्च कायानुगा राजति जीवशक्तिः ॥ १ ॥
वियत्समं स्थाणु च सर्वगञ्च देहात्कथं ब्रह्म परैतु देहम् ।
शरीरमेतन्ननु नालिकेव पीर्यत्यवश्यं गमनं न तस्य ॥ २ ॥
पुञ्जोद्भवत्वाद्भविता क्व जीवः पुञ्जे विशीर्णे निधनस्य काले ।
नाशं व्रजन्त्यां नहि नालिकायां तस्याः स्वनं चुम्बति नालिकान्या
उडडीय वा प्रेतपिशाचरूपः स्वनो न कुञ्जे गिरिगह्वरे वा ।
कूजत्यसौ नालिकया वियुक्तो रामो विदेहाधिपकन्ययेव ॥ ४ ॥

## क्षणिकविज्ञानेऽपि

क्षणिकविज्ञानेऽपि वासनान्वयः, सजातीयविज्ञानोत्पादकत्वस्वभावस्यान्वयः, सजातीयत्वस्यान्वयः, एकसन्तानाद्यन्वयो विराजते सान्वयाद इति किमु स्थिरात्मवाददर्शनान्तरेषु इति लेखकलेवरविवृद्धिभयाद्विरमामि ।

प्राच्यप्रतीच्यविदुषामदुपान्यमूनि
संदर्शनानि सलिलानि सदैव वर्षन् ।
हृष्यन् मदल्पचितिदोषवहोऽपि दोष-
ज्ञानां मुदे भवतु सान्वयवादवादः ॥



संस्कृत में लिखा निबन्ध है, यह अखिल भारतीय प्राच्य विद्या सम्मेलन के १६ वें अधिवेशन में पढ़ा गया था, जो १९५१ ई० अक्तूबर ३-४-५ दिनों लखनऊ विश्वविद्यालय—लखनऊ में हुआ था। उसकी निबन्ध सूची में २०५ पृ० पर इसका अतिसंक्षिप्त-स्वरूप और विषयसूची नीचे की तरह संस्कृत में ही मुद्रित है।

# सान्वयवाद का अतिसंक्षिप्तसार

जीवों का जन्म सर्वथा नया नहीं होता किन्तु दूसरे अतीत जन्मों के अंश से युक्त ही होता है, विनाश भी सर्वथा नहीं होता कुछ अंश रही जाता है जिसका दूसरे जन्म में सम्बन्ध होता है।

बौद्धमत खण्डन के समय शारीरक भाष्य में भगवान् शङ्कराचार्य कहते हैं कि भावों का निरन्वय नाश नहीं होता, वही है यह प्रत्यभिज्ञा होती है, अन्वयी वस्तु का विच्छेद नही देखा जाता, वैसा ही अन्वय का अर्थ मानकर यह सान्वयवाद उपस्थित हुआ है, वाईजेम्स विदेशीय विद्वान् नास्तिकवाद में आस्तिकवाद सूर्य नैराश्य समुद्र में अस्त हो जाता है इत्यादि कहते हैं, वह सान्वयवाद को लेकर ही संगत होता है, अन्यथा आशा और सन्तोष असंभव हो जायेंगे। बोलिङ्ग का मूक वाचाल भेद से चैतन्य भेद जड़ और चैतन्य का सभी जगह सम्बन्ध इत्यादि मत उनकी प्रक्रिया देखने से सान्वय दर्शन का अनुसरण करता है, परिणामवाद में उपादान उपादेय कार्य में अन्वित होता है, आरम्भवाद में भी उपादान उपादेय और उनके गुणों में साजात्य का अन्वय है, इस प्रकार भावमात्र में यह वाद जागृत् है, जन्मान्तर को नहीं मानने वाला चार्वाक भी सन्तानों में रूप आकार आदि के अन्वय के ऐसा चैतन्य का अन्वय भी माने ही है। हर एक क्षण में भावों के विनाश का व्यसनी क्षणभङ्गवाद भी क्षणभङ्गुरता का सभी जगह समन्वय मानता है, वासनाओं में सजातीय उत्पाद का स्वभाव से सादृश्य को

तथा सन्तान और सन्तानी के अन्वय को चाहता है, इस प्रकार सभी जगह सान्वयवाद विद्यमान है।

विषय-सूची— १ मङ्गल २ सान्वयवाद पद का अर्थ ३ ऐसे नाम में मूल ४ परिणामवाद ५ आरम्भवाद ६ वार्डजेम्स मत ७ हेंगेलमत ८ भारतीय सिद्धान्त ९ शेलिङ्गमत १० चार्वाक मत में निवेदन ११ मेरी धारणा १२ प्राच्य और पाश्चात्य दर्शनों के उद्देश्य में भेद १३ आस्तिक और नास्तिक दृष्टि भेद १४ चार्वाक मत में सान्वयवाद १५ चार्वाक मत में विशेष १६ परमार्थ दर्शन १७ क्षणिक विज्ञान में भी सान्वयवाद १८ उपसंहार।

संस्कृत में संस्कृत रत्नाकर में प्रकाशित हुआ है, वह प्राय १९५३ या ५४ ई० में प्रकाशित हुआ होगा, संस्कृत रत्नाकर की पूरी पत्रिका मेरे पास नहीं है, लेख के कुछ पन्ने हैं, उसपर १६ वर्ष १२ भाग लिखा है। संभव है उस समय काशी से उसका प्रकाशन चलता हो।

## मङ्गलाचरण

मदन्तरङ्गेङ्गितमास्तजन्तं सन्तं परात्मानमखण्डबोधम्।
बोधं परीप्सुर्भजते भवानीजानिं सदा सान्वयवादतुष्ट्यै ॥ १ ॥
श्रीबालकृष्णगुरुपादसरोजपांशुर्निष्पांशुतां रचयताच्छिरसोह्यमानः।
मानप्रभावशुचिसान्वयपादभानुभानुप्रसारमधिदर्शनमद्य वक्ति ॥२॥

## सान्वयवादपदार्थ

जीवों के जन्म के समय सर्वथा नूतन प्रकट नहीं होता तथा मरण के समय सर्वथा नाश नहीं होता, नये जन्म के समय भी पुराना कुछ समन्वय पाता है, विनाश में भी कुछ अंश बच जाता है, उस प्रकार उत्पाद और विनाश अन्वय के साथ सान्वय हैं, जैसे घड़े में माटीका कपड़े में सूत का अन्वय है।

नाम में मूल—ब्रह्म सूत्र शारीरक २-२-२३ भाष्य में बौद्ध मत खण्डन के समय भावों का निरन्वय विनाश संभव नहीं है, प्रत्यभिज्ञा के बल से अन्वयी का विच्छेद नहीं देखा जाता, इत्यादि कहा गया है, वहां की भामती में पद्य द्वारा कहा गया कि पानी के बूंद में तथा समुद्र में पानीपना का भेद नही है, बूंद नष्ट हो जाने पर भी

उसका अन्वय = सम्बन्ध समुद्र में रहता है. वहां भाष्य में परिणाम वाद को लेकर सभी भावों के उत्पाद और विनाश में सान्वयवाद स्थापित है, और भामती में अन्वयी को सत्य तथा उत्पाद विनाश शाली अवस्था विशेषों का मिथ्यात्व सिद्ध करके उपर के पद्य से पानीपना का सभी अवस्थाओं में अन्वय बताया गया है।

लेकिन कहे हुए प्राचीन पद्य को आरम्भवादी भी मानते हैं, दोनों मत में अन्वय का विच्छेद नहीं होता, नैयायिक भी बिन्दु और सिन्धु में पानीपना मानते हैं, क्योंकि जलत्वसामान्य का विच्छेद नहीं होता, जो भी पद्य के उत्तरार्ध से पहले पीछे की अवस्थाओं में भी कुछ अंश का अन्वय है वह परिणामवाद तथा आरम्भवाद दोनों को सम्मत है, परिणामवाद में उपादान और उपादेय में अभेद है, उपादान का उपदेय में अन्वय है, आरम्भवाद में उपादान और उपादेय में भेद होने पर भी उपादान और उपादेय का साजात्य है ही और उनके गुणों का भी साजात्य है, साजात्य अन्ततः एक जाति के अन्वय की अपेक्षा करता ही है, उस प्रकार आरम्भवाद में सान्वयवाद का विरोध नहीं है, लोक में भी अपने स्वरूप से स्थित बीज से ही अङ्कुर की उत्पत्ति नहीं होती बल्कि पृथ्वी-पानी आदि के सम्पर्क से अवयवी के नाश के बाद ही देखा जाता है, वहां भी यव का अङ्कुर गेहूं का अङ्कुर इत्यादि प्रत्यक्ष सिद्ध है और व्यवहार किया जाता है, इसी प्रकार पत्थर का भस्म चान्दी का भस्म इत्यादि में भी द्रव्य का सम्बन्ध समझना चाहिये, इसी लिये जो द्रव्य जिस द्रव्य के ध्वंस से पैदा हुआ है, वह द्रव्य उस द्रव्य के उपादान का उपादेय है ऐसी व्याप्ति नैयायिक मानते हैं, जैसे बड़े थान से फाड़ा गया टुकड़ा कपड़ा बड़े थान के उपादान सूतों से ही बना होता है ऐसा सहचार दर्शन भी होता है, इसी से गन्ध न मालूम होने पर पत्थर के भस्म में पार्थिव परमाणु तथा पत्थर में पृथ्वीत्व सिद्ध होता है, सुवर्ण के भस्म में सोने का अंश होने से ही औषध रूप से उपयोग किया जाता है तथा बहुमूल्य होता है. और द्रव्यों में यह रहे, निबन्ध का विषय तो जीवों के जन्म मरण में भी सान्वयवाद का साम्राज्य है।

## वार्डजेम्स महोदय का आस्तिकवाद

उन्नीसवीं शताब्दी के अनुभववादी विदेशी दार्शनिक विद्वान् वार्डजेम्स महोदय अपनी दार्शनिक रीति प्रकरण में स्फुट लिखते हैं कि जिसको मानने से और विचारने

से मनुष्यों का हित सिद्ध होता है वह सत्य है इसको सिद्ध करने के लिये उदाहरण देते हैं कि आस्तिकवाद आशा और सन्तोष का दर्शन है, नास्तिक वाद सूर्य तो निराशा समुद्र मे डूब जाता है, यह भी इन का लिखना सान्वयवाद के रहस्य के अनुसार है।

आस्तिक लोग पैदा होते ही बालकों के सुख और दुःखों को देखकर तथा साधारण तृप्ति के लिये भोजन में प्रवृत्ति आदि से जो जो कार्य पैदा होते हैं उनका कोई कारण अवश्य होता है, इसमें संदिग्ध नहीं रहते, पैदा होते हुए बालक के दुःख-सुखों के भी कारण हैं ऐसा जल्दी निश्चय कर लेते हैं, मीठा तीता खाने पीने से तुरंत ही कुछ सुख-दुःख मालूम पड़ जाते हैं, अपथ्य के सेवन से अधिक दिनों में रोग द्वारा इसी जीवन में सुख-दुख को बार बार देखे तथा विचारे रहते हैं, उससे कर्म को पैदा करनेवाली प्रवृत्ति और निवृत्ति अपने अधिकरण में सुख-दुःख को अवश्य पैदा करती हैं इसमें सन्देह नहीं करते। जो काम करता है वह फल पाता है, दूसरे के कर्म से दूसरे को फल नहीं मिलता, नहीं तो कैसे एक ही के शुभ कर्मों से सभी के कर्म व्यर्थ नहीं होते, एकही के दुराचार से जगत् का बन्ध क्यों नहीं होता ?, इसने पैदा होते ही इस समय कुछ भी खराब या अच्छा आचरण नहीं किया है, और सुख-दुःख का अनुभव करता है, औरों के सुख दुःखों के ऐसा इसके भी सुख-दुःख बिना कारण के नहीं हैं, इससे निश्चित है कि दूसरे शरीर से ऐसे फल को पैदा करने वाले कुछ कर्मों का आचरण किया है, योग्य हुआ आचरण करता हुआ परलोक में भी भोगेगा। मरता हुआ जीव सर्वथा नहीं मरता किन्तु उसका कुछ अंश बच जाता है, जो दूसरे जन्म से अन्वित होता है, पैदा होता हुआ भी सर्वथा नया नहीं होता किन्तु कुछ पहले के अंशों से अन्वित पैदा होता है।

जैसे इसी जीवन में अनुचित आचरण करता हुआ और उसको छीपाता हुआ समय पर गुप्तचरों के द्वारा अपराध प्रगट होने पर राजशासन से पूरा दण्डित होता है, वैसे ही पहले जन्म में दुराचार किया, वह उस समय परिपक्व नहीं हुआ, दूसरे जन्म में उसका दुष्परिणाम अवश्य पायेगा, उसी को उपनिषद् गाती है कि खराब आचरण वाला खराब योनि को पाते हैं इत्यादि, उसी का वर्णन प्राचीन दर्शनों में कृताभ्युपगम शब्द से आता है।

उचित आचरण करता हुआ कभी जल्दी कभी देरी से पुरस्कार और यश आदि सुन्दर फलों को पाता है, उसी प्रकार दूसरे जन्म में भी सुन्दर फल पायेगा, वैसा ही अनिन्दित आचरण वाला अनिन्दित फल को अनिन्दित योनि को पाता है इत्यादि उपनिषद् का अभिप्राय है। इसलिये जीवन पर्यन्त सुन्दर आचरण करना चाहिये ऐसा आस्तिक लोग सोचते हैं।

नास्तिक लोग तो—दूसरे जन्म का सम्बन्ध नहीं है, इस जीवन में जो बाल्य-काल का भोग है वह आकस्मिक है अथवा माता पिता से आ पड़ा है, जीवन पर्यन्त चोरी या कर्ज लेकर आनन्द का अनुभव करो, इस जीवन के दुःख कारणों के प्रतिकार के लिये कूट नीति का आचरण करों, सत्य का अपलाप करो, असत्य का समर्थन करो, अहिंसा से हिंसा को छीपाओं, दूसरा लोक नहीं है, उसके लिये थोड़ा भी शोक क्यों। इस समय उपस्थित एक लोक का पार पाना कठिन है, दुस्तर दूसरे लोक का उपार्जन क्या मूर्खता नहीं है, नही आये हुए परलोक के भय से प्राप्त प्रमोद का वृथा परित्याग कातरपना नहीं है ?, सुख के कारण चोरी आदि कर्मों का परित्याग आलस्य नहीं है, पाप के भय से दूसरे को ठगने की आदत को छोड़ना चित्त की मन्द गति नहीं है क्या ? इत्यादि सोचते हैं।

और उस नास्तिकवाद से संसार में अकर्मण्यता का साम्राज्य, समाज और राष्ट्र का विघटन लूट पाट, शान्ति को भगाना अशान्ति को आश्रय मिलना, अहिंसा का ह्रास मात्सर्य आदि दोषों का विकास आदि आ पड़ते हैं।

आस्तिकवाद से तो इस जीवन की सुख सामग्री रहने पर परलोक रूप सुन्दर वृक्ष को सींचने के लिये कर्मनिष्ठारूप अमृत छीड़कना हिंसा का परित्याग अहिंसा की उपासना सत्य में श्रद्धा असत्य को हटाना सभी जीवों में एक आत्मा द्वारा सदृश आत्मा के जरिये सजातीय भावना द्वारा मैत्री उससे समाज और राष्ट्र की अच्छी अवस्था होती है, इससे जेम्स महोदय की सूक्ति चरितार्थ है। सान्वयवाद जैसे गत जन्मों में आत्मीयता स्फुट करता है उसी प्रकार भावी जन्मों में भी आत्मा के अन्वय से आत्मी-यता सिद्ध करता है, इसी रीति से वर्तमानजनों में अपनी मानवता के अन्वय से तथा चेतनों में अपने चैतन्य का अन्वयवाद बन्धु भावना को प्रसिद्ध करता है, प्रायः विदेशीय समाज शास्त्रों में ऐसा कहा जाता है कि पहले प्रायः जङ्गली अपने स्वार्थ में परायण

अज्ञानी मनुष्य थे, जो हिंस्सा स्वभाव वाले बिना नियन्त्रण के कामवासना वाले पशु के ऐसा आचरण करते थे, धीरे-धीरे उनमें अच्छे ज्ञान के उदय से दूसरे की स्वतन्त्रता को भी आवश्यक समझने लगे, अपने स्वार्थ में संकोच किये, दूसरे को कष्ट देना अपराध मानने लगे, विवाह के नियमों से नियन्त्रित हुए क्रमशः सभ्य होकर सामाजिक और राष्ट्रिय हो गये।

## इस पर हेंगेल का मत

सरगार्ट जर्मन निवासी उन्नीसवीं शताब्दी के आसपास के समय वाले प्रत्यय-वादी दार्शनिक हेंगेल नाम वाले अपनी पुस्तक में लिखते हैं. नीति के दण्ड आदि से काम क्रोध आदि के दमन द्वारा क्रमशः उचित अनुचित विचार की चर्चा प्रगट हुई, जिससे परिवार का संगठन हुआ समाज की रचना चली क्रमशः राष्ट्रिय जीवन का विकाश हुआ।

## इस पर भारतीय सिद्धान्त

पहले वर्णित रीति से जीवत्व मनुष्यत्व आदि के अन्वय से स्वार्थ का संकोच नहीं हुआ किन्तु स्वार्थ का पूरा विस्तार हुआ, स्वशब्द से आत्मा या आत्मीय शरीर नहीं रहा किन्तु सभी मनुष्य या सभी जीव हो गये, वसुधा ही कुटुम्ब हो गई की भावना चली, सभी का अर्थ = प्रयोजन स्वार्थ हो गया, सभी के उपकार करने की इच्छा से समाज राष्ट्र या कुटुम्ब का संगठन हुआ, विदेशीय दार्शनिकों के अनुसार स्वार्थ संकोच उचित अनुचित विचार की चर्चा चली, भारतीयों के अनुसार स्वार्थ विस्तार से चली, सभीं में समदर्शी होने से सभी में आत्मभावना चली, सभी का प्रयोजन स्वार्थ हो गया, इस प्रकार स्वार्थ विकास होता है। सभी जगह यह स्वार्थ विकाश मालूम पड़ता है, जैसे कि सर्वथा पिता माता से हीन युवा अपनी शरीर इन्द्रिय आदि में ही स्वत्व = अपनेपन का अनुभव करता है, धीरे-धीरे पत्नी से युक्त होने पर पत्नी में भी अपनापन मान बैठता है, उसी के निमित्त खुश या नाराज होता है, उसके बाद सन्तान होने पर सन्तान में भी स्वत्व चला जाता है, इसी रीति से सपिण्ड सगोत्र ग्राम जिला आदि में उसकी आत्मीयता न्यूनाधिक करके बढ़ जाती है, उस प्रकार यह स्वार्थ संकोच नहीं है किन्तु स्वार्थ विकाश है।

ऐसा आत्मीयता का अन्वय दर्शन भेद से कोई विद्या से कोई अविद्या से मानता है यह दूसरी बात है, भारतीय दर्शन तो शुद्ध आत्मा को शरीर आत्मा के अध्यास से 'कभी भी कर्म के बिना नहीं रहता' इस न्याय से अनादि कर्म परम्परा के द्वारा लिप्त आत्मा नित्यमुक्त को भी अविद्या प्रभाव से अनादिबद्ध बुद्ध को भी अविद्या की आवरण शक्ति से आच्छादित प्रकाश वाले जड़ता को प्राप्त हुए के ऐसा प्रकाशित करता हुआ किसी भी व्यवहारसिद्ध वस्तु को जबरन रोकता नहीं, उल्टे अपने स्वरूप के अयोग्य बाह्य अध्यास से आये हुए सांसारिक कार्यों को मिथ्या कल्पना करता हुआ अनुचित कर्मों से हटाता है, इसी से श्री कृष्ण के मुख से शुद्ध बुद्ध मुक्त स्वभाव आत्मा को सुनकर भी क्षत्रिय संसार के भोग से विरक्त उनका सेवक बना हुआ अपने युद्ध कर्म में प्रवृत्त हुआ इत्यादि विस्तार यहां छोड़ा जाता है।

## शेलिङ्ग के मत में प्रायः सान्वयवाद स्पष्ट है

१८३१ से १९१० विक्रम वर्ष समय वाले फिक्तश शिष्य के शिष्य स्पिनोजाके अनुगामी लियन वर्ग जर्मन निवासी प्रत्ययवादी शेलिङ्ग नाम वाले दार्शनिक लिखते हैं—सभी जगह आत्मशक्ति है, कोई भी निर्जीव नहीं है, जड़ द्रव्य से उद्भिज, उद्भिज से जीव पैदा होते हैं, इससे सभी जगह जीव हैं, प्रकृति मूक आत्मा है इत्यादि।

जड़द्रव्य पृथिवी और पानी आदि में जीव का अन्वय है, उसके बाद अङ्कुर अवस्था में फल अवस्था में भोजन के बाद रस वीर्य मनुष्य आदि आकृति में जीव का अन्वय होता है ऐसा उनका अभिप्राय मालूम पड़ता है, उससे विशेष स्पष्ट तो उपनिषद् में है, जहां कर्मीओं के कर्मों का नाश हो जाने पर चन्द्रलोक से लौटते समय स्तम्भ होताहै, व्रीहि होता है इत्यादि कहा गया है, पुण्य कर्म का नाश होने पर फिर जन्म के लिये स्तम्भ फल रस वीर्य कलल बुद्बुद आदि अवस्थायें जीवों की होती हैं ऐसा उपनिषद् का अभिप्राय है। उस प्रकार एक जीव की अनेक अवस्था दिखाने से सभी में जीव के अन्वय को दिखाती हुई श्रुति जीवों का निरन्वय विनाश नहीं होता, सर्वथा नये का उत्पाद नही होता, स्फुट सान्वयवाद में अभिप्राय व्यक्त करती है।

श्वेताश्वतर उपनिषद् के चतुर्थ अध्याय तीसरे मन्त्र में शरीर की अवस्थाओं का भेद होने पर भी श्रुति एक आत्मा का अन्वय दिखाती है—तुम्ही स्त्री तुम्ही पुरुष

हो, तुम्हीं कुमार तथा कुमारी हो, तुम्ही वृद्ध हुए दण्डे से चलते हो तुम्ही जागरण अवस्था में चारों तरफ देखते हो। उस प्रकार शरीर की बाल्य आदि अवस्था भिन्न-भिन्न होने पर भी आत्मा का भेद नहीं होता किन्तु एक आत्मा का अन्वय होता है उसी प्रकार शरीर भेद से आत्मा का भेद कैसे हो।

यद्यपि शेलिङ्ग के मत में जड़ से चेतन की उत्पत्ति का आभास होता है तो भी सान्वयवाद का विरोध नहीं समझना चाहिये, क्योंकि उन्होंने जड़ों में भी मूक जीवत्व को स्पष्ट स्वीकार किया है, शेलिङ्ग सभी में जीव को अन्वित मानते हैं, इतना फरक है कि मनुष्यों में विलक्षण शरीर इन्द्रिय आदि के सम्बन्ध से उद्‌भूत वाचाल नाम का चैतन्य है, प्रकृति मे वैसा प्रागट्य का कारण न होने से अनुद्‌भूत मूक नाम का चैतन्य है।

यद्यपि दर्शन भेद से अपने में स्वयंप्रकाश चैतन्य है, तो भी विषयों के साथ सम्बन्ध का उपयोगी उद्‌भूत चैतन्य विशेष इन्द्रियों के सम्बन्ध से ही होता है, ऐसा उपनिषद् के वृतान्त से भी मालूम पड़ता है, जैसे कि एक पक्षी का आहार कम कर देने पर दुर्बल हो जाता है, सर्वथा आहार रोकने पर बहुत शिथिल हो जाता है, नहीं सुनता है, आंख खोले भी नहीं देखता नहीं सूंघता केवल सांस लेता है, क्रमशः आहार चलने पर तो नाम लेने पर सुनने लगता है, इत्यादि वृत्तान्त उपनिषद् में देखा जाता है, उससे स्फुट मालूम पड़ता है कि स्वतन्त्र भी चैतन्य भौतिक परिणाम विशेष से उद्‌भव नाम के विषयों के ग्रहण सामर्थ्य को धारण करता है, उसके अनुसार ही चार्वाक तथा कुछ विदेशी विद्वानों का भूत चैतन्यवाद इत्यादि दूसरी बात है।

जैन दर्शन में भी अनेकान्तवादी होने से सभी में नित्यत्व और अनित्यत्व का अन्वय होता है, वह एक रूप से विरुद्ध है इससे विरोध परिहार के लिये पर्याय नाम के कुछ अवस्था विशेष माने जाते हैं जो बहुतों के मत में अनित्य हैं, उससे विशिष्ट द्रव्य अनित्य तथा अस्थिर हैं, द्रव्यरूप से नित्य और स्थिर हैं, नहीं तो पर्याय वाले द्रव्य के न रहने पर पर्याय किसके होंगे ? उस प्रकार पर्यायों का परिवर्तन होने पर भी एक पर्यायी द्रव्य का अन्वय होता है, उससे सभी भावों में सान्वयवाद अर्हन् दर्शन का मान्य है, इसीसे जैन लोग जन्मान्तर स्वर्ग नरक बद्ध मुक्त भाव मानते हैं, जैन आगमों में पुराण कथा की तरह जन्मान्तर की बहुत कथायें आती हैं, वैदिक पुराणों में स्तुति आदि के प्रसङ्ग में दार्शनिक वर्णन आता है किन्तु उन दर्शनों का कथा भागसे समन्वय

वैसा नहीं होता जैसा कि जैन आगमों में मिलता है, आत्मा का दोनों अवस्थाओं में अन्वय होने से जो बद्ध हुआ वह मुक्त हुआ इत्यादि व्यवस्था बनती है, जैसा बद्ध था वैसा ही मुक्त हुआ ऐसी व्यवस्था तो किसी के यहाँ नहीं हो सकती क्यों कि बन्ध अवस्था का विनाश होने पर ही मुक्त हो सकेगा।

भारतीय दर्शनों में चार्वाक दर्शन जन्मान्तर नहीं मानता ऐसा प्रसिद्ध है, भूत चैतन्य वाद उसका सिद्धान्त है, प्रत्यक्ष मात्र प्रमाण है, यह सब दूसरी जगह प्रसिद्ध है इसलिये यहाँ विस्तार छोड़ा जाता है, उस प्रकार भौतिक शरीर के विनाश के समय भूतों का परिणामविशेष चैतन्य जीव का भी विनाश होने से जीव का निरन्वय नाश होता है, इससे चार्वाक मत में सान्वयवाद नहीं है ऐसा आ पड़ा।

## चार्वाक मत में कुछ निवेदन

यह दर्शन भारतीय है विदेशीय नहीं है ऐसा बहुत पहले से प्रसिद्ध है, भारतीय दर्शनों में दूसरा कोई दर्शन ऐसा नहीं मिलता जो इसके ऐसा उट पटाङ्ग पदार्थ वाला हो, चिरकाल से प्रचलित यह चार्वाक दर्शन हमेशा ऐसा ही चला आता है ऐसा मेरा मन नहीं मानता, विदेशीय दर्शन तो प्रायः सभी वैसे हैं जो सभी पदार्थों को जिस किसी प्रकार अङ्ग और अङ्गी भाव से जुटाते नहीं, किन्तु कुछ विषय किन्हीं विद्वानों के मन के नियोग से प्रगट हुए उनका संग्रह हुआ, फिर दर्शन बन गया ऐसा मालूम पड़ता है, भारतीय दर्शन तो जीव परमात्मा सृष्टि प्रलय बन्ध मोक्ष प्रमाण प्रमेय आदि का प्रतिपादन करता हुआ लौकिक व्यवहार से विपरीत नहीं चलता, आचार्य लोग खण्डन के लिये उद्धृत करते हुए प्रायः यह पदार्थ इस दर्शन का है, ऐसा दीखाते हैं, लेकिन उसमें कुछ पदार्थ कल्पित मालूम पड़ते हैं, इनका प्रतिपादन परस्पर विरुद्ध मालूम पड़ता है, प्रत्यक्ष मात्र प्रमाण मानते हैं और अप्रत्यक्ष परमाणुओं से संसार की सृष्टि बताई जाती है, प्रत्यक्ष ज्ञान के साधन इन्द्रियाँ ही प्रत्यक्ष नहीं हैं, शब्द प्रमाणों को नहीं मानता किन्तु शब्दात्मक शास्त्र का निर्माण करता है, शब्द और अनुमान को नहीं मानता किन्तु दूसरे के अभिप्राय को समझकर उत्तर देता है, खण्डन भी उसका व्यवहार नहीं बनेगा, मूक हो जायेगा, बहरा हो जायेगा इत्यादि आपत्ति देने से किया जाता है, मदशक्ति के ऐसा चारों भूतों का परिणाम विशेष चैतन्य है ऐसा प्रतिपादन

करके भी चारो भूतों के परमाणु चेतन हैं ? या संघातभूत चेतन हैं ? ऐसा विकल्प करके खण्डन किया जाता है, शरीर के एक अवयव के काटने पर चैतन्यनाश की आपत्ति दी जाती है। दूसरे दर्शनों का खण्डन ऐसा नहीं चलता।

## उस पर मेरी धारणा

प्रत्यक्ष, अनुमान, शब्द तीनों प्रमाण चार्वाक मत में है इसलिये व्यवहार की हानि नहीं होगी, प्रत्यक्ष प्रमाण का तात्पर्य प्रत्यक्ष की प्रधानता में है, दूसरे प्रमाणों में सन्देह होने पर उसका निराकरण साक्षात् या परम्परा से प्रत्यक्ष द्वारा ही किया जाता है, इस पर अधिक चार्वाक दर्शन मेरे लेख में मिलेगा, शब्दको अतिरिक्त प्रमाण नहीं मानने वाला वैशेषिक जैसे वेद प्रमाण मानने वाला वैदिक दर्शन हैं।

मद शक्ति के ऐसे भूतों का परिणाम विशेष चैतन्य विशेष रूप से जीव अणुवाद के ऐसा मतभेद से मस्तिष्क या हृदय में रहता है, उसका प्रभाव कमवेशी करके दूसरे भी सभी अङ्गों में पड़ता है, बाल्यावस्था से शरीर की उन्नति से चैतन्य की उन्नति और वृद्ध शरीर में शरीर के अपचय से चैतन्य का अपचय अनुभव में आता है, कहीं २ मोटे जन में चैतन्य की कमी पतले में चैतन्य की विशेषता जो मिलती है वह विशेषभूतों के कारण है, जैसे कि तैजस बुद्धिवादियों के मत में बुद्धि में फरक आता है।

## पूर्वी और पश्चिमी दर्शनों के उद्देश्य में भेद

आस्तिक नास्तिक सभी भारतीय दर्शनों का इस जीवन में शान्ति उद्देश्य है, विदेशीय दर्शनों के ऐसा राष्ट्र समाज उन्नति आदि जीवन भर तृष्णा की तृप्ति ही प्रयोजन नहीं है, परम नास्तिक शून्यवादीका नीचे का वचन बताता है कि मनके सभी संकल्पों की हानि के लिये शून्यता का उपदेश है-सभी संकल्पों की हानि के लिये शून्यतारूपी अमृत का उपदेश है, यदि उसी पर आग्रह हो गया तो वह भी तुमसे खराब किया गया।

## आस्तिक और नास्तिकों की दृष्टि में भेद

परम आस्तिक लोग नित्य आत्मा का उपदेश करते हुए शरीर भिन्न आत्मा का ज्ञान कराते हैं, शरीर आदि से किये गये खराब कर्मों से आत्मा दुःख भोगता है, इस

कारण हमेशा अच्छे कर्मों का आचरण करना चाहिये, व्यर्थ विषयों के संग्रह करने वाले कर्मों से आत्मा को जन्म मरण की परम्परा में नहीं गिराना चाहिये, भोग की तृष्णा-रूप कमल पर हिमपात ही श्रेष्ठ है, कर्मरूपी अङ्कुरों का तत्त्व ज्ञानरूप अग्नि ही दावाग्नि है, आत्मा का ज्ञान ही संसार के परिग्रहों का दुष्टग्रह है इत्यादि का प्रचार करते हैं। और नास्तिक जवानी शरीर आदि बल और भोग तृष्णा से युक्त होनहार बालक रात दिन चेष्टा करते हैं, जवान लोग वृद्धावस्था के लिये स्थिर सम्पत्ति के रागरूप रोग से अर्जनरूप ज्वर से युक्त जर्जर किये जाते हैं, वार्धक्य से जर्जर भी अधिक दिन जीवन ग्राह से पकड़े गये जीवन का निर्वाह की अभिलाषा ललना वाले पुत्र पौत्र आदि में आत्मीयता ग्राह से ग्रसे गये क्षणभर भी सुख नहीं मानते, उस प्रकार चार्वाक का शरीर को चेतन आत्मा मानना बन्ध इतनी भोग परम्परा को पोषने वाली तृष्णा नदी को पैदा करता हुआ यदि बन्ध है तो विभु आत्मा का वाद अनेक जन्म की भोग तृष्णा के वैभव संवाद वाला महाबन्ध है यह निश्चित है ऐसा सोचते हैं। इससे मैं पहले नहीं था आगे नहीं होऊँगा, अकस्मात् आयी हुई मेरी शरीर यात्रा का किसी प्रकार निर्वाह करना है, इस रीति से तृष्णा का संकोच करते हुए चार्वाक का मत ही नित्य आत्मा के वाद से अच्छा है, हर एक क्षण बदलता है, आत्मीयता का अवसर ही नहीं पाता, आवश्यक अथवा क्षणिकत्व भाववाद में राग रोग ही कैसे हो ? इस प्रकार बौद्ध मत ही अधिक अच्छा है, इसलिये उसके संप्रदाय वाले अनुसरण करते हैं, इससे आस्तिक नास्तिक दोनों प्रकार के दर्शनों का तृष्णा का क्षयरूप शान्ति ही परम प्रयोजन है, निष्कर्मता तो भोगराग से युक्त होने पर ही दुःखद होती है, नहीं तो पुरुषार्थ ही है ऐसा समझना चाहिये।

## चार्वाकमत में सान्वयवाद

चार्वाक मत में भी सान्वयवाद सोचना चाहिये, जैसे कि चार्वाकमत में भी औरों से कुछ फरक रखने वाला जन्मान्तर भी है, क्योंकि जीव स्वरूप भौतिक है; माता पिता का सूक्ष्म अंश सन्तानों में अन्वित ही होता है, इससे स्थूल भी रूप आकार आदि का अन्वय देखा जाता है, जैसे भौतिकरूप आकारों का अन्वय देखा जाता है, वैसे भौतिक माता पिता के सूक्ष्म चैतन्य का भी अन्वय हो सकता है, इसी से सांस लेता है, खुश होता है, और रोता है, बहुतो ने आपत्ति दिया है कि इष्ट साधनता का स्मरण नहीं

होगा, उससे स्तन पान में प्रवृत्ति नहीं होगी इत्यादि, चैतन्य के अन्वय से उन सबका समाधान सोचना चाहिये, दूसरें भी विषयों के स्मरण से दूसरों में प्रवृत्ति की आपत्ति तो दूसरे दर्शनों के लिये भी समान है, उसका योग और क्षेम बराबर ही है।

## उसमें विशेष है

भौतिक परिणामों का यह स्वभाव है कि अपने अंश से दूसरी व्यक्ति को बनाता हुआ भी अपने कुछ अंशों के व्यय से सर्वथा अपचय को नहीं पाता, इसीलिये वृक्षों के कुछ थोड़ा काटने पर भी फिर प्ररोह देखा जाता है, इससे अनेक सन्तान पैदा करने पर भी उत्पन्न करने वाले के विनाश की शङ्का विलीन हो जाती है। अत एव परमार्थ दर्शन के चतुर्थ अध्याय द्वितीय आह्निक का छठा अधिकरण है स्तन पान की शक्ति आदि पिता माता से आई है या दूसरे जन्म से ? यह संशय है, दूसरे जन्म के अभ्यास से है ऐसा विद्वानों ने स्पष्ट कहा है, यह पूर्वपक्ष है, माता पिता का ही आया है, जैसे मनुष्य आदि आकार विशेष आये हैं, उसके लिये जीवों की जन्मान्तर कल्पना व्यर्थ है, ऐसा उत्तर पक्ष है।

यद्यपि परमार्थ दर्शन भौतिक से भिन्न व्यापक चैतन्य को मानने वाला है तो भी शरीर नाश के पीछे चैतन्य नाश को यदि मानता है तो इस विषय में समान ही है; चेतन शरीर के निरन्वय नाश से सान्वयवाद का समन्वय नहीं हो पाता ऐसा नहीं समझें, परिणाम वाद की रीति से जैसे दूसरे भौतिकों का निरन्वय नाश नहीं होता वैसे ही भौतिक चेतन शरीर का भी निरन्वय नाश असंभव है, अवस्थाओं का परिवर्तन होने पर भी मौलिक द्रव्य का अन्वय माना जाता है, आरम्भवाद में भी पत्थर की राख में पार्थित्व जैसे पहले बताया गया है वैसे शरीर के राख में भी शरीर के कारण परमाणु का सद्भाव प्रायः कहा ही गया।

शरीर के पीछे विनाशी जीव को कहता हुआ भी परमार्थ दर्शन सभी आत्म स्वरूप आकाश के ऐसा विभु ब्रह्म को मानता है। शरीर रूपनली में आकाश के ऐसा घुसता हुआ ब्रह्म जीव नाम को पाता है, शरीर के विना ब्रह्म ही है, शरीर के विना ब्रह्म ही है जीव नहीं। नली के नाश के बाद आकाशच्छिद्र जैसे नष्ट होता है वैसे ही

शरीर नष्ट होने पर जीव का नाश होता है, वेदान्ती के मत में जैसे उपाधि का नाश वैसे यहाँ शरीर का नाश है, उपाधि के नाश से जीवत्व का नाश है जीव का नहीं, जीव तो ब्रह्म ही है ऐसा वेदान्ती मानते हैं, परमार्थ दर्शन जीव ही का नाश कहता है, किन्तु उसकी प्रक्रिया पर ध्यान देने पर जीवत्व के नाश ही में पर्यवसान होता है।

भूमा का उच्छेद असम्भव है इस पर चतुर्थ अध्याय दूसरा आह्निक दूसरा अधिकरण देखें परिणामी होने से भूमा का उच्छेद संभव है या नहीं ? यह संशय है, जब परिणाम है तब उच्छेद की कल्पना होगी ही यह पूर्वपक्ष हुआ, सभी परिणामिओं का उच्छेद आदि असंभव है, सभी आत्मरूप भूमांशका उच्छेद संभव नहीं है, यह सिद्धान्त हुआ।

जीव के विषय में भी चौथा अधिकरण वहीं पर—भूमा जीव और शरीर इनमें किसी का कहीं जाना होता है या नहीं ? यह संशय हुआ, किसी का होना चाहिये क्योंकि 'वासांसि जीर्णानि यथा विहाय' इत्यादि गीता के अनुसार शरीर और जीव का वियोग होता है, यह पूर्वपक्ष हुआ, भूमा सभी रूप है, उसका कहीं जाना आना नहीं हो सकता, शरीर नष्ट हो जाता है, शरीर के पीछे जीव का भी नाश हो जाता है, किस का उत्क्रम हो ? यह सिद्धान्त हुआ, यहाँ का वार्तिक दर्शन का स्फुट स्वरूप दिखाता है—सभी स्वरूप ब्रह्म में शरीर दण्ड अपरिमित आकाश में नली के ऐसा है, सूई के घुसने लायक शब्द शक्ति वाले के ऐसा शरीर के अनुसार यह जीवशक्ति विराजमान है ॥ १ ॥ आकाश के समान स्थिर सभी जगह व्यापक ब्रह्म एक देह से दूसरे देह में कैसे जाय ? यह शरीर नली के ऐसा अवश्य नष्ट हो जाता है उसका गमन नहीं, शरीर इन्द्रिय आदि समुदाय के सम्बन्ध से होने वाला जीव मरण समय में समुदाय का विनाश होने पर जीव कहां हो ?, एक नली के नाश होने पर उसका स्वन दूसरी नली में नहीं जाता, ॥ ३ ॥ प्रेत या पिशाच रूप से उड़कर जंगल पर्वत की कन्दरा आदि में नली से वियुक्त वह स्वन सीता से वियुक्त राम के ऐसा आवाज नहीं करता ॥ ४ ॥

## क्षणिक विज्ञान में भी सान्वयवाद

क्षणिक विज्ञान में भी वासना का अन्वय है, सजातीय विज्ञान को पैदा करने वाले स्वभाव का अन्वय सजातीयता का अन्वय एक सन्तान आदि का अन्वय है, इससे

सान्वयवाद है, तब स्थिर आत्मवादी दूसरे दर्शनों में क्या कहना है ?, लेख के आकार बढ़ने के भय से विराम है। पूर्वी पश्चिमी विद्वानों के दोष रहित इन दर्शन पानी को वर्षाता हुआ प्रसन्न यह सान्वयवाद का वर्णन मेरे थोड़े ज्ञान के दोष को रखता हुआ भी पण्डितों के मोद के लिये हो।



देहली संस्कृतरत्नाकर १७ वर्ष २-३ संख्या मई जून १६५५ ईशाब्दे प्रकाशितः।

## अनुभववादः

अनुभववादनाम्ना विदेशीयमेकं दर्शनं प्रसिद्धम्। न भारतीयं किमपि दर्शनं बिभर्ति एतन्नाम, तथापि सर्वाणि भारतीयदर्शनानि अनुभवाभिधानमेकं ज्ञानमङ्गीकुर्वते। प्राच्यदर्शनपाण्डित्यदृष्टौ नानुभवस्य दर्शनता, अपि तु दर्शनैकदेशितैव।

न केवलमिदमनुभववादमात्रे, किन्तु अखिलानि विदेशीयदर्शनानि भारतीयदर्शनदिशा अपूर्णानि प्रायः, सर्वाणि तानि एकं द्वित्रान् वा दार्शनिकविषयान् अधिकृत्य विचारेण समाप्तानि। विचारविशेषमात्रस्य नाम दर्शनं तत्राऽस्ति।

यद्यपि कतिपये आधुनिका भारतीया अपि विद्वांसो भारतीयदर्शनेष्वपि अस्मिन् दर्शने एते विषयाः सन्ति, अपरे न सन्तीति शक्तुं लिखितुञ्च प्रक्रमन्ते, तथापि तदेकदेशिदृशा न वस्तुतः। तथाविधाः सूत्राणि ततोऽधिकानि भाष्यमात्राणि वा पर्यवेक्षमाणा दर्शनं दर्शनविषयान् वा समापयन्ति; परमसौ न शोभनो मार्गः। सूत्रवार्तिकभाष्याणि व्याख्याभेदान् प्रकरणग्रन्थादीन् पर्यालोच्यैव दर्शनस्वरूपनिर्णयो युज्यते। तावताऽपि वस्तुतः परिपूर्णतां न यान्ति दर्शनानि, अपितु तावतामुपलभ्यमानानां समेषां

ग्रन्थानां सम्यङ् मननेन एका दर्शनविषयिणी विलक्षणा प्रतिभा समुदेति या सर्वं जगत् साक्षात् करोति, अतीतमनागतञ्च अवेक्षते। यथा न्यायवैशेषिकयोः सप्तपदार्थी सकलं भुवनं विद्यमानमतीतं भावि च जठरे निदधाति। किन्तु नाद्यापि समे विषयाः पर्यालोचिता यज्जगति व्यवह्रियमाणाः के विषयाः कस्य पदार्थस्य विशेषाः। यदा यस्मिन् विषये प्रश्न उत्तिष्ठते तदा तदा तस्या तद्दर्शनानुकूला व्यवस्था जायते। अतो दर्शनस्य भारतीयस्य न कियता ग्रन्थेन पुरुषेण वा समाप्तिर्जायते। प्रश्नेषु अवतरत्सु व्यवस्थाया आवश्यकता, प्रश्नावतारस्तु स्वभावतः क्रमिकः। सूत्रमात्रेण दर्शनस्वरूपसमापनन्तु महानन्यायः, सूचनामात्रं हि सूत्राणां कार्यं न तु पूर्णो विचारः। सूचना तु प्रतिभां व्युत्पत्तिञ्च आयतते। अस्तु तावदियं तुलनादृष्टिः, न सा निबन्धविषयः। प्रधानमनुसरामि।

## विषयः

अनुभववादो दर्शनं केषां विदेशीयानां दृष्टौ किं स्वरूपं बिभर्ति ? तत्र च तत्स्वरूपं भारतीयदर्शनानि अन्तर्निदधति न वा ?

अतो भारतीयदर्शनानि कस्मिन्नर्थे अनुभवशब्दमुपयोजयन्तीति प्रवर्शनमावश्यकम्।

## भारतीयदार्शनिकानामनुभवपदप्रयोगः

प्रायो लघुनि पुस्तके समायाति यथार्थोऽयथार्थश्चेति अनुभवो द्विविधः। यथार्थः—प्रत्यक्षम्, अनुमितिः, उपमितिः शाब्दश्च। अयथार्थः—संशयो विपर्ययस्तर्कश्चेति। यद्यपीदं न्यायदर्शने विशेषत उपलभ्यते तथापि प्रायो भूयसां प्राच्यदर्शनानां मान्यम्। वैशेषिकमतेऽपि अयमेव पदार्थः, किन्तु कश्चित्प्रक्रियाभेदः। अथवा प्रत्यक्षानुमिती द्वयी एव यथार्थानुभव इति वैशेषिकमतमवसेयम्। स्वर्गनरकौ शृणोमि किन्तु नानुभवामीति प्रतीतिबलान्न शाब्दज्ञानमनुभवः, परन्तु प्रत्यक्षेणातिसन्निहितमनुमितिरूपञ्च ज्ञानमनुभव इति द्वितीयं भारतीयमतम्। प्रथममतानुसारिणस्तु स्वर्गनरकौ नानुभवामीत्यत्र औपचारिकोऽनुभवपदप्रयोगो न तु स्वारसिक इति ब्रुवाणाः स्वीयं मतं संरक्षन्ति। अतिसन्निकृष्टविषयस्थले शब्दादपि प्रत्यक्षेऽभिनिविष्टानामद्वैतवेदान्तिनां मते शाब्दमपि ज्ञानमनुभव उच्यते परं न सर्वं शाब्दम्।

आविर्भूतप्रकाशानामनुपप्लुतचेतसाम्।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते॥

इति अनुसृत्य योगजं ज्ञानं प्रत्यक्षरूपमिति बहुभिरङ्गीक्रियते तदा तस्य अनुभवत्वं समापतितमेव ।

पाश्चात्यपण्डितास्तु न अनुभवं परिभाषन्तेऽतस्तेषां मते अनुभवपदार्थं ईदृश एवेति निर्णयः कठिनस्तथापि तेषां दार्शनिकविषयवर्णनया यथाबुद्धि विविच्योपस्थापयामि । कदाचन किंचिन्न्यूनत्वमपि संभवति, यतो हि इंगलिशभाषायां नास्ति ममाधिकारः । आधारश्च विशेषेण हिन्दीभाषायामनुवाद एव । सोऽपि संक्षिप्ततरः प्रामाणिकत्वे सर्वांशे संदिग्धश्च । अनूवदन्तोऽपि न परिभाषायै प्रयतन्ते । अतोऽनुवादद्वाराऽपि पदार्थनिर्णये कल्पना कृशैव जागर्ति सर्वथा ।

## विदेशीयमतेन अनुभवपदप्रयोगः

यथावत्परिज्ञानं संवेदनं ( sensation ) इन्द्रियजन्यज्ञानस्य नाम । बहिरिन्द्रियजन्यज्ञाने निर्दोषमते मनसः क्रियानुपयोग इति स्फुटं वक्तुं न पारयामि, तथापि अवश्यमस्ति कश्चिदुपयोग इति तत्प्रक्रियानभिज्ञोऽपि कल्पयामि । यतो भारतीयदर्शनानि बहिरिन्द्रियजन्यज्ञाने मनसः समुपयोगं मन्वते । अवसाने च सर्वेऽङ्गीकरिष्यन्ति यत् मनसो विना न बहिरिन्द्रियाणि प्रभवन्ति इति । इदं च स्फुटमुपलभ्यते विदेशीयदर्शने—संवेदनानन्तरं मनसो यज् ज्ञानं तदनुभवः, तस्मिन्ननुभवे कल्पनायास्तर्कस्य वा न प्रवेशो यतः कल्पनातर्कौ बुद्धिकार्ये, कल्पनातर्कयोः प्रवेशे अनुभववादः समाप्तिमेति बुद्धिवादश्च उपक्रमते । तदपि सम्वेदनानन्तरं जायमानमनुभवरूपं ज्ञानं प्रत्यक्षमेवेति केषांचिदाग्रहोऽन्येषां साधारणतया कथनम् । प्रत्यक्षमेवानुभव इति वादिनोऽपि विदेशीयविरचितोऽनुमानमपि प्रमाणं प्रतिजानते । तथा च द्विधा निष्कर्षः ( १ ) प्रत्यक्षस्यैव अनुभववाद इत्यभिधानं प्रत्यक्षमूलकानुमानसिद्धाः प्रमेया अङ्गीक्रियन्ते इति ।

( २ ) अथवा प्रत्यक्षं प्रत्यक्षमूला अनुमितिश्च अनुभववादेन संगृह्यत इति ।

प्रत्यक्षमपि न साधारणजनप्रतीतं समेषामेकविधम् । केचन, यथा वस्तु अवलोक्यते तत्तादृगेवेति मन्वते, अपरे चैतद् विलक्षणम् । यथा शुक्लनीलादयः प्रतीयन्ते न तथा ते वस्तुतः; किन्तु तथाप्रत्ययकारणं विलक्षणं भूतेषु विद्यमानं वस्त्वन्तरं यद्वशात्स्थूलतया शुक्लादीनां प्रत्ययः । एकेन्द्रियग्राह्याः गौणगुणा इमे ये यथा प्रतीयन्ते तथा न सन्ति । इतरे च न

सन्ति बाह्यानि वस्तूनि, सर्वाणि प्रत्यय ( Ideam ) रूपाण्येव तत्रापि केचन बाह्यान्यपि प्रत्ययरूपाण्येवेति स्वीकुर्वन्ति, अस्य प्रत्ययवाद ( Idealism ) इति नामान्तरमपि।

इदन्त्ववधेयं पाठकैर्यद् वस्तुनो भिन्नाकारं ज्ञानं भ्रम इत्युदीर्यते भारतीयैः, यथावस्तु ज्ञानन्तु प्रमेति, बौद्धेषु मतत्रयेषु एकं केवलं मतमुपलभ्यते, यत्र वस्तुनो भिन्नाकारकमपि प्रत्यक्षं प्रक्रियाभेदेन विध्रियते। किञ्च संवेदनेऽपि यदि मनस उपयोगस्तर्हि सवेदनमपि मानसिकम्, अनुभवोऽपि मानस इति अनयोः स्फुटो भेदो न स्फुरति। यदा न्यायनये मनस उपयोगमावहदपि चक्षुरादिना प्रत्यक्षं, विषयेण चक्षुष एव सम्पर्कान्मिनसश्च असन्निकर्षाच्चाक्षुषमेवोच्यते; न मानसं, तथा अनयोः सम्वेदनानुभवयोः मानसत्वे किं वैलक्षण्यमिति चिन्तनीयमेवास्ते। आत्मन आत्मधर्माणाञ्च न्यायानुसारि बाह्येन्द्रियानपेक्षि यन्मानसं ज्ञानं तदपि न विदेशीयानामनुभवज्ञानं यतो बाह्यमपि विषयीकरोति तत्।

नैयायिकानाम् अलौकिकं मानसप्रत्यक्षं बाह्यमपि विषयीकुर्वत् कदाचिद् विदेशीयानामनुभवरूपं स्यादिति तु संभवति।

तर्कश्च स्वयमयथार्थोऽपि यथार्थज्ञानसाधक इति भारतीयदर्शनम्। विदेशीयानाञ्च मते बुद्धेः कार्यं शक्तिर्वा तर्क उच्यते। किन्तु यथार्थोऽयथार्थो वा ? कुत्र केन च प्रकारेण तस्योपयोग इति न स्फुटमुपलभ्यते।

अतःपरमनुभववाददर्शनाचार्याणां कतिपयविदेशीयानामभिमता अल्पीयांसः प्रमेयाः संक्षेपेण निरूप्यन्ते; येषामुपरि लिखिता मम कल्पना अवलम्बते विचारणा च आविर्भवति।

( १ ) जीनो स्टोईक ( Gino Stoik ) नामा यूनानी-रूमी-दार्शनिकेष्वन्यतमो विक्रमसंवत्सरात् २१४ वर्षाणि प्राक्तनोऽनुभववादिनां मार्गप्रदर्शक उच्यते। अयञ्च अभिप्रैति-प्रत्यक्षमेव समेषां ज्ञानानां मूलम्, सृष्टेः प्राक् सांसारिकानुभवाद् वा प्रथमम् आत्मा अलिखितं स्वच्छकर्गदमिव शुद्ध आसीत्, न किमपि ज्ञानं तत्र बभूव, जतुप्रभृतिषु मुद्राङ्कनमिव शुद्ध आत्मनि सांसारिकविषयाणां प्रभावपातः, तत एव च वस्तुज्ञानम् आत्मनि अलभ्यत इति।

सन्तोलनीयमिदं भारतीयदर्शनेन। यानि भारतीयदर्शनानि ज्ञानस्वरूपमात्मानमभिमन्यन्ते तानि तु सर्वथैव विपरीतानि अस्य दर्शनस्य; यानि तु अनित्यज्ञानादीनामाधारमात्मानं मन्वते; तानि न्यायादिदर्शनानि

वहन्त्यस्य साम्यम्। भवति च तत्र आत्मा सुषुप्तौ जागरणे च ज्ञानादिना वियुक्तः संयुक्तश्च। तथा च न्यायवैशेषिकयोरेकदेशस्य प्रतिपादकं जैनोदर्शनं प्रतिभाति। इयान् भेदस्त्ववश्यमवधेयः-यथा भारतीयदर्शने आत्मा अनादिस्तथा ज्ञानादयस्तद्धर्मा अपि प्रवाहरूपेण अनादयः। प्रथमं सर्वथा शुद्धा आत्मानः पश्चाज् ज्ञानादिना आरब्धा इति नाङ्गीक्रियते अन्यथा आत्मस्वरूप-परिवर्तन-प्रसङ्गः। संसारोऽपि प्रवाहरूपेण अनादिरेव। अनुभववशायाताः संस्काराः सुषुप्तौ बालावस्थायामपि। इति।

( २ ) परीक्षावादी फ्रॅंसिस बेकन ( Francis Bacon ) विक्रमस्य १६१७ वत्सरात् १६६५ वत्सरं यावद्वर्तमानः—सर्वाणि ज्ञानानि इन्द्रियेभ्य एव आगतानीति ब्रूते स्म, एतावतैव परीक्षावादित्वेऽपि तस्य अनुभववादिताऽपि प्रसज्ज्यते।

इदमपि भारतीयानां साधारणम्। यानि अनित्यानि ज्ञानानि सर्वाणि इन्द्रियसहायतयैव समायातानि। प्रत्यक्षन्तु स्फुटमेवेन्द्रियायत्तम्, अनुमिति-शाब्दावपि अन्तरिन्द्रियेमपेक्षेत एव। न सर्वाः परं विशेषतोऽनुमितयोऽपि व्युत्पत्तौ उत्पत्तौ च बहिरिन्द्रियाणि अपेक्षन्त एव। एवं शाब्दमपि श्रोत्रम् अस्ति। एतत् परमधिकमपि अवधेयम् न केवलमिन्द्रियेण ज्ञानं जायते, किन्तु अन्यान्यपि बहूनि कारणानि तेषां भूयान् विचारश्च भूयसा समुपलभ्यते। तत्र नाधिकं विलिख्य दिगेव प्रदर्श्यते यत् एकस्मिन् चित्रफलके समेषां साधारणेऽपि चक्षुषः समुपयोगे साधारणजन-कलाकुशलादीनां ज्ञाने महान् भेदः, एवं भाषणेऽपि समाने कर्णविधाने पृथग्जन-कवि-भाषाविज्ञानवतां न समानः शाब्दबोधः। तथा च एषु वैचित्र्याधायि इन्द्रियोपयोगातिरिक्तं कारणमवश्यङ्गीकार्यम्।

यदि इन्द्रियापेक्षमेव ज्ञानं सत्यमन्यदसत्यमिति बेकनाभिप्रेतं तदन्यत्, परं न तदपि व्यवस्थितम्। प्रत्यक्षाण्यपि कानिचिदसत्यानि अनुमिति-शाब्दावपि बहुधा सत्यौ।

( ३ ) जॉर्ज बर्कले ( George berkle ) आयरलैण्डवासी १७४१–१८०९ विक्रमसंवत्सरीय इत्थं विशेषेण दर्शयति—गुणैर्विना न द्रव्यमात्रस्य प्रत्यक्षम् अस्ति अज्ञातञ्चेति परस्परं विरोधः। यतो ज्ञाततैव सत्ता, ये भौतिक-द्रव्याणामभावेऽपि तेषां विचारं प्रत्ययञ्च अवतारयन्ति तेषां मानसो भ्रमः, न संभवति वस्तु विना प्रत्यक्षम्, वस्त्वपि भौतिकमेवेति न सम्यक्, सर्वे प्रत्यय (in the form of idea) रूपाः प्रत्ययेभ्य एव कारणेभ्यः

समुत्थिताः परिमाणसंख्यागुरुत्वप्रभृतयो मुख्या गुणाः परैरुच्यन्ते, तेऽपि न तथा व्यभिचरिताश्च। लघुरपि महान महान् अपि लघुः कदाचिद् दर्शने समायाति, सामान्यं न व्यक्तेरतिरिक्तम्, सामान्यनामान्यपि व्यक्तेरभिधायकानि, न कल्पना निर्गुणं वस्तु स्पृशति। नाम्नो विचारेण नामवादः ( nominalism ) इत्यभिधानमपि बिभर्ति दर्शनमिदम्।

एवं प्रत्ययवाद्यपीदं ज्ञानादभिन्नं ज्ञेयं प्रत्ययरूपमेवेति मन्यमानं ज्ञानज्ञेययोरभेदवादिनः प्रत्ययवादान्तराद् भेदं बिभर्त्येव। तथा अन्ये केचन अनुभववादिनोऽपि सन्तः शरीराद्बहिर्न सन्ति वस्तूनीति मन्वते, इदन्तु शरीराद्बहिः सन्त्यपि वस्तूनि न मनसो बहिरिति अङ्गीकुरुते।

जडेषु गतिश्चेतनसंकल्पादेव संभवति, अज्ञेयानि वस्तूनि न जीवः संकल्पयितुं प्रभवतीति सर्वज्ञेश्वर-संकल्पस्य आवश्यकता, ईश्वरज्ञेयतया च सर्वाणि सत्यान्येव। स्वस्य अन्तरात्मनोऽन्तर्बोधात् परस्य आत्मनस्तु अनुमानात् सत्ता सिद्ध्यति। इत्येवं बहूनि विवेचनीयानि वस्तूनि दर्शनेऽस्मिन् समायातानि। न लघुरयं निबन्ध आत्मसात्कर्तुं प्रभवति, अन्ये च एनद् भारतीयविज्ञानवादेन सन्तोलयन्ति। भारतीयो विज्ञानवादोऽपि ज्ञानज्ञेययोर्भेदाभेदवादितया द्विविधः। अहन्तु अनुभववादांशमात्रेणेह उपयोजयामि।

प्रत्यक्षानुमित्योः स्फुटतया अनुभवपदार्थता अस्य मते जागर्ति, अनुमितिरपि न संकुचिता, प्रत्यक्षस्य अतिसन्निहिता, अपितु जीवैरज्ञेयानि सांसारिकवस्तूनि ईश्वरंच स्पृशन्ती अतिविस्तृता, बुद्धितर्कयोः कार्याण्यपि प्रायोऽस्मिन् दर्शने अनुभवेन संगृहीतानि-इति कल्पये। कदाचन शब्दप्रमाणमपि मन्यते एवं प्रतिभाति, तच्च अनुमानद्वारा स्वतन्त्रं वा भवेत्। यथा च न्यायवैशेषिकयोरनुभववादमेवानुहरति अयमनुभववादः।

अस्मिन् मते नामवादविषये न विशेषतो वक्तुं पारयामि, यतो विदेशीयदर्शनेषु अस्य अल्पीयसीमेव मात्रां प्राप्तवानस्मि। परमिदन्तु तथ्यं यद् नामवादोऽपि भारतीय दर्शनेषु उच्चैरासीनोऽस्ति। यं शब्दवादमिति ब्रुवते। 'वाचारम्भणं विकारो नामधेयमित्युपनिषदो गायन्ति। शब्दद्वारा शब्दमूलिकां च सृष्टिमन्त्रब्राह्मणावपि प्रतिपादयतः। कस्मिंश्चित्समये भारते शब्दवादस्य साम्राज्यमासीदिति प्रतिभाति। न तथा इदानीं तस्य समयः। साधारणतया द्विविधो हि शब्दवादो भारतीयः। सतोभयोरपि शब्दार्थयोस्तादात्म्यमिति प्रथमः। द्वितीयस्तु सर्वं शब्दमयं जगत्

कार्यं कारणञ्च शब्दरूपमेव। अस्य अन्वेषणा स्वरोदयशास्त्र-संगीतशास्त्र-वाक्यपदीयब्रह्मकाण्डतट्टीका-शैवदर्शनप्रभृतिषु संभवति। बर्कलेमतेऽपि शब्दो वर्तते; तदभिधेयो नास्तीत्यस्मिन्नर्थे एव नामवादः समायातः। यथा व्यक्तेरतिरिक्तानि न सामान्यानि, किन्तु व्यक्तिवाचकेभ्यो व्यतिरिक्तानि सामान्यवाचकानि सन्ति।

भारतीयदर्शनेष्वपि त्रिधा सामान्यवादः समायाति। प्रथमो व्यक्ति-सामान्ययोर्भेदः, द्वितीयस्तयोरभेदः, भेदाभेदाविति तृतीयः। विषयो महान्, लेखाकारः उमेधते अतिसंकोचो विधेयतां गच्छति इति पाठकाः क्षमन्ताम्।

ह्यूम [ HuMe ] १६७७ विक्रमवत्सरानन्तरभावी प्रायो बर्कलस्य अनुयायिष्वन्यतमस्तन्मतस्य सूक्ष्मतया विवेचको मन्यते। बर्कलेसमानतां दधदपि इत्थं ब्रूते—प्रत्यक्षानुभवौ न चिन्तनस्मृतिभ्यां भिन्नौ, बुद्धया न किञ्चिन्नूतनं क्रियते, किन्तु अनुभवानां सङ्कुलनम्, सङ्कुलितामपोहनमेव विधीयते, ईश्वरसिद्धिरपि प्रत्यक्षमूलिकैव, प्रत्यक्षसिद्धया प्रपञ्चस्य उत्तमतया व्यवस्थया सौन्दर्यादिना च व्यवस्थापकः परिकल्प्यते, कार्यकारणयोः परस्परं भेदः, आत्मेश्वरादयः समे प्रत्यक्षरूपा एव इति।

अयमस्य लेखोऽनुभवपदार्थं संकोचयन्नपि अनुभवमूलिके चिन्तन-स्मृती अनुमितिञ्च संगृह्णन् प्रायः समेषां ज्ञानानां मान्यतां प्रथयति।

न्यायवैशेषिकप्रभृतिकतिपयभारतीयदर्शनानि, मनोबुद्धिप्रभृतिम् अन्तरिन्द्रियभेदं न कुर्वते, सङ्कुलनापोहनाद्यनुसन्धानन्तु आत्मनः कार्यं वर्ण-यन्ति, साङ्ख्यवेदान्तादयस्तु अन्तरिन्द्रियं चतुर्भेदं मन्वाना अनुसन्धानादिकं बुद्धेः कार्यमिति संगिरन्ते, परं बुद्ध्यतिरिक्तमात्मपदार्थं नपि अङ्गीकुर्वन्ते।

विदेशीयदर्शनेषु तु मनोबुद्ध्यतिरिक्तः कश्चिदात्मपदार्थोऽमुष्मै कर्मणे इति न स्फुटमवभासते, तथापि चार्वाकदर्शनविशेषेण मन आत्मवादिना, बुद्ध्यात्मवादिना सौगतभेदेन च मतमिदमवश्यं जठरे निधीयते। अनुमानेन ईश्वरसिद्धिरपि भारतीयानां प्रसिद्धैव। एवञ्च कस्मिंश्चिदंशेऽपि न नूतनतामावहतीदमिति ध्येयम्।

इदमपि अवधातव्यम्—सर्वे पदार्थाः प्रत्ययरूपास्तेषां ज्ञानमनुभवरूपमिति वदन् ह्यूमोऽनुभवपदार्थस्य विशालतामङ्गीकरोतीति।

[ ५ ] लॉक ( Locke ) १६८८–१७६० समयभव ईङ्गलैण्डवासी अनुभववादी दार्शनिक उच्यते। मनुष्येषु न सहजं ज्ञानं किन्तु बाह्यपदार्था-

नामनुभवेन मनसि ज्ञानं समुत्पद्यते, एतावतैवास्य अनुभववादिता। डेकार्टं लीब्नीजयोः सहजज्ञानवादस्य विरोधी अयम्। जीनो मतविवेचनावसरे विवेचितमिदं दर्शनम्।

इत्थञ्चेदमुपलभ्यते—सर्वं ज्ञानं शिक्षाधीनं, संस्काररूपा ज्ञानशक्तिर्मनसि विद्यते, प्रत्यक्षं ज्ञानान्तराणां मूलम्, शक्त्याद्यकर्तृतया च अनुमितानि जीवेश्वरजगन्ति सत्यानि, स्वत एव मनो देशकालाभ्यामपरिच्छिन्नं ज्ञातुं न प्रभवति, परं मनसि देशकालयोः संलग्नयोः सतोरनन्तस्य शाश्वतस्य च आभासो जायते।

षड्विवेचनशक्तयस्तु अनेन उपयोगेन नाम्ना वा न भारतीयदर्शनेषु परिगणिताः; परं न भारतीयानां ता नूतनाः, दर्शनभेदेन विविधा व्याख्या तासां संभवति, न्यायदर्शनदिशा तु दिक् प्रदर्श्यते—

१. संवेदनं = प्राथमिकं विषयप्रत्यक्षम्, २. धारणा = अपेक्षात्मकज्ञानेन अनुव्यवसायद्वारा संस्कारस्य दृढीकरणम्, ३. स्मरणम् = अनुभवसमानविषयकं ज्ञानान्तरम्, ४. भेदप्रत्ययः = विषयद्वयप्रत्यक्षसहकृतमनसा भेदानुभवः, ५. तारतम्यबोधः = नैकवस्तुधर्मज्ञानसहकृतमनसा साधर्म्यवैधर्म्यपरिकल्पनम्, ६. प्रत्याहारः = एकाकारप्रतीतिपरिकल्पितः सामान्यानुभवः।

सामान्यानुभवः पशूनामपि इति विस्तरभिया परित्यज्यते। योगदर्शनदृष्टौ धारणाप्रत्याहारौ स्वरूपेण कार्येण च भिन्नौ, लॉकस्य धारणा, योगशास्त्रीयामनुसरति धारणां; परं न स्पृशति। प्रत्याहारस्तु विलक्षण एव लॉकस्य प्रत्याहारः पशुपक्षिणोऽपि व्याप्नोति योगस्य तु जितेन्द्रियपुरुषविशेषमेव।

६ रीडर ( Reder ) १७६६–१८५२ सामयिको ब्रिटिशानुभववादिपारम्परिकः प्रायो लॉक इव बाह्यार्थवादी अस्ति, तत्र आलोचनीया विषयाः प्रागुवदेवानुसन्धेयाः, एवं हि वदति आत्मा निस्सन्दिग्धं वस्तु, न प्रत्ययः, इन्द्रियग्राह्यतया बाह्यानि वस्तूनि ज्ञानाद् भिन्नानि, बर्कले स्वीकृताभ्यामनुभवस्मृतिभ्यां भिन्नं तृतीयमुत्प्रेक्षात्मकमपि ज्ञानम्। मुख्यगौणगुणविभागः प्राग्वदेव।

एतदीयवस्तुवर्णनेन अनुभवेन प्रत्यक्षमनुमितिश्च संगृह्यते, गौणगुणवर्णनेन यथा अनुभूयते न तथैव बाह्यं वस्तु इति प्रतिभाति। उत्प्रेक्षाज्ञानं

भारतीयैरपि अङ्गीक्रियते परं दुर्बलं तज्ज्ञानं केवलमसहायं न वस्तु साधनायालम्; ऋते प्रमाणान्तरसाहाय्यमिति ध्येयम् ।

७ स्पेंसर ( Spencer ) १८७६–१९६१ सामयिको विकासवादस्य नेतृत्वेन प्रसिद्धः सहजज्ञानानुभववादयोः साम्यव्यवस्थापको दार्शनिकोऽपि । मनस आत्मनो वा स्वाभाविकं ज्ञानं धर्म—इति सहजज्ञानवाददर्शनम् । न स्वाभाविकं ज्ञानमपि तु अनुभवाधीनमिति अनुभववादमतम् । प्रथमन्तु अनुभवाधीनमेव ज्ञानं क्रमशो दार्ढ्यमापन्नं सहजं जातमिति । प्रायः सामञ्जस्यं स्थापयति इति विभाति । अनुभववादोऽपि जीनो लॉकमतवदेवेति न नूतनं किमप्यत्र वक्तव्यम् ।

स्नायुनिष्ठाघात एव संविदो मूलम, संविदो य आकारो व्यक्तिषु सहजतया भासते, सोऽपि जातौ कथमपि अनुभवादेवादौ जातः, क्रमशः स्नायु-जाल-बद्धः परम्परागतो भवति इति वदति ।

सुषुप्तौ मनः सुषुम्ना-नाड्यां प्रविशति, तीव्रेण ध्वनिना स्पर्शेण वा स्नायावाघातो भवति तत एव जागरणमिति प्रसङ्गे भारतीयदर्शनेऽपि स्नायावाघातो वर्ण्यते । संख्यापरिमाणादयश्चक्षुषा त्वचा चेति इन्द्रियद्वयेन गृह्यमाणा मुख्यगुणाः, एकेन्द्रियग्राह्यतया रूपरसादयो गौणाः । न रूपादयो यथा सन्ति, तथैव प्रतीयन्ते, किन्तु तादृशप्रतीतिशक्तिर्द्रव्येषु, अतएव रक्तमपि वस्तु कस्यांचिदवस्थायां श्वेतं दृश्यते ।

षट् च विवेचनशक्तय—उच्यन्ते—१. संवेदनं, रूपादीनां ज्ञानम, २. धारणा, अनुभवस्य स्थैर्यसाधनम्, ३. स्मरणम्, अनुभवस्य पुनः सञ्जीवनम्, ४. भेदप्रत्ययः वस्तूनां परस्परभेदज्ञानम्, ५. तारतम्यबोधः, वस्तूनां साम्य-वैषम्ययोः परिचयः ६. प्रत्याहारः, एकाकारप्रतीतिद्वारा सामान्यज्ञानम् । प्रथमद्वितीययोर्मनो बाह्यवस्तूनामधीनम्, अन्येषु स्वतन्त्रम्, प्रत्याहारस्तु मनुष्येष्वेव, न पशुषु, तेन न भवति तेषां सामान्यबोधः ।

इदमपि मतं मतान्तरवन् नानुभवपदार्थे संकुचितम्, यद्यपि बाह्यपदार्थानामनुभवे आग्रहस्तथापि अनुभवः प्रत्यक्षमेवेति नास्ति दुराग्रहः, अनुमितिरपि अनुभवेन, संगृह्यते इति प्रतिभाति । भवतु नाम शिक्षाधीनं ज्ञानं, परं संस्काराङ्गीकारेण जन्मान्तरीयशिक्षाया अपि समुपयोगः सिद्ध्यत्येव इदंच भारतीयदर्शनानामपि तुल्यमेव ।

इदन्तु वक्तव्यमेव समापतति यत् शिक्षा इव मनःशक्तिवैचित्र्यमपि

एवं हि किञ्चिच् चिन्त्यताम्—स्वतः परिणामिनी बुद्धिर्ज्ञानसामान्यसामग्री । अवस्थाविशेषाश्च ज्ञानेषु विशेषाऽऽधायकाः । अवस्थाऽवस्थावतोश्च सर्वथा भेदसहिष्णुर्वाऽभेदः, अतोऽवस्था न ज्ञानसामान्यसामग्र्यतिरिक्ता । अतो ज्ञानसामान्यसामग्रीजन्यतया प्रमात्वाऽप्रमात्वयोः स्वत उत्पत्तिवादः । अवस्था हि परिणामविशेषः, न च परिणामपरिणममानयोः कार्यकारणयोश्च सांख्यमते भेदः । इति स्वत उत्पत्तिवादः ।

## स्वतो ज्ञप्तिवादः

प्रामाण्याऽप्रामाण्ययोर्ज्ञानं धर्मी आश्रयः । स्वाश्रयग्राहकसामग्रीग्राह्यत्वं हि स्वतोग्राह्यत्वं प्रसिद्धम् । ज्ञाने ज्ञाते युगपद्विरुद्धे प्रामाण्याऽप्रामाण्ये उपतिष्ठेयाताम् । प्रवृत्तिनिवृत्ती च आपद्येयाताम् इत्यादय उभयोः स्वतोग्राह्यत्ववादे आपत्तयः । परं नैतावतैव विचारपर्यवसानम् अधिगन्तव्यम् । बौद्धमते ह्यप्रामाण्यस्य स्वतस्त्वं प्रसिद्धम्, मीमांसाभ्यां प्रामाण्यस्य स्वतस्त्वम् उच्यते, उभयोः स्वतस्त्वं सांख्यमते समर्थयितुं शक्यते न वा इति न विना प्रयासं निर्णेतुं शक्यम् ।

यथा मीमांसकैस् तदप्रामाण्याग्राहकज्ञानग्राहकयावत्सामग्रीग्राह्यत्वं प्रामाण्यस्य स्वतोग्राह्यत्वं वर्ण्यते । अप्रामाण्याग्राहकसामग्र्या प्रामाण्यं गृह्यते इति तात्पर्यम् । तथा तत्प्रामाण्याग्राहकज्ञानग्राहकयावत्सामग्रीग्राह्यत्वम् अप्रामाण्यस्य स्वतोग्राह्यत्वं सांख्येन वर्णयितुं शक्यते न वा ? न शक्यत इति प्रतिभाति । दोषघटिता हि सामग्री अप्रामाण्यग्राहिका प्रसिद्धा । ततस्तद्व्यतिरेको ज्ञानग्राहकसामग्र्यां निवेश्यते । ज्ञानग्राहकसामग्रीविलक्षणा हि प्रामाण्यग्राहकसामग्री न प्रसिद्धा येन तद्भिन्नत्वं निवेश्येत । यदि गुणज्ञानघटिता सामग्री तादृश्यङ्गीक्रियेत तर्हि उभयोः परतो ग्राह्यत्वम् एव पर्यवसीयेत । गुणज्ञानघटितया प्रामाण्यस्य दोषघटितया च अप्रामाण्यस्य ग्रहणे गुणज्ञानदोषाभ्याम् अघटितया ज्ञानग्राहकसामग्र्या किम् अपि प्रामाण्यम् अप्रामाण्यं वा न गृह्यते । युगपद्गुणज्ञानदोषयोः सम्पत्त्या उभयोरनुपस्थित्या प्रामाण्याप्रामाण्यकोटिकः संशयो न स्यात् ।

इत्थं हि किञ्चिद् वक्तुं शक्यते, विशेषाधानं विना वृत्तिविषयिणी वृत्तिः स्वप्रकाशमाहात्म्यान् नाङ्गीक्रियते, प्रामात्वादिविशेषाधानेन त्व् इदं प्रमा इदम् अप्रमेति वृत्तिः स्वीक्रियते । अतो ज्ञानग्रहस्य नोपयोगः । ज्ञानं हि जायमानं निश्चयरूपं स्वयं स्वविषये प्रवर्तकम् । न प्रवृत्तौ प्रामाण्यग्रहम् अपेक्षते, कुतश्चित् कारणाद् अप्रामाण्यसंशये सति तदपनोदाय प्रामाण्यग्रहस्याऽपेक्षा अतो ज्ञानमात्रोदयात् सर्वविधः प्रवृत्त्यादिव्यवहारः । कुतश्चित् कारणाद् धर्मिज्ञानग्रहेऽपि ज्ञानग्राहकसामग्रीवशाद् उभयोः प्रामाण्याऽप्रामाण्ययोरुपस्थितिः । अत एव ज्ञानग्राहकसामग्रीग्राह्यत्वेन उभयोः स्वतोग्राह्यत्वम् । तथापि न सर्वत्र संशयः । कोट्योर्विरोधप्रतिसन्धानस्य साधारणधर्मादिग्रहस्य च सर्वत्र दौर्लभ्यात् । संशयोदये च भ्रमत्वनिश्चयाय दोषादिज्ञानं प्रवृत्तिवैफल्यादिरपेक्ष्यते । एवं प्रमात्वनिश्च-

राय गुणज्ञानं प्रवृत्तिसंवादो वा अन्विष्यते। तथा च प्रामाण्याऽप्रामाण्ययोर्ग्रहो ज्ञान-ग्राहकसामग्रीसम्पाद्यः। तयोर्निश्चये तु गुणज्ञानदोषादयः कारणम् इति चतुर्थः पक्षः।

यदा प्राभाकरमतम् इव स्वप्रकाशवादे ज्ञानं स्वयम् एव स्वग्रहः, तदा सर्वस्यापि ज्ञानस्य ग्रहः, प्रामाण्याऽप्रामाण्ययोरपि ग्रहः। परं विरोधसाधारणधर्मादिग्रहाभावात् न सर्वत्र संशयः, तयोरुपस्थितिमात्रं त्वकिञ्चित्करं न प्रतिबन्धकं प्रवृत्तेः। कृष्यादिप्रवृत्तौ फलसंशय इव प्रामाण्यसंशयो न प्रवृत्तिप्रतिबन्धकः, संशयस्य सर्वज्ञानसौलभ्यात् प्रवृत्तिमात्राऽनुत्पादप्रसङ्गात्। किन्त्वप्रामाण्यनिश्चयः प्रवृत्तिप्रतिबन्धकः, प्रामाण्यनिश्चयोऽप्य् अप्रामाण्यनिश्चयप्रतिबन्धकतयोपयोगी न सर्वत्राऽपेक्ष्यते। बहुवित्तव्ययायाससाध्ये यागादिकर्मणि प्रवृत्तिस् तु श्रद्धोत्कर्षस्य अप्रामाण्यनिश्चयप्रतिबन्धकतया, आस्तिककामुकस्य निन्दितकर्मप्रवृत्तौ रागोत्कर्षस्याऽनिष्टसाधनत्वज्ञानप्रतिबन्धकतयेव, निन्दितकर्मप्रवृत्तिं प्रति अनिष्टसाधनत्वज्ञानस्य प्रतिबन्धकत्वे रागोत्कर्षविशेषो यथा उत्तेजकस् तथा अप्रामाण्यग्रहस्य प्रामाण्यग्रहप्रतिबन्धकत्वे प्रवृत्तिप्रतिबन्धकत्वे वा श्रद्धोत्कर्षविशेष उत्तेजकः, इति पञ्चमः पक्षः। प्रामाण्याऽप्रामाण्ययोरुपस्थितावपि संशयाऽभावेन निश्चयरूपं धर्मिज्ञानमप्रामाण्यसंशयानालिङ्गितं प्रवर्तकम् इति चतुर्थपक्षः, संशयालिङ्गितम् अपि प्रवर्तकम् इति पञ्चमपक्ष इत्यनयोर्न संकरः।

अथवा ज्ञाने ज्ञातेऽपि न धर्मिज्ञानमात्राद् उभयोः प्रामाण्याऽप्रामाण्ययोरुपस्थितिरपि। प्रामाण्याऽप्रामाण्यसहचरितज्ञानत्वग्रहस्याऽपेक्षणात् तस्य च सदा सर्वत्राऽसम्पत्तेः।

संशयेऽपि प्रवृत्त्यङ्गीकारे प्रामाण्यग्रहाऽनास्कन्दितोऽप्रामाण्यग्रहः प्रवृत्तिप्रतिबन्धक इति वाच्यम्। प्रामाण्यग्रहस्य साक्षात्प्रवृत्तिकारणत्वाऽनङ्गीकारात् तत्राऽप्रामाण्यग्रहाऽनास्कन्दितत्वस्य नोपयोगः। सामानाऽधिकरण्यसमानधर्मिकत्वाभ्याम् आस्कन्दितत्वं बोध्यम्।

सत्त्वादिगुणानाम् अन्योन्याश्रयमिथुनवृत्तित्वेऽपि सत्त्वोद्रेके प्रमाज्ञानं रजस्तमसोश्च प्राधान्ये भ्रमसंशयौ, न चैकस्याजीवबुद्धेर्भेदः। प्रमायाः प्रमात्वेन अप्रमायाश्च अप्रमात्वेन ग्रहोऽपि प्रमाज्ञानं सत्त्वकार्यम्, भ्रमस्यापि भ्रमत्वेन ज्ञानं यथार्थज्ञानम् एव। एवं प्रमाया भ्रमत्वेन अप्रमायाश्च यथार्थत्वेन ग्रहो रजस्तमसोः प्राधान्यनिमित्तकम्। तथा च प्रामाण्याप्रामाण्यग्रहयोस् तुल्ययोगक्षेमत्वे प्रामाण्यस्य स्वतो ग्रहणम् अप्रामाण्यस्य च दोषप्रयुक्तम् इति वदन्तो मीमांसका मुधैव वैषम्यम् आतन्वते इति सांख्यानुयायिनो ब्रूयुः, तावतैव स्वतो ग्रहवाद इति षष्ठोऽपि पक्षः पाठकेभ्यो यदि रोचेत। दोषा रजस्तमसोः परिणामविशेषास्तयोरुद्भवकारिणो वा, प्रकृतिपुरुषयोर्विवेकाग्रहो यथा संसारकारणं तथा भ्रमेऽपि भेदाग्रहस्य कारणत्वम्। भेदाग्रहश् च भेदग्रहाभावः। तथा च भावरूपकारणविरहाद् अप्रामाण्यस्य स्वतोग्रह इत्यवसेयम् इति।

कठिनकृशविचारं न्यूनताभारहारम् ।
कृतिकुशलविचेयं सारशोभाविहीनम् ॥
ललितमृदुसरोजे दोषशोषे गुरोर्मे ।
सुखयतु चरणेऽदः शैशवं वै विलीनम् ॥

पञ्चापहोशियारपुरविश्वेश्वरानन्दवैदिकशोधसंस्थानविश्वसंस्कृतं पत्रेऽपि प्रकाशितं न विशेषविभेदं विभर्तीति न प्रकाश्यते, आवश्यकमपि अस्य हिन्दीरूपान्तरं समयद्रव्यसंकोचवशादुपेक्षितम् ।

---

पटनासंस्कृतसंजीवनपत्रे २०१६ वैक्रमाब्दे चैत्रपूर्णिमाङ्के प्रकाशितः ।

## बौद्धदर्शनस्य प्रामाण्यवादः

नानादिशः पश्यसि किं सरागो
भागो न लभ्यो नयवाटिकायाः ।
प्रयातु पात्रं सरसं गुणाढ्यम्
मन्दो मनोभृङ्ग गुरोः पदाब्जम् ॥ १ ॥

प्रामाण्यवादो गहनो विषयः । न्यायाचार्यपरीक्षायामेव प्रामाण्यवादः स्थापितः । अन्यग्रन्थेषु संक्षेपेण समुल्लिखितोऽपि विषयोऽयं काठिन्यवशात्प्रायः परित्यज्यते । प्राचीनग्रन्थेषु स्थूलरूपेण अङ्किता विशेषसंशयमारूढा विषयाः क्रमिकस्फुटतामादधानेन प्राचीनानुकूलेन अर्वाचीनग्रन्थेन निर्णयं भजन्ते, यथा न्यायस्यैव परतः प्रामाण्यवादः प्रसिद्धः, परं वार्तिकतात्पर्यटीकायाम् असकृत् स्वतः प्रामाण्यमिति लिखितं ततो भ्रमोऽपि भवति कस्यचिदिति क्रमशः स्फुटीभविष्यति । बौद्धदर्शनन्तु चिराद् भारतीयदार्शनिकविदुषां चर्चाविषयो नाभूदिति तादृशभ्रामकाः शब्दा अद्यापि तथैव वर्तन्ते । अत इदानीन्तनदर्शनान्तरप्रक्रियामिव स्फुटप्रक्रियां प्रदर्शयितुं प्रयते, स्फुटताप्रदर्शने च नूतनताऽपि अल्पीयसी आयास्यति । तदर्थं विदुष आकारयामि, न च आह्वानं जयपराजयफलाय, शास्त्रार्थाय, अपि तु तत्त्वनिर्णयानुकूलवादाय । ततः मम लेखे कस्यचिद् विदुषो विचिकित्सा समुदेति

तदाऽवश्यं तत्प्रकाशनं कार्यम्, स्वमतेन च यथाशक्यं कृपया ममोद्देश्यस्य निर्वाहः कार्यः। तत्र च बौद्धमते उत्पत्तौ ज्ञप्तौ च कीदृशे स्वतस्त्वपरतस्त्वे प्रामाण्या-प्रामाण्ययोः इति स्फुटं निर्वचनीयम्, तदनुसारं स्वतस्त्वपरतस्त्वव्यवस्थापने स्फुटानि सम्वादवाक्यानि चेदवश्यं प्राक्तनानि समुद्धरणीयानि, व्यञ्जकानि चेदभिव्यक्तिप्रकारः प्रदर्शनीयः, विसम्वाद-माभासमानानि च वाक्यानि तात्पर्यादिवर्णनपुरस्सरं समन्वयं नेयानि, सर्वत्रैव च दर्शनस्य प्रधानाः सिद्धान्ता न विहन्येरन् इति सावधानेन विवरणीयम्। एवंविधा व्यवस्थिता लेखाः अपेक्ष्यन्ते। अहन्तु तावदुपलब्धसामग्र्या यथामति व्यवस्थापयामि। अप्रामाण्यस्य स्वत उत्पत्तिर्ग्रहणञ्चेति स्फुटं वचनं बौद्धप्रतिष्ठितग्रन्थेषु नाद्यावधि उपलभे, तदनुकूला पदार्थपरिस्थितिस्तु प्रतिभाति, अन्येषु अंशेषु सौगतदर्शनेषु वचनमपि उपलभे।

तत्र एवंविधस्य प्रधानदर्शनस्वरूपस्य अवधानेन अग्रे प्रसारः, प्रकाशस्वभावाऽपि सततं वहन्ती चितिशक्तिर्न विषयग्रहणस्वभावाः अत एव सुषुप्तिमुक्तिप्रभृतिषु निराकारा आलयविज्ञानाभिधाना निरुपप्लवा वा चित्सन्ततिरनुवर्तत इति तेषां सिद्धान्तः। विषय-ग्रहणस्वभावत्वे च निराकारत्वानुपपत्तेः, नैयायिकादीनामेव ज्ञानस्य विषयग्रहणं सविषय-कत्वं वा स्वभावः, निर्विषयकज्ञानानङ्गीकारात्। बौद्धमते च न विज्ञानत्वव्यापकं सविषय-कत्वम्। अत एव बौद्धग्रन्थेषु विषयाणां मलशब्देन व्यवहारः। ज्ञाने विषयाकारस्तु योगाचार-मते बाह्यविषयानङ्गीकाराद् अनादिप्रचलद्विषयवासनावशादेव, बाह्यप्रत्यक्षवादिमते प्रत्यक्ष-स्थले तु विज्ञानस्य प्रत्यक्षस्य कारणं विषयो विज्ञाने स्वाकारसमर्पकः। यो हि आलम्बन-प्रत्ययशब्देन व्यवह्रियते, रूपविषयके चाक्षुषविज्ञाने रूपाकारताया रूपसादृश्यस्य रूप-विषयकत्वस्य वा यथा व्यवहारप्रयोजकं रूपमालम्बनम्, ज्ञानत्वस्य च प्रयोजकम् अव्यव-हितपूर्वतनं विज्ञानं यस्य समनन्तरप्रत्ययशब्देन व्यवहारः, विषयाकारताया विज्ञान-तायाश्च प्रयोजकं परस्परं भिन्नमिति भावः। तथा च सामान्यज्ञानसामग्र्यामालम्बन-प्रत्ययस्य न प्रवेशः; तदभावेऽपि सुषुप्तिमुक्त्यादौ विज्ञानसन्तानस्य प्रवहरणात्, वह्न्यनुमाने च विज्ञाने वह्न्याकारतायाः प्रयोजिका व्याप्तिः।

सर्वदर्शनसंग्रहे विवरणप्रमेयादिषु च अप्रामाण्यं स्वतः प्रामाण्यञ्च परत इति स्फुटं वर्णितमास्ते, तस्य च उत्पत्तौ ज्ञप्तौ च तात्पर्यमेवं कल्पयामि, ज्ञानसामान्यसामग्री-प्रयोज्यत्वं स्वतस्त्वम्, ज्ञानमपि तत्र सविषयकं प्रमात्वाप्रमात्वयोग्यं ग्राह्यम्, निर्विषय-कस्य तदयोग्यत्वात्, बाह्यार्थसद्वादिबौद्धमते द्विविधम् आलम्बनं बुद्धिस्थं बाह्यञ्च, सत्यरजतस्थले द्विविधमपि तिष्ठति, तत्सम्वादादिना प्रवृत्तिप्राप्तिप्रभृतयो जायन्ते, रजतभ्रमस्थले बुद्धिस्थमेव भासते। बाह्यसम्वादाभावादप्रमा जायते, तथा च बुद्धिस्थ-मालम्बनं द्विविधज्ञानसाधारणं ज्ञानसामान्यसामग्र्यामायाति। तन्मात्रप्रयोज्यत्वम-प्रामाण्यस्येति स्वतस्त्वं वच्मि। न च पूर्वोक्तवर्णनरीत्या विज्ञानत्वप्रयोजिका प्राक्तनविज्ञान-सत्तैव। आलम्बनन्तु ज्ञानविशेषस्यैव कारणम्, तथा च विशेषकारणप्रयोज्यत्वात्

परतस्त्वमेवायातमिति वाच्यम् । शुद्धविज्ञानस्य आत्मस्थानीयतया प्रवृत्तिविज्ञानस्यैव व्यवहारोपयोगितया तद्वादायैवास्य निर्वचनात् । ननु बौद्धा अपि भ्रमस्थले दोषं वर्णयन्त्येव तथा च दोषप्रयोज्यत्वमादाय नैयायिकानामिव परतस्त्वमपि स्यादिति चेदस्तु मतान्तरं व्याख्यानान्तरं वा परं पूर्वोक्ताचार्यवचसः समन्वय एव । नास्ति नैयायिक-साम्यमपि । न्यायनयं दूरस्थस्य कथमपि भानेऽपि बौद्धनये बुद्धिस्थस्य सर्वथा सान्निध्यान्न दोषो रजताकारताप्रयोजकः किन्तु शुद्धाकारताप्रतिबन्धक एव । न्यायनये रजतस्मृति-रुद्बुद्धो रजतसंस्कारो वा रजतभानप्रयोजको न सार्वत्रिकः सन् न प्रमासामग्र्यामपेक्षितः । बुद्धिस्थन्तु प्रमास्थलेऽपि सन्निहितं भ्रमप्रमासाधारणम् । अतः सामान्यसामग्रीसन्निविष्टः, किञ्च बौद्धप्रतिष्ठितग्रन्थेषु अप्रामाण्यस्य परतस्त्वं स्फुटं निरुक्तं समुपलभ्येत चेत्सोऽपि केनाप्यभिप्रायान्तरेण प्रतिपाद्येत । न च तथा साम्प्रतं समुपस्थितम्, इदमेव बौद्धमतम् । अस्य चोपपादनमेवं प्रदर्शितम् । अन्यैः प्रदर्शितानि सम्वादवाक्यानि अप्रामाण्यस्य स्वतस्त्वेऽपि संगच्छन्ते तदा किमिति कस्यचिद्व्याख्यामात्रेण बौद्धसिद्धान्तः परतस्त्वे सिद्ध्येत् । कदाचन अस्माभिरनुपलभ्यमानमपि तादृशं स्फुटवचनं तादृशैराचार्यैरुपलब्धं भवेत् । न सर्वदर्शनसंग्रहादिग्रन्थस्य बौद्धमतखण्डनार्थमेव रचना येन असत्यता तेषु आरोप्येत । किन्तु अग्रिमेषु स्वसन्तानेषु वात्सल्यात् सारल्येन दार्शनिकताप्रचाराय, अन्यथा तद्वर्णितानामन्येषामपि बौद्धविषयाणाम् असत्यत्वमापद्येत ।

किञ्च सुगतसरण्यां न तद्वति तत्प्रकारकत्वादिरूपम् प्रमात्वं येन विशेषणविशे-ष्यादिना सन्निकर्षविशेषे कश्चिद् दोषोऽप्रमात्वप्रयोजको निर्धार्येत । निर्विकल्पकस्य प्रमात्वाङ्गीकारात्, नापि अबाधितार्थविषयकत्वं येन अप्रमास्थले विषयाभावः कल्प्येत, अनुमानस्य असत्सामान्यविषयकत्वेऽपि प्रमात्वस्वीकारात् । किन्तु बाह्येन सम्वादस्य बाह्यप्रापणस्य च प्रायो यत्र अभावस्तत्र ज्ञानस्य अप्रमात्वमङ्गीक्रियते । स च न प्राक्तनः, तथा च साधारणस्य बुद्धिस्थत्वस्य सर्वत्र विषयाकारतासम्पादकत्वं प्रतिभाति, बाह्यस्य च प्रवृत्त्यादिप्रयोजकसम्वादादावुपयोगः ।

वाराणसेयसंस्कृतविश्वविद्यालयबौद्धदर्शनपरिषदि नवनालन्दामहाविहाराध्यक्ष-श्रीसातकड़िमुखोपाध्यायानाम् अध्यक्षीयभाषणस्य इमे सन्दर्भाः द्वितीये पृष्ठे—

"सर्वदर्शनसंग्रहे एतत् कारिकाद्वयमुपलभ्यते—

प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः ।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः ॥
प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः ।
प्रामाण्यं च स्वतः प्राहुः परतश्चाप्रमाणताम् ॥ स. सं. पृ. २७६"

तत्र ज्ञानानामप्रामाण्यं स्वतः प्रामाण्यं परत इति सौगतानां राद्धान्त उपक्षिप्तः। प्रयत्नेनान्विष्यन्तोऽपि वयं नास्य वादस्य मूलं सौगतन्यायग्रन्थेषूपलभामहे। धर्मकीर्तेः प्रामाण्यवार्तिकव्याख्यातारः, शान्तिरक्षितकमलशीलौ च सर्वथाऽन्यादृशं मतं प्रतिपादयन्ति, नहि न्यायप्रस्थाने बौद्धाः ज्ञानस्य स्वाभाविकमप्रामाण्यमभ्युपगच्छन्ति। तेषां मतं न खल्वेकान्ततः स्वतः परतः पक्षयोर्निक्षेप्तुं शक्यम्, किन्तु विभज्यैव वचनीयम्। तथाहि—अर्थक्रियारूपं सम्वादज्ञानं स्वसंवेदनं तार्किकानुमतानुव्यवसायस्थानीयम्, अनुमानमाभ्यासिकप्रत्यक्षज्ञानं च स्वतः प्रमाणमितरत् परत इति सौगताः संगिरन्ते ( त० सं० पञ्जिका, पृ० ७७१ )। एतदेव मतमार्हतैः स्वसिद्धान्तत्वेन प्रत्यपादि। प्राचीननैयायिकधुरन्धरेण वाचस्पतिमिश्रेण तात्पर्यटीकायामयमेव पक्षः स्वसिद्धान्तत्वेनाङ्गीकृतः (न्यायतात्पर्यटीका, पृ० १२–१३ )। स्वसंवेदनन्तु नैयायिकानामसम्मतम्, अतस्तत्स्थानेऽनुव्यवसाय एव प्रतिभटीकृतः। अन्यत्तु अविशिष्टम्।

तत्रैव पञ्चदशपृष्ठेऽस्मिन्नेव विषये—बौद्धानां तु पञ्चम एव पक्ष इति प्रागेवावेदितम् ते खलु स्वसंवेदनस्यार्थक्रियाज्ञानस्यानुमानस्याभ्यासदशोत्पन्नज्ञानस्य च स्वतः प्रामाण्यमङ्गीकुर्वन्ति। यच्च संदेहविपर्ययविषयीभूतं ज्ञानं तत्तु परतः प्रमाणम्। न चानवस्थाप्रसङ्गो वस्तुसम्वादस्य स्वतःप्रामाण्यात्, प्रत्यान्तरानपेक्षणात्तत्रैव प्रामाण्यस्य परिच्छित्तेः।

उक्तञ्च—"अतश्च प्रथमं ज्ञानं तत्सम्वादमपेक्षते।
सम्वादेनापि संवादः पुनर्मृग्यस्तथैव न॥
भ्रान्तिहेतोरसद्भावात् स्वतस्तस्य प्रमाणता।
प्रथमस्य तथाभावे प्रद्वेषो भ्रान्तिसंभवात्॥"
( त० सं० का० २९७२-७३ )

अयं च विभज्य प्रामाण्यवादो मीमांसकपक्षान्नातीव भिद्यते। कुमारिलस्यापि संशयविपर्ययशङ्कानास्कन्दितमेव विज्ञानं प्रमाणम्। यत्रापि दूरत्वादिदोषवशादप्रामाण्यशङ्का तत्रापि प्रत्यासत्तिगमनादिना तस्या निरासे विज्ञानं स्वत एव प्रमाणं भवति। न च प्रयत्नेनान्विष्यापि यदि बाधो नोपलभ्यते तदा न दोषशङ्कया प्रामाण्यविरतिः।

"दोषज्ञाने त्वनुत्पन्ने न शक्या निष्प्रमाणता॥ ६०॥
एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः।
प्रार्थ्यते तावतैवैकं स्वतः प्रामाण्यमश्नुते"॥ ६१॥
( मीमांसाश्लो० वा०, पृ० ६४-६५ )

तत्रैव चतुर्दशपृष्ठे प्रामाण्यस्योत्पत्तौ स्वतस्त्वं शान्तिरक्षितकमलशीलाभ्यामपि स्वहस्तितम्। सांवृतं प्रामाण्यं धर्मकीर्तिसम्वादेनोपवर्ण्यं पुनस्तत्रैव सप्तदशपृष्ठे —

'अनेनैवाशयेनोक्तं केनाप्यभियुक्तेन सौगता ज्ञानानामप्रामाण्यं स्वाभाविकं मन्यन्ते' इति। तत्रैव भाषणे चतुर्थपृष्ठे इत्थम्—"अत्र प्रसङ्गे सौगतानामपि सम्प्रतिपत्तिरुल्लेखमर्हति। ज्ञानस्य मेयबोधिका शक्तिः स्वकारणादेवोपजायते। एतदेव च प्रामाण्यस्योत्पत्तौ स्वतस्त्वम्। तथा चोक्तम् तत्त्वसंग्रहकारिकायाम्—

> अथ शक्तिः स्वहेतुभ्यः प्रमाणानां प्रजायते। २८२७
> तदत्र न विवादो नः को ह्यनंशस्य वस्तुनः।
> स्वहेतोरुपजातस्य शक्तिं पश्चात् प्रकल्पयेत्। २८२८

यदेव ज्ञानकारणं तदेव प्रमाकारणमित्यत्र मीमांसकादिभिः सौगतस्यैकवाक्यता।" इति।

एषामेव महाविदुषां मुखोपाध्यायानां ३१।१०।६१ दिवसीये 'संस्कृतम्' पत्रे प्रकाशितस्य प्रामाण्यवादसमीचालेखस्य एतदुपयोगिनः कतिपयेंऽशा इत्थं वर्तन्ते—

> "विषयग्रहणं धर्मो विज्ञानस्य यथास्ति सः।
> गृह्यते सोऽस्य जनको विद्यमानात्मतेति च॥
> एषा प्रकृतिरस्यास्तन्निमित्तान्तरतः स्खलत्।
> व्यावृत्तौ प्रत्ययापेक्षमदृढं सर्पबुद्धिवत्॥
> प्रभास्वरमिदं चित्तं प्रकृत्या गन्तवो मला।"

इत्यादिधर्मकीर्तिवचनानि स्वतः प्रामाण्यं वर्णयन्ति अप्रामाण्यस्य स्वतस्त्वे विपरीतानि भवन्ति। तथैव तत्त्वसंग्रहेऽपि ३४३५ कारिका—

> "प्रभास्वरमिदं चित्तं तत्त्वदर्शनसात्मकम्।
> प्रकृत्यैव स्थितं यस्मान्मलास्त्वागन्तवो मताः॥"

एवम्—"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः।
न बाधा यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः॥"

इति भामतीसमुद्धृतं धर्मकीर्तिवचनं विरुध्यते। अप्रामाण्यस्य स्वतस्त्वे सर्वदर्शनसंग्रहादिभ्यो यत्समुद्धृतं वाक्यं तस्यैतादृशं तात्पर्यम्, विशिष्टज्ञानमात्रस्य सविकल्पकत्वेन स्वतोऽप्रमाणभूतस्य परम्परया वस्तुमूलकत्वेन सम्वादित्वेन च व्यावहारिकं प्रामाण्यमभिप्रेत्य विरोधिदार्शनिकानां तात्पर्यकथनम्।

एवम् १४।११।६१ दिनस्य 'संस्कृते' पत्रे तादृशे लेखे दृश्यते—चित्सुखाचार्यादिभिः परिष्कृतं लक्षणं विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतस्त्वं नाम'''चित्सुखाचार्यादिभिः परिष्कृते उत्पत्तौ स्वतस्त्वलक्षणे न बौद्धानां विप्रतिपत्तिरिति स्पष्टम्। अन्यच्च, परतः प्रामाण्यग्रहे तत्र समुद्धृतानि एवं वचनानि—

"तस्मादर्थक्रियाज्ञानमन्यद्वा समपेक्ष्यते ।
निश्चयायैव न त्वस्या आधानाय विषादिवत् ॥ त० सं० ।
स्थिते हि तस्य मानत्वे निश्चयः क्रियतेऽनया ।
न त्वपूर्वं प्रमाणत्वमनया तस्य जन्यते ॥ त० सं ३०७५ का० ।
अतः प्रमाणता तस्मिन् विद्यमानाऽप्यनिश्चिता ।
अविद्यमानकल्पेति नैवास्तीत्यपदिश्यते ॥" त० सं० ३०७६ । इति ।

विश्रुतकीर्तेः सौगतसिद्धान्तेषु कृतश्रमस्य महापण्डितस्य गवेषणागम्भीरोऽयं लेखोऽवश्यं द्रष्टव्यो मन्तव्यश्च, परं नहि सर्वे सर्वं जानन्तीत्यादिन्यायेन नैतादृशलेखेनात्र किञ्चिन्निर्णेतव्यं निस्सरेत् । एतादृशा लेखा अपसिद्धान्तं प्रचारयन्ति सरलेषु अपि विषयेषु अशुद्धा निबन्धा हिन्द्यादिभाषासु प्रचलिताः पाठ्यपुस्तकत्वेनापि स्थापिताः प्रचलन्तीति असकृदुक्तवान् लिखितवांश्चास्मि । अयन्तु गम्भीरो विषयो न न्यायाचार्यस्य अपि तु नव्य-न्यायशैल्या व्युत्पन्नस्य कतिपयस्यैव विदुषो विवेचनीयः । बौद्धन्यायग्रन्थास्तु कारणान्तर-वशादेवं बाल्यावस्थायां क्रीडन्ति यत्र उदाहरणानि अपि सर्वाणि न सौगतसिद्धान्तरीत्या समन्वयं भजन्ते, किन्तु नैयायिकानां प्रसिद्धानि कानिचित् सारल्याय तथैव समुद्धृतानि ।

( १ ) पश्यन्तु तावद् विसकलितमेनं लेखम्, सर्वदर्शनसंग्रहकारस्य विरोधं प्रयासेन साधयन्नपि अप्रामाण्यस्य परतस्त्वे न किमपि स्फुटं वचनमुत्पत्तौ प्रदर्शितम् ।

( २ ) प्रामाण्यस्य उत्पत्तौ स्वतस्त्वेऽपि न स्फुटं वचनं दत्तं, किन्तु तात्पर्यवर्णनेन निस्सारयति ।

( ३ ) द्वितीयपृष्ठे यत् तत्त्वसंग्रहपञ्जिकावचनानि समुद्धृतानि तानि ज्ञप्तिपक्ष-स्यैव सन्ति न तूत्पत्तिपक्षं स्पृशन्ति तत्रापि प्रामाण्यस्यैव न अप्रामाण्यं चर्चयन्ति, तदा कथमप्रामाण्यस्य स्वतस्त्वे विरोधमञ्चन्तीति गवेषयन्तु पाठकाः ।

( ४ ) सप्तदशपृष्ठे च प्रामाण्यस्य साम्वृतत्वमुक्तमस्तु तत् तथा तेन किं प्रकृते आयाति, येषां मते व्यावहारिकी पारमार्थिकी च द्विविधाऽपि सत्ता स्वीक्रियते तेषामपि परमार्थदशायां प्रमाणप्रमेयव्यवहार एव नास्ति, अर्थात् पारमार्थिकं प्रामाण्यं किमपि नास्ति, अतो नानेन किञ्चित् प्रकृतं सिध्यति ।

( ५ ) पञ्चदशपृष्ठे तु नैयायिकमतमिव ज्ञप्तौ परतः प्रामाण्यमुपपादितम्, न्याय-दर्शनसरण्यैव अनवस्थापरिहारः कृत इति न्यायदर्शनान्न नूतना सरणिरन्विष्टा । तेनापि न अप्रामाण्यस्य स्वतस्त्वं विरुध्यते ।

( ६ ) चतुर्थपृष्ठस्य तावदुत्पत्तौ प्रामाण्यस्य स्वतस्त्वव्यवस्थापनं पश्यन्तु प्रामा-ण्यस्य परतस्त्ववादिनो नैयायिकस्यापि मते तत्रोक्ता व्यवस्था कथन्नोपपद्यते ? तेषामपि

मते ज्ञानानां मेयबोधिका शक्तिर्ज्ञानकारणादेवोपजायते। तेषां मते प्रामाण्यप्रयोजका गुणा अपि प्रमाज्ञानसामग्र्यन्तर्भूता ज्ञानकारणानि एव। तथा च परतस्त्वपक्षस्यापि समानमिदम्। एवम् अप्रमाज्ञानस्यापि विषयप्रकाशिका शक्तिरप्रमाज्ञानकारणेभ्य एव उपजायते, अप्रामाण्यप्रयोजका दोषा अपि अप्रमाज्ञानसामग्र्यन्तर्भूता अप्रमाज्ञानकारणान्येव, तथा च अप्रामाण्यस्य परतस्त्वस्य च साधारणमुपपादनम् इदं कथं अप्रामाण्यस्य स्वतस्त्वं विरुणद्धि ? ज्ञानत्वेन ज्ञानकारणं ज्ञानसामान्यसामग्रीप्रयोज्यं ज्ञानत्वमिव प्रामाण्यमिति तु न लिखितं न च तत्र बौधाचार्याणां वचनमुपन्यस्तम्, का च ज्ञानसामान्यसामग्री किं ज्ञानत्वप्रयोजकं कथन्तत्र प्रमात्वप्रयोजकत्वमपि इत्यादि प्रकृतसाधकं किमपि नोक्तम्। अतो नेदृशेन लेखेन प्रामाण्यवादस्य वादः।

यत्तु संस्कृतपत्रे प्रतिपादितं तत्तु विशेषतोऽनर्थकरं प्रतिभाति। यदि तेन सन्दर्भेण बौद्धमते ज्ञानस्य स्वाभाविकी विषयप्रकाशनशक्तिर्हन्त हता वराकी दार्शनिकता, सुषुप्तिमुक्तिप्रभृतिषु निर्विशेषं निर्विषयकञ्च चित्सन्तानमङ्गीकुर्वतो विज्ञानेषु विषयाकारताप्रयोजकम् आलम्बनप्रत्ययं च ब्रुवतो बौद्धदर्शनस्य विज्ञाने कथं स्वाभाविकं सविषयकत्वं साकारत्वं वा ? विज्ञानता समनन्तरप्रत्ययप्रयोज्या नीलाद्याकारता आलम्बनप्रत्ययप्रयोज्येति स्फुटप्रक्रियाया विद्यमानत्वात् कथं ज्ञानत्वं साकारताघटितञ्च प्रमात्वं समानप्रयोजकप्रयोज्यम् ? ग्रन्थेषूपलभ्यत अत एव प्रमाणत्वेनोद्धृतमिति चेत् नोपलभ्यते, पूर्वोक्तं सिद्धान्तं मनसि संस्थाप्य अध्ययने न कुत्रापि एवं सिद्धान्तविरुद्धं लप्स्यन्ते।

विषयग्रहणमित्यादेरयमर्थः—यो हि विज्ञानस्य जनको विद्यमानो विषय आलम्बनप्रत्ययभूतस्तस्य ग्रहणं करोति विज्ञानम् इति, तथा च आलम्बनप्रत्ययप्रयुक्ता विषयाकारतेति उच्यते, परतस्त्ववादिन्यायनयेऽपि जनकस्य विषयस्य ग्रहणं करोति प्रत्यक्षं विज्ञानमिति कोऽस्य विशेषः परतस्त्वात् ?

एषा प्रकृतिरित्यादिरपि न्यायमतमिवास्ति, विद्यमानविषयस्य ग्रहणं प्रकृतिः, क्वचिद्दोषवशाद् विपर्ययः। दोषादिप्रतिबन्धकविरहितं वस्तु प्रत्यक्षविज्ञानस्य जनकमिति भावः, कार्यकारणभावमन्तरा कोहि स्वभावशब्दार्थः स्यात् ?। अयमेव भावो भामतीसमुद्धृतनिरुपद्रवभूतार्थेत्यादिधर्मकीर्तिवचनस्य। विद्यमानग्रहणप्रतिबन्धके दोषे सति अविद्यमानाकारताप्रयोजकं किं ? तच्च विद्यमानवस्तुग्रहणस्थले वर्तते न वा ? इत्येवान्वेषणीयमास्ते। विषयाकारताप्रयोजके समाने संगृहीते बुद्धिस्थत्वे सिद्धमप्रामाण्यस्य स्वतस्त्वम्।

प्रभास्वरमिदमित्यादितत्त्वसंग्रहः, तादृशञ्च प्रमाणवार्तिकम्, तस्य मनोरथनन्दिव्याख्यानञ्च शुद्धं स्वभावतः प्रकाशभूतं विज्ञानम्, विषयवासनापरिबृंहितं साकारताऽशुद्धिप्रयोजकं मनोदोषञ्च वर्णयति, न च तेनात्र कश्चिद्विशेषः।

ज्ञप्तौ परतः प्रामाण्यप्रतिपादकेषु संस्कृतं पत्रसमुद्धृतेषु पद्येषु 'न स्वस्या आधानाय विषादिवत्' तथा 'स्थिते हि तस्य मानत्वे' इत्यंशौ प्रामाण्यस्योत्पत्तौ स्वतस्त्वं प्रकाशयत इति व्याख्याति परं तन्न शोभनम्। आलम्बनप्रत्ययाधृता उत्पत्त्यैव सह वर्तमाना प्रामाण्यशक्तिर्न अर्थक्रियाज्ञानादिभिराधीयते अपि तु ज्ञाप्यत इति स्फुटोऽर्थस्तयोः। तथा च नैतानि वचनानि ज्ञानसामान्यसामग्रीप्रयोज्यं प्रामाण्यं प्रतिपादयन्ति इति स्फुटम्।

परतः प्रामाण्यस्योत्पत्तौ व्यञ्जकानि बहूनि बौद्धाचार्यवचनानि उपलभ्यन्ते, तानि लेखविस्तरभिया नोद्ध्रियन्ते, किन्तु सर्वापेक्षया स्फुटतरं प्रामाण्यस्योत्पत्तौ परतस्त्वप्रतिपादकं धर्मोत्तरप्रदीपवचनमुद्धरामि, साक्षाद्दिदृक्षुभिः पुस्तकस्य एकोनविंशपृष्ठे उपलभ्येत—अतएव प्रापणशक्तिरेव ज्ञानस्य प्रामाण्यम्, साच प्राप्त्यादर्थादात्मलाभनिमित्तेति, यतो येन प्रवर्तते तदपि प्रापणयोग्यमेव, शक्तिनिश्चयस्तु अर्थक्रियानिर्भासस्य सर्वस्य अनुमानस्य च स्वत एव, प्रवर्तकाध्यक्षस्य च कस्यचित् स्वत एव, यदभ्यासेन परितो निरस्तविभ्रमाशङ्कं यन्निद्राद्यनुपप्लुतं सद् आसन्नदेशम् अनाशङ्क्यव्यञ्जकाधीनान्यथाऽभिव्यक्तिवस्तु च गृह्णाति, तद्रूपसंवेदनादेव सत्यार्थं निश्चीयते, कस्यचित्तु परतोऽर्थक्रियानिर्भासात्मकात् स्वतः प्रमाणादन्यतो वा यतः कुतश्चित् नान्तरीयकार्थदर्शनाद् मध्यकालवर्तिभ्रान्तिशङ्कापनोदेन निश्चीयत इति। अस्य संदर्भः—न्यायबिन्दोः प्रथमसूत्रे धर्मोत्तराचार्यस्येत्थं वृत्ति—अविसंवादकं ज्ञानं सम्यग्ज्ञानम्, लोके च पूर्वमुपदर्शितमर्थं प्रापयत् संवादक उच्यते तद्वज्ज्ञानमपि स्वयं प्रदर्शितमर्थं प्रापयत् सम्वादकमुच्यते, प्रदर्शिते च अर्थे प्रवर्तकत्वमेव प्रापकत्वम्—नान्यत्। तस्यैव पूर्वोद्धृतं व्याख्यानम्। एवञ्च प्राप्यादर्थादालम्बनप्रत्ययाद् आत्मलाभ उत्पत्तिः प्रमाज्ञानस्य तस्मात् प्रामाण्यमिति तदर्थः। ज्ञानसामान्यकारणभिन्नप्राप्तियोग्यार्थविशेषकारणप्रयोज्यं प्रमायां परतः प्रामाण्यमिति उत्पत्तौ अप्रामाण्यस्य स्वतस्त्वं प्रामाण्यस्य च परतस्त्वमुपसंहृतं वेदितव्यम्।

## अथ ज्ञप्तिपक्षः

सारल्याय संक्षेपाय च विशेषणान्तररहितं केवलं ज्ञानग्राहकसामान्यसामग्रीग्राह्यत्वं स्वतस्त्वं निर्वच्मि, आपणे मुखोपाध्यायमहोदयानां लेखे च केवलं प्रामाण्यस्यैव स्वतः परतो वा ग्रहः प्रपञ्चितः, अप्रामाण्यस्य स्वतः परतो वा ग्रह इति निर्णयोपयोगि किमपि वचनमपि न समुद्धृतम्। मया प्रदर्शिते धर्मोत्तरप्रदीपेऽपि अप्रामाण्यग्रहस्य चर्चा नास्ति। एवं प्रतिभाति यावत्प्रामाण्यग्रहसामग्री न समुदेति तावज्ज्ञानग्रहे अप्रामाण्यग्रह एव भवति, सच ग्रहः संशयो निश्चयो वा यथासामग्रि जायताम्। सर्वदर्शनसंग्रहकारिकायाम् अप्रामाण्यस्य स्वतस्त्वं सामान्यत उपक्षिप्तं तदेव ज्ञप्तिपक्षेऽपि बौद्धसिद्धान्तसम्मतं प्रत्येमि। यद्यपि मीमांसकमतदूषणप्रसङ्गस्तथापि स्वसिद्धान्तविरुद्धं परमते आपादयतीति कल्पनायां प्रमाणाभावात् ( अप्रामाण्यव्यवच्छेदः स्वत एवैवमिष्यतामित्यादि २८४३ तत्त्वसंग्रहकारिका ) अप्रामाण्यस्य स्वतो ग्राह्यत्वे प्रमाणत्वेन ग्रहीतुं शक्यते।

# अथ प्रामाण्यस्य परतो ग्राह्यत्वम्

प्रामाण्यस्य परतो ग्राह्यत्वे बहूनि स्फुटानि तत्त्वसंग्रहकारिकावचनानि सन्ति प्रागुद्धृतानि एव दिक्प्रदर्शनाय पर्याप्तानि अतो न विस्तारयामि। केवलं विवाद एकान्तत्वानेकान्तत्वयोः, सर्वदर्शनकारिकायां परतः प्रामाण्यमेकान्तत उक्तम्। बौद्धाचार्य-वचःसु पूर्वनिर्दिष्टेषु कुत्रचित् स्वतः प्रमाणमित्यपि निर्दिष्टमित्यनेकान्तत्वमायाति। अस्तु तावत् तत्, परं न्यायवार्तिकतात्पर्यटीकायां वाचस्पतिवचःस्वपि एतादृशोऽनेकान्ताभास आयाति। तथाहि—

( १३ ) पृष्ठे ज्ञानगततज्जातीयत्वलिङ्गग्राहिणश्च ज्ञानस्य मानसप्रत्यक्षस्या-दृष्टव्यभिचारतया परितो निरस्तविभ्रमाशङ्कस्य स्वतः प्रामाण्यमिति नानवस्था।

( १२ ) पृष्ठे अनुमानस्य तु.........स्वत एव प्रामाण्यमनुमेयाव्यभिचारि लिङ्गसमुत्थत्वात्।

अत्रेदमपि अवधेयम्—तत्त्वसंग्रहकारिकायां यदनेकान्तत्वमुक्तम्, तदपि वाचस्पति-मिश्रसम्मतमिति भाषणे प्रतिपादितं तत्तु सर्वथाऽसत्यम्। तात्पर्यटीकायाम् अनुमाने आभ्यासिकज्ञाने अर्थक्रियानिर्भासात्मके फलज्ञाने च परतः प्रामाण्यमुपपादितमस्ति। इदं प्रथमं वचनमाभ्यासिकज्ञाने अनुमानेन प्रामाण्यग्रहप्रतिपादकम्, अन्यानि अपि प्रदर्शयामि।

१८ पृष्ठे बौद्धमतेन अनुमानविषये—पारम्पर्येण च वाह्यप्रतिबन्धाद् बाह्यं प्रापयत् संवादकं सद् भ्रान्तमपि प्रमाश्राशयवशात्प्रमाणम्।

( १३ ) पृष्ठे—प्रवृत्तिसामर्थ्यसम्भवात् प्रवृत्तिसामर्थ्यज्ञानस्य चाभ्यासदशा-पन्नस्य तज्जातीयत्वेन प्रामाण्यानुमानात्।

( १२ ) पृष्ठे—वयन्तु ब्रूमः फलज्ञानमपि अभ्यासदशापन्नतया तज्जातीयत्वेन लिङ्गेनावधारिताव्यभिचारमेव।

( ११ ) पृष्ठे—तदमी संदिहाना अपि प्रवर्तमानाः प्रवृत्तिसामर्थ्यात् प्रामाण्यं विनिश्चित्य तज्जातीयस्यान्यस्याभ्यासदशापन्नस्य ... प्रामाण्यावधारणादर्थविनिश्चयेन प्रवर्तन्ते।

तथा चेत्थं प्रश्ना उत्थातव्याः, तेषां समाधानानि अन्वेषणीयानि। तेषाञ्च योजना बौद्धदार्शनिकप्रक्रियायां विधेया। तत एकान्तवादोऽनेकान्तवादो वा निस्सरतीति परीक्षणीयम्।

( १ ) एवं वाचस्पतिवचःसु स्वतः प्रमाणमित्यादिशब्दान् न्यायनयेऽपि अने-कान्तवादः प्रसरति न वा? आद्ये अनेकान्ततया केनचित् प्राक्तनेन न्यायप्रामाण्यवादो व्याख्यातो न वा? अव्याख्याने अद्य केनचिदनेकान्ततया वाचस्पतिवचोविवरणं कथमा-

शुद्धम् अभिप्रायानवबोधविलसितञ्च मन्तव्यम्, अनेकान्ततया व्याख्यातश्चेदन्वेषणीय-मुद्धरणीयञ्च। एकान्तवाद एव न्यायनये इति चेद् वाचस्पतिवचसः का गतिः, न चैकदेशितयापि न्याये वाचस्पतेरनेकान्तवादः क्वचिद् गृहीतः।

(२) स्वतः प्रमाणमिति वदताऽपि वाचस्पतिना सर्वत्रैव हेतुप्रयोगः कृतस्तस्य किं प्रयोजनम्? न च स्वतः उत्पादे ग्रहणे वा विशेषहेतुप्रदर्शनस्य आवश्यकता आयाति। ज्ञानसामान्यसामग्रीतो ज्ञानग्रहसामान्यसामग्रीत एव स्वतस्त्वस्य उपपत्तेः, प्रदर्शिताश्च हेतवो न तादृशसामान्यसामग्र्यन्तर्भावं भजन्ते।

(३) यत्र स्वतः प्रमाणमिति प्रयुक्तं तत्र ज्ञानग्राहकसामान्यसामग्रीग्राह्यत्वं समन्वेति न वा? न समन्वेति चेत् कीदृशं स्वतो ग्राह्यत्वम् अभिप्रेतम्?

(४) बौद्धनये स्वतो ग्रहणं ज्ञानग्रहसामान्यसामग्रीजन्यं न वा?, नास्ति चेत् स्वतो ग्रहणं तादृशं तदा कीदृशं तत्? किं प्रमाणकञ्च? अस्ति चेत् परतो ग्राह्यस्थले ज्ञानग्रहसामान्यसामग्री विशेषसामग्री उभयं वा विद्यते? प्रथमे स्वतो ग्राह्यत्वापत्तेः। द्वितीये सामान्यसामग्रीं विना ज्ञानमेव नोदियात्, ज्ञानत्वं विनाऽपि प्रमात्वं स्यात्। तृतीये उभयसामग्रीप्रयोज्यत्वे स्वतस्त्वपरतस्त्वयोः समुच्चयः सामान्यविशेषभावो वा भवेत् यत्र विभज्य व्यक्तिभेदेन व्यवस्थाया आशा? क्वापि प्रामाण्यस्य विशेषसामग्रीग्राह्यत्वे न सामान्यसामग्रीग्राह्यं प्रामाण्यमिति परतस्त्वाक्रान्तं न स्वतस्त्वं स्पृशतीति नानेकान्त-त्वस्य आशा।

तस्मादापातरमणीयमिदमनेकान्तत्वव्यवस्थापनम्। ग्रन्थाभिप्रायानवबोधविलसितं यस्य कस्यापि भवतु। तस्माद् वाचस्पतिना बौद्धाचार्यैश्च न स्वतः प्रामाण्यमङ्गीकृतम्, सर्वदर्शनसंग्रहकारस्य उभयोर्मतयोःपरतः प्रामाण्यप्रतिपादनं सर्वथा निराबाधम्। किन्तु परतः प्रामाण्यग्रहाङ्गीकारे अनवस्था आपततीति तद्वारणाय स्वतः प्रमाणमिति वचनम्। तज्ज्ञानस्य ग्रहे न सर्वत्र प्रामाण्यसंशयः किन्तु तज्ज्ञानस्य ग्रह एव तद्गतप्रामाण्यविषय-कनिश्चयोऽपि, अतो निश्चयान्तरस्य प्रामाण्यविषयकस्य अपेक्षा न भवतीति नानवस्था। अर्थाज्ज्ञानग्रह एव तत्र प्रामाण्यनिश्चायकः। परं तत्रापि ज्ञानग्रहसामग्री न सामान्यभूता विशेषकारणघटिता सती विशेषभूतेति परतस्त्वस्य सिद्धान्तस्थापनार्थं तत्र तत्र विशेष-कारणानामुपपादनम्। न संशयस्थल एव परतः प्रामाण्यग्रहणम्, किन्तु संशयो भवतु न वा प्रामाण्यनिश्चयसामग्री ज्ञानग्रहसामान्यसामग्री न भवति एतावतैव परतो ग्रहणं जातम्। तत्र वाचस्पतिवचःसु स्फुटमुल्लिखिता हेतवो न सामान्यकारणानि, त एव च तज्ज्ञानं प्रति गुणभूताः। वाचस्पतिवचने बौद्धमतप्रतिपादनपरे अनुमानविषये 'संवादकं' 'सत्' 'भ्रान्तमपि' 'प्रमात्राशयवशात्' इत्युक्तिः सम्यगवधेया, न तादृशं बौद्धग्रन्थे मया दृष्टम्, युक्तञ्च तत्। अनुमानस्य प्रामाण्यं परतो व्यवस्थापयति, तद्वशाद् बौद्धग्रन्थेषु

समायातम् 'अनुमानं स्वतः प्रमाणमिति' वचनम् प्रामाण्यानुमितिपरं समन्वेयम्। अन्यच्च धर्मोत्तरप्रदीपस्य पूर्वोद्धृतम् 'यन्निद्राद्यनुपप्लुतम्' इत्यादिवचनं न्यायमतमिव बौद्धमतेऽपि प्रामाण्यस्य गुणजन्यत्वं व्याख्यातुं स्वराज्यं ददाति।

सौविध्याभावात् नाद्यापि मम बौद्धन्यायग्रन्थस्य तोपकारि परिशीलनम्, तथापि एतद्विषये इदमित्थमेवेति वक्तुं यत् प्राभवं तत्र महाविदुष एतादृशलेखस्यापि बलमिति कृतज्ञो विस्तरभिया विरमामि।

गुरोः पदाब्जामलरेणुशोधं विचारमालामयमञ्जुबोधम्।
विद्वन्मनोभिः सदयैररोषैः परीक्ष्यमिक्षोरससन्निभं मे॥



पञ्जाब होशियारपुरविश्वेश्वरानन्दशोधसंस्थानस्थविश्वसंस्कृतं पत्रे फरवरी १९६७ ईशाब्दे प्रकाशितः

# न्यायस्य प्रामाण्यवादः

वादस्य शास्त्रे निहितस्य प्राचः संदर्शनायोत्कटनेत्रकाचाः।
नाराचतां शत्रुभिये दधाना नित्यं जयन्ति श्रुततर्कवाचः॥ १॥

## सिद्धान्तः

उत्पत्तौ ज्ञप्तौ च स्वतस्त्वपरतस्त्वे निरुच्येते, दोषाद् भ्रमो गुणाच् च प्रमेति सर्वत्रोत्पत्तौ परतस्त्वम्, सामान्यज्ञानसामग्र्यां यदा दोषः प्रविशति तदा भ्रमः, यदा च गुणस्य प्रवेशस् तदा प्रमा, एवं भ्रमत्वप्रयोजको दोषः, प्रमात्वप्रयोजकश्च गुण इति भावः।

इत्थम् अत्राऽवधेयम्—दण्डचक्रकुलालाऽऽदिघटितसामग्र्या यत्र घटः कार्यं तत्र घटे नैकविधा कार्यता। घटत्वेन पृथिवीत्वेन द्रव्यत्वेन चाऽवच्छिन्ना, घटवृत्तिर्घटत्व-पृथिवीत्व द्रव्यत्वादीनां च प्रयोजिका नाना सामग्र्यश्च च तत्र, विशेषम् अन्तरा सामान्यं कार्यं दर्शयितुं न शक्यते, तथा विशेषसामग्रीतः पृथक् सामान्यसामग्र्याऽपि, एवम् एव ज्ञानेषु ज्ञानत्वं सामान्यं भ्रमत्वप्रमात्वे च विशेषौ, तत्र ज्ञानत्वप्रयोजिका सामान्य-

सामग्री यत्र ज्ञानमात्रं प्रति कारणानि सन्निविष्टानि, दोषगुणान्यतरघटिता च सैव ज्ञान-सामग्री विशेषसामग्री भवति, भ्रमत्वं प्रमात्वं वा प्रयोजयति, यथा यदैव घटस्तदैव पृथिवी द्रव्यं च, तथा समुत्पद्यमानम् एव ज्ञानं भ्रमः प्रमा वा जायते, न तु ज्ञानत्वेन समुत्पद्य-दोषेण गुणेन वा सह युक्त्वा भ्रमत्वं प्रमात्वं वाऽर्जयति ।

इत्थं च भ्रमत्वं दोषघटितसामान्यज्ञानसामग्रीतः, प्रमात्वं च गुणघटितज्ञान-सामग्रीतः समुत्पद्यते न तु ज्ञानसामान्यसामग्रीत एव, अन्यथा ज्ञानमात्रं भ्रमः प्रमा च स्याद् इति सर्वत्रैकान्तेनोत्पत्तौ परतस्त्ववादः ।

ग्रन्थेषु भ्रमत्वम् अप्रामाण्यम् इत्युच्यते, प्रमात्वं च प्रामाण्यपदेन कथ्यते ।

## ज्ञप्तौ परतस्त्ववादः

पूर्ववर्णितसामग्रीभ्यां जायमानं जानामीत्यादिप्रकारेणाऽनुभूयमानं व्यवसीय-मानं ज्ञायमानं वा ज्ञानं भ्रमः प्रमा वेति न ज्ञायते, ज्ञाने ज्ञातेऽपि तद्गतं भ्रमत्वं प्रमात्वं वा न ज्ञायते । ज्ञानविषयकं ज्ञानं नियमेन प्रामाण्यविषयकं न भवति, तज्ज्ञाननिष्ठं प्रामाण्याप्रामाण्याऽन्यतरविषयकत्वं तज्ज्ञानविषयकज्ञानत्वं व्यभिचरति वा, किन्तु स्व-सामग्रीत एव ज्ञानं विषयप्रकाशकं निश्चयस्वरूपं च सद् व्यवहारं प्रवर्तयच्च ज्ञानान्तरेण विसंवादं प्रवृत्तौ विघातम् असफलताम् असमर्थतां वा लभते तदाऽनुमीयते ज्ञानम् इदं भ्रम इति भ्रमत्वेन । अर्थात् ज्ञानत्वेन ज्ञानग्राहिका सामग्र्य् एव न भ्रमत्वज्ञानं जनयति अन्यथा ज्ञातं ज्ञानं भ्रमत्वेनाऽपि ज्ञायेत, किन्तु पूर्वोक्तविसंवादाऽऽदिकारणघटिता यदा ज्ञानग्राहकसामग्री भवति तदैव भ्रमत्वज्ञानम् अर्जयति, तथा च तज्ज्ञाननिष्ठं भ्रमत्वं तज्ज्ञानप्रामाण्यस्याऽग्राहिका तज्ज्ञानस्य ग्राहिका या सामग्री तया ग्राह्यम् एव न भवतीत्य प्रामाण्यस्य परतो ग्राह्यत्वम् ।

एवम् एव ज्ञाने ज्ञाते तद् गतं प्रमात्वम् अपि न ज्ञायत एव, किन्तु स्वयम् एवा-ऽर्थनिश्चयरूपं ज्ञानं व्यवहारं प्रवर्तयत् सत् संवादेन सफलप्रवृत्तिजनकत्वज्ञानाऽऽदिना वा प्रमात्वेनाऽनुमीयते । तज्ज्ञानाऽप्रामाण्यस्याऽग्राहिका तज्ज्ञानग्राहिका या सामग्री तया तज्ज्ञानप्रामाण्यं गृह्यत एवेति न नियमः, तज्ज्ञानस्य प्रामाण्यं तद् अप्रामाण्याऽग्राहक यावत् तज्ज्ञानग्राहकसामग्री ग्राह्यत्वाऽभावो, ज्ञप्तौ प्रामाण्यस्य परतस्त्ववादः परतो ग्राह्यत्ववादो वा ।

ज्ञानं जायमानं स्वप्रामाण्यनिश्चयं विना विषयनिश्चयतां न बिभर्तीति कथं प्रवर्तयेत् ? प्रवृत्तिम् अन्तरा च कथं समर्थप्रवृत्तिजनकत्वज्ञानम् इत्यन्योऽन्याश्रयः । ज्ञानस्य स्वतो विषयनिश्चयरूपत्वे प्रामाण्यज्ञानस्य प्रवृत्तिमात्रेऽनुपयोगे चाऽन्योन्याऽऽ-श्रयपरिहारेऽपि प्रस्तुतज्ञानस्य प्रामाण्यज्ञानं संवादज्ञानेन समर्थप्रवृत्तिजनकत्वज्ञानेन

वा तस्याऽपि संवादज्ञानस्य समर्थप्रवृत्तिजनकत्वज्ञानस्य च प्रामाण्यज्ञानं परेण ज्ञानेन तस्याऽपि परेणेत्यनवस्था। किञ्च प्रकृतज्ञानस्य प्रामाण्यग्राहकं ज्ञानम् अनिश्चित-प्रामाण्यकम् एव यदि ज्ञानाऽन्तरस्य प्रामाण्यग्राहकं तदा प्रकृतं ज्ञानम् अनिश्चितप्रामाण्यकम् एव सर्वं विदध्याद्, मुधैव प्रामाण्यग्रहस्य दुराग्रहः। यदि निश्चितप्रामाण्यकम् एव ज्ञानाऽन्तरस्य प्रामाण्यं ग्राहयति तदा स्वप्रामाण्यग्राहकस्य प्रामाण्यं विना न ग्राहयेत्, एवं परम् अपि ततः परस्य प्रामाण्यनिश्चयं विनेति कस्याऽपि प्रामाण्यनिश्चयो न स्याद् इति मूलक्षयकरीयम् अनवस्था।

स्वसामग्रीत एव ज्ञानं स्वविषयनिश्चयस्वरूपं प्रवर्तकत्वे स्वविषयनिश्चयत्वे च स्वप्रामाण्यज्ञानं नाऽपेक्षते, कृष्याऽऽदौ फलसन्देहाद् अभ्युपायतानिश्चयमात्रात् प्रवृत्तिः, अन्यत्राऽपि निश्चयस्यैव प्रवृत्तिहेतुत्वं, न तु निश्चितप्रामाण्यकस्य निश्चयस्य। निश्चय-विषयकम् अप्रामाण्यज्ञानं तु प्रवृत्तिप्रतिबन्धकम्, अतोऽप्रामाण्यज्ञानाऽभावे प्रामाण्य-निश्चयं विनैव ज्ञानं प्रवर्तकम् इति नाऽन्योन्याश्रयादिः। प्रकृतज्ञानस्य प्रामाण्यग्राहकम् अपि संवादादिज्ञानम् अगृहीतप्रामाण्यकम् एव प्रकृतज्ञानस्य प्रामाण्यं ग्राहयति, सर्वत्रैव प्रामाण्यग्रहस्य दुराग्रहो मुधैवेति स्वीक्रियते, क्वचिच्च प्रामाण्यग्रहस्य समुपयोगोऽभिप्रेयते।

## प्रामाण्य—निश्चयस्य समुपयोगः

अनभ्यस्ते नूतने विषये बहुवित्तायाससाध्ये वा यज्ञादिकर्मणि कुतश्चित् प्रामाणात् कर्तव्यज्ञाने जाते इदं ज्ञानं प्रमा न वा इति अप्रामाण्यसंशयो जायते, अप्रामाण्य-संशयश्च विषयनिश्चयताविघटकस्य विषयसंशयस्य जनकः, विषयनिश्चयाऽभावाच्च न प्रवृत्तिः, अथवाऽप्रामाण्यज्ञानं प्रवृत्तिप्रतिबन्धकम् इति प्रवृत्तिरोधो जायते, तदर्थं प्रामाण्यपरीक्षा प्रवर्त्यते, संवादज्ञानं तादृशात् कर्मणः पुरुषाऽन्तरस्य फलाऽवाप्तिज्ञाना-दिकं चाऽन्विष्यते, ततश्च प्रामाण्यनिश्चयेनाऽप्रामाण्यसंशयं विधूय निष्कम्पं प्रवर्तते। तत्राऽप्यप्रामाण्यसंशयनिवर्तकं प्रामाण्यनिश्चायकं च ज्ञानम् अनिश्चितप्रामाण्यकम् एव प्रकृतस्य प्रामाण्यनिश्चायकम्, यदि तत्राऽप्यप्रामाण्यसंशयो न जायेत, अप्रामाण्य-संशये च जाते पुनरपि ज्ञानाऽन्तरेण तस्य प्रामाण्यनिश्चयः, अप्रामाण्यसंशयश्च न स्वयम्भूः सर्वत्र सुलभः, किन्तु धर्मिज्ञानं कोटिद्वयोपस्थितिविशेषाऽदर्शनं साधारण-धर्माऽऽदिदर्शनं कारणकलापम् अपेक्षते। स च कदाचिद् एव संभवति, प्रकृतज्ञान-धारया विषयाऽन्तरसंचारेणोत्कटप्रतिघातेन निद्राऽऽदिना च निरोधाद् धर्मिज्ञानाऽभावाद् एवाऽप्रामाण्यसंशयो नाऽऽत्मानं लभते किमुत कारणाऽन्तरवैकल्येन।

तथा च प्रामाण्याऽप्रामाण्ययोरुत्पत्तौ ज्ञप्तौ च सर्वत्र परतस्त्वम्, परं प्रामाण्यग्रहस्य सर्वत्र नोपयोगः, न वा सर्वं प्रामाण्यं गृह्यत एवेति नाऽनवस्था इति सिद्धान्तनिष्कर्षः।

# सिद्धान्त—विरुद्धस्य च प्रचारः

१९६१ ख्रिष्टाब्दस्य मार्च-मासे वाराणसेय-संस्कृत-विश्वविद्यालयेऽधिविशमानाया बौद्ध-दर्शन-परिषदोऽध्यक्षाणानां नवनालन्दा-विहाराध्यक्षाणां महापण्डित-श्रीसातकड़ी मुखोपाध्यायानां मुद्रितं भाषणं निम्ननिर्दिष्ट-दिशाऽभिप्रैति—काशीस्थ-चौखम्भासंस्थया द्वानवत्युत्तरैकोनविंशति १९९२ वैक्रमाब्दे प्रकाशिताया न्यायवार्तिक-तात्पर्यटीकायाः १२-१३ पृष्ठयोरनुमानम् आभ्यासिक-प्रत्यक्ष-ज्ञानं च स्वतः प्रमाणम् इतरत् परतः प्रमाणम्। उदयनाचार्यस्य न्यायकुसुमाञ्जलि द्वितीय-स्तवक-प्रथम-श्लोके तत्वचिन्तामणौ गङ्गेशोपाध्यायस्य च 'प्रामाण्यमप्रामाण्यञ्च उत्पत्तौ ज्ञप्तौ च परत एव' इति समानं मतम्। न्याय-प्रस्थाने च वाचस्पतेर्मतं न केनाऽपि नैयायिकेनाऽङ्गीकृतं दृश्यते।

इदं च मुखोपाध्यायानां व्याख्यानं सौगत-सिद्ध-प्रामाण्यादिव्यवस्थापन-मुखेन 'संस्कृतम्' इत्याख्ये पत्रे 'संस्कृत-सञ्जीवन' पत्रे 'हिन्दी-राष्ट्रभाषापरिषत्' पत्रे च द्वित्रि-वर्षेभ्यः प्राक् किञ्चिन् मयाऽऽलोचितम् अस्ति, न्यायसिद्धान्त-व्यवस्थापने चेमं मुख्यतया प्रसङ्गं तनुते।

गते १९६५ ख्रिष्टाब्द एव काशीस्थ-'सूर्योदय'-नामनि संस्कृत-पत्रे क्रमशः पञ्चषाङ्केषु महामहिम—श्रीकरपात्रि-महाभागानां लेखः प्रकाशितः। तत्राऽप्यनुमानम् आभ्यासिक-प्रत्यक्षादि-फल ज्ञानं च स्वतः-प्रमाणम् इति सिद्धवन्नैयायिकमतम् उप-वर्णितम् आस्ते। एवम् एव श्रीवाचस्पतिमिश्राऽभिजन-सत्सङ्ग-मण्डलेन वाचस्पत्यङ्कनामा श्रीवाचस्पतिमिश्रस्य स्मारकत्वे एको ग्रन्थ-मणिः प्रकाशितः। तत्राऽपि स्वामिमहाभागानां प्राक्-सूचित-लेखस्य प्रायो विषय-समानतां बिभ्रत् लेखोऽपि मया कदाचिद् अवलोकितः, तत्राऽप्य् एवम् एव न्याय-मतं समुपवर्णितम् आस्ते। तादृश-प्रचारस्य मूलं कतिचिद् वाचस्पतेर्वचांस्येव आकलयम्। तानि चेत्थम्—'तदमी संदिहाना अपि प्रवर्तमानाः प्रवृत्तिसामर्थ्यात् प्रमाणस्य तत्त्वं विनिश्चित्य तज्जातीयस्याऽन्यस्याऽभ्यास-दशापन्नस्य प्रवृत्ति-सामर्थ्यात् प्रागेव तज्जातीयत्वेन लिङ्गेन प्रामाण्यावधारणाद् अर्थविनिश्चयेन प्रवर्तन्ते, एवञ्च दृष्टार्थमन्त्रायुर्वेदप्रामाण्यं प्रवृत्तिसामर्थ्येनोपधार्य तज्जातीयस्याऽदृष्टार्थस्य वेदस्य विनाऽपि प्रवृत्तिसामर्थ्यं प्रामाण्यावधारणमाप्तोक्तत्वेन निवेदयिष्यते' इति।

अत्र प्रमाणस्य तत्त्वं प्रामाण्यम्। अत्र संदेहाद् अपि प्रवृत्तिः, प्रवर्तनाऽनन्तरं प्रवृत्ति-सामर्थ्येन प्रामाण्याऽवधारणम् उक्तम्, प्रामाण्याऽवधारणं विना प्रवृत्तिर्नाऽव-रुध्यत इति सूचितं च। अनभ्यास-दशापन्न-ज्ञान-प्रामाण्याऽपेक्षयाऽभ्यास-दशापन्न-ज्ञान-प्रामाण्ये प्रवृत्ति-सामर्थ्यात् प्रागेवाऽवधारणम्, अवधारणं च प्रवृत्ति-समर्थ-ज्ञान-जातीयत्व-लिङ्गकानुमितिः, इँचित्र्यं प्रदर्शितम्। उभयोः प्रामाण्याऽवधारणे समय-भेदो लिङ्गभेदश्च दर्शितौ, परतो ग्राह्यत्वं च प्रामाण्ययोः समानम् उपवर्णितम्, अतोऽभ्यास दशापन्न-ज्ञान-

प्रामाण्यस्य स्वतोग्राह्यत्व-वर्णनं न्याय-सिद्धान्त-विरुद्धम् । सर्वत्रैव प्रामाण्ये परतो ग्राह्यत्व-सिद्धान्तः । तदनुपदम् एव द्वादशे पृष्ठे पुनः—'न च फल-ज्ञानं परीक्ष्यते प्रेक्षावद्भिः; तस्य यादृश-तादृशस्यापीष्टत्वाद् इष्ट-लक्षणत्वात् फलस्य, तत्साधनत्वं ते परीक्षन्ते....' इत्यादि विलिखितम् अस्ति । तत्र प्रथम-मते फल-ज्ञानं न परीक्ष्यते इत्यनेन फल-ज्ञाने अप्रामाण्य-शङ्का नोदेतीति सूचितम्, अन्यथा संशयसंभवे कस्यचिद् वचन-मात्रेण परीक्षा नावरुध्येत । अप्रामाण्य-शङ्कायाम् तत्-प्रयुक्त-परीक्षाया वाऽनवतारे फलस्येष्टत्वम् इष्ट-लक्षणत्वं च हेतुरुक्तः । तस्य चेत्थं तात्पर्यं प्रतिभाति—इष्टत्वम् इच्छाविषयत्वम्, इच्छायाश्च विषय-सिद्ध्या निवृत्तिर् ध्वंसः, यथा च मनसेच्छाया लौकिकं प्रत्यक्षं तथेच्छा निवृत्तेरपि लौकिक-सन्निकर्षश्च प्रत्यक्षे गुणः, गुण-जन्यत्वाच् चेच्छा-निवृत्तिप्रत्यक्षं प्रमा, मानस-प्रत्यक्षस्य च जीवने भूयः प्रसङ्गेनाऽभ्यस्ततया तत्र प्रामाण्य-संशयो न जायते, उदन्योपशान्तिरपि पानेच्छानिवृत्तिरेव । यदि चोपशान्तिः सुख-विशेषो रोचते तदा सुखस्याऽपि लौकिकं मानसं प्रत्यक्षम् अभ्यस्तं च । मत-द्वयेऽपि फल-ज्ञानस्य प्रामाण्यं स्वयं गृहीतम् इति नोक्तम् । तथा च फलज्ञानं स्वतः प्रमाणम् इति न्यायमते न संभवति । फल-ज्ञाने प्रमात्वं वर्तते परं तद्-ग्रहणं नापेक्षितम् इति प्रथम-मतं मयोप-वर्णित-सिद्धान्तानुसृतम् । अत एव 'एतावतैव प्रमाता.......शान्तिमपि परीक्षते' इति ब्रवीति; शङ्काया अनुदयात् प्रामाण्याऽवधारणस्याऽपेक्षैव नाऽस्ति भावः ।

'वयन्तु'-इत्यादि-द्वितीयमते तु फल-ज्ञानम् अपि परीक्ष्यते तदीयं प्रामाण्यम् अवधार्यते, अवधारणम् अपि परतोऽनुमानेन, अभ्यस्ततया प्राक्तनगृहीत-प्रामाण्यक-सदृश-तयाऽनुभूततया पश्चाद्-भाविनः सजातीयस्य नाऽपेक्षा, किन्तु प्राक्तन-सजातीयतयैव लिङ्गेन । पूर्वपूर्वतरादेरपेक्षायाम् अनवस्थायां तु प्रवाहस्याऽनादित्वैव परिहारो वर्णितः । अवधारिताव्यभिचारम् इति अवधारित-प्रामाण्यम्, ज्ञानस्याऽर्थ-व्यभिचारो भ्रमत्वम् । अव्यभिचारः प्रामाण्यम् ।

अत्रेत्थं चिन्त्यते—प्रवृत्तेः फल-संदेहाद् अपि प्राग्-वर्णिततया प्रामाण्याऽव-धारणस्य किं प्रयोजनम् ? न च बहुवित्त-व्ययायाससाध्ये कर्मणि न सन्देहात् प्रवृत्ति-रपितु अर्थ-निश्चयेन, अर्थनिश्चयश्च प्रामाण्याऽवधारणं विना न संभवतीति तद्-अवधारणं मृग्यत इति वाच्यम्, तथाऽपि सर्वत्र प्रामाण्याऽवधारणस्य व्यर्थत्वात्, तादृशेऽपि कर्मणि प्रथमं प्रवृत्तिरपेक्षतां नाम प्रामाण्याऽवधारणम्, तत्सदृश-द्वितीयादि-प्रवृत्तिस्त्वभ्यास-दशापन्ना तादृशत्वेन चाप्रामाण्य-संशयशून्या किमर्थम् अपेक्षताम् ? संशयान्य-ज्ञानत्वं निश्चयत्वम्, तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं प्रामाण्यम्, नच प्रामाण्यं निश्चयत्व-घटकं न वा निश्चयस्य कारणं येन प्रामाण्याऽवधारणं विना विषय-निश्चयो न सम्पद्येत ।

किं चाऽनवस्थायाम् आपतितायां पूर्वतरसाधर्म्येण पूर्वस्य पूर्वम् एवाऽवधृत-प्रामाणत्वाद् इत्युच्यते; तत्र सांप्रतिक-ज्ञाने पूर्व-ज्ञाने च किं वैलक्षण्यं येन सदृशम् अपि

सत् सांप्रतिकं ग्रहीष्यमाण-प्रामाण्यं प्राक्तनं चाऽवधृतप्रामाण्यम् । सांप्रतिकेऽप्रामाण्य-संशयो विशेषश्चेत् समायातं मार्गेण, यत्राऽप्रामाण्य-संशयस्तत्र प्रामाण्याऽवधारणं पूर्वस्य साधर्म्येणाऽपेक्षितम्, यत्र तु नाऽप्रामाण्य-संशयस्तत्राऽगृहीत-प्रामाण्यम् एव प्रमा-ज्ञानम् अर्थकारि । किं वा स्वद्वितीये तृतीये वा क्षणे सर्वम् एव ज्ञानम् अवधृत-प्रामाण्यकं भवतीति न नियमो येन पूर्वस्य पूर्वम् एवाऽवधृत-प्रामाण्यकत्वम् ? तथा सति महान् भारः परतस्त्ववाद आपतेत्, तथाहि ज्ञाने जाते द्वितीये तृतीये वा क्षणे पूर्वसाधर्म्य-रूपलिङ्ग-ग्रहणम्, ततश्च व्याप्ति-स्मरण-पक्षधर्मता-सम्पत्ति-प्रभृतिभिश्चतुर्थे पञ्चमे वा क्षणेऽवधृत-प्रामाण्यकं स्याद् नाऽस्ति क्षणो ज्ञानस्य अन्यद् विधातुम् । तस्मात् प्रामाण्यस्य परतो ग्रहे अप्रामाण्य-संशयं विना सर्वोऽपि निश्चयः स्व-कार्ये समर्थ इत्येव न्याय-सिद्धान्त आद्रियते ।

आसां पङ्क्तीनां तादृशाऽभिप्राय-वर्णनम् एव श्रेयः, चिरन्तन-भाषाया नव्यन्याय-परिष्कार-बीजम् अस्पृशन्त्या नव्यन्याय-परिसरे परिसर्पन्त्या आधुनिक-दर्शन-भाषया विभेदः स्वाभाविक एव, तद्-व्याख्यान-क्लेशोऽपि फल-मुखतयाऽगण्य एव । अयं भावः—अभ्यास-दशापन्ने ज्ञाने पूर्वप्रमा-सजातीयत्वं विशेषो धर्मः, विशेषाऽदर्शनं संशय-कारणं विशेष-दर्शनं तु संशयस्य विरोधि । अतोऽप्रामाण्य-संशयस्य विषय-निश्चयता-विघटस्याऽप्रसङ्गान् न पुनः प्रामाण्याऽवधारणस्याऽऽवश्यकता । विषयाऽवधारणम् एव प्रामाण्यवत् कार्यकारि तिष्ठति । पूर्व-मताद् अयं विशेषः—पूर्वमते फल-ज्ञाने स्वभावत एवाऽप्रामाण्य-संशयो न जायते इति वर्णितम्, 'वयन्तु'-इत्यादिना सजातीयत्व-विशेष-दर्शनान् नाऽप्रामाण्य-ग्रह-मतस्य सर्वथा विरोधिन्य इमाः पङ्क्तयः । ज्ञान-ग्राहक-सामग्रीमात्र-ग्राह्यत्वं प्रामाण्य-ग्रहे स्वतस्त्वम्, अत्र तु स्फुटं ज्ञान-सामान्य-ग्राहक-सामग्री-बहिर्भूतस्य सजातीयत्वादि-लिङ्गस्य प्रदर्शनम् । अनुमानोपयोगि लिङ्गं व्याप्यं भवति विशेष-दर्शन-घटको विशेषोऽपि व्याप्य इति तस्याऽपि लिङ्ग-पदेनाऽभिधानम् । भ्रमे संशये चाऽर्थस्य ज्ञान-व्यभिचारः, अत्र तु विषयोऽवधृतो निश्चितः, अतो न व्यभिचारो यस्मिन् ज्ञाने तादृशम् । धनी सुखीतिवद् अवधारणाऽव्यभिचारयोः प्रयोज्य-प्रयोजकभावो व्यज्यते । पूर्वम् एवाऽवधृत-प्रमाणत्वाद् इत्यत्राऽप्यवधृतं प्रमाणेऽन्वितं न तु प्रमाणत्व इति बोध्यम् ।

यतश्चाऽधीयानानां स्वतः-प्रामाण्य-ग्रहस्य भ्रमः, स तु 'अनुमानस्य तु प्रवृत्ति-सामर्थ्य-जन्मनोऽन्यस्य वा निरस्त-समस्त-व्यभिचार-शङ्कस्य स्वत एव प्रामाण्यम् अनुमेयाऽव्यभिचारि-लिङ्गसमुत्थत्वात्' इति तत्रैव तात्पर्य-टीकायां प्रदर्शितः ।

अत्र स्फुटम् एव स्वतः-प्रामाण्य-शब्दोपादानम्; किन्तु प्रामाण्याऽनुमाने विनैव प्रामाण्यम् इत्यर्थे स्वतः-प्रामाण्यं इति शब्दो न तु ज्ञान-सामान्य-ग्राहक-सामग्रीमात्र-ग्राह्यम् इत्यर्थे, अन्यथाऽनुमेयाव्यभिचारि-प्रभृति-लिङ्ग-प्रदर्शनस्य वैयर्थ्यात्, न हि निरस्त-समस्त-व्यभिचार-शङ्कत्वस्याऽनुमेया-व्यभिचारि-लिङ्ग-समुत्थत्वस्य च ज्ञानं ज्ञान-सामान्य-ग्राहक-सामग्री-निविष्टम् । किन्त्वनुमितौ तादृश-लिङ्गसमुत्थत्वादिर्गुणः, तादृश-

गुणाच्च तत्र प्रामाण्यम् । तादृशो गुणः प्रमात्वस्य व्याप्यः, व्याप्य-दर्शनं तु विशेष-दर्शनं संशय-विरोधि, अतस्तत्राऽप्रामाण्य-संशयो न जायेत तेन प्रामाण्य-ग्रहो नाऽपेक्ष्यते ।

पङ्क्तेस्त्वित्थं समुत्थानम्—प्रकृतस्याऽनभ्यास-दशापन्नस्य ज्ञानस्य 'इदं ज्ञानं प्रमा, समर्थप्रवृत्ति-जनकत्वाद्' इत्यादि न्यायवाक्य परिगृहीता प्रामाण्यानुमितिः प्रामाण्य-ग्राहिका, तस्याः प्रामाण्याऽनुमितेः प्रामाण्यग्राहकं किम्? एवं तत्प्रामाण्यग्राहकस्य प्रामाण्यग्राहकं किम् इति मूलक्षयकरी अनवस्था । एवम् उत्थितायाः पङ्क्तेः समाधान-रूपाया अयम् अभिप्रायः—यावद् अनुमितावदुष्टहेतुसमुत्थत्वरूपविशेषदर्शनं तावद् अनुमितावप्रामाण्यसंशयो न जायते, अनुमितावप्रामाण्यग्रहस्य हेतोर्दुष्टत्व ग्रहाधीनत्वात् । अतः प्रामाण्यग्रहानपेक्षाऽपि प्रामाण्यानुमितिः प्रकृतज्ञान-प्रामाण्यविषयिणी प्रमैव जायते । नेयं प्रामाण्यानुमानस्यैव चर्चाऽपितु सर्वाऽनुमानस्येत्यभिप्रेत्याह—अन्यस्य वेत्यादि, अनुमानपदम् अनुमितिपरम् । सर्वस्याम् अप्यनुमितौ यावद् अदुष्टलिङ्गसमुत्थत्व-ग्रहस्तावद् अप्रामाण्यसंशयाभावात् न प्रामाण्यग्रहाऽपेक्षेत्यर्थः ।

अतः परं तात्पर्यटीकायां प्रत्यक्षस्य शब्दस्य च ज्ञानस्याऽभ्यासदशापन्नस्य विशेष-दर्शनाभावाद् अप्रामाण्य-संशयो जायते तत्र च समर्थ-प्रवृत्ति-जनकत्वेन सजातीयत्वेन च लिङ्गेन प्रामाण्याऽवधारणं भवतीति प्रतिपाद्य पुनरेतादृश एव विषये मानस-प्रत्यक्षे स्वतः प्रामाण्य-शब्देनोपपादयति त्रयोदशे पृष्ठे—'ज्ञान-गत-तज्जातीयत्वलिङ्ग-ग्राहिणश्च ज्ञानस्य मानस-प्रत्यक्षस्य तादृशस्याऽदृष्ट-व्यभिचारतया परितो निरस्त-विभ्रमाशङ्कस्य स्वतः प्रमाणम् इति नानवस्था' इति ।

इतः प्रागनुमितौ प्रामाण्य-ग्रहापेक्षा नास्तीत्युपपादितम्, अनुमितिकारणस्य लिङ्ग-ज्ञानस्य कथं प्रामाण्य-ग्रह इत्युपपादयति लिङ्गस्य मानसं लौकिकं प्रत्यक्षम्, लौकिक-सन्निकर्ष-गुणाच्च लिङ्ग-ज्ञाने प्रामाण्यम् उत्पद्यते, लौकिक-सन्निकर्ष-गुण-जन्यत्व-रूप-विशेष-दर्शनान् नाऽप्रामाण्य-संशयो न च प्रामाण्य-परीक्षणम् इति पूर्ववद् अभिप्रायः ।

आस्यः पङ्क्तस्यः प्रागुपक्रमे एकादशपृष्ठे समागतया 'न स्वतः प्रामाण्यं शक्याऽ-वधारणम्, परतस्तु दृष्टार्थेष्वनभ्यास-दशापन्नेषु प्रवृत्ति-सामर्थ्याद् एव तद् गम्यते' इति पङ्क्त्या स्वतः प्रामाण्येऽशक्यावधारणत्वं परतः प्रामाण्ये तद्-गम्यत्वं स्फुटं वदताऽभ्यास-दशापन्नेषु तद्-अवगमस्याऽनपेक्षितत्वं सूचितम् । किं च स्वतःप्रामाण्यस्याऽशक्याव-धारणत्वम् उक्त्वा समानरूपेण विषय-भेदेन स्वतस्त्व-परतस्त्वे कथं व्यवस्थापयेत् ? विषय-भेदेन व्यवस्थापने एकस्य शक्याऽवधारणत्वम् अपरस्य चाऽशक्यावधारणत्वं कथं युज्यते ? यथा स्वतःप्रामाण्यं सर्वत्र स्थानं न लभते तथा परतोऽपि । कथं तदैकस्या-शक्यत्वम् ? तस्माद् अयं मिश्रः 'प्रामाण्यग्रहानपेक्षायाम् स्वतः प्रमाणम् इति' व्यवहरति ।

एवं च परतः प्रामाण्य-ग्रह-वादे 'न सर्वत्र प्रामाण्य-ग्रहस्य अपेक्षा' इति न्याय-सिद्धान्तानुसारं कतिपय-वाचस्पति-वचांसि प्रदर्शितानि व्याख्यातानि च । अतः परं

लेखविस्तर-भिया व्याख्या-विरहितम् एव वाचस्पतिवचोऽधीत्यैव न्याय-सिद्धान्तं व्यवस्थापयतां स्वतः-प्रामाण्यञ्च निराकुर्वतां श्रीमदुदयनाचार्याणां न्यायकुसुमाञ्जलि-द्वितीय-स्तवक-प्रथमकारिकाया एतद्-विषयकं गद्यं समुद्धरामि—'एवं प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्, यदि तु स्वतो ज्ञायेत क्वचिदपि प्रामाण्य-संशयो न स्यात्। ज्ञानत्व-संशयवत्, निश्चिते तद् अनवकाशात्......यदपि झटिति प्रचुर-तर-समर्थ-प्रवृत्त्यन्यथाऽनुपपत्त्या स्वतः प्रामाण्यम् उच्यते तदपि नास्ति। अन्यथैवोपपत्तेः, झटिति प्रवृत्तिर्हि झटिति तत्कारणोपनिपातम् अन्तरेणानुपपद्यमाना तमाक्षिपेत्, प्रचुर-प्रवृत्तिरपि स्वकारणप्राचुर्यम्, इच्छा च प्रवृत्तेः कारणम्, तत्कारणमपीष्टाभ्युपायता-ज्ञानम्, तदपि तज्जातीयत्वलिङ्गानुभवप्रभवम्, सोऽपि इन्द्रियसन्निकर्षादिजन्मा, न तु प्रामाण्यग्रहस्य क्वचिदप्युपयोगः, उपयोगे वा स्वत एवेति कुत एतत्?, ततः समर्थ-प्रवृत्तिप्राचुर्यमपि प्रामाण्यप्राचुर्यात्तद्ग्रहणप्राचुर्याद्वा, स्वतस्त्वन्तु तस्य क्वोपयुज्यते?, नहि पिपासूनां झटिति प्रचुरा समर्था च प्रवृत्तिरम्भसीति पिपासोपशमनशक्तिरपि तस्य प्रत्यक्षा स्यात्।' स्वतः प्रामाण्यग्रहे ज्ञानस्य ज्ञाने यथा ज्ञानत्वं भासते तथा प्रामाण्यम् अपि भासेत, ज्ञान-निश्चय इव प्रामाण्यनिश्चयोऽपि सर्वत्रोदियात् निश्चयाच्च यथा ज्ञाने ज्ञानत्वस्य कदाचिद् अपि संशयो न भवति तथा प्रामाण्यस्यापि संशयो न स्याद् इति कदाचिद् अपि इत्यादिनोक्तम्। प्रचुरा समर्था च प्रवृत्तिः प्रामाण्य-निश्चयाधीना, अन्यथा समर्था न स्यात्, प्रचुरा च झटिति स्वतः प्रामाण्यग्रहे संभवति, परतो ग्रहे तु लिङ्गदर्शनव्याप्तिस्मरणपरामर्शादिविलम्बापत्तेः, सर्वत्र लिङ्गदर्शनादिकौशलाऽसंभवाद् विरला स्यान् न तु प्रचुरेति स्वतः प्रामाण्यवादिनां पूर्वपक्षे यद् अपि झटितीत्यादिग्रन्थः, तदपि नाऽस्तीत्यतश्च तत्-समाधानम्, स्फुटं सिद्धान्तप्रदर्शनेन समाधानं तु 'न तु प्रामाण्य-ग्रहस्य क्वचिद् अप्युपयोग इति न हि पिपासूनाम् इति प्रतीकम् आदाय 'नह्यविलम्ब इत्येव लिङ्गाऽनपेक्षता, तथा सति पिपासोपशमनशक्त्यनुभवस्याऽप्यलैङ्गिकत्वप्रसङ्ग इत्यर्थः' इति वर्धमानोपाध्यायः टीकते। प्रचुरसमर्थप्रवृत्त्या प्रामाण्यग्रहस्याऽलैङ्गिकत्वम् अननुमेयत्वं ब्रूषे तथा तादृशोपशमशक्तेरपि प्रत्यक्षत्वं ब्रूहि कथं लैङ्गिकत्वं मीमांसकैरङ्गी-क्रियत इति भावः।

एतद्गद्यभागस्य किञ्चिद् अनन्तरम् 'तथा भावे वा तदतिरिक्त-विशेषानुपलम्भे कथं बाधकम्' इति गद्यांशस्तत्र वर्धमानोपाध्यायो लिखति। एवं च प्रामाण्यस्याऽनुमेयत्वे बहुवित्ताऽऽयाससाध्येऽपि गृहीत-प्रामाण्यं न ज्ञानं प्रवर्तकं तस्य प्रामाण्याऽनुमितेः प्राग् एव नाशात्, किन्तु तज्ज्ञानसमानविषयम् अप्रामाण्यशङ्काशून्यं ज्ञानान्तरम् एव, न चैवं प्रामाण्याऽनुमितिरफला तां विना तत्समानविषये ज्ञाने अप्रामाण्यसंशयाद् इति सार इति। अनेन च वाचस्पतिवचोव्याख्यानावसरे 'साजात्येन विशेषदर्शनेन अप्रामाण्यसंशया-पसारणम् एव न प्रामाण्याऽनुमानम्' इति मद्-उक्तिः परिपुष्यति।

उद्धृत-गद्यभागस्याऽन्तिमेनांऽशेन तात्पर्यटीकान्तःपाति 'न चोदन्योपशान्तिमपि परीक्षते' इत्यादि पतिपादनं सन्तुलनीयम्, कदाचन समानाभिप्रायः प्रस्फुरेत् ।

पूर्वोद्धृत-वर्धमान-टीकायाः 'तां विना तत्समान' इति प्रतीकम् आदाय श्रीरुचि-दत्तमिश्रमकरन्दोऽपि सम्यग्व्यासयति –'तद्विषयकत्वावच्छेदेन पूर्वज्ञाने प्रामाण्यग्रहात् तज्ज्ञानत्वम् एव विशेषदर्शनम् इत्यन्ये । वस्तुतस्तु तस्योपनीतभानसामग्रीत्वेन तद्तद्-ग्रहानन्तरम् उपनीतं प्रामाण्यं तत्र भासते इति न तत्र शङ्केति प्रत्यक्षप्रकाशे प्रपञ्चितम्, अन्यथा तस्य व्याप्यत्वेनाग्रहे शङ्काविरोधित्वानुपपत्तेर् इति ध्येयम् । धूमत्वदर्शनस्य व्याप्तिसंशयविरोधित्ववत् पृथगेव तस्य विरोधित्वम् इति अप्याहुः', एकस्मिन् ज्ञाने प्रामाण्यग्रहे तत्समानविषयकसर्वज्ञानेषु कथं प्रामाण्यग्रहणस्याऽपेक्षा न जायते ? कथं चाऽप्रामाण्यसंशयोऽपसार्यत इत्यस्य चतुर्धोपपादनं प्रकाशयति मकरन्दः ।

एवं स्वप्रदर्शितन्यायसिद्धान्ते प्राचीननवीनयोराचार्ययोः संवादम् उपहृत्य सम्प्रति तत्त्वचिन्तामणेः कतिपयवचांसि प्रदर्श्योपसंहरामि, तत्र प्रामाण्यवादस्य ज्ञप्तिप्रकरणे अगृहीताप्रामाण्यम् एव ज्ञानान्तरस्य प्रामाण्यग्राहकं ज्ञानम् इति दर्शयति—ननु नान्य-गृहीतप्रामाण्यं ज्ञानं परप्रामाण्यनिश्चयरूपम् अनवस्थानात्, नाऽपि स्वज्ञायमानप्रामाण्य-ग्रहापत्तेः, अतोऽगृहीतप्रामाण्यम् एव ज्ञानं परप्रामाण्यनिश्चयरूपम् आस्थेयम्, तथा च व्यवसायोऽप्यगृहीतप्रामाण्य एव स्वविषयं निश्चाययतु, किं विषयनिश्चयाऽर्थं तत्प्रामाण्य-निश्चयेन, अथ व्यवसायस्याऽप्रामाण्यदर्शनान् न तन्मात्राद् अर्थनिश्चयः, तर्हि प्रामाण्याऽनु-मितेरप्रामाण्यदर्शनान् न ततोऽपि प्रामाण्यनिश्चय इति चेत्, न ब्रूमो ज्ञानप्रामाण्य-निश्चयाद् एवाऽर्थनिश्चय इति, किन्तु यत्राऽप्रामाण्यशङ्का नाऽस्ति करतलाऽऽमलकादिज्ञाने तत्र व्यवसाय एवाऽर्थनिश्चय इति तत एव प्रवृत्तिर्निष्कम्पा, यत्राऽनभ्यासदशायां प्रामाण्य-संशयेनाऽर्थनिश्चयं परिभूयाऽर्थसंशयः, तत्र प्रामाण्यनिश्चयाधीनज्ञानादर्थं निश्चित्य निष्कम्पं प्रवर्तते नाऽन्यथेति सर्वाऽनुभवसिद्धम्, अत एवागृहीतप्रामाण्यम् एव ज्ञानं परप्रामाण्यं निश्चाययत्यप्रामाण्यशङ्काकलङ्काऽभावात् । यत्र तु प्रामाण्यज्ञानेऽप्रामाण्य-शङ्कया प्रामाण्यसंशयस्तत्र प्रामाण्यज्ञाने प्रामाण्यनिश्चयाद् एव प्रामाण्यनिश्चयः, एवं यावदप्रामाण्यशङ्कं तज्ज्ञानप्रामाण्यनिश्चयाद् एव तन्निश्चयः, न चैवम् अनवस्था चरम-ज्ञानप्रामाण्यज्ञानज्ञानस्य ज्ञानाऽभावेन कोटिस्मरणाभावेन विषयाऽन्तरसञ्चारेण वा प्रामाण्यसंशयाऽनवश्यम्भावात् । इति ।

प्रवृत्तावपि सर्वत्र प्रामाण्यज्ञानं नापेक्षितम् इति २६५ पृष्ठे द्रष्टव्यम्—एवं बहुवित्तायाससाध्यस्वर्गसाधनयाग इति ज्ञानं न गृहीतप्रामाण्यं प्रवर्तकम् प्रामाण्यानुमितेः प्रागेव तस्य नाशात्, किन्तु तज्ज्ञानसमानविषयकम् अप्रामाण्यशङ्काशून्यं ज्ञानान्तरम् एव । नन्वेवं बहुवित्तायाससाध्ये निष्कम्पप्रवृत्तावनुपयोगित्वान् निष्फलं प्रामाण्यज्ञानम् इति किं तदुपायाऽन्वेषणेनेति चेन्न, स्वर्गसाधनं याग इति ज्ञानप्रामाण्ये निश्चिते तत्समानविषयक-

ज्ञानान्तरे अप्रामाण्यशङ्का न भवतीति ज्ञानान्तरम् अगृहीतप्रामाण्यम् अपि स्वार्थनिश्चय-रूपं निष्कम्पप्रवृत्ति जनयतीति अप्रामाण्यशङ्काप्रतिबन्धद्वारा निष्कम्पप्रवृत्तावुपयुज्यते प्रामाण्यज्ञानम् इति न निष्फलम्। अतः परं वाचस्पतेः स्वतःप्रमाणशब्दघटितम् अनुमान-विषये वचनं तथैव व्याख्याति यथा मया प्राक्प्रदर्शितम्। तेन च 'इदं वाचस्पतिमतं न केनाऽपि नैयायिकेनाङ्गीकृतम्' इत्यादि मुखोपाध्यायानां लेख एतद्ग्रन्थाऽनवलोकनकृतो धाष्टर्यप्रयुक्त इत्यभिव्यज्यते। तथाहि २६६ पृष्ठे यत्त्वनुमानस्य निरस्तसमस्तविभ्रमाऽऽ-शङ्कस्य स्वतः प्रामाण्यग्रह इत्युक्तम् तद्धूमवति वह्निज्ञानत्वम् अनुमितेः प्रामाण्यनियतम् अनुव्यवसायेनोपनीतम्, अतो विशेषदर्शनान् न तत्राऽप्रामाण्यशङ्केति प्रामाण्यनिश्चयाद् एवाऽप्रामाण्यशङ्काविरहादर्थं निश्चित्य निष्कम्पव्यवहार इत्यभिप्राय इति। तदनुपदम् एव च 'वस्तुतस्तु परतःपक्षे न क्वचिदपि प्रामाण्यग्रहः प्रवर्तक' इति सिद्धान्तस्य स्फुटोक्तिरपि।

झटिति प्रचुरसमर्थप्रवृत्तिविषये श्रीमदुदयाचार्यवाचम् अनुसरत्ययं तत्त्वचिन्ता-मणिरिति विशिष्टवाचकानां सौकर्याय प्रदर्शयामि—झटिति प्रवृत्तिस्तु करचरणादिमत्ति शरीरज्ञानत्वादेर्विशेषस्याऽनुव्यवसायेन ग्रहाद् अप्रामाण्यशङ्काशून्याद् व्यवसायाद् एव, न प्रामाण्यज्ञानं प्रवर्तकम् इत्युक्तम्। झटिति तत्समवधानं तु स्वकरणाधीनम्। न हि पिपासूनां झटिति प्रचुरतरा समर्था च प्रवृत्तिरम्भसीति पिपासोपशमनशक्तिरस्य प्रत्यक्षेति।



अयोध्यास्थसंस्कृतपत्रस्य वर्ष ३२ संख्या ३५, १८।१९६१ ईशाब्दतः प्रकाश्यमानः।

# प्रामाण्यवादस्य सरलः संक्षिप्तश्च परिचयः

स्वतः प्रमाणादिसमस्तवादमासादयद् वादविरोधमञ्चत्।
चञ्चच्चलं चारुचकोरचेतः सञ्चेतयेच्चन्द्रमणिं स्मितास्यम्॥

प्रामाण्यवादस्य महान् काठिन्यप्रवादश्चिराद् रूढिमुपगतः, अत एव मण्डनमिश्रस्य परिजनवैदुष्यं 'स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरो गिरन्ति' इत्यादिना स्तूयते। दर्शनपुस्तकेषु प्रायो बहुषु अस्य संक्षेपेण परिचय आयाति, परं सोऽपि काठिन्येन अवमन्यते परित्यज्यते च, प्रामाण्यवादनाम्ना ग्रन्थांशः सन्नपि ग्रन्थत्वेन व्यवह्रियमाणो दुरधिगम एव परिगण्यते। सामान्यनिरुक्तिप्रभृतिपरिष्कारमपेक्ष्य परिष्कारपारुष्यमबिभ्रदपि विषयापेक्षया दुर्गम एव गीयते, अत एव व्याख्याने वरयात्राशास्त्रार्थे विश्वविद्यालय-गवेषणाविभागे च नास्य चर्चा श्रूयते। विदेशीयसंस्कृतविद्वत्सु वैदेशिके दर्शने वा नास्य स्पर्श इति मन्ये, यतो विदेशीयविदुषा केनचित् चर्चित एव विषय आधुनिकभारतीय-दार्शनिकैः परिज्ञेयोऽयमिति परिगण्यते, अतः प्रचाराभावेन दुःखबोधतया च नायं पत्रिका-दिषु प्रकाशनीय इति परमप्रियमपि अमुमुपेक्षमाण एव आसम्, किन्तु ऐषम एव अधिनि-विष्टायां वाराणसेयसंस्कृतविश्वविद्यालयबौद्धदर्शनपरिषदि प्राधान्यमावहतां विद्यया वयसा च प्रवृद्धानामपि कर्मणा मनसा च यवीयसां नवनालन्दाविहाराध्यक्षाणां डा० श्री सातकड़िमुखोपाध्यायानां प्रामाण्यवादमेत्र पुरस्कृत्य निर्भीकं गवेषणात्मकं मुद्रितं भाषणं संजातम्। ज्यायसा च विदुषा तेन निष्कण्टकीकृते पथि प्रयातुं समीहे, सारल्याय च तदपेक्षया अधिकमवदधामि। दुरधिगमां भाषां प्रायो विषयञ्च परित्यजामि।

## विषयपरिचयः

ज्ञानं द्विविधम् प्रमा अप्रमा च। प्रमायां प्रमात्वं तदेव प्रामाण्यम्, याथार्थ्यञ्च व्यवह्रियते, अप्रमानिष्ठस्य अप्रमात्वस्य अप्रामाण्यभ्रमत्वमित्यादिव्यवहारः। यथा ब्राह्मणः क्षत्रियश्च मनुष्यः परं ब्राह्मणो न क्षत्रियः, एवं प्रमा अप्रमा च ज्ञानं परं प्रमा न अप्रमा, ब्रह्मणत्वक्षत्रियत्वयोरिव प्रमात्वाप्रमात्वयोर्विरोधः मनुष्यत्वेन ब्राह्मणत्वक्षत्रियत्वयोरिव ज्ञानत्वेन प्रमात्वाप्रमात्वयोः सामानाधिकरण्यं व्याप्यत्वं वा।

मनुष्योत्पादिका सती अपि ब्राह्मणोत्पादकसामग्री न क्षत्रियोत्पादिका। एवं ज्ञानोत्पादिका सत्यपि प्रमाजनकसामग्री न अप्रमोत्पादिका। ब्राह्मणत्वक्षत्रियत्वयोरिव नैका सामग्रीप्रमात्वाप्रमात्वयोरुभयोर्जनिका। न क्षत्रियः समुत्पद्य पश्चाद् ब्राह्मणो भवति एवं प्रमासञ्ज्ञानं न कथमपि पश्चाद् अप्रामाण्यं प्रतिपद्यते, किन्तु उत्पद्यमानमेव ज्ञानं प्रमा अप्रमा वा जायते, ब्राह्मणक्षत्रियोत्पादकसामग्रीवेलायां मनुष्योत्पादकसामग्री इव प्रमात्वस्य अप्रमात्वस्य चोत्पत्तिवेलायां ज्ञानजनकसामग्री वर्तते, तथा च समायां ज्ञानसामग्र्यां कस्यचिन्मेलनेन प्रमात्वम् अन्यस्य च समागमेन अप्रमात्वं जायते। इत्यञ्च सामान्यज्ञानसामग्र्या यस्योत्पादस्तस्य उत्पत्तौ स्वतस्त्वम्, तथा सामान्यज्ञानसामग्र्यां कस्यचिदन्यस्य सम्मिश्रणेन यस्योत्पादस्तस्योत्पत्तौ परतस्त्वमिति विषयः।

## उत्पत्तौ बौद्धमतम्

तत्र बाह्यसद्वादिबौद्धमते बुद्धिस्थं बाह्यञ्च वस्तु, शुक्तिरूप्यादिभ्रमस्थले बुद्धिस्थमेव बाह्यतया अवभासते, सत्यरजतप्रत्यक्षस्थले च बाह्यमपि भासते, ततश्च प्रवृत्त्या उपलभ्यते, तथा च सर्वविधरजतभानस्थले बुद्धिस्थं समानं स्वाभाविकप्रायं ज्ञानसामान्यकारणं भ्रमोत्पादाय 'न' नूतनस्य कस्यचिदपेक्षा, ज्ञानसामग्री एव भ्रममुत्पादयति, सम्यक् प्रत्यक्षस्थले च बाह्यार्थेन सन्निकर्षो ज्ञानसामग्र्यां विशेषः सम्पद्यते, तथा च बाह्यार्थसन्निकर्षवशाद् यथार्थप्रत्यक्षं जायते, एवञ्च अप्रामाण्यस्य सामान्यज्ञानसामग्रीजन्यत्वादुत्पत्तौ स्वतस्त्वम्, ज्ञानसामान्यसामग्रीसचिवाद् अर्थविशेषाज्जायमानतया प्रामाण्यस्योत्पत्तौ परतस्त्वमिति उत्पत्तौ बौद्धमतनिष्कर्षः।

## इदन्तु अवधेयम्

यथा मया स्फुटा प्रक्रिया वर्णिता न तादृशी स्फुटतया बौद्धग्रन्थेषु उपलभ्यते। चिराद् भारताद् बहिष्कृतं बौद्धदर्शनं न्यायवेदान्तादिदर्शनमिव भारतीयविदुषां विचारानुग्रहाद् वञ्चितं प्रमाणादिविवेचने अतिप्राचीनं स्थूलमेवरूपं बिभ्रद् विराजते, परं विप्रकीर्णं वस्तु एतत्प्रक्रियोपयोगि समुपलभ्यते, यथा भ्रमस्थले बुद्धिस्थस्य भानम्, सम्यक् प्रत्यक्षस्थले प्रत्यक्षस्य अर्थादुत्पन्नत्वं विषयसारूप्यं संवादकत्वं प्रापकत्वम् इत्यादि वर्ण्यते, सारूप्यस्यापि कारणम् अर्थादुत्पन्नत्वमेवोच्यते, तथा च भ्रमसम्यग्ज्ञानसामग्र्योरर्थस्य सत्त्वासत्त्वाभ्यां विशेषः प्रदर्शित एव, अत एव सर्वदर्शनसंग्रहे विवरणप्रमेयसंग्रहे च प्रतिपादितं सौगतानां नये अप्रामाण्यं स्वतः प्रामाण्यञ्च परतः इत्यादि संगच्छते। यद्यपि तत्त्वसंग्रहस्थितानि कतिपयवचांसि विरुद्धानीव अवभासेरन् परं तानि प्रामाण्याप्रामाण्यग्रहविषयाणि न तूत्पत्तिविषयाणि इति धिया अध्ययने न अस्य न च परस्परं विरोधमञ्चन्तीति स्फुटमवभासेत। पूर्वोक्तं मुखोपाध्यायानां भाषणञ्च बौद्धग्रन्थेषु सर्वदर्शनसंग्रहसंगृहीतं मतं न मिलतीति लिखन्न मनुते।

## उत्पत्तौ प्रामाण्यस्य स्वतस्त्वम्

पूर्वमीमांसकाः प्रामाण्याप्रामाण्योत्पादकसामग्रीम् एवं विभजन्ते, ज्ञानसामग्र्यां दोषस्य सम्मेलनेनाप्रामाण्यमुत्पद्यते, अतो ज्ञानसामग्रीभिन्नदोषवशादुत्पद्यमानस्य अप्रामाण्यस्य परत उत्पादः, परन्तु ज्ञानसामग्रीत एव प्रामाण्यमुत्पद्यत इति ज्ञानसामग्रीजन्यतया प्रामाण्यस्य स्वत उत्पादः, यद्यपि ज्ञानसामग्र्यां दोषाभावस्य सन्निवेशोऽन्यथा दोषसद्भावे अप्रामाण्यस्यापि उत्पादापत्तेः, तथापि प्रामाण्यस्य न परतस्त्वं सम्पादकदोषविलक्षणत्वाद् दोषाभावस्य दोषो भावः, दोषभावस्तु न भावः, प्रामाण्योत्पादकज्ञानसामग्र्यां दोषाभावस्य सन्निवेशोऽप्रामाण्यप्रतिबन्धकतया न तु प्रामाण्यकारणतया, अप्रामाण्यसामग्र्यां सन्निविष्टो दोषो यद्यपि प्रामाण्यस्य प्रतिबन्धकस्तथापि प्रतिबन्धकाभावतया न दोषाभावः प्रामाण्यस्य कारणम्, अभावस्य प्रतिबन्धकाभावस्य वा कारणत्वानङ्गीकारात्, सामग्रीसन्निविष्टोऽपि प्रतिबन्धकाभावः कारणान्तरविघटनेनैव उपयुज्यते न सम्पादकत्वेन अभावस्य सम्पादकत्वशक्तिविरहात्। इत्यादीनि विभिन्नानि समाधानानि विदधत आचार्या उत्पत्तौ प्रामाण्यस्य स्वतस्त्वम् अप्रामाण्यस्य च परतस्त्वमिति निरूपयन्ति। तत्र युक्तायुक्तत्वविवेचनस्य नात्र लघुनि निबन्धनेऽवसर इति संसूच्यैव परित्यजामि।

## ३६ संख्या २६।८।६१ ईशाब्दे प्रकाशितः

पूर्वोक्तप्रामाण्योत्पत्तिप्रक्रियया उत्पद्यमानमेव ज्ञानं किमपि प्रमाणमप्रमाणं वा भवति, नैव कस्यापि दर्शनस्य प्रक्रियायां प्रथमतो ज्ञानं प्रामाण्याप्रामाण्यविरहिसमुत्पद्य पश्चात्कारणान्तरवशात् प्रमाणम् अप्रमाणं वा सम्पद्यत इत्यस्ति, तथापि खण्डनाभिनिवेशे बहुषु पुस्तकेषु प्रथमं प्रमाणस्य सतः पश्चात्कथमप्रामाण्यम्, एवं प्रथमम् अप्रमाणस्य सतः कथमन्यस्मात्प्रामाण्यम्, नहि स्वभावस्य शक्तेर्वा परिवर्तनाधाने सम्भवतः, स्वकारणेभ्य एव तयोर्जायमानत्वात्, इत्यादि बहुप्रलपितमास्ते, तन्न वास्तविकं परिगणनीयम्, किन्तु स्वमनसैव उत्पन्ने ज्ञाने प्रामाण्यमप्रामाण्यं वा आधीयते इति कल्पयित्वा शास्त्रार्थवृद्धये दोषगणेनाच्छाद्यते इति मन्तव्यम्। एवं प्रस्तुते मुखोपाध्यायानां लेखेऽपि चतुर्थपृष्ठे तत्त्वसंग्रहकारिकोद्धरणमुखेन लिखितमास्ते। प्रामाण्यस्य अप्रामाण्यस्य वा शक्तिर्व्यक्तिभेदेन स्वहेतुभ्यः सहैव उत्पन्ना इति २८२७ कारिकांशस्यार्थः, पश्चाच्छक्तिराधातुं न शक्यत इति २८२८ कारिकयोक्तम्। वस्तुतस्तु तत्त्वसंग्रहे प्रामाण्याप्रामाण्योत्पादकसामग्र्योर्वैलक्षण्यं वा न किञ्चित् स्फुटं प्रतिपादितं, यत् किञ्चित्प्रतिपादितं तदपि प्रामाण्याप्रामाण्यग्रहप्रक्रियायाम्, न तूत्पत्तिवादे, विप्रकीर्णन्तु यथा मया प्रदर्शितं तथा तत्रापि लभ्यते।

तत्रापि ज्ञानेन सहैव प्रामाण्याप्रामाण्ये उत्पद्येते कथमत्र परतस्त्वचर्चा कस्यापीति अभिनिविशमानस्तत्त्वसंग्रहो मीमांसकमतं दूषयन् तुल्ययुक्त्या अप्रामाण्यस्य स्वतस्त्वमपि

साधयति, स्पष्टञ्चेदं २८४२ कारिकाचतुष्टये। स्फुटन्तु सौगतमतं निम्नलिखितायां २८३३ कारिकायाम्।

एतावत्तु वदन्त्यत्र सुधियः सौगता इमे।
ज्ञाने क्वचित्स्थिताप्येषा न बोद्धुं शक्यते स्वतः॥

अनेन प्रामाण्यस्य परतो ग्राह्यत्वं स्फुटमुक्तम्, उत्पत्तिपक्षेऽपि ज्ञाने प्रायोऽप्रामाण्यं क्वचिच्च प्रामाण्यमिति क्वचित्पदेन ध्वनितम्। [ अत्र विषये प्रस्तुतभाषणस्य निम्नलिखिताः पंक्तयो न मां प्रसादयन्ति ] "४ पृष्ठे यदेव ज्ञानकारणं तदेव प्रमाकारणम्" इत्यत्र मीमांसकादिभिः सौगतस्यैकवाक्यता। ४ पृ० प्रामाण्यस्योत्पत्तौ स्वतस्त्वं शान्तिरक्षितकमलशीलाभ्यामपि स्वहस्तितम्। तत्त्वसंग्रहकर्ता शान्तिरक्षितः तट्टीकाकृच्च कमलशीलः। ५ पृ० बौद्धानामद्वैतवेदान्तिनाञ्च निर्विकल्पकस्यैव प्रामाण्याभ्युपगमात्" इत्यादि। बौद्धमते निर्विकल्पकमेव विकल्पद्वारा सर्वव्यवहारसाधकमिति तत्त्वसंग्रह १३०६ कारिकायामुक्तम्। वेदान्तिमते सविकल्पकस्यापि प्रामाण्यम्। ३० पृ० स्वभावतोऽप्रमाणभूतस्य न कथमपि प्रामाण्यं शक्योत्पादं स्वभावस्यानपायत्वात्' इत्यादि। पुनस्तत्रैव पृष्ठे 'यदप्रमाणभूतं तत्स्वाङ्गमेव धारयितुमसमर्थं कथं परस्य प्रामाण्यमुत्पादयेत्। स्वतोऽप्रमाणभूतस्य न कथमपि प्रामाण्यं केनापि दर्शनेनाभ्युपेयते द्वितीयञ्च वाक्यम् अप्रमाणज्ञानस्य अलीकत्ववासनया समुद्भूतम्। तदत्यन्तमसत्, अप्रमाणज्ञानं सर्वेषां मते सत् कार्यं कारणञ्च, यद्यपि तद्विषयोऽसन्। किञ्च अप्रमाणभूतात् संशयात् प्रवृत्तिः सौगतैरपि अङ्गीक्रियते, न्यायबिन्दुव्याख्याने प्रारम्भे तत्त्वसंग्रहपञ्जिकायाञ्च तथोपलम्भात्। एवमेव भाषणस्य तृतीयचतुर्थपृष्ठयोरिमाः पङ्क्तयः।

( क ) अनुमानम् आभ्यासिकप्रत्यक्षज्ञानञ्च स्वतः प्रमाणम् इतरत् परत इति सौगताः संगिरन्ते।

( ख ) वाचस्पतिमिश्रेण तात्पर्यटीकायामयमेव पक्षः स्वसिद्धान्तत्वेनाङ्गीकृतः।

( ग ) न्यायप्रस्थाने वाचस्पतेर्मतं न केनापि नैयायिकेनाङ्गीकृतं दृश्यते।

अत्रेत्थं ज्ञेयम्—सत्यमेतद्भावार्थकपङ्क्तयो यत्र तत्रोपलभ्यन्ते तथापि प्रामाण्यपरतस्त्वस्य न व्याघातः, एतादृशपङ्क्तिलेखका एव ग्रन्थकारा अनुमाने आभ्यासिकप्रत्यक्षे च परतः प्रामाण्यमुपपादयन्ति, एतावान् विशेषः—अन्यत्र ज्ञाने जाते ज्ञाते वा प्रामाण्यसंशयः सम्भवन् सम्वादादिज्ञानेन समर्थप्रवृत्त्या वा बाध्यते, अनुमाने आभ्यासिकप्रत्यक्षे च संशयविरोधि ज्ञानं प्रागेव प्रवर्तमानं संशयं रुणद्धीति तत्र संशय एव नोदेति।

तत्रापि अयमभिसन्धिः—विशेषादर्शनं संशयमुत्पादयति, अत एव अन्यत्र ज्ञानेषु विशेषदर्शनस्याभावात् संशयस्य समुत्पादः। अनुमाने च व्याप्तिदर्शनमेव विशेषदर्शनं तच्च प्रागेव वर्तते इति कारणाभावाद् अप्रामाण्यसंशयस्य नात्मलाभः। अत एव बौद्ध-

दर्शनपुस्तकेष्वपि अनुमानस्थले प्रतिबन्धवशात्प्रामाण्यमिति परतस्त्वोक्तिः सङ्गच्छते। एकदा कुतश्चिद् वाक्याद् अगृहीतप्रामाण्यकादपि ज्ञानात् संशयात् प्रवृत्य ततश्च तदर्थमुपलभ्य पश्चात्तनेषु तादृशज्ञानेषु प्रथमज्ञानसाजात्यरूपविशेषदर्शनशीला निरस्ताप्रामाण्यशङ्काः परीक्षां विनैव प्रवर्तन्ते इति आभ्यासिकप्रत्यक्षस्थलाभिप्रायः। अत्र अनुमाने आभ्यासिक-प्रत्यक्षे च परतः प्रामाण्यसाधकानि प्रथमं वाचस्पतिवचांसि सूचयामि, विशेषं दिदृक्षु-भिर्न्यायवार्तिकतात्पर्यटीका विलोकनीया। तस्या एव।

१८ पृष्ठे—पारम्पर्येण बाह्यप्रतिबन्धाद् बाह्यं प्रापयत् सम्वादकं सद् भ्रान्तमपि प्रमाणाशयवशात् प्रमाणम् इति ( बौद्धमतेन अनुमाने )

१३ पृष्ठे—प्रवृत्तिसामर्थ्यसंभवात् प्रवृत्तिसामर्थ्यज्ञानस्य चाभ्यासदशापन्न-ज्ञानस्य तज्जातीयत्वेन प्रामाण्यानुमानात्। ततः प्राक् तत्रैव— ज्ञानगततज्जातीयत्वलिङ्ग-ग्राहिणश्च ज्ञानस्य मानसप्रत्यक्षस्यादृष्टव्यभिचारतया परितो निरस्तविभ्रमाशङ्कस्य स्वतः प्रामाण्यमिति नानवस्था।

१२ पृष्ठे ( क ) वयन्तु ब्रूमः फलज्ञानमपि अभ्यासदशापन्नतया तज्जातीत्वेन लिङ्गेनावधारिताव्यभिचारमेव। 'ख' अनुमानस्य तु स्वत एव प्रामाण्यमनुमेयव्यभि-चारिलिङ्गसमुत्थत्वात्।

११ पृष्ठे—तदमी संदिहाना अपि प्रवर्तमानाः प्रवृत्तिसामर्थ्यात् प्रमाणस्य तत्त्वं विनिश्चित्य तज्जातीयस्य अन्यस्य अभ्यासदशापन्नस्य स्वतःप्रामाण्यावधारणादर्थनिश्चयेन प्रवर्तन्ते। परतः प्रामाण्यसाधकानि न्यायबिन्दुव्याख्याने धर्मोत्तराचार्यवचांस्यपि तादृ-शान्येव, यथा प्रथमसूत्रे अर्थक्रियानिर्भासे च जाते सति सिद्धः पुरुषार्थः, तेन न सा शङ्का अर्थे ज्ञाते। इत्यत्र अर्थे ज्ञाते इति वदन् अर्थनिश्चयः संशयप्रतिबन्धक इति सूचयंश्च परतः प्रामाण्यमेव ध्वनयति। धर्मोत्तरप्रदीपग्रन्थस्य १६ पृष्ठे इतोऽपि स्फुटं प्रति-पादितमस्ति।

## ३७ संख्या १२।६।६१ ईशाब्दे प्रकाशितः

तस्य विषयः स्वलक्षणमिति सूत्रे 'स पुनरारोपितोऽर्थो गृह्यमाणः स्वलक्षणत्वेनाव-सीयते यतस्ततः स्वलक्षणमध्यवसितं प्रवृत्तिविषयोऽनुमानस्य' इति धर्मोत्तरः। अनेन समर्थप्रवृत्तिजनकतयैव अनुमानस्य प्रामाण्यं सूचितम्। आरोपितार्थत्वेन च स्वतस्त्वं वारितम्। बौद्धमते विकल्पविषयस्य अनुमानस्य स्वतः प्रामाण्योपपादनं सर्वथाऽनुचितम्। प्रथम परिच्छेदान्ते स एव—'यत्रार्थप्रत्यक्षपूर्वकोऽध्यवसायस्तत्र प्रत्यक्षमेव केवलं प्रमाणम्' अत्र प्रत्यक्षस्यापि अर्थाध्यवसायवशात् प्रामाण्यं वर्णयता परतः प्रामाण्यमेव वर्णितम्। एवमेव अर्थक्रियासामर्थ्यलक्षणत्वाद् वस्तुन इति सूत्रेऽपि सन्निधानासन्निधा-नाभ्यांश्च ज्ञानप्रतिभासस्य भेदकोऽर्थोऽर्थक्रियासमर्थः' इति वदता प्रमाऽप्रमोत्पादकसाम-

प्र_योर्वैलक्षण्यं सूचितम् । यथा दोषाभावरूपस्य अभावस्य प्रामाण्योत्पादे अपेक्षायामपि मीमांसकैः प्रमाणस्य स्वतस्त्वं वर्णितं तथा अर्थासन्निधानरूपस्य अभावस्य अपेक्षायामपि अप्रामाण्यस्य स्वतस्त्वं सौगतैः स्वीक्रियते ।

तत्त्वसंग्रहपञ्जिकायां प्रत्यक्षलक्षणपरीक्षान्ते—"यावता पशुशिशवोऽपि अभ्यासबलादुद्भूतज्ञानवासनावृत्तयः सुखस्य साधनमेतदसुखस्येति प्रवृत्तेः प्रागपि, इत्यादिना आभ्यासिकज्ञानेऽपि अभ्यासः परतः प्रामाण्याधायक इति स्फोरितम् ।

पुनस्तत्रैव-नन्वाद्यायां प्रवृत्तौ सत्यामभ्यासः सिद्धयति यावता सैव कथं सिद्धयतीति वाच्यम्, उच्यते, संशयात् इत्यादिना समर्थप्रवृत्तिजनकज्ञानजातीयत्वेन आभ्यासिकज्ञाने प्रामाण्यमित्युपपादितम् । ज्ञानज्ञानेऽपि तदीयं प्रामाण्यं न ज्ञायते किन्तु प्रामाण्यनिश्चयाय अभ्यासादिरपेक्ष्यत इति निम्नोधृतकारिकापञ्जिकाभिः स्फुटं प्रतिपाद्यते—

यथाऽवस्थितविज्ञेयवस्तुबोधाप्तिशक्तिताम् ।
को नामानुभवात्मत्वान्निश्चेतुं केवलात्प्रभुः ॥ २८३४ ॥
अप्रमाणेऽपि येनैतत् केशपाशादिदर्शने ।
विद्यतेऽनुभवात्मत्वं विस्पष्टाकारभासिनि ॥ २८३५ ॥
तस्मादर्थक्रियाज्ञानम् अन्यद् वा समपेक्ष्यते ।
निश्चयायैव न त्वस्या आधानाय विषादिवत् ॥ २८३६ ॥

प्रामाण्यं ज्ञाप्यते अर्थक्रियादिज्ञानेन न तु ज्ञाने प्रामाण्यशक्तिराधीयते इति तृतीयपद्यस्यार्थः पञ्जिकायां प्रतिपादितः । २९७३ कारिकापञ्जिकायाम्, 'अनुमानस्य विकल्पात्मकत्वेन सामान्यविषयत्वात् न प्रतिभासवशाद् वस्तुनिश्चयत्वव्यवस्था वस्तुनोऽप्रतिभासात्, किन्तर्हि निश्चयवशात् पुनः पारम्पर्येण वस्तुनि प्रतिबन्धात्प्रामाण्यमवश्यम्, पुनरपि तत्रैव 'नानुमानतुल्यं प्रत्यक्षम्' इत्यादिना व्याप्तिनिश्चयरूपेण विशेषदर्शनेन संशयाभावात् अनुमानस्य परतः प्रामाण्यं प्रतिपादितम् । प्रत्यक्षस्य च प्रामाण्याय सम्वादादिज्ञानमवश्यमपेक्षणीयम् । इतः प्राक् तत्रैव 'तच्चोपदर्शनमित्यादिना ज्ञाने ज्ञातेऽपि तदर्थनिश्चयो न जायते, ज्ञानस्य अप्रामाण्यसंशयोऽपि ज्ञानस्य ज्ञानं तदनवसाये तद्विमर्शायोगात्' इत्यादिना प्रामाण्यस्य परतस्त्वमुत्पत्तौ ज्ञप्तौ च सौगताः स्वीकुर्वत इति प्रदर्शितम् ।

अप्रामाण्यस्य स्वतस्त्वम्, अप्रामाण्यग्रहस्थले प्रामाण्यनिश्चयाभावश्च निम्नलिखितकारिकाभिरवसीयेताम् ।

अप्रामाण्यव्यवच्छेदः स्वत एवैवमिष्यताम् ।
अतो न साधनं युक्तमप्रामाण्यनिवृत्तये ॥ २९३७ ॥

अप्रामाण्यद्वयाशङ्का यदि वर्तेत तत्र तु।
प्रामाण्यनिश्चयो न स्याद् भ्रान्त्या तद्विषयीकृते॥ २९३८॥
यः सन्देहविपर्यासप्रत्ययैर्विषयीकृतः।
स्थाणुवन्नहि तत्रास्ति तदा तद्रूपनिश्चयः॥ २९३९॥

आचार्यवाचस्पतेर्मतं न्यायमतमेव, तदेव सर्वैर्नैयायिकैरङ्गीक्रियते तदेव व्याख्यातं गङ्गेशोपाध्यायेन चिन्तामणौ। अस्य व्याख्यानमेवोपलभ्यते, यथा श्रुतार्थस्यापि तत्र विचारः। पुनर्वाचस्पतिसम्मतं सर्वत्र प्रामाण्यस्य परतस्त्वं व्यवस्थापितम्। नव्यन्यायो न दर्शनान्तरं किन्तु प्राचीनन्यायस्य व्याख्यानम्। क्वाचित्को विचारभेदो दर्शनान्तराणीव एकदेश्ययुक्तिः। वस्तुतो न प्राचीनन्यायस्यैव अपि तु सर्वेषां दर्शनानां व्याख्यानं नव्यन्यायः, अतएव भूयान् प्रभावोऽस्य सर्वेषु, नव्यन्याय एका विलक्षणा दृष्टिर्येन लघुन्यपि पुस्तके बहवो विषया अवभासन्ते, तेन विना च पुस्तकेषु वर्तमाना अपि विषयास्तिरोधीयमाना अल्पीयांसो दृश्यन्ते। निष्पक्षपाता च एका विचारधारा, अतएव गङ्गेशरघुनाथप्रभृतिभिः खण्डिताः प्राचीनविषया जागदीशीगदाधरीप्रभृतिषु पुनश्च स्थाप्यन्ते क्वचित्। एवञ्च सौगतानां नैयायिकानामिव प्रामाण्यस्य परतस्त्वम्। अप्रमाणज्ञानजनकसामग्र्यां विशेषादर्शनम् अर्थासन्निधानं वा अभावरूपं प्रविष्टमिति मीमांसकानां प्रामाण्यमिव सौगतानाम् अप्रामाण्यस्य स्वतस्त्वादिति प्रागेवोक्तम्। प्रमाणज्ञानजनकसामग्र्यां विशेषदर्शनस्य अर्थसन्निधानस्य वा भावरूपस्य प्रवेश इति न्यायनय इव सौगतसरणिरपि प्रामाण्यस्य गुणजन्यत्वानुसारिणी संभवति।

## प्रामाण्यस्य परतस्त्वम्

पूर्वोक्तायां द्विविधायां ज्ञानसामग्र्यामेकस्मिन् दोषोऽन्यस्मिन् दोषाभावश्च प्रविष्ट इति ज्ञानसामान्यकारणभिन्नो यथा दोषस्तथा दोषाभावोऽपि यथा च दोषजन्यतया अप्रामाण्यस्य परतस्त्वं तथा दोषाभावजन्यतया प्रामाण्यस्यापि परतस्त्वम्।

भावो यथा तथाऽभावः कारणं कार्यवन्मतः।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः॥

इत्यादि कुसुमाञ्जलिदृशा अभावस्य प्रतिबन्धकाभावस्य वा कारणत्वस्य साधिततया दोषाभावस्य प्रामाण्यकारणत्वम्। किञ्च दोषा अपि केचन अभावरूपा यथा अर्थस्य असन्निधानं विशेषस्यादर्शनञ्च। अभावस्य अकारणत्वे ततोऽप्रामाण्यस्यापि समुत्पादो न स्यात्, तेषामभावरूपाणां दोषाणामभावो दोषभावो भावरूपतयैव प्रामाण्यकारणम्। यत्तु प्रामाण्यसामग्र्यां प्रविष्टो दोषाभावोऽप्रामाण्यप्रतिबन्धकत्वेनोपक्षीणोऽन्यथासिद्धो न प्रामाण्यस्य कारणम्, तत्तु अतिप्रसञ्जकम् अप्रमाणसामग्रीप्रविष्टस्यापि दोषस्य प्रामाण्यप्रतिबन्धकत्वेनोपक्षीणतया अप्रामाण्यस्य दोषजन्यत्वं न स्यात्।

यदपि प्रामाण्याप्रामाण्यरहितस्य ज्ञानस्य आपादनं तदपि सर्वविशेषविहीनस्य यस्य कस्यापि सामान्यस्यापादनमिव निरालम्बनम्, न्यायनये इष्यते वा निर्विकल्पकम्; दोषदोषाभावाभ्यामेव समाक्रान्ता समा ज्ञानसामग्री का सामग्री प्रामाण्याप्रामाण्ये विना ज्ञानमर्जयेत् ? । एवं कथमपि प्रामाण्यसामग्र्या विभिन्नत्वे तत्र गुणा अपि प्रविष्टाः, गुणा दोषा वा न अनुगताः, तादृशगुणत्वदोषत्वयोर्जातित्वाभावात्, तत्तज्ज्ञानं प्रति अननुगता एव गुणा दोषा वा कारणम्, तत्तत्प्रामाण्यं प्रति गुणानां स्फुटं विवरणं भाषापरिच्छेदादौ प्रसिद्धमेवेति न प्रतन्यते । प्रामाण्यनिश्चयादेव प्रवृत्तिसिद्धिरिति स्वतो ग्राह्यत्ववादिनः । सर्वत्र प्रामाण्यनिश्चयादेव प्रवृत्तिः, यत्रापि कृष्यादौ ससंदेहस्य प्रवृत्तिर्दृश्यते तत्रापि प्रामाण्यनिश्चयो वर्तते एव । कृषिकर्म सस्योत्पत्तिसाधनम् इति ज्ञानस्य प्रामाण्ये न संदिग्धे, किन्तु इत्यादिवशात् कुत्रापि सस्यानुत्पत्तिदर्शनाद् अत्रापि अनावृष्ट्यादयः प्रतिबन्धका भविष्यन्ति न वेति संशेते ।

तथापि प्रतिबन्धकसंशयादेव प्रवृत्तिर्जातेति न शङ्कनीयम् । प्रवृत्तौ निश्चितप्रामाण्यकं ज्ञानं कारणम्, न तु प्रतिबन्धकं ज्ञानं निश्चितप्रामाण्यकमभिप्रेतम्, तत्रापि प्रतिबन्धकस्य निश्चयो बलवान् संशयस्तु दुर्बलः उत्कटरागादिना संशयः प्रतिबध्यते, उत्कटरागाद्यभावे एव संशयः प्रवृत्तिं प्रतिबध्नाति, उत्कटरागादेरुत्तेजकत्वं वा कल्पनीयम्, उत्कटत्वसंशयादीनां पुरुषकालविषयभेदेन अननुगतत्वात् न सामान्यकार्यकारणभावः ।

न च अर्थनिश्चय एव प्रवृत्तिकारणमस्तु प्रामाण्यनिश्चयस्य तत्र विशेषणता कुतः ? अत एव न प्रामाण्यनिश्चयाधीना प्रवृत्तिरनुभूयते, न वा तत्र प्रामाण्यनिश्चयार्थं प्रवृत्तौ विलम्बोऽनुभूयत इति वाच्यम् अर्थनिश्चयधर्मिके अप्रामाण्यस्य संशये निश्चये वा सति प्रवृत्तेरभावात् प्रवृत्तिजनकार्थं निश्चये विशेषणान्तरस्यावश्यकत्वात् केवलार्थनिश्चयस्य प्रवृत्तिहेतुत्वासम्भवात् । प्रवृत्तिजनकज्ञानग्रह एव प्रामाण्यविषयकोऽपीति विलम्बानुभवस्यावसराभावात् । ननु स्वधर्मिकप्रामाण्यनिश्चयविशिष्टोऽर्थनिश्चयः प्रवृत्तिकारणमिति फलितम्, निश्चयत्वञ्च संशयान्यज्ञानत्वमिति तत्र नञर्थस्यापि प्रवेशः समापतित एवेति अप्रामाण्यग्रहानाक्रन्दितोऽर्थनिश्चय एव कथं न कारणमिति वाच्यं तत्र नञ्द्वयपरित्यागे प्रामाण्यग्रहविशिष्टत्वस्यैव फलितत्वात्, निश्चयत्वस्याखण्डोपाधित्वाच्च । न च स्वभावतो गृहीतप्रामाण्यकादपि प्रवृत्तौ फलानुपलब्धौ च असमर्थप्रवृत्तिजनकतया प्रामाण्यनिश्चयस्य भ्रमत्वं कल्पनीयम्, तद्वरं प्रथमं प्रामाण्यनिश्चय एव न जात इति वाच्यम् प्रवृत्तिजनकतयाऽवश्यं प्रामाण्यनिश्चयस्यापेक्षितत्वात् । परीक्षायै प्रवृत्तिः संशयाधीनैवेति लोका ! भ्रमः संशयस्तु अन्यविषयकः, यच्च प्रवृत्तिजनकं तत्तु निश्चयरूपमेव यथा परीक्षा संशयनिवर्तिकेति निश्चयं विना परीक्षायामपि न कश्चित्प्रेक्षावान् प्रवर्तते । न च कारणान्तरासंपृक्तज्ञानसामग्रीजनिते ज्ञाने प्रामाण्यस्य सत्त्वात् कथं तत्र तत्र

प्रामाण्यनिश्चयस्य भ्रमत्वमिति वाच्यम्, असमर्थप्रवृत्तिजनकत्वेन प्रवृत्तिजनकज्ञाने अप्रामाण्यस्यानुमानात्, तस्य च दोषसम्पृक्तज्ञानसामग्रीत उत्पत्तिः, तादृशदोषाज्ञानरूपाद् दोषज्ञानप्रतिबन्धकाद् वा दोषादप्रमाणेऽपि प्रामाण्यनिश्चयस्योत्पादः ।

## प्रामाण्यनिश्चयस्य न प्रवृत्तावुपयोगः

यस्मिन् वस्तुनि प्रवृत्तिः इष्टसाधनतादिकारणान्तरसचिवात् तदर्थनिश्चयादेव प्रवृत्तौ प्रामाण्यनिश्चयो न प्रवृत्तिहेतुरित्यन्ये, अर्थनिश्चयधर्मिकस्य प्रामाण्यस्य अप्रामाण्यस्य वा संशयनिश्चययोः सतोः प्रवृत्तेरदर्शनाद् अप्रामाण्यग्रहानास्कन्दितत्वमर्थनिश्चयविशेषणमस्तु। निश्चयत्वस्य अखण्डोपाधित्वे मानाभावात्, संशयान्यज्ञानत्वप्रवेशे लाघवाभावात्, भ्रमत्वमिव प्रामाण्यमपि विशेष्यावृत्त्यप्रकारकत्वरूपम् अभावघटितमेव। कारणान्तरसन्निधाने अर्थनिश्चये च सति प्रामाण्यनिश्चयाय ज्ञानग्रहाय वा अननुभूतस्य विलम्बस्य कल्पनाया अप्रामाणिकत्वात् । स्वप्रकाशवादिनः प्रभाकरस्य मते ज्ञानमेव ज्ञानग्रह इति भवतु न विलम्बः परं भट्टमुरारिमते ज्ञानानन्तरं ज्ञानग्रहस्य अवर्जनीयत्वात् । प्रवृत्तिं प्रति अर्थनिश्चयोहेतुर्न तु अर्थनिश्चयस्य ग्रहो येन विलम्बः प्रामाणिको भवेत् ।

## ३६ संख्या २६।६।६१ ईशाब्दे प्रकाशितः

असमर्थप्रवृत्तेरपि जनकोऽर्थनिश्चय एव, पूर्वम् अप्रामाण्यग्रहाभावात् प्रवृत्तिर्जाता, असमर्थप्रवृत्तिजनकतया तत्राप्रामाण्यग्रहे न पुनस्ततः प्रवृत्तिः । प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वे तु प्रथमं तत्र प्रामाण्यनिश्चयस्तदनन्तरं तत्र असमर्थप्रवृत्तिजनकत्वेन अप्रामाण्यस्य कल्पनेति निःप्रामाणिककल्पनायां महागौरवम् । एवञ्च यत्रापि ग्रन्थेषु प्रामाण्यनिश्चयसम्पदं सम्पादयन्ति तस्य अप्रामाण्यग्रहस्य प्रतिबन्धकस्यापनोदनेन अप्रामाण्यग्रहानास्कन्दितत्वसम्पादनायैव, प्रामाण्यनिश्चयस्य प्रवृत्तिप्रयोजकत्वे महतोऽप्रामाणिकगौरवस्य दर्शितत्वात् । किञ्च प्रमाणानि प्रमाजननस्वभावान्यपि दोषसहितानि सन्ति अप्रमाज्ञानमपि जनयन्ति, तदर्थञ्च प्रामाण्याप्रामाण्यविचार आवश्यकः। एवम् प्रामाण्यग्रहस्य प्रवृत्तिप्रतिबन्धकतया तत्प्रतिद्वन्द्वितया प्रामाण्यग्रहस्यापि विचारोऽवश्यमापतितः, परं व्यभिचारावारकस्य तस्य प्रवृत्तिजनकतावच्छेदककोटौ प्रवेशो मुधैव ।

१० पृष्टे 'दोषोपनिपाते सति प्राक्तनप्रामाण्यनिश्चये प्रतिहते प्रामाण्यसंशयोत्पत्तेः' इत्यादिप्रस्तुतभाषणमपि स्थवीयः । मीमांसकमतेऽपि दोषस्य प्रामाण्यग्रहप्रतिबन्धकत्वम् अप्रामाण्यग्राहकत्वं वा सम्मतं न तु प्रामाण्यग्रहविनाशकत्वम् । तृतीयक्षणभङ्गुरस्य प्रामाण्यनिश्चयस्य विनाशाय मुधैव दोषकल्पना । दोषवशादेव विनाशे स्वभावाद् वा विनाशे अर्थनिश्चयस्यैव विनाशात् प्रवृत्त्यसंभवेन किं करिष्यति वराकोऽप्रामाण्यसंशयः ? धर्मिणो विनाशे कथमात्मानमपि लप्स्यते ।

किञ्च अत्रैव दशमपृष्ठात्—'किञ्चाप्रामाण्यग्रहाभावमात्रात् प्रवृत्तिसम्भवे प्रामाण्याज्ञानान्निवृत्तिरप्यस्तु' इत्यत आरभ्य प्राय एकादशपृष्ठस्य सर्वोऽपि लेखः सर्वथा निरर्गलः शास्त्राव्युत्पत्तिविजृम्भित—इति निवारयतोऽपि खिन्नस्य कटूक्तिः । प्रामाण्याज्ञानस्य केन निवर्तकत्वं कल्पितं येन तदापाद्यते ? द्वितीयेऽपि कल्पे 'अर्थनिश्चयोऽपि प्रवृत्तिजनकः संहितशब्देन स्वयमुक्तवान् किमर्थं मात्रपदं निवेशयति ?, अर्थनिश्चय-सत्त्वे प्रवृत्तेः कारणसत्त्वात् कथं निवृत्तिरापाद्यते ?, अभावस्यापि प्रामाण्यघटकत्वं प्राक् प्रदर्शितमेव । अहो सुषुप्तिसुलभेनाऽपि व्यभिचाराज्ञानेन व्याप्तिज्ञानस्य अन्यथासिद्धिरापाद्यते । वह्निव्याप्यधूमवत्ताज्ञानं विशेषदर्शनविधया वह्न्यभाववत्तावुद्धेः प्रतिबन्धकम् इति तस्य व्याप्तिज्ञानस्य अनुमितिहेतुत्वम् । वह्निसहचरितधूमवत्ताज्ञानन्तु न वह्न्यभाववत्ताबुद्धेः प्रतिबन्धकम्, अत एव बौद्धदार्शनिका अपि पूर्वोक्ताभिप्रायेणैव प्रतिबन्धवशाद् अनुमानस्य प्रामाण्यमिति असकृद् ब्रुवते । एवमेव लिङ्गासंसर्गाग्रहस्य अर्थाभावाज्ञानस्य च सुषुप्तिसुलभस्य कारणत्वोपपादनं कृतमास्ते । किं तदुल्लेखेन ?! पाठका अन्विष्यैव पठन्तु । यथा मण्यादिः स्वसत्तया प्रतिबन्धकस्तथा अप्रामाण्यस्य ग्रहोऽपि स्वसत्तया प्रतिबन्धको न तु अप्रामाण्यज्ञानस्य ज्ञानं प्रतिबन्धाय अपेक्ष्यते । अप्रामाण्यग्रहोऽपि अप्रामाण्यग्रहानास्कन्दितत्वविशिष्टम् अर्थनिश्चयं कारणं विघटयतीति प्रतिबन्धकत्वसंभवेऽपि व्यर्थमेव भापणे प्रतिबन्धकत्वाय.यासितमास्ते । यत्तु १२ पृष्ठारम्भे मनः संयुक्तात्मसमवायसामग्र्या ज्ञानस्यावश्यवेद्यत्वं प्रतिजानीते परं हन्त, अनया रीत्या सुषुप्त्यभावापत्तिं न प्रतिसन्धत्ते । अन्यत्राप्येवमेव अनुव्यवसायसामग्री-सम्पादने असकृत् क्लिश्नाति ।

१२ पृष्ठे उक्तः 'ज्ञानं वृत्तं न वा' इति संशयोऽनुभवविरुद्धः सामग्रीविधुरश्च । ज्ञाने जाते एव एतादृशसंशयस्य संभवः, स च जातत्वनिश्चयेनैव प्रतिबद्धः, विशेषज्ञाने विषयविशेषविषये वा जातत्वादिसंशयः कथमपि उपपादयितुं शक्येत । १३ पृष्ठे प्रमासमर्थप्रवृत्त्योः कार्यकारणभावे अन्योन्याश्रयप्रदर्शनमपि न सम्यक् प्रमा समर्थ-प्रवृत्तिजनिकेति सत्यं परं न कारणकोटौ प्रमात्वनिश्चयः प्रविष्टः, प्रमा प्रमानिष्ठप्रामाण्य-निश्चयश्च विभिन्नौ अप्रमाज्ञानेऽपि प्रामाण्यनिश्चयो भवितुमर्हति, समर्थप्रवृत्त्या प्रमा अपेक्ष्यते न तु तन्निष्ठप्रामाण्यस्य निश्चयः, समर्थप्रवृत्त्या च प्रामाण्यनिश्चयो जायते न तु प्रमा जायते प्रमा प्रमाणाधीनैव ।

बहुवित्तव्ययायाससाध्यप्रवृत्तौ एतावान् विशेषः, अर्थनिश्चयसत्त्वे अप्रामाण्य-संशये प्रतिबन्धके सत्यपि उत्कटरागाद्युत्तेजकवशाद् अल्पायासव्ययसाध्ये कर्मणि प्रवृत्ति-र्जायते, प्रतिबन्धके बलवति अप्रामाण्यनिश्चये तु सति अल्पायासव्ययसाध्येऽपि प्रवृत्तिर्न जायत इति तु उक्तप्रायमेव ।

तादृशाप्रामाण्यसंशये तु प्रतिबन्धके सति जायमाना प्रवृत्तिः सकम्पप्रवृत्तिः परीक्षार्थप्रवृत्तिर्वोच्यते, बहुवित्तव्ययायाससाध्ये तु तादृशव्ययायासवैयर्थ्यभिया उत्कटरागः प्रेक्षावतो न जायते, तेन च तत्र अप्रामाण्यसंशयोऽपि प्रतिबन्धको भवति, तेन च तत्र प्रतिबन्धकस्य अप्रामाण्यसंशयस्य निरासार्थं प्रथममेव प्रामाण्यं विनिश्चित्य प्रेक्षावन्तः पूर्वं वर्तन्ते, प्रवृत्तेः प्राक् समर्थप्रवृत्तिजनकत्वेन प्रामाण्यानुमानं न संभवतीति क्वचित्स्वीयाभ्यासवशात् कुत्रचित् समर्थप्रवृत्तिसाजात्येन अन्यत्र च कृतकार्यपुरुषसादृश्यात् प्रामाण्यनिश्चयो जायते । तावतैवाभ्यासादेः स्वतः प्रामाण्यवादप्रवादः । तत्र सत्यं निश्चितप्रामाण्यकादेव अर्थनिश्चयात् प्रवृत्तिः परं प्रामाण्यनिश्चयस्य न कारणकोटौ प्रवेशः, किन्तु अप्रामाण्यग्रहानास्कन्दितत्वस्यैव । अन्वयव्यतिरेकव्यभिचारवारकविशेषणस्यैव कारणकोटौ निवेशात् । अधुना भाषणालोचनया लेखकलेवरो वर्द्धते काठिन्यञ्च विषयस्य समापततीति संक्षेपेणैव विषयपरिचयाय प्रयते ।

## इयं वस्तुस्थितिः

( १ ) ज्ञानमेव प्रकाशः सर्वव्यवहारप्रवर्तकः, ज्ञानस्यापि स्वविषयानाश्वासे कथं व्यवहारः प्रवर्तताम् इति ज्ञानस्य स्वाभाविकः स्वविषयाव्यभिचारः । तदेव च प्रामाण्यम्, इति स्वतः प्रामाण्यवादिनः, अतोऽप्रामाण्यमेव आगन्तुककारणवशादवसेयम्, स्वविषयाश्वासवशात् प्रवर्तन्ते जनाः । ज्ञानस्य स्वविषयाश्वासे च प्रामाण्यनिश्चयः, अतः सर्वत्र प्रवृत्तौ प्रामाण्यनिश्चयः कारणम् ।

( २ ) अन्ये तु सत्यं ज्ञानं प्रकाशो व्यवहारप्रवर्तकश्च, विषयप्रकाशमात्रेण व्यवहारं प्रवर्तयति न तु स्वगतस्य विषयाव्यभिचारस्य प्रामाण्यस्य वा निश्चयमपेक्षते; किन्तु स्वस्मिन् विषयव्यभिचारज्ञानस्य अप्रामाण्यज्ञानस्य वा सत्तायां न स्वविषयव्यवहारं प्रवृत्तिं वा जनयति, तथा च अर्थनिश्चयः स्वविषयाप्रामाण्यज्ञानस्य अभावमपेक्ष्य प्रवर्तयतीति ब्रुवते । अत्र च ज्ञानस्याभावो बहुत्र सुलभो भवति, प्रथममते प्रामाण्यनिश्चयमपेक्षत इति निश्चयो न सुलभः परं ज्ञानस्य स्वभाववर्णनात् ज्ञानमिव सुलभो भवति ।

द्वितीयपक्षे प्रामाण्यं सर्वत्र नापेक्ष्यते इति परतः प्रामाण्यम्, प्रथममते ज्ञानस्य स्वाभाविकं प्रामाण्यमिति स्वतः प्रामाण्यम् । अत्र द्वयोरनुभवयोः सूक्ष्मतमो भेदः, न कश्चिद् वक्तुमर्हति अयमेव समीचीनो नापर इति, तत एव मतद्वयम्, अन्येषां दोषाणां प्राय उभयोर्मते वारणम् । निपुणः कश्चिदालोचकः उभयोः कार्यकारणभावादिषु गौरवलाघवयोरेव पर्यवसानमाप्स्यति ।

## स्वतो ग्रहणम्

ग्रहणं ज्ञानं ग्राह्यत्वं ज्ञेयत्वम्; ग्राहकत्वं ज्ञापकत्वमित्यादिविषयेऽत्र समानार्थकं बोध्यम् । यद्यपि न्यायग्रन्थादिषु सामग्रीघटितं स्वतस्त्वादीनां लक्षणमुपलभ्यते, प

तत्समन्वये कठिनमिति प्रबवोधसारल्याय निष्कृष्य पर्यवसितमेवोपपाद्यते । ज्ञानस्य यज्ज्ञानं तत् तद्गतस्य प्रामाण्यस्य अप्रामाण्यस्य वा ज्ञानं भवेत् तदा स्वतो ग्रहणमित्युच्यते। बौद्धनये ज्ञानस्य ज्ञानं स्वसम्वेदनमनुमानादिकञ्च । तन्मते उत्पत्तौ ज्ञानस्य स्वतोऽप्रामाण्यमिति प्रागेव वर्णितम् । स्वसम्वेदनम् अनुमानं वा ज्ञानविषयकं ज्ञानं तदेव ज्ञानस्वभावाप्रामाण्यविषयकमपि भवतीति अप्रामाण्यस्य स्वतो ग्रहणमुच्यते । यदा तु ज्ञानसामग्री स्वसम्वेदनसामग्री अनुमानसामग्री वा अर्थादुत्पन्नत्वस्य अर्थाकारत्वस्य अभ्यासापन्नत्वस्य समर्थप्रवृत्तिजनकत्वादेर्वा अनुसन्धानादेः सम्वादादिना वा समवहिता भवति, तदा ज्ञानस्य ज्ञानं ज्ञानगतप्रामाण्यविषयकं भवति । तेन च विभिन्नसामग्रीग्राह्यतया प्रामाण्यस्य परतो ग्रहणमुच्यते । सौगतदर्शने अप्रामाण्यस्य स्वतो ग्राह्यत्वे प्रामाण्यस्य च परतो ग्राह्यत्वे बौद्धग्रन्थसंवादवाक्यानि प्रागेव प्रपञ्चितवानस्मीति नाधिकं लिखामि, किन्तु प्रत्यक्षलक्षणपरीक्षान्ततत्त्वसंग्रहपञ्जिकायां किञ्चित्स्फुटं प्राप्यत इति सूचयामि । बौद्धमते प्रत्यक्षस्य प्रामाण्यम् भ्रान्तत्वघटितन्तत्तत्रोपपादितम् । प्रवृत्तेः प्राग् अभ्रान्तत्वस्य ग्रहणं न भविष्यतीत्याशङ्कितम् । अभ्यासदशापन्ने ज्ञाने तु प्रथममपि अभ्रान्तत्वनिश्चयः सम्भवतीति समादधता जन्मान्तरीयोऽप्यभ्यासः प्रतिपादितः । अभ्यासापन्ने च ज्ञाने पूर्वज्ञानसाजात्यलिङ्गेन प्रामाण्यस्यानुमानं भवतीति वाचस्पतिवचनं प्रागुदाहृतं विद्यते । अन्यत्र पञ्जिकायामपि साजात्यलिङ्गस्योपपादनमस्ति । अत्र च विषये प्रस्तुतभाषणस्य भ्रमः, येन अभ्यासदशापन्ने आनुमानिके च ज्ञाने स्वतो ग्रहणमिति पूस्तकेषूपलभ्यसौगतदर्शनमनियतवादीति राद्धान्तं प्रकटयति, परम् अभ्यासदशापन्नज्ञाने साजात्यलिङ्गस्य ग्रन्थोक्तस्य नानुसन्धानं करोति । आनुमानिके ज्ञाने तु 'प्रतिबन्धवशात् प्रामाण्यमिति' ग्रन्थोक्ते प्रतिबन्धवशात् पदस्य समन्वयं न विदधाति । प्रत्यक्षलक्षणपरीक्षान्तपञ्जिकया प्रामाण्यनिश्चयो न सर्वत्र प्रवृत्तौ कारणमित्यपि नैयायिकवद् बौद्धमतं निःसरतीति बोध्यम् ।

## प्रामाण्यस्य स्वतो ग्रहणम्

मीमांसकाः प्रामाण्यस्य स्वतो ग्रहणम् अप्रामाण्यस्य च परतो ग्रहणमिति ब्रुवते तेषां प्रामाण्यस्य ज्ञानस्वभावत्वाद् यद् यज्ज्ञानस्य ज्ञानं तत्तत्तद्गतप्रामाण्यविषयकमिति नियमाज्ज्ञानसामग्र्या गृह्यत इति ज्ञानत्वमिव स्वाभाविकं प्रामाण्यं स्वतो ग्राह्यमुच्यते । यदि ज्ञानस्य ज्ञानसामग्र्याम् अप्रामाण्योत्पादकदोषस्यानुसन्धानम् अन्यादृशो वा दोषः, असमर्थप्रवृत्तिजनकत्वादेरनुसन्धानं वा संसृज्यते तदा अप्रामाण्यग्रहो भवति, ज्ञानग्रहसामग्रीभिन्नाद् दोषाद् गृह्यमाणतया अप्रामाण्यस्य परतो ग्राह्यत्वमिति स्वीकुर्वते । ज्ञानस्य ज्ञानन्तु मतभेदेन त्रिविधम् । व्यवसायः प्रथमं ज्ञानं तस्य मानसप्रत्यक्षं पश्चाज्जायमानमनुव्यवसायनाम नैयायिकानामिवेति मुरारिमिश्रमतम् । प्रथममेव ज्ञानं घटादि-

विषयविषयकं सत् स्वविषयकमपि भवतीति स्वप्रकाशवादिप्रभाकरमतम्। ज्ञाततालिङ्गिका अतीन्द्रियज्ञानविषयिणी अनुमितिर्ज्ञानस्य ज्ञानमिति भट्टमतम्।

इदमवधेयम्—बौद्धमते प्रदर्शितमेतत्प्रसङ्गे अनुमानं सामान्यं ज्ञानविषयकं प्रायः सर्वमते संभवति। एतत्तु ज्ञाततालिङ्गकमन्यत्।

पीतशङ्खभ्रमस्थले तु इत्थं पीतिमदोषात्प्राक् यच्छंखस्य शुक्लता प्रत्यक्षं लौकिकसन्निकर्षजन्यं न कस्यापि प्रतिवध्यम्। एवं पीतिमदोषाद् यच्छंखपीतप्रत्यक्षं तदपि दोषविशेषजन्यं न कस्यापि प्रतिवध्यम्। मुक्तावल्यादौ प्रसिद्ध एतादृशः प्रतिवध्यप्रतिबन्धकभाव इति नात्र प्रपञ्चयामि। नानयोर्बाध्यबाधकता, परं पीतिमप्रत्यक्षस्य दोषविशेषजन्यत्वज्ञानद्वारा अप्रामाण्यनिश्चयात् पीतिमार्थितया न प्रवृत्तिः शुक्लार्थितया तु प्रवृत्तिरिति सिध्यति। बौद्धमतस्य स्वसंवेदनं ज्ञानं नैयायिकानुव्यवसायसदृशमिति व्यवहारः। ज्ञानविषयकज्ञानत्वेन सादृश्यमपि विभर्ति, परं धर्मोत्तराचार्यलेखेन नीलादिबोधकालमेव चैतस्तया संवेदनं वर्णितम्, अनुव्यवसायश्च व्यवसायात् पश्चात्। स्वसंवेदनन्तु व्यवसायसमकालिकमिति भेदोऽप्यनुसन्धेयः। तथा च प्रभाकरमतस्य अधिकं साम्यमिति।

## ३३ वर्ष १ संख्या २४।१०।६१ईशाब्दे प्रकाशितो लेखः-परतो ग्रहणम्

ज्ञानस्य ज्ञानं मानसप्रत्यक्षात्मकम्, अनुव्यवसायः, कुत्रचिदनुमितिरपि, अन्यदपि बहुविधं शब्दात्मकमपि, किमुत इदं ज्ञानं प्रमा न वेति संशयात्मकमपि ज्ञानस्य ज्ञानम्। बौद्धमतेऽपि संशयात्मकं ज्ञानस्य ज्ञानमिति सन्दर्भं प्राक् प्रदर्शितवानस्मि। ज्ञानविषयकं सदपीदं सर्वं ज्ञानगतप्रामाण्यविषयकं न भवति, किन्तु ज्ञानान्तरं तज्ज्ञानसामग्र्यां समर्थप्रवृत्तिजनकत्वसमर्थप्रवृत्तिजनकज्ञानसाजात्यस्वीयाभ्यासवशसम्पन्नार्थविशेषनिश्चयादिसमवहितं भवति तदा ज्ञानस्य ज्ञाने प्रामाण्यमपि विषयो भवति, तथा च ज्ञानसामग्रीभिन्नकारणग्राह्यतया परतः प्रामाण्यस्य ग्रहणम्। एवं ज्ञानस्य ज्ञानसामग्रीकाले दोषस्य विशेषादर्शनादेर्विफलप्रवृत्तिजनकत्वादेर्वा अनुसन्धानं संभवति तदा ज्ञानस्य ज्ञानं ज्ञानविषयकं सज्ज्ञानगताप्रामाण्यविषयकमपि जायते इति ज्ञानसामग्रीभिन्नग्राह्यतया अप्रामाण्यस्यापि परतो ग्राह्यत्वमिरि नैयायिका ब्रुवते। यद्यज्ज्ञानस्य ज्ञानं तत्तज्ज्ञानगतप्रामाण्यविषयकमपि भवतीति न नियन्तुं शक्यते इदं ज्ञानं प्रमा न वेति ज्ञानमपि ज्ञानस्य ज्ञानं न च तेन प्रामाण्यं निश्चीयते।

प्रस्तुतभाषणश्च सप्तमपृष्ठे प्रथमं ज्ञानं व्यवसायस्तस्य मानसप्रत्यक्षात्मकमनुव्यवसायो व्यवसायं गृह्णन् तद्विषयविशेषणं विशेष्यं वैशिष्ट्यनामकं विशेषणविशेष्ययोः सम्बन्धश्च गृह्णाति तत्किमवशिष्यते प्रामाण्यस्य? येन तत्र गृहीतं भवत्यनुव्यवसायेनेति आगृह्णाति। तत्तु मुक्तावल्यादौ प्रसिद्धाया मानसप्रत्यक्षप्रक्रियायाः प्रतिबध्यप्रतिबन्धकभावप्रक्रियाया अनवबोधमूलम्। तदित्थं बोध्यम्—इदं रजतमिति व्यवसायः। इदं

विशेष्यकं रजतत्वप्रकारकं समवायसंसर्गकञ्च प्रत्यक्षम्। व्यवसायेन तद्गतधर्मेण च साकं मनसो लौकिकः संसर्गः। तेन व्यवसायं तद्गतञ्च इदंविशेष्यकत्वं रजतत्वप्रकारकत्वं तादृशसंसर्गकत्वञ्च विषयीकुर्वन् अनुव्यवसायः प्रत्यक्षं भवति। विशेष्यकत्वमिदंनिष्ठविशेष्यतानिरूपकत्वं रजतत्वनिष्ठप्रकारतानिरूपकत्वं तत्संसर्गता निरूपकत्वञ्च ज्ञाननिष्ठं गृह्णाति। समूहालम्बनादभेदवारणाय ज्ञाननिष्ठयोर्विशेष्यकत्वप्रकारकत्वयोरपि निरूप्यनिरूपकभावो भवति। इदं रजतत्वं संसर्गञ्च बाह्यविषयं लौकिकसन्निकर्षाभावात् मनो न प्रत्यक्षं कर्तुमीष्टे, विशेष्यादिकं च पूर्वोक्तं बाह्यं विषयितासम्बन्धेन व्यवसाये वर्तते, परं स्वसंयुक्तसमवेतविशेषणता लौकिकः सन्निकर्षो न तु स्वसंयुक्तसमवेतविषयता, किन्तु ज्ञानलक्षणा नाम अलौकिकः सन्निकर्षः, तेन च संसर्गेण जायमानं प्रत्यक्षमुपनीतभानमुच्यते, तच्च दुर्बलं लौकिकप्रत्यक्षानुमित्यादेः प्रतिबध्यं भवति। तया रीत्या जायमानं ज्ञानं प्रतिबध्यापि संशयो जायते। इदं रजतमिति भ्रमव्यवसायस्यानुव्यवसायोऽपि तादृशसंसर्गेण इदं रजतत्वं तयोः सन्निकर्षञ्च विषयीकरोति। यद्यपि बाह्ये पुरोवर्तिनि रजतत्वस्य संसर्गो नास्ति, परं व्यवसाये संसर्गस्तु रजतत्ववदवभासते। विषयितया व्यवसाये संसर्गस्तु बहिरविद्यमानोऽपि भासते स च अलीकोवास्तु अन्यत्र प्रसिद्धो वा, व्यवसाये वर्तमानञ्च वस्तु अनुव्यवसायेऽपि उपनीतमानविधया भासते। पुरोवर्तिनि रजतत्वस्य यो वस्तुभूतः संसर्गस्तेन सह मनसो न लौकिकः सन्निकर्षः, यस्तु संसर्गः स तु न वास्तवमेव बाह्यं गृह्णाति। अविद्यमानमपि ज्ञाने प्रतिभासमानं गृह्णाति ततो नानुव्यवसायो विशेषणविशेष्ययोः सम्बन्धं विषयीकुरुते। प्रामाण्ये च स अपेक्ष्यते। तस्मान्नानुव्यवसायात् प्रामाण्यग्रहणम्। विशेषणविशेष्ययोः संसर्ग एव वास्तवं वैशिष्ट्यं गण्यते। भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारकत्वन्तु भ्रमज्ञानेऽप्यस्ति। तत्रापि कश्चित्संसर्गो भासते। तस्य प्रतियोगितया विषयः स प्रकारो भवति। तावता न प्रामाण्यं पर्यवसीयते। भासमानवैशिष्ट्यप्रतियोगिनः प्रकारत्वेऽपि प्रकारता न रजतत्वादिवद् वस्तुधर्मः, किन्तु निरूपकत्वसम्बन्धेन ज्ञाननिष्ठो विषयविषयिणोः सम्बन्धविशेषः, अत एव चक्षुरादेर्न विषयः, नापि स्वमविषयीकुर्वाणस्य व्यवसायस्य स्वगतः प्रकारकत्वादिविषयः, किन्तु व्यवसायं विषयीकुर्वाणस्य अनुव्यवसायस्य व्यवसायगतं प्रकारकत्वादिविषयः। तेन च स्वरूपसम्बन्धविशेष इति कैनचिदुच्यते, अन्यैः च विषय विषय्युभयरूपतया व्यवस्थाप्यत इति त्वन्यत्।

प्रमात्वसाध्यकानुमितिस्तु वास्तवं वैशिष्ट्यं गृह्णाति। सा हि प्रमात्वव्याप्यवत्ता ज्ञानाज्जायते प्रमात्वव्याप्यन्तु प्रमात्वाभावस्य विरोधि नैकत्र स्थातुं शक्नुतः। तथा च यत्र प्रमात्वाभावोऽप्रामाण्यं वा कथमपि अंशेन वा वर्तते तत्र प्रमात्वं न साधयिष्यति। प्रमात्वञ्च विशेष्यावृत्त्यन्यप्रकारकत्वमिति विशेषणविशेष्ययोः सत्यसंसर्गविषयक एव ज्ञाने स्थास्यति।

## ३३ वर्षे २ संख्या ३०।१०।६१ ईशाब्दे प्रकाशितः

अनुव्यवसायादेरप्रामाण्यविषयकत्वेऽनुभवोऽपि अनभ्यस्ते विषये कुतश्चिद् ज्ञाने जाते चिरं विचारयन् ज्ञानमिदं प्रमा न वेति संदिग्धे ततः परीक्षायै प्रवर्तत इत्यनुभवः। अनुव्यवसायस्तु व्यवसायस्य द्वितीये तृतीये वा क्षणे, तेन चेत् प्रामाण्यस्य निश्चयस्तदा निश्चयस्य संशयप्रतिबन्धकतया इदं ज्ञानं प्रमा न वेति अनुभूयमानः संशयो नोदियात्, उदेति च संशयः तस्मान्नानुव्यवसायो ग्राहकः प्रामाण्यस्य।

प्रस्तुतभाषणं नवमपृष्ठे अनुव्यवसायादिना प्रामाण्यनिश्चयेऽपि इत्थम् अप्रामाण्यसंशयमुपपादयति, दोषशङ्कया पूर्वं प्रामाण्यस्य अनिश्चये अप्रामाण्यसंशय उदेति, यत्र च प्राक् प्रामाण्यस्य निश्चयस्तदनन्तरं प्रतिबन्धकात् तन्नाशे संशयः संभवति इत्यादि तत्रावलोकनीयमास्ते।

## अत्र इत्थं संक्षेपेण बोध्यम्

भ्रमज्ञाने प्रमात्वव्यभिचारे ज्ञानत्वे गृहीते ज्ञानज्ञानेन ज्ञानत्वस्य ग्रहणात् साधारणधर्मदर्शनविधया सर्वत्र प्रमात्वसंशयसंभवात् संदेहेन प्रमात्वाऽनिश्चये कुत्रापि प्रमात्वनिश्चयो न स्यादिति परतो ग्रहणमेव फलितम्। यदि च संशयकारणान्तरस्याभावान्न सर्वत्र अप्रामाण्यशङ्कासंभवः, तत्र च स्वतः प्रामाण्यनिश्चयः स्थानं लभेतेत्युच्यते तर्हि पूर्वं प्रामाण्यनिश्चयः पश्चाच्च संशयवशात् तस्योत्सारणं भ्रमत्वकल्पना वेति विडम्बनात् प्रथमं प्रामाण्यनिश्चयो न जायते इत्येव सम्यक्। किञ्च ज्ञानत्वरूपसाधारणधर्मदर्शनेऽपि न भवतां मतेन सर्वत्राप्रामाण्यशङ्का तदा चिन्तामणिविद्योतितश्चरमज्ञानप्रामाण्यसंशयाभावः खण्डितुं ११ पृष्ठान्ते कथं प्रक्रम्यत इति चिन्तनीयम्। प्रतिबन्धात् प्रामाण्यनिश्चयस्य नाश इति तु न सम्यगिति तु प्रागप्युक्तवानस्मि' उत्पत्तेर्ज्ञप्तेर्वा विरोधि प्रतिबन्धकमुच्यते न तु नाशकम्। अस्तु नाशक एवात्र प्रतिबन्धकोऽत्रेत्यपि न संभवति नाशकोत्पत्तिकारणाभावात्, अप्रामाण्यसंशयोपपादनाय हि भवतां प्रामाण्यनिश्चयविनाशस्य प्रयासः। तत्र च धर्मितया भानाय पूर्वज्ञानस्य अपेक्षा, अन्यथा धर्मिणोऽभावादेव संशयो न स्यात्। तदा पूर्वं विनाशचिन्ता इष्टविरोधिनी। अपि च प्रामाण्यनिश्चयस्य प्रतिबन्धकस्य सत्त्वेन अप्रामाण्यस्य प्रतिबन्धकस्य सत्त्वेन अप्रामाण्यग्रहस्य विरोधिन उत्पत्तेरेवासंभवः। किमपि नूतनं प्रतिबन्धकं शक्तिस्वरूपं वा परिकल्प्य निर्वाहप्रयासे स्वतः प्रामाण्यनिश्चयपुराग्रह एव स्फुटीभवेत्।

## परतः प्रामाण्ये अनवस्था विचारः

परतः प्रामाण्यस्य ग्रहणे प्रामाण्यग्राहकं यज्ज्ञानं तस्यापि ज्ञानान्तरेण प्रामाण्यस्य ग्रहणे एवं पुनरग्रे व्यक्ता अनवस्था। तत्परिहाराय इत्थं विचारणीयम्। यत् प्रामाण्य-

ग्राहकं ज्ञानं तस्य सर्वस्य पुनः प्रामाण्यनिश्चयस्य का आवश्यकता ?। यथाऽनिश्चित-प्रामाण्यकं निश्चयं ज्ञानं प्रवृत्तिं जनयति, यथा वा अनिश्चितप्रामाण्यको व्याप्तिनिश्चयोऽनुमितिं जनयति, तथा प्रामाण्यमपि निश्चेष्यति। इत्थमेव अप्रमाणोऽपि विकल्प-निश्चयः स्वजनकीभूतनिर्विकल्पकस्य प्रामाण्यं व्यवस्थापयति इति सौगतसरणिः। तर्हि प्रथमज्ञानस्य कथं प्रामाण्यनिश्चयोऽपेक्ष्यत इति वाच्यम् प्रवृत्त्यादिप्रतिबन्धकस्य अप्रामाण्यसंशयस्यापसारणायेत्युक्तत्वात्। एवं तर्हि प्रामाण्यग्राहकज्ञानेष्वपि अप्रामाण्य-शङ्का संभवति। संभवतु नाम। न शङ्कासम्भावनाप्रतिबन्धिका अपितु जाता अप्रामाण्य-शङ्का। अवश्यञ्चैतत् स्वतःप्रामाण्यवादिनाऽपि एष्टव्यम्। ज्ञानत्वरूपसाधारणधर्म-दर्शनविषया अप्रामाण्यशङ्कायाः सर्वत्र सम्भवात् सत्याञ्च तस्यां प्रामाण्यनिश्चयस्या-सम्भवात् क्वचिदपि स्वतःप्रामाण्यं स्थानं न लभेत। सर्वत्र शङ्का नोदेतीति यत्र न शङ्का तत्र प्रामाण्यनिश्चयस्यस्य अनपेक्षणात् कथमनवस्था ?। अभ्यासदशापन्ने आनु-मानिके फलज्ञाने च प्रथममेव कारणसम्पत्त्या न अप्रामाण्यशङ्केति प्रथममेव उक्तवा-नस्मि। एवं फलज्ञानेऽपि नाप्रामाण्यशङ्का सम्भवतीति न फलज्ञानं परीक्ष्यत इत्यादिना न्यायबौद्धग्रन्थेषूपवर्णितमास्ते। अप्रामाण्यग्रहानास्कन्दितो व्याप्तिनिश्चयो विशेषदर्शन विषया विपरीतकोटेः प्रतिबन्धक इति न प्रमात्वानुमितावप्रामाण्यशङ्का सम्भवतीत्यु-पर्यवोचमेव, अतः प्रस्तुतभाषणस्य चतुर्दशपृष्ठे अनुमित्यादावप्रामाण्यशङ्कासमाधानं निष्कारणमेव।

बौद्धदर्शनज्ञानप्रक्रियाप्रेक्षणेन सर्वदर्शनसंग्रहादौ प्रदर्शित एव सौगत-सिद्धान्तः सिद्ध्यति। न कस्यचिल्लेखेन प्राचीनस्य अर्वाचीनस्य सिद्धान्तो भवति, किन्तु येन प्रकारेण मौलिकसिद्धान्ताः समन्वयं यन्ति, स्वतः प्रामाण्यस्यार्थोयत्प्रमाण-ज्ञानं स्वप्रामाण्याय अन्यस्य अपेक्षां न करोति, नैवं बौद्धदर्शनप्रक्रियायां संभवति 'द्विविधं हि प्रमाज्ञानं तत्र' एकं हि निर्विकल्पकं प्रत्यक्षम्, तस्य पारमार्थिको विषयः स्वलक्षणमङ्गीक्रियते, परं स्वजन्यविकल्पनिश्चयमन्तरा न प्रवृत्त्याद्युपयोगि अलीव कल्पं तत्स्वीक्रियते। प्रामाण्यादिव्यवस्था च विकल्पनिश्चयेनैव तस्य। विकल्पनिश्च-यश्चाप्रमाणं ज्ञानम्। द्वितीयं प्रमाज्ञानमनुमितिः। तस्या विषय एव कल्पितं सामान्यम्। कीदृशी तस्याः स्वतःप्रमाणता। प्रतिबन्धवशात् स्वलक्षणाध्यवसायवशाद्वा तस्याः प्रामाण्यं वर्ण्यते। अध्यवसायश्चाप्रामाण्यम्, अतो बौद्धमते न कुत्रापि स्वतःप्रामाण्यम्, न वा प्रामाण्यनिश्चयस्य प्रवृत्तिमात्रं प्रति कारणता प्रामाण्यस्य ग्राहकं ज्ञानमधिकम-प्रमाणमेव, अतोऽत्र बौद्धग्रन्थेषु स्वतःप्रमाणमिति वचनं तत्र प्रतिबन्धकवशाद् अप्रामाण्यसंशयो नोदेतीति तात्पर्यम्। व्याख्यानञ्च तस्य तात्पर्यटीकोक्तवाचस्पति वचसा न्यायदर्शनानुगामिनी। निष्कर्षेऽस्मिन् विचारणीयं सुधीभिः। संभाव्यमाने वैपरीत्ये ज्ञानप्रक्रियासमन्वयसमलङ्कृतं तदनुसारि स्वतः प्रामाण्यादि परिभाषा

परिस्फोरितं कृपया सूचयन्तु। एवं प्रामाण्यवादस्य सरलः परिचयो यथा सरलया संक्षिप्तया च वाचा अत्र विहितस्तथाऽन्यत्र न लप्स्यते। प्रस्तुतभाषणालोचनया तु क्वचित्काठिन्यं स्थानमापत्। अपदार्थनिरूपणं न सहते मे चेतः। शास्त्ररक्षाधिया गुरुणा श्रमेण अध्यापितः अपदार्थप्रचारस्य सहनं गुरुं प्रतिकृतघ्नता। अन्यथा तु विदुषामुपरि श्रद्धा, विशेषेण च परिचितवैदुष्यतत्सहचरितगुणगणे प्रस्तुतव्याख्यातरि, विद्यावतां पूजा तद्वचोव्याख्याविचाराभ्यामिति।

वैदुष्यसेवाव्रतमादधानो व्याख्याविचारावतिसेवमानः।
तत्पूर्तिहेतोः कालतं ददानस्तेभ्यो नमो वाचमयं ब्रुवाणः॥

---

अयोध्या संस्कृतं पत्र १५।८।१९६१ ई० संख्या ३५ प्रकाशित संस्कृतमय।

# प्रामाण्यवाद का सरल संक्षिप्त परिचय

सम्पादकसूचना—इस लेख की सूचना ३० तीसवीं संख्या में दी गई है। यह प्रामाण्यवाद अधिकतर विद्वानों के लिये भी दुर्बोध है, अभी तक इस विषय के मर्मज्ञ भारत में हैं यह विशेष हर्ष का विषय है, इस लेख में बौद्धदार्शनिकों के विचार आलोचना में लाये जायेंगे, इसमें नालन्दा विश्वविद्यालय के अध्यक्ष श्री सातकड़ीमुखोपाध्याय जी के विचार पूर्वपक्ष में रखे गये हैं, लेकिन लेखक का लक्ष्य बौद्धदर्शन की आलोचना ही है, इस प्रकार यह लेख स्वतन्त्र भी कहा जा सकता है; भारत के बड़े विद्वान् इसको पढ़ने के लिये आमन्त्रित किये जाते हैं।

प्रामाण्यवाद की अधिक कठिनता का प्रवाद चिरकाल से प्रसिद्ध है, इसीलिये मण्डनमिश्र के परिजनों की विद्वत्ता की प्रशंसा—स्वतः प्रमाण है, परतः प्रमाण है, ऐसी वाणी जहाँ सुगीआं बोलती हैं इस प्रकार की जाती है, प्रायः बहुतेरे दर्शनपुस्तकों में इसका बहुत संक्षेप से परिचय आता है, लेकिन वह भी काठिन्यदोष से अपमानित होता

है और छोड़ा जाता है, प्रामाण्यवाद नाम से एक ग्रन्थ का हिस्सा है वह ग्रन्थ रूप से व्यवहृत होता हुआ दुर्बोध ही समझा जाता है, सामान्यनिरुक्ति आदि के परिष्कार की अपेक्षा परिष्कार की कठिनाई को नहीं रखता तो भी विषय की ही कठिनाई अधिक कही जाती है, इसीलिये व्याख्यान बरात के शास्त्रार्थ और विश्वविद्यालयों के गवेषणाविभागों में इसकी चर्चा नहीं सुनी जाती, विदेशीय संस्कृत विद्वानों में तथा विदेशीय दर्शन में इसकी छूत नहीं है ऐसा मालूम पड़ता है, क्योंकि विदेशीय विद्वान् जिसकी चर्चा करते हैं उसी को इस समय के भारतीय विद्वान् जानने लायक वस्तु मानते हैं, इस प्रकार प्रचार न होने से तथा कठिनता के कारण यह पत्रिकाओं में प्रकाश करने लायक नहीं है इस दृष्टि से परमप्रिय इस वस्तु की उपेक्षा ही कर रहा था, किन्तु इस साल १९६१ ई० वाराणसी संस्कृत विश्वविद्यालय में बौद्ध दर्शन परिषद् का अधिवेशन हुआ, उसके प्रधान विद्या और वय से वृद्ध कार्य और मन से नौजवान नवनालन्दा विहार के अध्यक्ष श्री सातकड़ी मुखोपाध्यायजी का प्रामाण्यवाद को लेकर निर्भीक गवेषणात्मक मुद्रित भाषण हुआ। उस बड़े विद्वान् से निष्कण्टक मार्ग बना देने पर चलना चाहता हूँ, उनकी अपेक्षा भी सरलता के लिये अधिक सावधान होता हूँ। कठिन भाषा तथा—विषय को छोड़ देता हूँ।

परिषद् पत्रिका राष्ट्र भाषा परिषद् पटना जुलाई १९६२ ई० में हिन्दी में इसका प्रकाशन है, देखने योग्य सरल भी है किन्तु मुखोपाध्याय जी के आलोचनीय भाषण स्थलों का उसमें निर्देश नहीं है, उनसे विशेष प्रभावित सम्पादक उनके विरोध में लेखों को नहीं प्रकाशित कर पाते थे, इसलिये फिर हिन्दी की जाती है, ऐसे विषयों का हिन्दी में उतरना हिन्दी को समृद्ध करना है इसलिये यह प्रयास है।

## विषयपरिचय

ज्ञान साधारणरूप से दो होता है, १ प्रमा २ अप्रमा, प्रमा में प्रमात्व धर्म रहता है उसका प्रामाण्य, यथार्थता, सत्यता, वास्तविकता इत्यादि शब्दों से व्यवहार होता है, उसी तरह अप्रमा में अप्रमात्व रहता है, उसको अप्रामाण्य, अयथार्थता, असत्यता, मिथ्यात्व आदि शब्दों से कहते हैं, जैसे ब्राह्मण और क्षत्रिय दोनों मनुष्य हैं किन्तु ब्राह्मण क्षत्रिय नहीं है, उसी प्रकार प्रमा और अप्रमा दोनों ज्ञान हैं किन्तु प्रमा अप्रमा

नहीं तथा अप्रमा प्रमा नहीं है, ब्राह्मणत्व क्षत्रियत्व के ऐसा प्रमात्व और अप्रमात्व का विरोध है, ब्राह्मणत्व क्षत्रियत्व जैसे मनुष्यत्व का समानाधिकरण तथा व्याप्य है वैसे प्रमात्व अप्रमात्व ज्ञानत्व का समानाधिकरण और व्याप्य है, मनुष्य सामान्य को पैदा करने वाली सामग्री ब्राह्मण और क्षत्रिय को पैदा करती है क्योंकि ब्राह्मण क्षत्रिय भी मनुष्य है; उसी प्रकार ज्ञान सामान्य को पैदा करने वाली सामग्री अप्रमा और प्रमा दोनों को पैदा करती है किन्तु अप्रमा को पैदा करने वाली सामग्री प्रमा को नहीं जन्मा सकती। इस प्रकार प्रमा और अप्रमा को पैदा करने वाली एक सामग्री नहीं हो सकती, इन दोनों की ज्ञानविशेषसामग्री है ज्ञानसामान्यसामग्री नहीं है, जैसे पहले क्षत्रिय पैदा होकर पीछे ब्राह्मण नहीं होता उसी प्रकार पहले प्रमा पैदा होकर वही ज्ञान पीछे अप्रमा नही बनता, प्रमा या अप्रमा पैदा होकर वैसा ही रहता है, जैसे ब्राह्मण क्षत्रिय की उत्पत्ति के लिये मनुष्य उत्पादक सामग्री भी रहती है उसी प्रकार प्रमा अप्रमा की उत्पत्ति के लिये ज्ञानसामान्यसामग्री भी रहती है इसीलिये प्रमा अप्रमा ज्ञान है, दोनों की ज्ञान सामग्री समान हैं, उस ज्ञान सामग्री में किसी विशेष कारण के मिल जाने से प्रमा और किसी दूसरे के मेल से अप्रमा पैदा होती है, इस प्रकार ज्ञान सामान्य सामग्री से जिसकी उत्पत्ति होती है, उसका स्वतः उत्पाद कहा जाता है, तथा ज्ञान सामान्य सामग्री में किसी दूसरे के मिलने से जिसकी उत्पत्ति होती है उसका परतः उत्पाद कहा जाता है. जिस दर्शन का प्रमात्व ज्ञानसामान्यसामग्री से पैदा होता है दूसरी की अपेक्षा नहीं करता उसका स्वतःप्रमाण सिद्धान्त होता है, इसी प्रकार ज्ञान सामान्यसामग्री से अप्रमात्व की उत्पत्ति मानने पर स्वतः अप्रमाण सिद्धान्त है। इसी रीति से किसी का स्वतः प्रमाण और दूसरे का परतः प्रमाण सिद्धान्त होता है। अप्रमाण में किसी का स्वतः अप्रमाण और दूसरे का परतः अप्रमाण सिद्धान्त हो जाता है।

## उत्पत्ति में बौद्धमत

बाह्य सद् मानने वाले दो प्रकार से वस्तुओं को मानते हैं, और बौद्धों के अनुसार सभी जगह बुद्धिस्थ ही का भान होता है, बाह्य सद्वादी भी भ्रम स्थल में बुद्धिस्थ ही का भान मानते हैं बुद्धिस्थ ही बाह्य रूप से भासता है, जहाँ प्रमा स्थल में बाह्य की प्राप्ति होती है उस ज्ञान को यथार्थ मानते हैं, इस प्रकार बुद्धिस्थ वस्तु या वस्तु की वासना सभी प्रमा-भ्रमज्ञानों में कारण है, बाह्य वस्तु की प्राप्ति या बाह्य के

साथ इन्द्रिय सन्निकर्ष आदि जहाँ विशेष कारण आ जाते हैं वहाँ प्रमा ज्ञान होता है; इस रीति से सामान्यज्ञानसामग्री बुद्धिस्थ वस्तु से भ्रम या अप्रमा पैदा होती है, सामान्य ज्ञान की सामग्री से अतिरिक्त की अपेक्षानहीं करती इसलिये अप्रमाण का स्वतः उत्पाद हुआ, इसलिये स्वतःअप्रमाणज्ञान बौद्ध का सिद्धान्त हुआ। जहाँ सामान्यज्ञानसामग्री बुद्धिस्थ वस्तु के साथ बाह्य वस्तु का इन्द्रिय सन्निकर्ष है, बाह्य वस्तु की प्रापण योग्यता है, उन विशेष कारणों से प्रमा ज्ञान पैदा है, इसलिये परतः प्रमाण बौद्धदर्शन का सिद्धान्त है।

## यह तो समझना चाहिये

जैसी स्फुट प्रक्रिया यहाँ अप्रमा-प्रमा की दिखाई गई वैसी स्फुट प्रक्रिया बौद्ध दर्शन ग्रन्थों में नहीं मिलती, कारण है कि चिरकाल तक बौद्धदर्शन भारत से भगा दिया गया था; जैसे अन्य दर्शनों में संस्कृत विद्वानों का सम्पर्क हुआ, तर्कसंग्रह-मुक्तावली-वेदान्त परिभाषा वेदान्तसार आदि प्रक्रिया ग्रन्थों का आविर्भाव हुआ वैसा बौद्धदर्शन कर नहीं पाया, जैसे का तैसा स्थूल आकार तथा प्राचीन संक्षिप्त भाषा में ही रह गया। किन्तु मेरी दर्शायी प्रक्रिया के उपयोगी छिट-फुट पदार्थ जहाँ तहाँ अवश्य मिलते हैं। जैसे कि भ्रमस्थल में बुद्धिस्थ का भान होता है, सम्यक् प्रत्यक्ष स्थल में प्रत्यक्ष का अर्थ से उत्पन्न होना, ज्ञान का विषय स्वरूप होना, संवादक होना, प्रापक होना आदि। लिखा हुआ बौद्ध ग्रन्थों में मिलता है, सारूप्य का कारण वस्तु से उत्पन्न होना कहा गया है। इन सूचित सन्दर्भों से अप्रमा और प्रमा की सामग्रियों को अर्थ का नहीं रहना और रहना इत्यादि भिन्न बताया गया है, इसीलिये सर्वदर्शनसंग्रह और विवरणप्रमेय संग्रह आदि पुस्तकों में सौगतों का अप्रमाण स्वतः और प्रमाण्य परतः इत्यादि ठीक ही लिखा है, यद्यपि आपाततः तत्त्वसंग्रह के कुछ वचन विरुद्ध के ऐसा मालूम पड़े किन्तु उनको उत्पादपक्ष में न समझकर प्रामाण्य और अप्रामाण्य ग्रहण पक्ष का मानकर पढ़ने पर इस प्रदर्शित प्रक्रिया से विरोध नहीं मालूम पड़ेगा तथा तत्त्वसंग्रह के वचनों में भी परस्पर विरोध नहीं मालूम होगा, समन्वय स्फुट हो जायेगा। पहले सूचित मुखोपाध्याय जी का भाषण लिखता है कि सर्वदर्शन संग्रह में लिखा हुआ बौद्धमत बौद्ध ग्रन्थों में नहीं मिलता है, इसलिये भाषण इस प्रक्रिया को नहीं मानता। विवरण प्रमेय संग्रह को तो बिना देखे भाषण लिखा गया है।

## प्रामाण्य का स्वतः उत्पाद

पूर्वमीमांसक प्रामाण्य और अप्रामाण्य के उत्पाद की सामग्री का इस प्रकार विभाग करते हैं। ज्ञानों की सामान्य सामग्री से प्रामाण्य पैदा होता है, उस ज्ञान सामान्य सामग्री में दोष का मेल हो जाने से अप्रामाण्य पैदा होता है, दोष वाली ज्ञान सामग्री सामान्य सामग्री से भिन्न है उससे पैदा होने वाला अप्रामाण्य परतः हुआ, परतः अप्रामाण्य उनका सिद्धान्त है। प्रामाण्य ज्ञान की सामान्य सामग्री से पैदा हुआ और किसी की अपेक्षा नहीं करता अतः उनका स्वतः प्रमाण सिद्धान्त हुआ। यद्यपि प्रामाण्य की सामग्री में दोपाभाव का प्रवेश है नही तो दोष रहने पर अप्रामाण्य का उत्पाद होने लगे। तो भी प्रामाण्य का परत उत्पाद नहीं माना जाता, क्योंकि सम्पादक दोष है दोपाभाव उससे विलक्षण है। दोष भाव है दोपाभाव भाव नहीं है। प्रामाण्य सामग्री में दोपाभाव का सन्निवेश अप्रामाण्य के प्रतिबन्ध के लिये है, प्रामाण्य की उत्पत्ति के लिये नहीं है, अप्रामाण्य की सामग्री में पड़ा हुआ दोष प्रामाण्य का प्रतिबन्धक है, तो भी दोपाभाव प्रामाण्य का कारण नहीं है, अभाव या प्रतिबन्धक के अभाव को कारण नहीं माना जाता है। सामग्री में आया हुआ भी प्रतिबन्धकाभाव विपरीतों का विघटन अथवा अनुकूलों के संघटन से ही उपयोगी होता है, सम्पादक नहीं बनता, अभाव में सम्पादन शक्ति नहीं मानी जाती, इत्यादि और दूसरे भी समाधानों को करते हुए आचार्य उत्पत्ति में प्रामाण्य का स्वतस्त्व और अप्रामाण्य का परतस्त्व वर्णन करते हैं। इस पर यह युक्त है यह अयुक्त है इत्यादि विवेचन का इस लघु निबन्ध में अवसर नहीं है। इसलिये सूचित करके ही छोड़ देता हूं।

## इसके बाद वहीं २६।८।६१ ई० को ३६ संख्या में प्रकाशित

इन वर्णित प्रक्रिया से उत्पन्न होता हुआ ही प्रमाण अथवा अप्रमाण होता है, प ले प्रमाणत्व और अप्रमाणत्व से हीन ज्ञान पैदा होकर पीछे किसी कारण प्रमाण या अप्रमाण हो ऐसा किसी दर्शन की प्रक्रिया में नहीं है, तो भी खण्डन के अभिनिवेश में बहुत पुस्तकों में पहले प्रमाण है तो पीछे कैसे अप्रमाण होगा ? यदि पहले अप्रमाण है तो दूसरे के कारण कैसे प्रमाण होगा ? स्वभाव या शक्ति का परिवर्तन नहीं संभव है। अपने कारणों से ही प्रमाण या अप्रमाण पैदा होता है, इत्यादि बहुत कहा हुआ है,

वह वास्तविक किसी दर्शन का सिद्धान्त नहीं समझना चाहिये, किन्तु उत्पन्न ज्ञान में प्रामाण्य और अप्रामाण्य का आधान होता है ऐसा अपने मन से ही कल्पना करके शास्त्रार्थ बढ़ाने के लिये दोषजाल से भर देते हैं ऐसा समझना चाहिए। इसी प्रकार प्रस्तुत मुखोपाध्याय जी के लेख में भी चतुर्थ पृष्ठ पर तत्त्वसंग्रह की कारिका के उद्धरण के साथ लिखा हुआ है। प्रामाण्य या अप्रामाण्य की शक्ति व्यक्तिभेद से अपने कारण से ही होती है यह २८२७ कारिका के अंश का अर्थ है, ज्ञान पैदा हो जाने पर उसमें किसी शक्ति का आधान नहीं हो सकता, यह २८२८ कारिका से कहा गया है। वास्तव में तो तत्त्वसंग्रह में प्रामाण्य और अप्रामाण्य की उत्पादकसामग्री में कुछ वैलक्षण्य स्फुट नहीं कहा गया है, जो कुछ कहा गया है वह प्रामाण्य-अप्रामाण्य की ज्ञानप्रक्रिया में कहा गया है, उत्पत्ति प्रक्रिया में नहीं कहा गया है, छोट फुट तो जैसा पहले दिखाया हूं वैसा इस ग्रन्थ में भी मिलता है, उसमें भी ज्ञान के साथ ही उसमें प्रामाण्य या अप्रामाण्य पैदा होता है, दोनों को स्वत: उत्पाद ही कहना चाहिए, अप्रामाण्य का परत उत्पाद कैसे कहते हो ऐसा आवेश में आया हुआ तत्त्वसंग्रह मीमांसक मत को दूषित करता हुआ अप्रामाण्य का स्वतस्त्व सिद्ध करता है। २८४० आदि चार कारिकाओं में यह स्पष्ट है। स्फुट बौद्धमत तो २८३३ कारिका में है जैसे कि—ये पण्डित सौगत इस विषय में इतना तो कहते ही हैं कि ज्ञान में कहीं रही हुई भी यह प्रमात्व शक्ति स्वयं ज्ञेय नहीं हो सकती। इससे प्रामाण्य का परत: ग्रहण तो स्फुट कहा गया, उत्पत्तिपक्ष में भी क्वचित् पद से अप्रामाण्य का अधिक क्षेत्र सूचित होता हुआ अप्रामाण्य का स्वत: उत्पाद भी ध्वनित होता है, कहीं २ प्रामाण्य शक्ति कहने से अधिक जगह अप्रामाण्य शक्ति सूचित होती है, जब अप्रामाण्य ज्ञानसामान्यसामग्री से पैदा होता है दूसरे की अपेक्षा नहीं करता है तभी अप्रामाण्य का अधिक ज्ञान में स्थान सुलभ हो सकता है।

यहां प्रस्तुत भाषण की नीचे लिखी पङ्क्तियां मुझे पसन्द नहीं आती।

(१) ४ पृ० पर जो ज्ञान का कारण है वही प्रमा का कारण है, इसमें मीमांसक और बौद्धों की एक वाक्यता है।

(२) १४ पृ० पर प्रामाण्य के स्वत उत्पाद को शान्ति रक्षित और कमलशील अपनाये हैं। तत्त्वसंग्रहकार शान्ति रक्षित और उसकी टीकाकार कमलशील हैं।

स्थिते हि तस्य मानत्वे निश्चयः क्रियतेऽनया ।
न त्वपूर्वं प्रमाणत्वमनया तस्य जन्यते ॥

( त. सं. ३०७५ )

इत्युक्त्या प्रामाण्यस्य उत्पत्तौ स्वतस्त्वं ज्ञाने तु परतस्त्वम् इति बौद्धसिद्धान्तमवदातीकरोति ज्ञानहेतुभ्यः उत्पद्यमानं प्रामाण्यं कारणशुद्धिज्ञानादिकम् अनपेक्ष्य न ज्ञायत इति बौद्धस्य राद्धान्तः—

अत प्रमाणता तस्मिन्विद्यमानाऽप्यनिश्चिता ।
अविद्यमानकल्पेति, नैवास्तीत्यपदिश्यते ॥

( त. सं. ३०७६ )

इति स्ववचनेन पुनः स्पष्टीकृतः स्वाभाविकी ज्ञानस्य प्रामाण्यशक्तिर्न नित्या किन्तु स्वहेतुभ्य उत्पन्ना इति वेदस्य नित्यप्रामाण्यनिराकरणाय मीमांसकेन सह विवदते सौगतः । चित्सुखाचार्यादिभिः परिष्कृते उत्पत्तौ स्वस्त्वलक्षणे न बौद्धानां विप्रतिपत्तिरिति स्पष्टम् उत्तानबुद्धीनामपि । एतदेव च मया स्वनिबन्धे प्ररूपितम् । पण्डितप्रवरस्य संशय निराकरणार्थं पुनर्बौद्धानां वचनानि संक्षेपरुचिनापि सप्रयोजनतया अत्र क्रियासमभिहारेण उपन्यस्यन्ते ।

योपि च पुनर्बौद्धमते ज्ञानप्रामाण्यस्य उत्पत्तौ ज्ञप्तौ च परतस्त्वप्रतिपादनसंरम्भः स तु पण्डितप्रवरस्य कण्ठशोषमात्रफलः ।

एतावत्तु वदन्त्यत्र सुधियः सौगता इमे ।
ज्ञाने क्वचित्स्थिताऽप्येषा न बोद्धुं शक्यते स्वतः ॥

( प्र. स० २८१३ )

इति कारिकायां क्वचित् पदस्य व्याख्यान प्रसङ्गे—"उत्पत्ति पक्षेऽपि ज्ञाने प्रायोऽप्रामाण्यं क्वचिच्च प्रामाण्यमिति क्वचित्पदेन ध्वनितम्" इति यदुक्तं तद् विस्मयमेव समुत्पादयति । क्वचिदिति पदं 'न सर्वत्रे'ति परम् । तच्च पुनः २९४५ कारिकायां स्पष्टीकृतम् । प्रामाण्यस्य सर्वत्रैव परितो निश्चय इति बौद्धमतं प्रतिपादयन् प्रेक्षावतां श्रद्धां प्रच्यावयति । अहो बत ग्राग्रहस्य महिमा यत आधुनिक व्यवहारि जीववत् पण्डितानामपि अतत्त्वस्य तत्त्वाध्यवसाय रचणार्थं प्रयासपरम्परा वरीदृश्यते । सर्वसंशयविनिवृत्तये—"किञ्चित्स्वतोऽन्यतः, किञ्चित्परैरयानियमोमतः" ( त० सं० २९४५ ) इति कारिकार्द्धम् उपन्यस्यामः । "बौद्धैः, तै किञ्चित्स्वतः प्रमाणमिष्टम्, यथा—स्वसंवेदन प्रत्यक्षं योगिज्ञानम्, तद्धि स्वत एव निश्चीयते, अभ्यासबलेनापहस्तितभ्रान्तिकारणत्वात् ।

किञ्चिदन्यतः, यथा विवादास्पदीभूतं चोदनाजनितज्ञानम्, प्रत्यक्षं चानपगतभ्रान्ति-निमित्तम् 'अभ्यासार्थक्रियाज्ञानयोरभावसत्वात्' ( त. सं. पं. ७७५ पृ. ) इति कमलशील व्याख्यानं, तमेवार्थम् उत्तानीकरोति ।

बौद्धमते ज्ञानस्य स्वतोऽप्रामाण्यम् इति सर्वदर्शनसंग्रहादिग्रन्थेषु उपलभ्यमानं न बौद्धमतस्य याथार्थ्यप्रतिपादकं तदीयग्रन्थेषु एतन्मूलकोक्तीनामनुपलम्भात् इति यदुक्तं मया तत्र न किमपि वचनं तद्विरोधि प्रदर्शितं, केवलं कुव्याख्यानेन बौद्धसिद्धान्तस्य अन्यथात्वप्रतिपादने प्रयतितम् । मूलं पृष्टः पण्डित प्रवरः केवलं व्याख्यानं करोति । सोऽयम् 'आम्रान् पृष्टः कोविदारान् आचष्टे' इति महाभाष्यकारोक्तिविषयतां व्रजति । पुनश्च तत्तद्वाक्यानाम् अन्यथात्वप्रतिपादनेन आहोपुरुषिकामात्रम् आविष्कृतम् । ईदृश-व्याख्यानेन न केवलं तत्त्वविप्लवः, परन्तु विद्यार्थिनां व्यामोह एव संपनीपद्यते । अत्यन्ताय व्यामोहकरं पण्डितप्रवरस्य प्रामाण्यस्य उत्पत्तिज्ञप्तिपक्षयोरेकत्वाध्यवसायेन ग्रन्थव्युत्पादनम्, प्रथमं तावत् प्रसङ्गसाधनानुमानयोरविवेकः । एताः कारिकाः २८४३–४६ कुमारिलयुक्तीनां विरुद्धा व्यभिचारित्वं स्वतोऽप्रामाण्यरूपं प्रसञ्जयन्त्यः साधनानुमानत्वेन गृहीताः । न केवलम् अत्रैव कारिकाचतुष्टये अप्रामाण्यस्य स्वतस्त्वापादनम्, अपितु ३०००-३००५ कारिकासु तथा ३०६६-३०७० संख्याककारिकास्वपि । एते च ग्रन्था बौद्धमतस्यैव प्रतिपादका इति प्रतिपद्यमानो ज्ञानलवदुर्विदग्धान् विभ्रामयति । बौद्धानाम-द्वैतवेदान्तिनां च निर्विकल्पकस्यैव प्रामाण्याभ्युपगमात् इत्यादि वाक्यम् अवलम्ब्य "बौद्धमते निर्विकल्पकमेव विकल्पद्वारा सर्वव्यवहारसाधक"मिति तत्त्वसंग्रहकारिका ( १३०६ ) विरोधित्वेन उपन्यास्यत् पण्डितप्रवरः । किमस्य उपन्यासस्य तात्पर्यमिति, न बुध्यामहे । किं सविकल्पकस्य बौद्धमते प्रामाण्यं विवक्षितम् ? आहोस्वित् निर्विकल्पक सविकल्पयोः संभूय प्रमात्वं ? यद्वा विशकलितयोः स्वातन्त्र्येण इति विकल्पाः संभाव्यन्ते ।

आद्ये प्रत्यक्षलक्षणे कल्पनाप्रतिषेधस्य कैमर्थक्यप्रसङ्गः । द्वितीये नैयायिकादि-भिर्वृथैव बौद्धमतस्य खण्डनं कृतम् । तृतीयेपि तथैव । प्रत्यक्ष पृष्ठभाविनो विकल्पस्य दृश्यविकल्पयोरेकत्वाध्यवसायेन विषयभेदानङ्गीकारे निर्विकल्पगृहीतस्यैवावगाहनाय ज्ञात-विषयत्वात् न प्रामाण्यम् इति कथं विस्मृतम् ? । कथं वा धर्मकीर्तिवचनं—"गृहीत-ग्रहणान्नेष्टं सांवृतम्" इति, गृहीतग्रहणान्नेष्टं सांवृत्तं दर्शनोत्तरकालं सांवृत्तं विकल्पज्ञानं प्रमाणं नेष्टं दर्शनगृहीतस्यैव ग्रहणात्, तेनैव न प्रापयितुं शक्यत्वात् सांवृत्तमकिञ्चि-त्करमेव" इति च मनोरथव्याख्यानमुपेक्षितम् । न हि बौद्धन्यायसिद्धान्तएकदेशदर्शनेन शक्यावशायः । वेदान्तिमतेपि महावाक्यजन्यम् अखण्डार्थविषयकज्ञानमेव प्रमाणम् । व्यवहारे भाट्टनय एव आलम्बितः । सर्वथा स्थितमेतत् । निर्विकल्पकज्ञानस्य प्रमात्वं सविकल्पकस्य अप्रमात्वम् । प्रमाऽप्रमाराशिद्वयभिन्नं तदुभयबहिष्कृतम् असत् इत्युक्तं मया

न तु अप्रमाज्ञानस्य अलीकत्वम् । स्पष्टमपि तात्पर्यम् अनवबुध्यमानेन आकाशमुष्टिहननं कृतम् । संशयात् प्रवृत्तिरित्यत्र तुल्यबलोभयकोटिकं ज्ञानमेव संशय इति न मन्तव्यं किन्तु उत्कटैककोटिकः संभावनापर पर्यायः । ततोऽपि न प्रवृत्तिर्निशङ्का ।

## ४ संख्या २८।११।६१ ईशाब्दे प्रकाशिता

एवं च यत्र यत्र निःशङ्कप्रवृत्तिः तत्र प्रामाण्यनिश्चयाधीनैव सेत्यभ्युपगन्तव्यम्, अपरथा प्रामाण्यानिश्चयान्निवृत्तेरपि प्रसङ्गात्" इति चित्सुखाचार्यवचनं प्रमाणत्वेन उपस्थापयामः। किञ्च प्रवृत्तिजनकत्वमेव न प्रामाण्यं किन्तु प्रतिभासावसाययोर्यथार्थत्वं,– "प्रतिभासवशाद्धि प्रत्यक्षस्य ग्रहणाग्रहणे नत्वर्थाविसंवादमात्रात्" त० सं० प० ७८२ पृ० ) । यच्च मदीयनिबन्धे समुद्धृतानां वाक्यानां स्वरूपम् अङ्गीकृत्य स्पष्टार्थानामपि तेषां विपरीतार्थप्रतिपादने प्रयासः पण्डितप्रवरस्य स खलु हरिभद्रवचनं स्मारयति । तथाचोक्तं तेन—"आग्रही बत निनीषति युक्तिं तत्र, यत्र मतिरस्य निविष्टा । पक्षपातरहितस्य तु युक्तिर्यत्र, तत्र मतिरेति निवेशम् ।" इति प्रथमार्द्धस्य यथार्थतां प्रमापयति पण्डितप्रवरस्य प्रचारशैली । अनुमाने सम्वादने आभ्यासिकप्रत्यक्षे च स्वग्राहकातिरिक्तज्ञानान्तरम् अनपेक्ष्यैव याथार्थ्यनिश्चयो जायते । स एव च प्रामाण्यनिश्चयः स्वसंवेदनसिद्धो बौद्धानाम् । अनुव्यवसायसिद्धो वाचस्पतेर्मते । नहि अनुव्यवसायापेक्षत्वात् व्यवसायप्रामाण्यस्य परतस्त्वं; ज्ञानग्राहकग्राह्यत्वमेव ज्ञानप्रामाण्यस्य स्वतस्त्वम् इति लक्षणसंवादात् । पण्डितप्रवरेण तु उत्पत्तौ ज्ञाने च सापेक्षत्वमात्रेण परतःप्रामाण्यम् आपादितम् । तत्तु ज्ञानगतस्वतःप्रामाण्यस्य लक्षणविस्मरणादेव सञ्जातम् ।

तत्त्वसंग्रहे आभ्यासिकप्रत्यक्षस्य अनुमानेनैव प्रामाण्यावसायः कृतः इति प्रतिपादयन् तस्य परतः प्रामाण्यं प्रतिपिपादयिषति पण्डितप्रवरः । तत्तु २९६९ तत्त्वसंग्रहकारिकानवलोकनविजृम्भितम् । ग्रन्थविस्तरभयात् तत्तु नानूद्यते तत्त्वजिज्ञासुभिः स्वयम् अनुसंधेयम् । एतत्तु नालोचितं यत् शास्त्रकाराणां परस्परव्याहता उक्तयो न संभवेयुः । एतत्तु स्वाभाविकं यत्सर्वं सर्वस्मै न रोचते, किन्तु अभिनिवेशवशात् स्वारसिकम् अर्थं विपर्यासयत् स्वैरितया तद् व्याख्यानं न शास्त्रतात्पर्यवेदने अनुकूलं भवति । अत्रैव अप्रामाण्यव्यवच्छेद ( २९३७ ) इत्यादिकारिकात्रयम् ( २९-३७-३९ ) अनूद्य तस्य अप्रामाण्यस्वतस्त्वपरत्वेन व्याख्यानं स्थवीयान् प्रमादः । नायं विभ्रमः समभविष्यत् यदि—

> यद् रूपनिश्चयो यस्माज्जायते यत्र वस्तुनि ।
> तद्विपर्ययशङ्कायास्तत एव निवर्त्तनम् ॥ तं. सं. २९३५ ।

इति कारिकार्थस्य पूर्वगतस्य प्रदर्शनम् अजनिष्यत । एतत्तु अतीव स्पष्टार्थमपि विपरीतं प्रतिपन्नम् । यत्र यस्य निश्चयः, तत्र तस्य तदभावव्यावृत्तिः स्वाभाविकी । नहि

घटे निश्चिते अघटशङ्का आत्मानं लभते। प्रामाण्यनिश्चयेन च अप्रामाण्यशङ्काव्युदासः स्वतः सिद्धः न प्रयत्नान्तरम् अपेक्षते। सर्वत्र तावत् पण्डितवरस्य सर्वदर्शनोदितबौद्ध-मतस्य यथाश्रुतग्रहणमेव विभ्रमधारां समुत्पादयति। यदि ज्ञानस्य स्वाभाविकम् अप्रामाण्यम् अनुभूतं भवेत् कथं प्रामाण्यान्वेषणे प्रवृत्तिः, कथं संवादादिज्ञानेष्वपि समाश्वस इति। तस्मात् ईदृशं मतं न केवलं बौद्धस्य अपितु सर्वस्यापि प्रेक्षावतः अश्र-द्धेयम् अतो यद् अनन्तरं शब्दकन्था विरचिता सा तु उपेक्षणीयैव। यच्च स्वतः परतः प्रामाण्यप्रक्रिया प्रदर्शिता तत्र न किञ्चिद् वक्तव्यम्, परन्तु प्रामाण्यनिश्चयः अप्रामाण्यशङ्का पनोदनेन उपक्षीणो न प्रवृत्तावुपयुज्यत इति नैयायिकानाम् उक्तिर्न सर्वेषां चित्तावर्जिका न च तुल्यन्यायेन दोषस्य ज्ञानसामग्रीप्रविष्टस्य प्रामाण्यप्रतिबन्धकत्वेन उप-क्षीणतया—"अप्रामाण्यस्य दोषजन्यत्वं न स्यात्" इति यत् शङ्कितं पण्डितप्रवरेण तत्तु न निपुणं विभाव्य उक्तम्। दोषस्य स्वाभाविकं विपरीतबुद्धिजनकत्वं प्रमाप्रतिबन्धकत्वं तु नान्तरीयकत्वेन एकप्रसरतया, न च तत्र पृथगस्य व्यापारः कल्पनीयः। दोषाभावस्य तु अप्रामाण्यप्रतिबन्धकत्वं विहाय न कृत्यान्तरम् इति विषम उपन्यासः कृतः पण्डित-प्रवरेण। स्वतः प्रामाण्यवादमतावष्टम्भेन कृषीवलादीनां कृष्यादौ उपायनिश्चयेन प्रवृत्तेः इति यदुक्तं तत्तु उत्तानदृष्टीनामेव शोभते। उपेयानिश्चये उपायनिश्चयाभावात्, उपेया-पेक्षत्वाद् उपायस्य (त० सं० पं० २९७५) निष्कम्पा प्रवृत्तिः प्रामाण्यनिश्चयाधीना इत्येव स्वतः प्रामाण्यवादिनाम् आशयः। कृषीवलादीनां सकम्पा प्रवृत्तिः संशयाद् भवतु नाम।

## ५ संख्या १२।१२।६१ ईशाब्दे प्रकाशितः

उपान्तसंख्याके द्वितीयप्रघट्टके यदुक्तं तत् नूनं 'निराश्रया हन्त हता मनस्विता' इति शङ्काम् उद्बोधयति। प्रथमज्ञाने उत्पन्ने सति प्रवृत्तिः विसंवादात् अप्रामाण्ये ज्ञाते प्राक्तनज्ञानस्य प्रामाण्यप्रतिघात एव दोषस्य शङ्कितनिपाते पूर्वज्ञानस्य प्रामाण्यनिश्चयो जातोऽपि प्रतिहन्यते इति तु अनुभवसिद्धम्। दोषस्य प्रामाण्यप्रतिबन्धकत्वमेव इति यदुक्तं तत्तु अयोगव्यवच्छेदपरम्। दोषवशात् ज्ञानस्य विनाशे कथं तत्र संशयः, धर्मिणोऽ-भावे धर्मस्य कथम् अवस्थानम् इति यदुक्तं तत्तु अतिस्थवीयः,। नैयायिकानामपि विसंवादात् पूर्वज्ञानस्य अप्रामाण्यनिश्चयः कथं भवेत्। तदानीम् इच्छाकृत्यादिव्यवधानेन पूर्वज्ञानस्य विनाशात् इत्यादिकुचोद्यानां तत्रापि प्राप्तेः। यदि स्मृत्युपनीतस्य ज्ञानस्य अप्रामाण्य-निश्चयः, अत्रापि न स कल्पो दण्डवारित इति कथं न रोचयेः। पुनश्च यत्र प्रामाण्या-ज्ञानात् निवृत्तेः प्रसङ्गः प्रदर्शितो मया तत् शास्त्राव्युत्पत्तिविजृम्भितम् इत्युक्तं पण्डित वरेण पुनश्च "प्रामाण्याज्ञानस्य केन निवर्तकत्वं कल्पितं येन तदापाद्यते" इति पण्डित प्रवरस्य उक्तिस्तस्यैव शोभते। विस्मृतं पण्डितवरेण यत् खलु अनवस्थादिकं वादिनाम्

अनिष्टमेव आपाद्यते, नहि इष्टापादेनैव प्रतिवादिनां कृतार्थता । यत्तु शास्त्राव्युत्पत्तिप्रसञ्जनं तत्तु स्वकीयेनैव बाणेन स्वस्य प्रहरणम् अनुष्ठितम् । नहि सर्वे ग्रन्थाः प्रामाण्यविचार-प्रवृत्ताः पण्डितप्रवरेण अवलोकिता येनायम् उक्तिसंभवः । एतत्तु न मया इदं प्रथम-तया आपादितम् । "किञ्चाप्रामाण्याज्ञानात्प्रवृत्तौ प्रामाण्याज्ञानान्निवृत्तिः स्यात् "इति तर्क-ताण्डवे १४ पृष्ठे । एवं च "यत्र यत्र निःशङ्कप्रवृत्तिः तत्र तत्र प्रामाण्यनिश्चयाधीनैव सेत्यभ्युपगन्तव्यमपरथा प्रामाण्यानिश्चयान्निवृत्तेरपि प्रसङ्गात् ( चि० सू० २२५ ) इति तत्त्वप्रदीपिकायामापादनमिदं दृष्टम् । एतत्तु सर्वम् अनवलोक्य केन कल्पितम् इत्युक्तिः? पण्डितप्रवरस्य शास्त्रैकदेशपरिचयमात्रं पिशुनयति । यत्तु अप्रामाण्यग्रहः स्वरूपसत्तया प्रामाण्यप्रतिबन्धको न तु ज्ञात इत्युक्तं तत्र व्यभिचारस्यापि अज्ञातस्यैव व्याप्तिप्रति-बन्धकत्वम् इति कल्पनावत् अतीव अश्रद्धेयम् । यदपि "अहो सुषुप्तिसुलभेनापि व्यभि-चाराज्ञानेन व्याप्तिज्ञानस्य अन्यथासिद्धिरापाद्यते" इत्युक्तं तदपि "सहचारदर्शनं व्यभिचाराज्ञानसहकृतमिति" ग्रन्थे सति सहचारदर्शनं गजनिमीलकया न लक्षितम् । न हि केवलस्य अभावस्य कुत्रापि कारणत्वं, कार्यत्वं वा दृष्टं, तस्य धर्मिप्रति-योगिभ्यामेव निरूपणं सम्भवति । तथा च न प्रागभावस्य कारणता समवायिकारण-मन्तरेण दृष्टा सम्भविनी वा, एवं प्रध्वंसस्यापि । नहि सुषुप्तौ सहचारदर्शनं केनापि शंक्यते अनुन्मत्तेन । न हि पक्षे लिङ्गसंसर्गाग्रहः सुषुप्त्यादि-सुलभः; पक्षस्यापि ज्ञानम-पेक्षितम् इति तु कथं न आलोचितम् । ज्ञानसामग्रीसत्त्वे ज्ञानस्य वेद्यत्वं मया प्रतिपादिते-"हन्त, तया रीत्या सुषुप्त्यभावापत्तिं न प्रतिसन्धत्ते" इति यदुक्तं तदपि रभसेन प्रवृत्तस्य पूर्वापरमनालोचयतो रागाद्विनिःसृतम् । तदीयवचनानुकारेण हन्त । सुषुप्तौ ज्ञानसामग्री कथं सम्भवेत्, मनसः पुरीतति प्रवेशात् आत्ममनःसंयोगाभावात् कथं ज्ञानसामग्र्याः सम्भव इति, कथंतरां वा अतिस्थलमपि न समाकलितं पण्डितप्रवरेण इति न वक्तुं प्रभवामः । यदपि च ज्ञाने जाते एव ज्ञानं वृत्तं न वा इति संशय इत्युक्तं तदपि प्रलापमात्रं प्रतिभाति । अथ ज्ञाने ज्ञाते एव इति विवक्ष्यते तदा ज्ञानस्य जात-मात्रस्य ज्ञानाभ्युपगमेन स्वसम्वेदनपक्ष एव स्वहस्तितो भवेत् इति किं केन सङ्गतम् । यदपि अन्ते प्रेक्षावतां प्रवृत्तौ प्रामाण्यनिश्चयः कारणत्वेनाङ्गीकृतः, अत्र अविगानमेव, परन्तु कारणकोटौ न प्रामाण्यनिश्चयस्य निवेशः किन्तु अप्रामाण्यज्ञानाभावस्य इति यदुक्तं तत् पूर्वापरविरोधि । न हि अप्रामाण्यज्ञानाभावमात्रेण प्रेक्षावतां प्रवृत्तिः सम्भविनी इति स्वयमेव उक्त्वा "निन्दामि च पिबामि च" इति न्यायविषयतां गतः । अन्तिमे प्रघट्टके यत्खलूक्तं तत् पण्डितजनोचितमेव ब्रूमहे यः खलु पण्डितप्रवरेण पूर्वं जल्पकथामवतार्य विचारः प्रवर्तितो न स तत्त्वजिज्ञासूनां साहाय्यकम् आचरति, अस्मा-भिरत्र तत्त्वनिर्णयानुरोधेन ये आक्षेपाः कृतास्ते खलु अपसिद्धान्तनिवारणार्थाः न व्यसनितया मत्सरितया वेति मन्तव्यम् ।

## ६ संख्या २६।१२।६१ ईशाब्दे प्रकाशिता

उपसंहरन्निमं निबन्धं विविदिपूणां व्युत्पत्तिसौकर्यार्थं किमपि विवक्षामि प्रामाण्यस्य स्वत उत्पत्तिरिति मतस्य इदमेव ऐदम्पर्यम्। ज्ञानस्य या कारणसामग्री सैव तद्गत-प्रमात्वस्यापि प्रयोगिका, न तु गुणं वा दोषाभावं वा अतिरिक्तम् अपेक्षते प्रमा। परतस्त्ववादिनां मते कारणगता गुणा दोषाभावो वा ज्ञानस्य प्रामाण्ये प्रयोजक इति ज्ञान-सामग्र्यतिरिक्तापेक्षायां प्रमाया उत्पत्तौ परतस्त्वम्। अप्रामाण्यस्य न ज्ञानसामग्रीमात्रात् उद्भवः, किन्तु दोषरूपकारणान्तरसमवधानात् इति अप्रामाण्यं परतः। अत्र तार्किक-वेदान्ति-मीमांसक-बौद्धानामेकवाक्यता। ज्ञानमात्रसामग्रीतः अप्रामाण्यस्य समुद्भवः इति उक्तेषु न कतमस्य वादिनः पक्षः।

प्रामाण्यज्ञाने तु स्वतस्त्वपरतस्त्वनिरूपणमित्थम्। ज्ञानग्राहकेनैव तद्गत-प्रमात्वस्यापि ग्रहणम् इति स्वतस्त्वपक्षः। ज्ञानग्राहिका च सामग्री बौद्धमते स्वसंवेदन-रूपा, वेदान्तिमते साक्षिरूपा; भाट्टमते अनुमानरूपा, मुरारिमते अनुव्यवसायरूपाः, नैयायिकानां परतः प्रामाण्यवादिनां मते ज्ञानग्राहकानुव्यवसायातिरिक्तम् अनुमानमेव ज्ञानप्रामाण्यस्य ग्राहकम् इति परतस्त्वं प्रामाण्यस्य ज्ञाने। एतावान् विशेषो बौद्धमते। अनभ्यासदशोत्पन्नस्य ज्ञानस्य सांशयिकत्वात् संवादज्ञानाधीनानुमानेन तत्प्रामाण्यस्य ग्रहणम्। आभ्यासिकस्य प्रत्यक्षस्य, स्वसंवेदनस्य, अनुमानस्य संवादज्ञानस्य च स्वत एव प्रामाण्यं निश्चीयते। भट्टस्य नैयायिकस्य च मते ज्ञानं स्वरूपसदेव विषयं प्रकाशयति। विषयनिश्चयः एव तद्गतप्रामाण्यनिश्चयो भट्टस्य, स च विषयनिश्चयो ज्ञाततालिङ्गेनानु-मानेन संपाद्यते। नैयायिकानां मते अर्थनिश्चयः स्वरूपसतापि ज्ञानेन संजायते। अर्थ-निश्चयस्तु न स्वप्रामाण्यनिश्चयाधीनो यथा मीमांसामते। ज्ञानग्राहकज्ञानस्य प्रामाण्य-ज्ञानमर्थनिश्चयप्रामाण्येन नापेक्षणीयम् इति तु भाट्टनैयायिकयोः सम एव समाधिः। ज्ञानग्राहकप्रामाण्यम् अज्ञातमेव अर्थ-निश्चायकमिति तार्किकमीमांसकयोस्तुल्यम्। प्राभा-कराणांमते निरपवादं प्रामाण्यं सर्वज्ञानस्य। एवं नव्यवेदान्तिनाम् तन्मते अप्रमाया अविद्यावृत्तिरूपज्ञानाभासत्वात्। ज्ञानानामौत्सर्गिकं प्रामाण्यं भट्टमते। कतमः पक्षः समीचीनतम इति न सर्ववादिसंप्रतिपत्त्या शक्योपपादनम्। यस्य यत्र अभिरुचिः स तमेव पक्षम् अनुमन्यते। एतत्तु अवधातव्यं यत् पाश्चात्यदार्शनिकेषु संवादः प्रामाण्यस्य जनक इति एकीयमतम्। तत्तु भारतीयदार्शनिकानां नानुमतम्। संवादः प्रामाण्यस्य ज्ञापको न तु जनक इत्यत्र भारतीयानामैकमत्यम्। पाश्चात्यदर्शनेषु भिन्ना-भिन्नाः कल्पना विसृमरा दृश्यन्ते। तेषाम् आलोचनं यदि संस्कृतमहाविद्यालयेषु प्रवर्तितं भवेत् तदा विद्यार्थिनां बुद्धिवैशद्यं, प्रवक्तॄणां च बुद्धिविनोदातिशयः संभाव्यते। लेखविस्तर-भयात् नाधिकं विवक्ष्यते इति शम्।

---

अयोध्यासंस्कृतं पत्र ३१।१०।१९६१ ई० को ३३ वर्ष २ संख्या में संस्कृतमय प्रकाशित

# प्रामाण्यवादसमीक्षा

श्रीसातकड़ीमुखोपाध्यायः नवनालन्दाविहाराध्यक्षः ।

यह बड़े हर्ष का विषय है कि विवेचन सापेक्ष मेरे अतिसंक्षिप्त प्रामाण्यवाद निबन्ध को लेकर पण्डितवर श्रीकेदारनाथ ओझाजी से प्रामाण्यवाद की चर्चा शुरू की गई। अच्छा कहा गया कि यह प्रामाण्यवाद बहुत कठिन दुरूह और विरल चर्चा का विषय है ऐसा उनको अभिमत है। इस में किसी की निन्दा संभव नहीं है। वहाँ वहाँ पण्डितप्रवर का कोई कोई कथन यथार्थ नहीं है। पाश्चात्य दर्शन में भी इस प्रमात्व का विचार बड़ी तैयारी तथा विस्तार के साथ दीख पड़ता है, यह उन उन दर्शन पण्डितों से छीपा नहीं है, स्वतः प्रामाण्य तथा परतः प्रामाण्य को लेकर प्रायः सभी वाद परीक्षित देखे जाते हैं। उनकी विलक्षण शैली भी अधिक कठिन नहीं हैं।

ब्राह्मणत्व-क्षत्रियत्व जाति के आधार पर पण्डितप्रवर का प्रामाण्य और अप्रामाण्य को जाति कहना सर्ववादी सिद्धान्तों के अनुकूल नहीं है; नैयायिक प्रामाण्य को जाति नहीं मानते, सभी ज्ञान धर्मी में अभ्रान्त और प्रकार में भ्रम है यह इनकी परिभाषा है, एकही यह रजत ज्ञान धर्मी अंश में प्रमात्व दूसरे अंशों में अप्रमात्व वाला है, जाति संकर होने से प्रमात्व और और अप्रमात्व उनके मत में उपाधि हैं। यद्यपि चित्सुखाचार्य ने धर्मी अंश में प्रमा व्यवहार अबाधित अनुभूतित्व उपाधि के कारण है इत्यादि कहते हुए अप्रमात्व और प्रमात्व ज्ञानत्व के अवान्तर जाति प्रसिद्ध किये हैं तो भी वे नैयायिक सम्मत नहीं संभव है, और भी वेदान्तियों का प्रधान तात्पर्य वाला यह सिद्धान्त नहीं है, उनके मत में अप्रमा ज्ञानाभास है ज्ञान नहीं है। वैसा नयनप्रसादिनी में कहा गया है—दूसरे के सिद्धान्त को लेकर इस प्रकार जातिसङ्कर का परिहार है। ( चि० सु० २२२ पृ० ) इस प्रकार मधुसूदन सरस्वती भी अद्वैत सिद्धि अज्ञानवाद में

कहे हैं कि भ्रम और भ्रम के विषय आविद्यक होने से रजताकार वृत्ति ज्ञानाभास है, इस प्रकार प्रमात्व और अप्रमात्व का सामानाधिकरण्य नहीं है ऐसा कहना न्यायसिद्धान्त का अनुरोध नहीं करता। और दूसरा—ब्राह्मणत्व-क्षत्रियत्व के ऐसा एक सामग्री प्रामाण्य और अप्रामाण्य का जनक नहीं है यह कहना प्रथम कल्पवालों को भ्रम ही पैदा करें। वैसा चित्सुखाचार्य से कहा गया है—प्रामाण्य उपाधि या जाति होने पर उसका जन्म नहीं हो सकता, वैसे उपाधि पक्ष में तो स्मृति भिन्न ज्ञान का बाध का अत्यन्ताभाव है, अत्यन्ताभाव होने से उसकी उत्पत्ति नहीं, नित्य होने से जाति का जन्म नहीं। ( चि० सु० २०३ पृ० )। इसलिये जनिका की जगह प्रयोजिका ठीक होता।

फिर जो भी विद्वत्प्रवर से बौद्ध मत में अप्रामाण्य की उत्पत्ति में स्वतस्त्व प्रतिपादन करना चाहा गया है वह बौद्ध मत का तिरस्कार करके अपनी बुद्धि से विनोद मात्र है, ऐसी व्याख्या तत्त्वजिज्ञासुओं को पसन्द नहीं है। अपसिद्धान्त का सूचक यह कथा कन्या की रचना अशिक्षितों के डर के लिये है। बाह्य सद्वादी बौद्ध का जो यह मत कहना चाहा गया है वह धर्म कीर्ति के मत को बिल्कुल विपरीत करता है।

विज्ञान का विषय ग्रहण जैसा वह धर्म है उसके अनुसार विद्यमान विषय उस विज्ञान का जनक है तथा उस विज्ञान से गृहीत होता है, विज्ञान का यथाऽवस्थित वस्तु का ग्रहण स्वभाव है, वही वस्तु उसका विषय है, जैसा वह है उस रूप से विद्यमान विज्ञान का जनक है। यह खण्डलार्थ है। यह प्रकृति है, इसके ज्ञान के दूसरे निमित्तों से स्खलित होता हुआ रस्सी में सर्पबुद्धि के ऐसा अदृढ=भ्रम ज्ञान पैदा होता है जो बाधक प्रत्यय की अपेक्षा में व्यावृत्ति=बाध में पड़ जाता है, जैसा है वैसे वस्तु का ग्रहण विज्ञान का स्वभाव है, विषय का भी अपने ज्ञान को पैदा करना स्वभाव है, इस प्रकृति का उस ज्ञान के जो दूसरे निमित्त दोष आदि उससे स्खलित विपरीत विषय के आकार का होता है, वह भ्रम अपनी निवृत्ति के लिये बाधक प्रत्यय की अपेक्षा करता है। वह अदृढ है बाधक रहने पर फिर नहीं पैदा होता। ज्ञान विषय स्वरूप ग्रहण में प्रवृत्त होता है। और विषय अपने आकार के समर्पण में प्रवृत्त है यह सम्पूर्ण का अर्थ है।

विज्ञान का अप्रामाण्य स्वाभाविक नहीं है। 'यह चित्त स्वभाव से प्रकाश स्वरूप है, मल आगन्तुक है, प्र. वा. ८१ पृ०' इत्यादि धर्मकीर्ति का वचन पण्डितवर के व्याख्यान को निर्मल करता है। मनोरथ नन्दिनीकृतव्याख्यान पण्डित की सोपज्ञ व्याख्या

को दृढ़ता पूर्वक हटाता है, स्वभाव से ही चित्त अपने से भिन्न दोषों का समूह वाला प्रकाश स्वभाव है। मनके जो दोष भ्रान्ति के कारण हैं वे तो आगन्तुक हैं चित्त के स्वभावभूत नहीं हैं। जैसे आकाश के अन्धकार कुहरेसा आदि है। इसी का अनुवाद तत्त्वसंग्रह में—'यह प्रकाश स्वभाव चित्तस्वभाव से ही वस्तु दर्शन स्वरूप है, क्योंकि मल तो आगन्तुक है, त. सं. ३४३५,'।

और भी भामती में वाचस्पतिमिश्र (बुद्धि का तत्त्व पक्षपात स्वभाव है) ऐसा कहकर इस के समर्थन के लिये बाहरी लोग भी कहते हैं—'जो जिसका स्वभाव निश्चित है सयत्न होने पर विपर्ययों से बाधा नहीं, क्योंकि बुद्धि का स्वग्राह्य वस्तु पर पक्षपात है, 'ऐसा धर्मकीर्ति के वचन को लिखते हैं। इन सब ग्रन्थों को नहीं देखे हुए पण्डितप्रवर की नवीन ऐसी व्याख्या बौद्ध दर्शन में परिश्रम किये हुए के खेदमात्र को पैदा करती है, यदि ज्ञान का स्वाभाविक अप्रामाण्य बौद्धों का सिद्धान्त होता तो क्यों कोई बौद्ध दार्शनिक इसको कण्ठ से नहीं कहता ?, दूसरी तरह कहने से व्युत्पत्ति चाहने वाले के भ्रम का अवसर क्यों करते ?। शास्त्रकारों का ऐसा दूसरे तरफ जाने वाला वचन नहीं संभव है। एक देश के दर्शन से शास्त्र का तात्पर्य नहीं निश्चित होता, जो भी फिर मीमांसक मत में प्रामाण्य की उत्पत्ति में स्वतस्त्व का उपपादन किया गया है, वहाँ भी प्रामाणिक ग्रन्थों को बिना विचारे सिद्धान्त का भी बिना अनुरोध के अपनी उत्प्रेक्षा का ही आलम्बन किया है। और फिर बौद्ध दर्शन के अप्रामाण्य के स्वतस्त्व में सर्वदर्शन संग्रह आदि से जो वचन उद्धृत हैं उनका तात्पर्य पण्डितवर से सूक्ष्म दृष्टि से नहीं खोला गया। यह तो सभी विशिष्ट ज्ञान सविकल्प हैं, स्वयम् अप्रमाण हैं, परम्परा से वस्तु मूलक होने से सम्वादी होने से व्यावहारिक प्रामाण्य को लेकर विरोधी दार्शनिकों का तात्पर्य वर्णन है, जैसे मीमांसक मत का आत्मा का जडबोधरूप सिद्धान्त प्रसिद्ध किया, मीमांसक लोग आत्मा को जड़ नहीं मानते, तो भी परिणामी होने से फलतः वेदान्तियों ने जड़ की आपत्ति दिया। इसी प्रकार विरोधी दार्शनिकों ने अपनी बुद्धि से बौद्धमत में स्वतः अप्रामाण्य लाया है। दूसरे के आपादन से तत्त्वजिज्ञासुओं को दर्शनों के अपने सिद्धान्त को खराब नहीं करना चाहिये। दूसरे से आपादित अप्रामाण्य का स्वतस्त्व को बौद्ध सिद्धान्त मानते हुए इस विद्वान् से सभी प्रबन्ध में ग्रन्थ स्वारस्य को बिना अपनाये आगे पीछे की संगति को हाथी की झुकनी के ऐसा छोड़कर

दूसरे प्रकार का शास्त्रवाक्यों का तात्पर्य वर्णन करते हुए, अपनी आवेश रक्षा में लगे हुए भ्रम परम्परा अपनाई गई है, सिद्धान्त पक्षपातियों के हृदय में खेद पैदा किया गया है। तत्त्वसंग्रह में प्रामाण्यग्रहण की ही प्रक्रिया दिखाई गई है उत्पत्ति में नहीं यह साहस ही दिखाया गया है, अपने हेतुओं से विषयग्रहण शक्तिरूप प्रमा उत्पन्न होती है ऐसे भट्ट मत में इसमें हमलोगों का विवाद नहीं है ऐसा कहते हुए शान्तिरक्षित उत्पत्ति में स्वतस्त्व पक्ष स्थापित करते हैं।

## इसके बाद १४।११.६१ ई० को ३ संख्या में प्रकाशित

इसीलिये वस्तु का ग्रहणरूप प्रमा अपने हेतुओं से उत्पन्न होती है ऐसा मानते हुए उसके विचार में तैयारी करते, अपने हेतु से उत्पन्न प्रामाण्यशक्ति के अपनी उत्पत्ति में दूसरे कारणों की अपेक्षा नहीं है किन्तु निश्चय के लिये अपेक्षा करती है, ऐसा तत्वसंग्रह २८४२ कारिका में स्पृष्ट कहा गया है, किन्तु स्वतः स्थित भी प्रामाण्य स्वतः निश्चित नहीं होता उसके लिये अर्थक्रिया ज्ञान, या हेतु की शुद्धि का ज्ञान अपेक्षित होता है, प्रामाण्यशक्ति की उत्पत्ति के लिये नहीं, उससे अर्थ-क्रिया का ज्ञान अथवा दूसरा निश्चय ही के लिये अपेक्षित होता है विष आदि के ऐसा वस्तु के ग्रहणशक्ति के आधान के लिये नहीं, इस कारिका में विशद किया गया है, चित्सुखादि आचार्यों द्वारा प्रामाण्य का उत्पत्ति में स्वतस्त्व लक्षित किया गया है—विज्ञान सामग्री से जन्य हो उससे अतिरिक्त हेतुओं से जन्य न होना प्रामाण्य का स्वतस्त्व है, इसका अनुरोध करता है, और यदि अप्रामाण्य का स्वतस्त्व बौद्धसम्मत होता तो ज्ञान की सामग्री स्वभाव से ही अवश्य दोष वाली होती। वैसा है नहीं, दोष आगन्तुक हैं ऐसा पहले ही धर्मकीर्तिवचन के अनुवाद से कहा गया है, धर्मकीर्ति वचन में बाधक प्रत्यय से निवर्तनीय कहा गया है। अप्रामाण्य ज्ञानमात्र हेतु से प्रयुक्त नहीं है किन्तु दोष के समवधान से। प्रामाण्य में दोषाभाव के उपयोग से परतस्त्व नही आयेगा, बौद्धमत में अभाव तुच्छ है कारण नहीं होता, वास्तव में दोष से भिन्न अन्यवस्तु के रहने पर दोषाभाव का व्यवहार होता है, संवादज्ञान से अथवा हेतु दोष के अभावज्ञान से प्रामाण्य का निश्चय होता है प्रमा स्वभाव की उत्पत्ति नहीं होती, बौद्धमत में प्रामाण्य प्रमा व्यक्ति से भिन्न नहीं है इसलिये उसकी उत्पत्ति में विरोध नहीं आता, स्थित भी प्रामाण्य

सभी जगह स्वतः निश्चित नहीं होता ऐसा इसका पक्ष है। उसका प्रामाण्य रहने पर भी इससे उसका निश्चय किया जाता है, नया प्रमाणत्व इससे पैदा नहीं किया जाता, त० सं० ३०७५। ऐसा कहकर प्रामाण्य की उत्पत्ति में स्वतस्त्व और ज्ञान में परतस्त्व ऐसा बौद्ध सिद्धान्त साफ करते हैं। ज्ञान के हेतु से पैदा होता हुआ प्रामाण्य कारण की शुद्धि के ज्ञान आदि की अपेक्षा के विना नही ज्ञात होता ऐसा बौद्ध सिद्धान्त ( इसलिये उसमें प्रमाणता रहती हुई भी अनिश्चित अविद्यमान के ऐसा नहीं हैं ऐसा व्यवहृत होती है, त० स० ३०७९ ) इस वचन से फिर स्पष्ट किया गया है, ज्ञान की स्वाभाविक प्रामाण्यशक्ति नित्य नहीं है किन्तु अपने कारणों से उत्पन्न है इस प्रकार वेद के नित्य प्रमाण के खण्डन के लिये मीमांसक के साथ सौगत का विवाद है, चित्सुखाचार्य आदि से परिष्कृत उत्पत्ति के स्वतस्त्वलक्षण में बौद्ध दार्शनिकों का विरोध नहीं है ऐसा उत्तान बुद्धिग्रों को स्पष्ट है, इसी का मैंने अपने निबन्ध में निरूपण किया है, पण्डित प्रवर के संशय निराकरण के लिये फिर बौद्धों के वचनों को संक्षेप चाहते हुए भी बारबार प्रयोजन होने से रखता हूं।

और जो भी फिर बौद्धमत में ज्ञान प्रामाण्य के उत्पत्ति और ज्ञप्ति पक्ष में पण्डित-प्रवर का परतस्त्व के प्रतिपादन में संरम्भ है वह कण्ठ को सुखाना मात्र फल वाला है। ( इस विषय में सौगत विद्वान् इतना ही कहते हैं कि ज्ञान में कहीं रहने वाली भी यह स्वतः ज्ञात नहीं हो सकती, त० सं० २८२३) इस कारिका में क्वचित् पद के व्याख्यान के प्रसङ्ग में उत्पत्ति पक्ष में भी ज्ञान में प्रायः अप्रामाण्य कहीं प्रामाण्य यह क्वचित् पद से ध्वनित है यह जो कहना है वह विस्मय को पैदा करता है, क्वचित् पद का अर्थ सभी जगह नहीं ऐसा अर्थ है, उसको फिर २९४५ कारिका में स्पष्ट किया गया है, प्रामाण्य का सभी जगह परतः निश्चय प्रतिपादन करते हुए बुद्धिमानों की श्रद्धा को खराब करते है, अहो आग्रह की बड़ी महिमा है कि आधुनिक व्यवहार के जीवों की तरह पण्डितों की भी अतत्त्व को तत्त्व साबीत की रक्षा के लिये प्रयत्न की परम्परा दीख पड़ती है, सभी संशय निवृत्ति के लिये ( कुछ स्वतः कुछ परतः दूसरे लोग अनि-यत मानते हैं, त० सं० २९४५ ) इस कारिका के अर्धभाग को रखता हूं। उन बौद्धों से कहीं स्वतः प्रमाण इष्ट है, जैसे स्वसंवेदन प्रत्यक्ष और योगीन्द्र प्रत्यक्ष, वह स्वतः निश्चित होता है, क्योंकि अभ्यास बल से भ्रान्ति का कारण हटा दिया गया है, कुछ

परतः निश्चित होते हैं, जैसे विवाद विषय विधिवाक्य से पैदा हुआ ज्ञान, जिसमें भ्रान्ति का कारण नहीं हटा है ऐसा प्रत्यक्ष, अभ्यास और अर्थक्रिया ज्ञान की प्राप्ति से त० सं० पं० ७७५ पृ० ऐसा कमलशील का व्याख्यान उसी अर्थ को प्रगट करता है।

बौद्धमत में ज्ञान का स्वतः अप्रामाण्य जो सर्वदर्शन संग्रह आदि में मिल रहा है वह वास्तव में बौद्धमत का प्रतिपादक नहीं है, बौद्धग्रन्थों में इसके साधक वचन नहीं मिलते, इत्यादि जो मैंने कहा है उसके विरोधी वचनों को नहीं दिखाते, केवल खराब व्याख्यानों से बौद्ध सिद्धान्त को अन्यथा कहने का प्रयास किये हैं। पण्डितप्रवर से मूल पूछा गया, केवल व्याख्यान करते हैं। वह ये आम को पूछा गया कोविदारको कहते हैं ऐसे महाभाष्यकार के उक्ति का विषय बनते हैं। फिर उन वाक्यों का अन्यथा प्रतिपादन से आहोपुरुषिका मात्र प्रगट किये हैं। ऐसे व्याख्यान से केवल तत्त्व का विप्लव नहीं है किन्तु विद्यार्थियों का व्यामोह होगा, पण्डितप्रवर का उत्पत्ति और ज्ञप्ति को एक मानकर प्रामाण्य का परतः ग्रन्थों से बताना अत्यन्त व्यामोह करने वाला है, पहले तो प्रसङ्ग और साधन अनुमान का विवेक नहीं है, २८४२—४६ ये कारिकायें साधन अनुमानरूप से ली गई हैं, कुमारिल युक्तियों में स्व अप्रामाण्य साधक विरुद्धाव्यभिचारित्व दोष को लगा रही हैं। केवल इसी कारिकाओं में अप्रामाण्य का स्वतस्त्व आपादन नहीं किया है, किन्तु ३०००—३००५ और ३०६६—३०७० कारिकाओं में भी। ये ग्रन्थ बौद्धमत के ही प्रतिपादक हैं ऐसा मानते हुए थोड़े ज्ञान वाले अभिमानी को भ्रम में डालते हैं बौद्ध और अद्वैतवेदान्तीयों का निर्विकल्पक ही प्रमाण माना गया है इस वाक्य को लेकर बौद्धमत में निर्विकल्पक ही विकल्प द्वारा भी व्यवहार का साधक है इस तत्त्वसंग्रह कारिका १३०६ को विरोध में पण्डित प्रवर उपस्थित किये हैं, इस उपन्यास का क्या तात्पर्य है? यह नहीं मालूम पड़ता, क्या बौद्धमत में सविकल्पक मिले जुले प्रमाण है? या अलग दोनों स्वतन्त्र प्रमाण हैं? ये विकल्प संभव हैं। पहले पक्ष में प्रत्यक्ष लक्षण में कल्पना के प्रतिषेध का वैयर्थ्य होगा। द्वितीय पक्ष में नैयायिक आदि ने व्यर्थ ही बौद्धमत का खण्डन किया; तीसरे पक्ष में भी वैसा ही। प्रत्यक्ष के पीछे होने वाला विकल्प दृश्य विकल्प को एक समझने से विषय का भेद न मानने पर निर्विकल्पक से गृहीत का ही ग्रहण करता है, ज्ञात विषय होकर प्रमाण नहीं है यह क्यों भूले? कैसे धर्मकीर्ति के वचन और मनोरथ नन्दी के व्याख्यान की उपेक्षा

किये ?, गृहीत का ग्रहण करने से सांवृत्त प्रमाण इष्ट नहीं है, यह धर्मकीर्ति का वचन दर्शन के उत्तरकाल में विकल्पज्ञान प्रमाण इष्ट नहीं है, क्योंकि गृहीत ही का ग्रहण है, उसी से प्राप्त हो सकता है, साम्वृत कुछ करने वाला नहीं है। यह मनोरथ नन्दी का व्याख्यान है। बौद्ध दर्शन का सिद्धान्त एक देश के देखने से निश्चित नहीं हो सकता, वेदान्ती के मत में भी महावाक्य से पैदा हुआ अखण्डार्थ का ज्ञान प्रमा सविकल्पक अप्रमा, प्रमा अप्रमा दो राशि से भिन्न इन दोनों से वहिष्कृत असत् है ऐसा हमसे कहा गया है अप्रमाण ज्ञान को अलीक नहीं कहा गया है। स्पष्ट भी तात्पर्य नहीं समझते हुए आकाश को मुक्का मारना किया गया। संशय से प्रवृत्ति यहां तुल्य बल वाला दो कोटि का ज्ञान ही संशय नहीं मानना चाहिये, किन्तु उत्कट एक कोटि वाला सम्भावना नाम का, उससे भी प्रवृत्ति निश्शङ्क नहीं।

## इसके बाद २८।११।६१ ई० को ४ संख्या में प्रकाशित

इस प्रकार जहां जहां निःशङ्क प्रवृत्ति है वहां वहां वह प्रामाण्यनिश्चय के अधीन ही है यह मानना चाहिये, नहीं तो प्रामाण्य के अनिश्चय से निवृत्ति का भी प्रसङ्ग हो, इस प्रकार चित्सुखाचार्य के वचन को प्रमाणरूप से रख रहा हूँ, और भी प्रवृत्ति की जनकता ही प्रामाण्य नहीं है किन्तु प्रतिभास और अवसाय की यथार्थता, प्रतिभास वश प्रत्यक्ष का ग्रहण और अग्रहण है अर्थ के अवि संवादमात्र से नहीं, त० सं० पं० ७८२ पृ०। जो मेरे निबन्धों में उदाहृत वाक्यों का स्वरूप स्वीकारकर स्पष्टार्थ भी उनके उलटा अर्थ करने में पण्डितप्रवर का जो प्रयास है वह हरिभद्र के वचन को याद दिलाता है, वैसा उन्होंने कहा है—आग्रही वहां युक्ति को ले जाना चाहता है जहां उसकी बुद्धि का अभिनिवेश है, पक्षपातरहित की बुद्धि तो जहाँ युक्ति रहती है वहां अभिनिवेश करती है, इसी पण्डितप्रवर की विचारशैली पहले आधे को प्रमाणित करती है। अनुमान सम्वादन और आभ्यासिक प्रत्यक्ष में अपने ग्राहक से अतिरिक्त दूसरे ज्ञान की अपेक्षा न करके प्रामाण्य का निश्चय होता है, वही प्रामाण्य निश्चय बौद्धों का स्वसम्वेदन सिद्ध है। वाचस्पति के मत में अनुव्यवसाय सिद्ध है। अनुव्यवसाय की अपेक्षा करने से व्यवसाय के प्रामाण्य में परतस्त्व नहीं होता, क्योंकि ज्ञान ग्राहक से ग्राह्य है, ज्ञान प्रामाण्य के स्वतस्त्व लक्षण का समन्वय होता है, और उससे संवाद होता है। पण्डित प्रवर से तो उत्पत्ति और ज्ञान में सापेक्षत्वमात्र से परतः

प्रामाण्य का आपादन किया गया है। वह तो ज्ञानगत स्वतः प्रामाण्य के लक्षण का विस्मरण ही से हुआ है।

तत्व संग्रह में आभ्यासिक प्रत्यक्ष में अनुमान से ही प्रामाण्य का निश्चय किया गया है ऐसा कहते हुए पण्डितप्रवर परतः प्रामाण्य प्रतिपादन करना चाहते हैं, वह तो २९६९ कारिका के न देखने से हुआ है, ग्रन्थ विस्तर के भय से अनुवाद नहीं करता, तत्वजिज्ञासुओं को स्वयं अनुसन्धान करना चाहिये, यह नहीं सोचे कि शास्त्रकारों की परस्पर विरुद्ध उक्तियां नहीं होती, यह तो स्वाभाविक है कि सबको सब पसन्द नहीं आता, किन्तु अपने अभिनिवेश से स्वाभाविक अर्थ को विपरीत करता हुआ व्याख्यान स्वछन्द होने से शास्त्र तात्पर्य का ज्ञान कराने में अनुकूल नहीं होता, यहीं पर अप्रामाण्य व्यवच्छेद इत्यादि २९३७ से २९३९ तक तीन कारिका का अनुवाद करके अप्रामाण्य के स्वतस्त्व तात्पर्य से जो व्याख्यान है वह बहुत स्थूल प्रमाद है। यह भ्रम नहीं होता यदि ( जिस वस्तु में जिससे जिस स्वरूप का निश्चय होता है, उससे विपरीत शङ्का का उसी से निवृत्ति होती है, त. सं. २९३५ कारिका ) के अर्थ का दर्शन हुआ होता। यह तो अत्यन्त स्पष्ट अर्थ से विपरीत स्वीकार किया। जहां जिसका निश्चय है वहां उसके अभाव की व्यावृत्ति स्वाभाविक है, घट का निश्चय होने पर घट भिन्न की शङ्का नहीं होती, प्रामाण्य निश्चय हो जाने पर अप्रामाण्य शङ्का का व्युदास स्वतः सिद्ध है उसके लिये दूसरे प्रयत्नों की अपेक्षा नहीं है, सभी जगह पण्डित वर का सर्व दर्शन संग्रह में कहा हुआ अप्रामाण्य का स्वतस्त्व का जैसा है वैसा ही ग्रहण कर लेना ही भ्रम धारा को पैदा करता है, यदि ज्ञान का स्वाभाविक अप्रामाण्य अनुभूत होता तो प्रामाण्य के खोज में कैसे प्रवृत्ति होती, सम्वाद आदि ज्ञान में भी कैसे विश्वास होता, इसलिये ऐसा मत केवल बौद्ध ही का नहीं किन्तु सभी विचारशीलों का अश्रद्धेय है। और जो इसके बाद शब्दकन्या की रचना है वह उपेक्षणीय ही है। और जो स्वतः परतः प्रामाण्य की प्रक्रिया दीखाई गई है उसपर कुछ नहीं कहना है, किन्तु प्रामाण्य निश्चय अप्रामाण्य शङ्का को हटाने से कृतार्थ हो गया प्रवृत्ति में उपयोगी नहीं है, यह नैयायिकों का कथन सभी के चित्त का अनुरञ्जक नहीं है। तुल्य युक्ति से ज्ञान सामग्री में प्रविष्ट दोष प्रामाण्य का प्रतिबन्धक होने से गतार्थ हो गया अप्रामाण्य दोष जन्य नहीं होगा यह जो पण्डितप्रवर का संदेह है वह अच्छा सोचकर नही है, दोष स्वभाव से ही

विपरीत ज्ञान का जनक है, प्रामाण्य का प्रतिबन्धक तो नान्तरीयकता तथा एक प्रसरता से है, उसके लिये पृथक् व्यापार की कल्पना नहीं है। दोपाभाव का तो अप्रामाण्य प्रतिबन्धकता को छोड़ कर दूसरा कार्य नहीं है, यह पण्डितवर से विपम उपन्यास किया गया है, स्वतः प्रामाण्यवादी मत के अनुसार कृपकों का कृषि कर्म में उपाय निश्चय से जो प्रवृत्ति कही गई है वह उत्तान दृष्टि वालों को ही शोभा देती है, उपेय का निश्चय न होने पर उपाय का निश्चय नहीं हो सकता, उपाय उपेय की अपेक्षा करता है त० सं० पं० २९७५ निष्कम्प प्रवृत्ति ही प्रामाण्य निश्चय के अधीन है, यही स्वतः प्रामाण्य वादियों का आशय है, कृपकों की सकम्प प्रवृत्ति भले संशय से हो।

## इसके बाद १२।१२।६१ ई० ५ संख्या में प्रकाशित

अन्तिम के पास की संख्या वाले दूसरे प्रकरण में जो कहा गया है, वह अवश्य 'हा निराश्रयमनस्विता मरी' इस शंका को जागृत करता है, पहले ज्ञान होने पर प्रवृत्ति विसम्वाद से अप्रामाण्य ज्ञात होने पर पहले ज्ञान के प्रामाण्य का प्रतिघात ही है, दोपसम्बन्ध की शङ्का होने पर पैदा हुआ भी पूर्वज्ञान का प्रामाण्यनिश्चय प्रतिहत होता है, यह तो अनुभव सिद्ध है दोप प्रामाण्य का प्रतिबन्धक ही है, यह जो कहा गया है वह प्रामाण्य का प्रतिबन्धक भी होता है इतना तात्पर्य वाला है। दोप से ज्ञान का विनाश होने पर उसमें कैसे संशय होगा ?, धर्मी के अभाव में धर्म कैसे रहेगा ?, यह जो कहा गया है वह अत्यन्त स्थूल है, नैयायिकों को भी इष्ट नहीं है, पूर्वज्ञान का अप्रामाण्यनिश्चय कैसे होगा ?, उस समय इच्छा कृति आदि के व्यवधान से पूर्वज्ञान का विनाश हो जायेगा। इत्यादि खराब प्रश्नों की वहाँ भी प्राप्ति होगी, यदि स्मृत ज्ञान में अप्रामाण्य निश्चय कहोगे तो यहाँ भी वह कल्प दण्डे से नहीं रोका गया ऐसा क्यों नहीं पसन्द करते ?, और फिर जहाँ मैंने प्रामाण्य के अज्ञान से निवृत्ति का प्रसङ्ग दिखाया है, वह शास्त्र की अव्युत्पत्ति से हुआ ऐसा पण्डितवर ने कहा, फिर प्रामाण्य के अज्ञान को किसने निवृत्ति का कारण बनाया है ? जिससे उसकी आपत्ति देते हैं ?। ऐसा पण्डितवर का कथन उन्हीं को शोभा देता है, पण्डितवर भूल गये कि वादियों के अनिष्ट ही अनवस्था आदि की आपत्ति दी जाती है, इष्ट की आपत्ति से प्रतिवादी कृतार्थ नहीं होते, जो शास्त्र की अव्युत्पत्ति की आपत्ति है वह अपने बाण से अपना हनन करना है, पण्डितप्रवर से प्रामाण्य के विचार में प्रवृत्त सभी ग्रन्थ नहीं देखे गये हैं, जिससे ऐसा

कथन संभव हो, यह आपत्ति पहले पहल मेरे से नहीं दी जाती है, ( अप्रामाण्य के अज्ञान से प्रवृत्ति हो तो प्रामाण्य के अज्ञान से निवृत्ति भी हो, तर्कताण्डव ६४ पृ० ) इसी प्रकार ( जहाँ जहाँ निष्कम्प प्रवृत्ति होती है वह प्रामाण्यनिश्चय के अधीन ही होती है यह मानना चाहिये नहीं तो प्रामाण्य के अनिश्चय से निवृत्ति का भी प्रसङ्ग हो; चि. सु. २२५ ) तत्त्वदीपिका भी ऐसा प्रापादन देखा गया है। इन सबको विना देखे किससे कल्पित है ऐसा कहना शास्त्र के एक देश का परिचयमात्र सूचित करता है, जो अप्रामाण्य का ग्रह स्वरूप से ही प्रामाण्य का विरोधी है ज्ञात होकर नहीं, वह तो व्यभिचार भी अज्ञात ही व्याप्ति का प्रतिबन्धक है इस कल्पना के ऐसा अत्यन्त अश्रद्धेय है। जो भी सुषुप्ति में सुलभ व्यभिचार के अदर्शन से व्याप्तिज्ञान की अन्यथा सिद्धि करते हैं, यह कहा गया है, वह भी सहचार का दर्शन व्यभिचार के अज्ञान से सहकृत ऐसा ग्रन्थ होने पर भी गजनिमीलिका से नहीं दीख पड़ा। केवल अभाव की कहीं कारणता या कार्यता नहीं देखी गई, उसका धर्मी और प्रतियोगी से ही निरूपण होता है। इसी प्रकार केवल प्रागभाव तथा प्रध्वंसाभाव की कारणता न देखी गयी है व संभव है। कोई जो उन्मत्त नहीं है वह सुषुप्ति में सहचारदर्शन नहीं कर सकता, पक्ष में लिङ्ग के असंसर्ग का अग्रह सुषुप्ति में नहीं सुलभ है, पक्ष का ज्ञान भी अपेक्षित है यह क्यों नहीं विचार किया ?, ज्ञानसामग्री रहने पर ज्ञान अवश्य ज्ञेय रहता है ऐसी मेरी प्रतिज्ञा पर सुषुप्ति के अभाव को आपत्ति दिये हैं, सो भी जल्दी में प्रवृत्त होकर पहले पीछे की आलोचना के विना राग से निकल गया है, उनके कथन के अनुसार सुषुप्ति में ज्ञान सामग्री कैसे संभव है ?, मन को पुरीतती नाड़ी में चले जाने से आत्मा और मनका संयोग नहीं रहता, क्यों अति स्थूल को भी पण्डितप्रवर नहीं समझे इसको नहीं कह सकता। यद्यपि ज्ञान होने पर ही ज्ञान हुआ कि नहीं यह संशय संभव है, यह प्रलापमात्र है, यदि ज्ञान ज्ञात होने पर यदि कहना चाहते हो तो ज्ञातमात्र ज्ञान का ज्ञान माना जायेगा तो स्वसंवेदन पक्ष ही आजायेगा कौन किससे संगत है ?। जो भी अन्त में प्रेक्षावान् की प्रवृत्ति में प्रामाण्यनिश्चय को कारण माने हैं उसकी निन्दा नहीं है, तो भी कारण कोटि में प्रामाण्यनिश्चय का प्रवेश न करके अप्रामाण्य ग्रह से अनास्कन्दित का निवेश कर काम चलाते हैं वह पहले पीछे में विरोधी है, अप्रामाण्य ज्ञान के अभावमात्र से बुद्धिमानों की प्रवृत्ति संभव नहीं है, यह स्वयं कहकर निन्दा करता हूं

पीता भी हूँ इस न्याय का विषय हो गये, अन्तिम प्रकरण में जो कहा है वह पण्डितों के लिये उचित ही है, खेद है कि पण्डितप्रवर ने पहले जल्प कथा को उतार कर विचार प्रवृत्त किया, वह तत्त्वजिज्ञासुओं का सहायक नहीं होता है, मैंने यहां तत्त्वनिर्णय के अनुरोध से जिन आक्षेपों को किया वे अपसिद्धान्त के निवारण के लिये हैं, व्यसन या द्वेष से नहीं ऐसा मानना चाहिये।

## इसके बाद २६।१२।६१ ई० को संख्या ६ में प्रकाशित

इस निबन्ध का उपसंहार करता हुआ जिज्ञासुओं के ज्ञान में सुगमता होने के लिये कुछ कहना चाहता हूँ। प्रामाण्य की स्वतः उत्पत्ति मत का यही तात्पर्य है कि ज्ञान की जो कारण सामग्री है वही उसके प्रमात्व की भी है, उससे अतिरिक्त गुण या दोषाभाव की प्रमा अपेक्षा नहीं करती। परतस्त्ववादी के मत में कारण में रहने वाले गुण या दोषाभाव ज्ञान के प्रामाण्य का प्रयोजक है, ज्ञानसामग्री से अतिरिक्त की अपेक्षा होने पर प्रमा का परतस्त्व है। अप्रामाण्य ज्ञान सामग्रीमात्र से नहीं पैदा होता, किन्तु दोषरूप दूसरे कारण के समवधान से पैदा होता है इसलिये अप्रामाण्य का परतस्त्व है, इसमें तार्किक-वेदान्ती-मीमांसक और बौद्धों की एक वाक्यता है, ज्ञानमात्र सामग्री से अप्रामाण्य पैदा होता है यह पक्ष कहे हुए में किसी का पक्ष नहीं है।

प्रामाण्यज्ञान में स्वतस्त्व और परतस्त्व का इस प्रकार निरूपण है—ज्ञान के ग्राहक से ही ज्ञान के प्रामाण्य का भी ग्रहण स्वतस्त्व पक्ष है, ज्ञान की ग्राहकसामग्री बौद्धमत में स्वसंवेदन रूप है। वेदान्ती के मत में साक्षी रूप है, भाट्ट मत में अनुमान है, मुरारिमत में अनुव्यवसाय है, परतः प्रामाण्यवादी नैयायिकमत में ज्ञानग्राहक अनुव्यवसाय से भिन्न अनुमान ही प्रामाण्य का ग्राहक है; इसलिये प्रामाण्यज्ञान में परतस्त्व है। बौद्धमत में इतना फरक है, नये ज्ञान में संशय होने से संवाद ज्ञान के अधीन अनुमान से उसके प्रामाण्य का ज्ञान होता है। आभ्यासिक प्रत्यक्ष स्वसंवेदन अनुमान संवाद ज्ञान का प्रामाण्य निश्चय तो स्वतः होता है। भट्ट और नैयायिक के मत में ज्ञान स्वरूप से ही विषय को प्रकाशित करता है, भट्ट के मत में विषय का निश्चय ही उसके प्रामाण्य का निश्चय है। वह विषय निश्चय ज्ञाततालिङ्ग वाले अनुमान से होता है। नैयायिकों के मत में अर्थ निश्चय स्वरूप सत् ज्ञान से पैदा होता है। जैसे मीमांसक मत में अर्थ निश्चय उसके प्रामाण्य निश्चय के अधीन है वैसा नहीं है,

प्रामाण्यनिश्चय के विना भी अर्थ निश्चय होता है, अर्थ निश्चय का प्रामाण्य ज्ञान के ग्राहक ज्ञान के प्रामाण्य की अपेक्षा नहीं करता, यह भट्ट और नैयायिकों का समान समाधान है। ज्ञान के ग्राहक ज्ञान का प्रामाण्य अज्ञात ही अर्थ निश्चय का जनक है, ऐसा तार्किक मीमांसकों का समान है। प्राभाकर का सभी ज्ञान प्रमाण ही है, ऐसा नव्यवेदान्ती के मत में अप्रमा अविद्या की वृत्ति होने से ज्ञानाभास, है, ज्ञानों का स्वाभाविक प्रामाण्य भट्टमत में है। कौन पक्ष ठीक है इसका सभी वादीओं की स्वीकृति के अनुसार उपपादन नहीं हो सकता, जिसको जो पसन्द है उसको वह मानता है, यह ध्यान देने लायक है कि संवाद प्रामाण्य का कारण है ऐसा एक मत है, वह भारतीय दार्शनिकों का अभिमत नहीं है, संवाद प्रामाण्य का ज्ञापक है जनक नहीं इसमें भारतीयों का ऐकमत्य है, पाश्चात्य दर्शनों में भिन्न-भिन्न कल्पनायें फैली दीखती हैं, उनकी आलोचना यदि संस्कृत महाविद्यालयों में चलती तो विद्यार्थियों की बुद्धि विशद होती। वक्ताओं के अधिक बुद्धि विनोद का संभव है, लेख बढ़ने के भय से अधिक नहीं कहना चाहता, इति शम्।

बौद्ध दर्शन सिद्धान्त जिज्ञासुओं को प्रस्तुत भाषण पर विश्वास नहीं करना चाहिये, न्याय मत के लिये जो लिखा है उसको अच्छे नैयायिकों से पूछकर समझें कि भाषण में न्यायमत समझने में भूल पड़ी है उसी प्रकार बौद्ध मत समझने में भी भूल है। सर्वदर्शन संग्रह में बौद्ध का स्वतः अप्रमाण जो लिखा है वह बौद्ध दर्शन विरोधी का लेख है इसलिये अमान्य है ऐसा भाषण का मत न मानें। सांख्य में भी स्वतः अप्रामाण्य का उल्लेख सर्वदर्शन संग्रह करता है। किसी भी दर्शन में प्रामाण्य के विषय में अनेकान्त नहीं है तब बौद्ध में भी कहीं स्वतःप्रामाण्य ऐसा इस भाषण का लेख ठीक नहीं है। किसी भी दर्शन में उत्पत्ति ज्ञप्ति में स्वतस्त्व परतस्त्व का भेद नहीं है, स्वतः है तो उत्पत्ति ज्ञप्ति दोनों में परतः है तो उत्पत्ति ज्ञप्ति दोनों में भाषण में बौद्ध दर्शन के लिये इसमें भेद किया गया है वह भी ठीक नहीं है। पारिभाषिक शब्दों के अर्थ आदि समझने में भूल हुई। कुछ परिचय लेख में दिखाया गया है कुछ भाषण समीक्षा लेख में है।

---

अयोध्यास्थसंस्कृतंपत्रस्य ३५ वर्ष ८ संख्यायां ६।१।१९६२ ईशाब्दे प्रकाशिता—

# भाषणसमीक्षा

अज्ञानावरणे मलीनविषयव्यालुप्तसद्भास्वरे ।
मानामानविमर्दगर्तविगलद्भक्तिद्रवे शारदे ॥
निर्द्वन्द्वैकदयापरे परतरे शश्वत्प्रकाशे शुभे ।
मातश्चेतसि चञ्चले विजयतां त्वत्पादपाथोजभाः ॥

गतायां वाराणसेयसंस्कृतविश्वविद्यालयबौद्धदर्शनपरिषदि नवनालन्दामहाविहाराध्यक्षाणां महाविदुषां श्रीसातकडिमुखोपाध्यायानाम् मुद्रितम् अध्यक्षीयभाषणं श्रुतञ्च बहूनां विद्वद्वरेण्यानां भवेदिति मन्ये । तस्यैव काञ्चित् समीक्षां पाठकानां पुरत उपस्थापयामि । चिरात् कृतश्रमाणां ज्यायसां विशेषतः सौगतशास्त्रेषु समास्वादसदृष्टिलक्ष्याणामेषां भाषणे बौद्धसिद्धान्तविरुद्धानां पदार्थानां बौद्धसिद्धान्ततया व्यवस्थापनस्य अक्षमतया पाठकानां पण्डितानानां दृष्टिपाताय उत्तेजनम् अवसरप्रदानं वा उद्देश्यम् । एतादृशे व्यतिकरे प्रथमं कारणं प्रामाण्यवादस्य दुरवबोधता सूक्ष्मविषयता च, या नव्यन्यायविहारभूमिरभूत् । द्वितीयञ्च कारणं बौद्धन्यायग्रन्थानां चिरात् भारतीयपण्डितानां चर्चाविषयताम् अलभमानानां प्रौढव्याख्याविवर्जितानां स्थूलावस्थायां बाल्यावस्थायां वा समययापनम्, येन तत्रस्थानि सर्वाणि उदाहरणान्यपि सौगतसरण्या न समन्वयं भजन्ते, सारल्याय न्यायस्यैव समुद्धृतानीति प्रतिभाति ।

यद्यपि प्रथमं पत्रेऽस्मिन् प्रकाशिते 'प्रामाण्यवादस्य सरलः संक्षिप्तश्च परिचयः' इति लेखे किञ्चिदालोचितमेतत् तथापि तत्र विषयान्तरप्राधान्याद् गुणभूतमिदम् । अत्र प्राधान्येन अस्यैव समीक्षा । किञ्च 'प्रामाण्यवादसमीक्षा' मम लेखस्य तेन विदुषा गताङ्केषु प्रकाशिता' तत्रापि अपसिद्धान्तप्रसारस्य संक्षिप्ततरदिग्दर्शनस्य प्रकारं प्रकाशयामि । विस्तरतो लेखस्य न मम समयो नापि तादृशं फलं पश्यामि । किञ्चित्कञ्चिल्लेखिष्यत्येव, अतो ममोपरि ये आक्षेपाः, व्याख्यानदूषणदुश्चेष्टाः व्यर्थानां वचनानां प्रकृतानुपयोगिनाम् अभिप्रायान्तराणां समुद्धरणञ्च तानि सर्वाणि परित्यजामि । भाषणे प्रतिज्ञातं स्वमुद्देश्यभूतं न समरक्षत् । अयं बौद्धसिद्धान्तो अयमपसिद्धान्त इत्यादि प्रायः प्रदर्शयन्नेव लेखं समापयिष्यामि ।

बौद्धमते प्रकाशस्वभावाऽपि सततं प्रवहन्ती चितिशक्तिर्न विषयग्रहणस्वभावा, अत एव सुषुप्तिमुक्तिप्रभृतिषु निराकारा आलयविज्ञानाभिधाना निरुपप्लवा काचित्सन्ततिरनुवर्तत इति सिद्धान्तः। विषयग्रहस्वभावत्वे च निराकारत्वानुपपत्तेः। नैयायिकादीनामेव ज्ञानस्य विषयग्रहणं सविषयकत्वं वा स्वभावः, निर्विषयकज्ञानानङ्गीकारात्। बौद्धमते च न विज्ञानत्वव्यापकं सविषयकत्वम्। अत एव बौद्धग्रन्थेषु विषयाणां मलशब्देनोपपादनम्।

ज्ञाने विषयाकारस्तु योगाचारमते बाह्यविषयानङ्गीकाराद् अनादिप्रचलद्विषयवासनावशादेव। बाह्यसद्वादिबौद्धमते तु प्रत्यक्षस्थले प्रत्यक्षविज्ञानस्य कारणं विषयो विज्ञाने स्वाकारसमर्पकः, यो हि आलम्बनप्रत्ययशब्देन व्यवह्रियते, रूपस्य चाक्षुषविज्ञाने रूपाकारताया रूपसादृश्यस्य रूपविषयकत्वस्य वा यथाव्यवहारं प्रयोजकं रूपमालम्बनम्। तादृशे विज्ञाने विज्ञानत्वस्य च प्रयोजकम् अव्यवहितप्राक्तनं विज्ञानं यस्य समनन्तरशब्देन व्यवहारः, विषयाकारताया विज्ञानतायाश्च प्रयोजकं परस्परविभिन्नमिति भावः। तथा च सामान्यज्ञानसामग्र्यामालम्बनप्रत्ययस्य न प्रवेशः। तदभावेऽपि सुषुप्तिमुक्तिप्रभृतिषु विज्ञान सन्तानस्य प्रवहणात्, वह्न्यनुमाने च ज्ञाने वह्न्याकारतायाः प्रयोजिका वह्निव्याप्तिः। इत्थञ्च विषयग्रहणं मेयबोधिका शक्तिर्वा विज्ञानस्य स्वभाव इति न बौद्धसिद्धान्तः। तस्य सिद्धान्ततया प्रतिपादनं यस्य कस्याप्यस्तु सर्वथाऽशुद्धमेव। विज्ञानत्वप्रयोजकमेव प्रमात्वप्रयोजकमिति न बौद्धसिद्धान्तः। स्वतःप्रामाण्यप्रतिपिपादयिषाऽऽग्रहिलतया यस्य कस्यापि तथा प्रतिपादनं बौद्धसिद्धान्तविरुद्धम्। प्रयोजकभेदे च उत्पत्तौ प्रामाण्यस्य न स्वतस्त्वलाभः। विज्ञानसामान्यसामग्रीप्रयोज्यत्वं हि उत्पत्तौ स्वतस्त्वम्। प्रामाण्यस्य च विशेषसामग्री प्रयोजिका। विज्ञानत्वावच्छिन्नं प्रति विज्ञानं कारणं न तु घटाद्याकारत्वावच्छिन्नं प्रत्यक्षं प्रति, पटाकारे सौषुप्ते परोक्षे च विज्ञाने व्यभिचारात्, घटाद्याकारत्वावच्छिन्नप्रत्यक्षं प्रति घटाद्यालम्बनप्रत्ययाः कारणानि न तु ज्ञानत्वावच्छिन्नं प्रति सौषुप्तादौ व्यभिचारादिति भावः।

## ६ संख्या २३।१।७६ ईशाब्दे प्रकाशिता

एवञ्च सर्वदर्शनसंग्रहादौ समुपवर्णितः प्रामाण्यवाद एव बौद्धाचार्याणां सम्मतः बौद्धसिद्धान्तः। तत्र च अप्रामाण्यस्वतस्त्वं सामान्यतो वर्णितम् उत्पत्तौ ज्ञप्तौ च अभिप्रेतम्। ननु बौद्धा अपि भ्रमस्थले दोषान् वर्णयन्त्येव। तथा च दोषप्रयोज्यत्वमादाय नैयायिकानामिव परतस्त्वमपि आयाति इति चेन्न नैयायिकसाम्याभावात्। न्यायनये दूरस्थस्य कथमपि भानेऽपि बौद्धनये बुद्धिस्थस्य सर्वथा सान्निध्यात् न दोषो रजताकारता प्रयोजकः किन्तु शुक्त्याकारतायाः प्रतिबन्धक एव। न्यायनये रजताकारता प्रयोजकतया रजतस्मृतिरुद्बुद्धो रजतसंस्कारो वा न सार्वत्रिकः प्रमासामग्रीसन्निविष्टश्च न। बुद्धिस्थस्तु प्रमास्थलेऽपि सन्निहितं भ्रमप्रमासाधारणम्। किञ्च बौद्धाचार्यैः क्वचित्

परतस्त्वम् अप्रामाण्यस्य स्फुटं निरुक्तं समुपलभ्येत चेत्सोऽपि केनाप्यभिप्रायान्तरेण प्रतिपादयेत। न तथा साम्प्रतं समुपस्थितम्। इदमेव च बौद्धसिद्धान्ततया उपलभ्यते।

अस्य चौपपादनं प्रामाण्यवादलेखे कृतमेव। अन्यैः प्रदर्शितानि सम्वादवाक्यानि अप्रामाण्यस्य स्वतस्त्वेऽपि संगच्छन्ते तदा किमिति कस्यचित् सिद्धान्तानवधानविजृम्भितेन व्याख्यामात्रेण बौद्धसिद्धान्तः परतस्त्वे गच्छेत्। कदाचन अस्माभिरनुपलभ्यमानमपि तादृशं स्फुटवचनं तादृशैराचार्यैरुपलब्धं भवेत्। यत्तु प्रामाण्यवादसमीक्षायां 'संस्कृतं' पत्र लेखे प्रस्तुतविद्वद्वरस्य 'विरोधिदर्शने' खण्डयितुमारोप्य मतान्तरं सर्वदर्शनसंग्रहादौ प्रतिपादनम्' इति लेखनं तत्तु स्वाङ्गसंसक्तपङ्कस्य परस्मिन् प्रतिक्षेपमनुहरति। न तादृशस्य मूर्धाभिषिक्तग्रन्थस्य असत्यमार्गेण परमतखण्डनाय रचना अपितु अग्रिमेषु स्वसन्तानेषु वात्सल्यात् सारल्येन दार्शनिकताप्रचाराय एवमुपयुक्तस्य ग्रन्थस्योपरि एवमाक्षेपो'''महाविदुषामेव शोभायै। अपरञ्च सुगतसरण्या न तद्वति तत्प्रकारकत्वं प्रमात्वम् येन विशेषणविशेष्यादीनां सन्निकर्षविशेषे कश्चिद् दोषोऽप्रामाण्यप्रयोजकः कल्प्येत; निर्विकल्पस्य प्रमात्वाङ्गीकारात् नापि अबाधितार्थविषयार्थकत्वं येन प्रमास्थले विषयाभावः कल्प्येत, अनुमानस्य असत्सामान्यविषयकत्वेऽपि प्रमात्वस्वीकारात्। किन्तु बाह्येन संवादस्य बाह्यप्रापणस्य वा प्रायो यत्र अभावस्तत्र अप्रमात्वमङ्गीक्रियते। स च न ज्ञानोत्पत्तेः प्राक्तनः। तथा साधारणस्य बुद्धिस्थत्वस्य सर्वत्र विषयाकारतासम्पादकत्वं प्रतिभाति, बाह्यस्य च प्रवृत्त्यादिप्रयोजकसम्वादादावुपयोगः। यथाहि ग्राह्योऽवसेयश्च द्विविधो विषयः प्रमाणस्य वर्णितः। प्रत्यक्षस्थले ग्राह्यं क्षणिकम्, अवसेयस्तु ज्ञाने प्रापणशक्तिप्रदर्शनाय सन्तानः। प्रापणस्य प्रापणयोग्यताया वा अन्यसामग्रीसमाजलभ्यतया प्रामाण्यस्य परतस्त्वात् परिशेषादप्रामाण्यस्य स्वतस्त्वमायाति, अप्रमाज्ञाने च न ग्राह्यप्रापणयोग्यतेति स्फुटं वर्णितमस्ति। प्रापणशक्तेरभाव एव अप्रापणशक्तिः। सा च न काञ्चित् विशेषसामग्रीमपेक्षत इति स्वतस्त्वं पर्यवस्यति।

भाषणस्य द्वितीयं पृष्ठं पश्यन्तु पाठका यत्र बौद्धदर्शनस्य प्रामाण्यवादं परीक्षितुं सर्वदर्शनसंग्रहस्य विरोधञ्च बौद्धग्रन्थेभ्यो दर्शयितुम् प्रतिजानीते ततः परञ्च किं लिखितमिति।

१. अप्रामाण्यस्य उत्पत्तौ ज्ञप्तौ वा परतस्त्वे न किमपि स्फुटं वचनं प्रदर्शितं तदा कथं तस्य विरोध आयाति ?

२. यानि तत्त्वसंग्रहपञ्जिकावचनानि सन्ति समुद्धृतानि तानि सर्वाणि ज्ञप्तिपक्षस्यैव नोत्पत्तिं स्पृशन्ति। तत्रापि प्रामाण्यस्यैव न अप्रामाण्यं चर्चयन्ति। तदा कथमप्रामाण्यस्य स्वतस्त्वे विरोधमञ्चन्तीति गवेषयन्तु पाठकाः।

३. उत्पत्तौ प्रामाण्यस्य स्वतस्त्वेऽपि न स्फुटवचनं दत्तं, किन्तु तात्पर्यवर्णनेन निस्सारयति, परं निस्सारमशुद्धं बौद्धप्रधानप्रक्रियाविरुद्धञ्च । तत्स्फुटीकरिष्यामि प्रामाण्यस्य परतस्त्वे बौद्धग्रन्थस्य स्फुटं वचनञ्चोदाहरिष्यामि ।

४. पञ्चदशपृष्ठे भाषणे यानि प्रमाणवचनानि समुद्धृतानि तानि न्यायमतमिव ज्ञप्तौ प्रामाण्यस्य परतस्त्वमुपपादयन्ति, पण्डिताञ्चानवस्थां न्यायसम्मतप्रक्रिययैव वारयन्ति, न अप्रामाण्यस्य स्वतस्त्वं विघ्नन्ति, प्रामाण्यस्य परतो ग्राह्यत्वे न न्यायमताद् नूतना सरणिरन्विष्टा ।

५. चतुर्थपृष्ठस्य प्रामाण्यस्य स्वतस्त्वोपपादनञ्च दार्शनिकतापरिहासः । 'अथ शक्तिः स्वहेतुभ्य' इत्यादि कारिकया किं नूतनमुपपाद्यते ?, प्रामाण्यपरतस्त्ववादिनैयायिकानां मतेऽपि प्रमाज्ञानस्य विषयप्रकाशकत्वं प्रमाज्ञानकारणेभ्य एव जायते । न्यायसम्मताः प्रमात्वप्रयोजका गुणाः अपि प्रमासामग्र्यन्तर्भूताः प्रमाज्ञानहेतव एव । तथा च परतस्त्वसाधारणमिदमुपपादनं कथं स्वतस्त्वमवगमयेत् ? किञ्च अप्रमाज्ञानस्य विपरीताकारप्रकाशकत्वशक्तिरप्रमाज्ञानकारणेभ्य एव जायते । अप्रमात्वप्रयोजका दोषा अपि अप्रमासामग्र्यन्तर्भूता अप्रमाज्ञानहेतवः । तथा च अप्रमासाधारणमिदमुपपादनं कथं प्रामाण्यस्य स्वतस्त्वं साधयेत् ? ।

उपयोगि च वस्तु न किमपि लिखितम् । ज्ञानत्वेन ज्ञानं प्रतिकारणं किम् ? का नाम ज्ञानसामान्यसामग्री ? ज्ञानत्वस्य प्रयोजकं किम् ? कथमिव तदेव प्रमात्वप्रयोजकमपि ? इत्यादि नास्ति वर्णितं तदाऽपि प्रामाण्यवादस्य परीक्षा ।

अत्रैव भाषणे चतुर्थपृष्ठे ज्ञानस्य मेयबोधिका शक्तिः स्वाभाविकी इत्यभिप्रेतं लिखितमस्ति । अशुद्धं तत्प्रागुपेक्षितमासीन्मया, परम् ३१।१०।६१ दिवसीय 'संस्कृतं' पत्रे समीक्षालेखे तदुपरि दुराग्रहो दृश्यते । नैतावदेव बौद्धाचार्याणां वचनानि अपि तत्र प्रमाणतयोद्धृतानि व्याख्यातानि च । तदुपरि हा । हन्त ॥ हता दार्शनिकतेति खेदप्रकाशनमन्तरा किं मया विधेयम् ? विज्ञानस्य विषयप्रकाशनशक्तिः स्वाभाविकी इति न बौद्धदर्शनं शुद्धचित्तसन्ततिस्वीकारादिति प्रागुपपादितं केवलं स्मारयामि । बौद्धग्रन्थेषु वर्तते अत एव महाविदुषा प्रमाणत्वेनोद्धृतानि वचनानि इति चेत्तदेवोत्तरम् नास्ति तादृग्बौद्धदर्शनमिति, कथं दृश्यते ? इति चेत् न दृश्यते । कथं तेन दृष्टमिति चेत् सिद्धान्तानवधानेन दृष्टम् । सिद्धान्तमवधाय अन्यः कोऽपि च न प्राप्स्यति ।

## १० संख्या ६।२।६२ ईशाब्दे प्रकाशिता

विषयग्रहणमित्यादि पद्यस्यायमर्थः—यो हि विज्ञानस्य जनको विद्यमानो विषय आलम्बनप्रत्ययभूतः तस्य ग्रहणं करोति विज्ञानम् इति, तथा च आलम्बनप्रत्ययप्रयुक्ता

विषयाकारतः विज्ञानस्येति प्रतिपाद्यते, किमनेन प्रामाण्यस्य स्वतस्त्वे आगतम्? न्यायनयेऽपि प्रत्यक्षविज्ञानं प्रति विषयस्य कारणताऽङ्गीक्रियते, तेन किं प्रत्यक्षस्य स्वतः प्रामाण्यमापाति? एषा प्रकृतिरित्यादिरपि न्यायमतमिवास्ति। विद्यमानविषयग्रहणं प्रकृतिः क्वचिद् दोषवशाद् विपर्यय इति सरलार्थः। कार्यकारणभावप्रदर्शनमन्तरा प्रकृतिस्वभावादिपदस्य न कश्चिन्निष्कर्षः, दोषादिप्रतिबन्धकरहितं वस्तु प्रत्यक्ष विज्ञानस्य जनकमिति निर्गलितोऽर्थः। एष एव भावो भामतीसमुद्धृतधर्मकीर्तिवचनस्य।

विद्यमानग्रहणप्रतिबन्धके दोषे सति अविद्यमानाकारताप्रयोजकं किमिति अन्वेषणीयम्। तच्चेद् बुद्धिस्थत्वं प्रमासामग्रीसाधारणं तदा आयातं स्वतस्त्वम-प्रामाण्यस्य। किमन्येन?।

प्रभास्वरमित्यादितत्त्वसंग्रहः तादृशञ्च प्रमाणवार्तिकं तस्य मनोरथनन्दि व्याख्यानञ्च शुद्धं प्रकाशस्वभावं विज्ञानम्, विषयवासनापरिबृंहितं साकारताऽशुद्धि-प्रयोजकं मनोदोषञ्च वर्णयति तेन नात्र कश्चिद्विशेषः। विज्ञानस्य स्वप्रकाशता विषय-प्रकाशता च पृथक्।

असौ परतः प्रामाण्यप्रतिपादकेषु समीक्षालेखे "संस्कृतं" पत्रे समुद्धृतेषु वचनेषु 'न त्वस्या आधानाय विपादिवत्' तथा 'स्थिते हि तस्य मानत्वे इत्यंशौ प्रामाण्यस्योत्पत्तौ स्वतस्त्वं प्रकाशयत इति व्याख्याति, परं तन्न शोभनम्। आलम्बनप्रत्ययाधृता उत्पत्त्यैव सह वर्तमाना प्रामाण्यशक्तिर्न अर्थक्रियाज्ञानादिभिराधीयते अपितु ज्ञायत इति स्फुटोऽर्थ-स्तयोः तथा च नैतानि वचनानि ज्ञानसामान्यसामग्रीप्रयोज्यं प्रामाण्यं प्रदर्शयन्तीत्यवधेयम्।

परतः प्रामाण्यस्योत्पत्तौ व्यञ्जकानि बहूनि बौद्धाचार्यवचनानि मम प्रामाण्यवाद-परिचयलेखे समुद्धृतानि। अन्यानि अपि सन्ति। तानि लेखविस्तरभिया नोद्ध्रियन्ते, किन्तु तत्र सूचितमात्रं सर्वापेक्षया स्फुटतरं प्रामाण्यस्योत्पत्तौ परतस्त्वप्रतिपादकं धर्मोत्तरप्रदीपवचनमुद्धरामि। साक्षाद् दिदृक्षुभिः पुस्तकस्य एकोनविंशपृष्ठे उपलभ्येत, अत एव प्रापणशक्तिरेव ज्ञानस्य प्रामाण्यम्। सा च प्राप्यादर्थाद् आत्मलाभनिमित्तेति, यतो येन प्रवर्तते तदपि प्रापणयोग्यमेव। शक्तिनिश्चयस्तु अर्थक्रियानिर्भासस्य सर्वस्य अनुमानस्य च स्वत एव प्रवर्तकाभ्यस्य च कस्यचित् स्वत एव, यदभ्यासेन परितो निरस्त-विभ्रमाशङ्कं यन्निद्राद्यनुपप्लुतं सद् पासन्नदेशम् अनाशङ्काव्यञ्जकाधीनान्यथाऽभिव्यक्ति-वस्तु च गृह्णाति। तद्रूपसम्वेदनादेव सत्यार्थं निश्चीयते कस्यचित् तु परतोऽर्थ क्रिया निर्भासात्मकात् स्वतः प्रमाणादन्यतो वा यतः कुतश्चित् नान्तरीयकार्थदर्शनात् मध्यकाल-वर्तिभ्रान्तिशङ्कापनोदेन निश्चीयत इति।

एवञ्च प्राप्यादर्थादालम्बनप्रत्ययाद् आत्मलाभउत्पत्तिः प्रमाज्ञानस्य तन्निमित्तं प्रामाण्यमिति यथाश्रुतार्थः ज्ञानसामान्यकारणभिन्नप्राप्तियोग्यार्थविशेषकारण

प्रयोज्यं प्रमायां परतः प्रामाण्यमिति निष्कृष्टार्थः। योग्यमेवेत्यनेन शक्तिपदार्थयोग्यतां दर्शयति। प्रापणशक्तिरूपप्रमात्वस्य निश्चयप्रकारं दर्शयति। शक्तिनिश्चयस्तु इत्यनेन, अर्थक्रियानिर्भासो वाचस्पतिमिश्रभाषया फलज्ञानं तत्रैव सर्वस्येति विशेषणम्, ननु अनुमाने। तत्र त्रीणि कारणानि? तथा सति चकारः सर्वस्योत्तरं शोभते वाचस्पतिना बौद्धमतव्याख्यानावसरे अनुमानस्य 'सम्वादकं सत्' प्रमात्राशयवशात्' इति हेतुभ्यां परतः प्रामाण्यवर्णनात्, अनेनापि नान्तरीयकार्थदर्शनेन परतः प्रामाण्यं वर्ण्यते भवति चानुमाने नान्तरीयकार्थदर्शनम् तथा च ..प्रत्यानुमापदं प्रमात्वानुमानपरम्।

## ११ संख्या १३।२।६२ ईशाब्दे प्रकाशिता

अनुपप्लुतम् अनाशङ्क्येत्यादिना च दोषाभावज्ञानम्, आसन्नदेशेत्यादिना योग्यसंनिकर्षरूपगुणज्ञानञ्च, प्रमात्वग्रहणोपयोगीति न्यायमतमिव सूचयति। तद्रूपसम्वेदनादेवेत्यादिना तज्ज्ञानग्रह एव तन्निष्ठप्रमात्वनिश्चय इति स्वोक्तस्वतो ग्रहणं व्याख्याति।

## अथ ज्ञप्तिपक्षः

अत्र भाषणे प्रामाण्यस्यैव स्वतः परतो वा ग्रहः इति निर्णयोपयोगि किमपि वचनं न समुद्धृतम्, मया प्रदर्शिते धर्मोत्तरप्रदीपेऽपि अप्रामाण्यस्य चर्चा नास्ति, एवं प्रतिभाति यावत् प्रामाण्यग्रहसामग्री न समुदेति तावज्ज्ञानग्रहे अप्रामाण्यग्रह एव भवति, स च ग्रहः संशयो निश्चयो वा यथासामग्रि जायताम्, सर्वदर्शनसंग्रहकारिकायां स्वतःस्त्वमप्रामाण्यस्य सामान्यतः प्रतिपादितं तदेव बौद्धमतं प्रत्येमि, मया च प्रामाण्यवादलेखे 'अप्रामाण्यव्यवच्छेद' इत्यादि तत्त्वसंग्रहकारिका २८४३ वर्णिता विद्यते, तत एतत् स्फुटमायाति। एवमेव महाविदुषां प्रामाण्यवादसमीक्षानामके तृतीयलेखे पूर्वकारिकासमुद्धरणमुखेन तदुपरि किमपि यनुपयुक्तं प्रजल्पितं वर्तते, तदर्थं किं लेखनीयम्, अस्तु नाम तदभिमतमेव तत्कारिकाव्याख्यानम्, तथापि मदुद्धृतस्फुटार्थकारिकायाः अप्रामाण्यस्य स्वतो ग्राह्यत्वप्रतिपादनं कथं विहन्ति? भवतु नाम प्रामाण्यनिश्चयेन वर्तमानाया अप्रामाण्यशङ्काया व्युदासः तथापि कारिका अप्रामाण्यस्य स्वतो ग्रहणं कथन्न प्रतिपादयेत्, यदपि तत्रत्यम् यदि ज्ञानस्य स्वाभाविकम् अप्रामाण्यमनुभूतं भवेत् कथं प्रामाण्यान्वेषणे प्रवृत्तिः? कथं सम्वादादिज्ञानेऽपि समाश्वासः इत्याद्याशङ्कनम् तदपि आहार्यम् प्रामाण्यनिश्चयो न जातोऽत एव प्रामाण्यान्वेषणे प्रवृत्तिः, ज्ञाने जातेऽपि यावत्तस्य ज्ञानं न भवति तावदप्रामाण्यस्य स्वाभाविकस्यापि ग्रहो न भवति, इति स्वतो ग्राह्यत्वेऽपि वर्तत एव, सम्वाद ज्ञानमपि नोत्पद्यमानमेव अप्रमात्वेन गृहीतं तावत् सम्वादकार्यं विघटयति, यतः अप्रमात्वेन गृहीतमपि सम्वादकं कथन्न? यथा अप्रमाऽपि विकल्पज्ञानं निर्विकल्पकस्य प्रामाण्यनिश्चयः, वर्णितञ्चैतत् प्रामाण्यवादपरिचयलेखे;

नेदं नूतनमपि, यथा प्रामाण्यस्य स्वतो ग्राह्यत्ववादिनो मीमांसका: प्राक् प्रामाण्यनिश्चयेऽपि पश्चात्तनदोषग्रहवशात्प्राक्तनप्रामाण्यनिश्चयस्य भ्रमत्वं कल्पयन्ति तथा सौगता अपि प्राक्तनाप्रामाण्यनिश्चयस्य पश्चात्तनात् दोषाभावज्ञानाद् गुणज्ञानाद् वा प्राक्तनाप्रामाण्यनिश्चयस्य भ्रमत्वं कल्पयिष्यन्ति, वर्णितञ्च दोषाभावगुणज्ञानादि मदुद्धृतधर्मोत्तरप्रदीपे, भाषणोद्धृततत्त्वसंग्रह २९७३ भ्रान्तिहेतोरसद्भावादित्यादिकारिकायाञ्च, यथा स्वतोग्राह्यत्ववादिमीमांसकमते दोषज्ञानान्न सर्वत्र प्रामाण्यनिश्चयस्तथा अप्रामाण्यस्य स्वतो ग्राह्यत्वेऽपि सौगतमते दोषाभावगुणज्ञानाभ्यां न सर्वत्र अप्रामाण्यनिश्चय:, इत्यलमनूतनेन ।

यथा प्रामाण्यस्य स्वतो ग्राह्यत्वं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं वर्ण्यते तथा तत्प्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतो ग्राह्यत्वमप्रामाण्यस्य वर्णितं स्यात् । प्रामाण्यग्रहसामग्रीकाले नाप्रामाण्यस्य ग्रह आयाति ।

द्वितीयपृष्ठे अनेकान्तवर्णने भाषणे तत्त्वसंग्रहपञ्जिकामुदाहृत्य 'प्राचीननैयायिकप्रस्थानधुरन्धरेण वाचस्पतिमिश्रेण तात्पर्यटीकायामयमेव पक्ष: स्वसिद्धान्तत्वेनाङ्गीकृत' इति यदुपपादनं तत्तु चक्षुषोर्धूलिप्रक्षेपणम्, तात्पर्यटीकायां तत्रैव प्राक्पश्चाच्च विपरीतलेखस्योपलम्भात्, अनुमाने आभ्यासिक प्रत्यक्षे अर्थ क्रियानिर्भासात्मके फलज्ञाने च परत: प्रामाण्यवर्णनं स्फुटमुपलभ्यते, प्रामाण्यवादपरिचयलेखे च पृष्ठसंख्यापंक्तयोऽपि समुदाहृता: ।

अत्रैव द्वितीयपृष्ठे भाषणे 'तेषां मतं न खल्वेकान्तत: स्वत: परत: पक्षयोर्निक्षेप्तुं शक्यम्, किन्तु विभज्यैव वचनीयम्' इति सौगतसमये अनेकान्तत्ववर्णनद्वारा सर्वदर्शनमतसंग्रहस्य खण्डनाय योहि सोऽपि परीक्षणीय: कियच्चिरम् आत्मानं धारयति ? ।

तत्र केचन प्रश्ना उत्थाप्यन्ते, तेषां समाधानानि अन्वेषणीयानि तेषाञ्च योजना प्रकृते विधेया, तत: एव अनेकान्त एकान्तो वा निर्णयमाप्स्यति ।

१. प्रथमं तावत् प्रामाण्यवादसमीक्षालेखस्य तृतीयप्रकाशने ज्ञानप्रामाण्यस्य स्वतस्त्वं परिष्कुर्वता भाषणलेखकेन स्वयमुपपादितमनेकान्तवादं स्वयमेव विलोपयतीत्यहो क्रीडनकम्, ज्ञानग्राहकग्राह्यत्वमेव ज्ञानप्रामाण्यस्य स्वतस्त्वं' परिष्करोति, तच्च लक्षणं सर्वत्रैव प्रामाण्यस्य स्वतो ग्राह्यत्वमवलेपयति, य: कोऽपि ज्ञानस्य प्रामाण्यग्रह: स सर्वोऽपि धर्मितया ज्ञानं गृह्णाति, धर्मिज्ञानविषयतां विना प्रामाण्यविषयता नायाति, य: प्रामाण्यग्राहक: स ज्ञानग्राहकोऽपि, तथा च सर्वमपि ज्ञानस्य प्रामाण्यं ज्ञानग्राहकेण गृह्यते न किमपि प्रामाण्यं परतोग्राह्यमवशिष्यते ।

## १२ संख्या २७।२।६२ ईशाब्दे प्रकाशिता

फलितञ्च प्रामाण्यस्य स्वतोग्राह्यत्वमात्रमेकान्तम्, प्रतिज्ञाप्रमाणोद्धारणानि च अनेकान्तवादस्य, लक्षणञ्च ऐकान्तवादस्येति अहो गहने प्रामाण्यवादे महाविदुषा-

मेषाम् अनधिकारचेष्टादुर्विलासः। नैतावदेव प्रामाण्यग्रहोऽपि ज्ञानग्रहः, अप्रामाण्यग्राहकोऽपि ज्ञानग्राहकः, तथा च ज्ञानग्राहकेण ग्राह्यं सर्वमप्रामाण्यमिति अप्रामाण्यस्य एकान्ततः स्वतो ग्राह्यत्वं विनायकं प्रकुर्वतो वानरकृतिः समपद्यत।

२. वाचस्पतिवचस्स्वपि कुत्रचित् स्वतः प्रमाणमिति शब्द आयाति, तत् किं न्यायनयेऽपि अनेकान्तवादः प्रसरति न वा? नाद्यः अनेकान्ततया केनचित् प्राक्तनेन न्यायप्रामाण्यवादो व्याख्यातो न वा? अव्याख्याने अद्य केनचित् नूतनेन अनेकान्ततया वाचस्पतिवचोविवरणं कथन्नाशुद्धमभिप्रायानवबोधविलसितञ्च? व्याख्यात इति चेन्नोद्धरणमन्तरा विचारार्हम्, एकान्तवाद एव न्यायनये इति चेत् वाचस्पतिवचसः का गतिः? न चैकदेशितयाऽपि न्याये वाचस्पतेरनेकान्तवादः क्वचिद् गृहीतः?

३. स्वतः प्रमाणमिति वदताऽपि वाचस्पतिना सर्वत्रैव हेतुप्रदर्शनं कृतं तस्य प्रयोजनम्? न च स्वत उत्पादे ग्रहणे वा विशेषहेतुप्रदर्शनस्य आवश्यकता आयाति, ज्ञानसामान्यसामग्रीतो ज्ञानग्रहसामान्यसामग्रीत एव स्वतस्त्वस्य उपपत्तेः, प्रदर्शिताश्च हेतवो न तादृशसामग्र्यन्तर्भावं भजन्ते।

४. यत्र स्वतः प्रमाणमिति प्रयुक्तं तत्र ज्ञानग्राहकसामान्यग्राह्यत्वं समन्वेति न वा? न समन्वेति चेत् कीदृशं स्वतो ग्राह्यत्वम् अभिप्रेतम्?।

५. सौगतसमये स्वतो ग्राह्यत्वं ज्ञानग्रहसामान्यसामग्रीग्राह्यत्वरूपमस्ति न वा? नास्ति चेत् कीदृशं तत्? न्यायमीमांसादौ प्रसिद्धमेतादृशं स्वतो ग्राह्यत्वमभिप्रेत्य अप्रामाण्यस्य स्वतो ग्राह्यत्वमेकान्ततो व्यवस्थापयन् सर्वदर्शनसंग्रहकारः कथमपराध्यति?। बौद्धदर्शनपुस्तकेषु अस्तु यथा तथा वा लिखितम्, किन्तु बौद्धानां ज्ञा.. प्रक्रियायामेतादृशं परतस्त्वं यदि समन्वेति तदा निष्कर्षमेकान्ततो वर्णयन् स सौगतसमयस्य व्याख्याता विरोधी वा?। कारिकाऽपि तेन प्रदर्शिता नस्कृतत्वप्रमाणाभावात् ततः प्रागपि एतादृशः सौगतप्रामाण्यवादः केनचिद्विदुषा चिराद् व्याख्यात इति कथं न कल्पयितुं शक्यते?। सौगतसमये ज्ञानग्रहसामान्यसामग्रीग्राह्यत्वमेव स्वतस्त्वमस्ति चेत् परतो ग्राह्यत्वस्थले ज्ञानग्रहसामान्यस्य सामग्री तद्विशेषसामग्री उभयविधा वा वर्तते? प्रथमे सर्वत्र स्वतो ग्राह्यत्वापत्तेः क्व गता अनेकान्तता?। द्वितीये विशेषसामग्रीमात्रेण सामान्यं ज्ञानग्राह्यत्वं प्रामाण्यग्रहे न स्यात् तेन च ज्ञानग्रहं विनाऽपि प्रामाण्यग्रहः समापतेत्, तृतीये उभयसामग्रीप्रयोज्यत्वेन स्वतस्त्वपरतस्त्वयोः समुच्चयः सामान्यविशेषभावो वा भवेत् विलीना वराकी विभज्य व्यक्तिभेदेन व्यवस्थाया दुर्गता? कुत्रापि प्रामाण्यस्य विशेषसामग्रीप्रयोज्यत्वे न सामान्यसामग्रीग्राह्यं प्रामाण्यमिति परतस्त्वाक्रान्तं न स्वतस्त्वं स्पृशतीति ऐकान्तस्य साम्राज्यम्, अत व सर्वत्र स्वतस्त्वं परतस्त्वं वा सामग्रीघटितं परिष्क्रियते, नहि तादृशमेव कार्यं सामान्यसामग्र्या स्व

कुत्रचिच्च विशेषसामग्र्या आत्मानं लभते। तस्माद् दर्शनस्य साम्प्रतं दुर्दशैव एतादृश लेखेन। किञ्च यावत्त्वादिघटितं स्वतो ग्राह्यत्वादिलक्षणं सर्वत्र प्रसिद्धम्, पञ्चमपृष्ठे भापणे तथैव संगृहीतञ्च, एवञ्च कुत्रापि प्रामाण्यस्य ज्ञानग्रहसामग्र्या अग्राह्यत्वे यावज्ज्ञान-ग्राहकसामग्रीग्राह्यत्वं प्रामाण्यस्य असंभूतमिति कथमनेकान्तस्य अवसरः। तस्मादापाततः समापतितमेतत्।

एवञ्च सति बौद्धाचार्यैर्वाचस्पतिना च न स्वतः प्रामाण्यमङ्गीकृतम्, सर्वदर्शन-संग्रहकारस्य उभयोर्मतयोः परतः प्रामाण्यप्रतिपादनं सर्वथानिराबाधम्, किन्तु संशयानु रोधेन परतः प्रामाण्याङ्गीकारे तस्य ज्ञानस्य ग्रहेऽपि प्रामाण्यानिश्चयात् ज्ञानान्तरान्वेषणे सर्वत्र समापतन्तीमनवस्थां परिजिहीर्षुः स्वतः प्रमाणमित्यादि शब्दप्रयोगो बौद्धग्रन्थे वाचस्पतेश्च, न सर्वत्र तज्ज्ञानस्य ग्रहे प्रामाण्यसंशयो जायते, क्वचिदप्रामाण्यव्यावर्तक सामग्री ज्ञानग्रहानन्तरमुपतिष्ठते तत्र ज्ञानग्रहान्तरस्य प्रामाण्यग्रहाय अपेक्षा, यत्र तु अप्रामाण्यव्यावर्तकसामग्री प्रागुपस्थिता सती ज्ञानग्रहसामग्र्यां सम्मिलिता तत्र तज्ज्ञानस्य ग्रह एव तद्गतप्रामाण्यस्य ग्रहो भवति, तथा च ज्ञानान्तरस्यानपेक्षणाज्ज्ञानग्रह एव प्रामाण्यग्रह इति तस्यार्थः। अप्रामाण्यव्यावर्तककारणानि तु तेष्वेव वाक्येषु वाचस्पतिना निर्दिष्टानि तत्त्वसंग्रहकारिकायां 'भ्रान्तिहेतोरसद्भावात्' २९७३ इत्यादिना सामान्यतः सूचितम्। धर्मोत्तरप्रदीपे च किञ्चिद् व्याख्यातमपि।

संशयस्थल एव परतः प्रामाण्यग्रहणमिति भापणस्य भ्रमः, किन्तु संशयो भवतु न वा प्रामाण्यनिश्चयसामग्री ज्ञानग्रहसामान्यसामग्री न संभवतीति एतावतैव परतो ग्रहणं जातम्, तत्र वाचस्पतिवचस्सु स्फुटमुल्लिखिता हेतवो न ज्ञानग्रहसामान्यकारणानि, ते एव च तज्ज्ञानप्रामाण्यग्रहं प्रति गुणभूताः, वाचस्पतिवचने बौद्धमतप्रतिपादनावसरे 'संवादकं सत्' 'भ्रान्तमपि' 'प्रमाश्रयवशात्' इति प्रतिपादनं सम्यगवधेयं बौद्धमत-व्युत्पित्सुभिः, अनुमाने परतः प्रामाण्यं तेन सूच्यते, युक्तञ्च तद् बौद्धदर्शनस्य, तादृशञ्चोप-पादनं बौद्धग्रन्थेषु न स्मरामि, तदनुसारं बौद्धग्रन्थेषु सम्प्रयुक्तम् 'अनुमानं स्वतः प्रमाणम्' इति वाक्यं प्रमात्वानुमानपरमवगन्तव्यम्। अन्यच्च यन्निद्राद्यनुपप्लुतम्' इत्यादि-व्युत्पादयन् पूर्वोदाहृतो धर्मोत्तरप्रदीपो न्यायमतमिव प्रामाण्यस्य गुणजन्यत्वं व्याख्यातुं स्वराज्यमर्पयति अस्तु तत्।

यथाऽवस्थितविज्ञेयेत्यादि २८, ३४, ३५, ३६ कारिकासु तत्त्वसंग्रहस्य परतः प्रामाण्ये कियानाग्रह इति द्रष्टव्यमस्ति। महाविदुषामेव दर्शननीरधिनिमथनोद्भूतसारस्य दर्शनजगति कोलाहलायमानस्य प्रकाशनं भापणस्य पञ्चदशे पृष्ठे पश्यन्तु विपश्चितः, यद् आधुनिकीं सेवावृत्तिं दार्शनिकतां स्फुटं विद्योतयति—यतश्च प्रथमं ज्ञानमित्यादि तत्त्वसंग्रह-कारिकाद्वयमुल्लिख्य पंक्तिद्वयमधोलिखितं निर्दिष्टम्, अयञ्च विभज्य स्वतःप्रामाण्यवादो मीमांसकमतात्प्राचीन भिद्यते, कुमारिलस्यापि संशयविपर्ययशङ्कानास्कन्दितं विज्ञानमेव

प्रमाणम् इत्यादि, किं साम्यं मीमांसकमतस्य एतदुद्भावितसौगतानेकान्तवादेन सह ?, संवादेन प्रामाण्यनिश्चयमादाय तु न संभवति अनेनापि तथोपपादनात्, अत्रैव लेखे प्राङ्महतः संरम्भेण मीमांसकसम्मतं स्वतः प्रामाण्यं समुपवर्ण्य पुनरत्र अनेकान्तेन कुत्रचित् परतः कुत्रचिच्च स्वतः प्रामाण्यवर्णनं किं तात्पर्यं द्योतयति ?, कुत्र मीमांसाग्रन्थे परतोऽपि प्रामाण्यमुपपादितं वर्तते ?। सर्वत्रैव ऐकान्तेन स्वतःप्रामाण्यं मीमांसकमते प्रसिद्धग्रन्थेषु समुपवर्णितञ्च, एषाञ्चेत् कुमारिलग्रन्थे परतोऽपि ग्रहणं प्रतिभाति तदा अन्ये मीमांसाग्रन्था द्रष्टव्या मीमांसकाश्च प्रष्टव्या आसन् न तु सिद्धतया बौद्धमतवन्मीमांसकमतोपसंहारस्य दुस्साहसम्, यत्रापि दोषज्ञानात्प्रामाण्यसंशयस्तत्रापि मीमांसकस्य स्वतः प्रामाण्यमेव, प्रथमं जाते एव प्रामाण्यनिश्चये दोषादिज्ञानादप्रामाण्यग्रहो भवति, न तु पश्चाद् यत्र दोषादिज्ञानं तत्र प्रथमं प्रामाण्यग्रहो न भवति, या ज्ञानग्रहसामग्री दोषदोषज्ञानाभावाभ्याम् सम्वलिता सा ज्ञानग्रहं जनयन्ती प्रामाण्यमपि ग्राहयत्येव तथा च नात्र किञ्चिदपि स्वारस्यं वहतीदम्। एवं संशयविपर्ययशङ्कानास्कन्दितं विज्ञानमेव प्रमाणमिति वचो विवरणीयं न सङ्गतम्। अनधिगताबाधितविषयकं प्रमाणमिति प्रसिद्धं कुमारिलसिद्धान्तं कथमिव कलुषीकुर्वन् विविदिषून् वञ्चयति ?। अस्य लेखेन अप्रामाण्यस्य शङ्कादशायां प्रमाणं विज्ञानमेव न तिष्ठतीति आयाति, तत्तु सर्वथा अशुद्धम्, एकमेव ज्ञानं कदाचित्प्रमाणम् अन्यदाऽप्रमाणमिति कस्यापि दर्शनस्य मते नास्ति, आर्हतानामपि एवमवस्थाभेदेन व्यवस्था नास्ति।

## १३ संख्या ३।४।६२ ईशाब्दे प्रकाशिता

न शुक्तिभ्रमसंशयदशायां रजतं भवति किन्तु शुक्तिरेव तिष्ठति तथा प्रमाणं विज्ञानम् अप्रामाण्यभ्रमसंशयोः सतोरपि प्रमाणमेव तिष्ठति, किन्तु अप्रामाण्यभ्रमसंशयदशायां प्रमाणज्ञानस्य प्रामाण्यनिश्चयो न जायते, प्रमाणं ज्ञानं तन्निष्ठप्रमात्वनिश्चयश्च भिन्नं वस्तु, किं किमुदाहर्तव्यम् ? बहूनि एवं वचनानि सन्ति, अनधिकारचेष्टयां किं किं न संभाव्यते ? आङ्गलभाषायां हिन्दी भाषायाञ्च एवंविधा लेखा दार्शनिका बहवो निस्सरन्ति, परं संस्कृतपण्डितानां सभायां संस्कृतलेखा दर्शनस्य एवंविधा आदर्यिन्ते इति संस्कृतभाषाया गम्भीरपाण्डित्यस्य च ह्रासनिदर्शनम्। नैवंविधा ह्रासस्य द्रुतगतिः परतन्त्रतायुगेऽपि आसीद्यथेदानीं परं तदवलोकनस्य दृष्टिरपि कदाचन केषाञ्चिदेव। स्फुटञ्च न्यायमतसाम्यं कारिकाप्रतिपादितार्थस्य अन्यथा लेखेन समाच्छादितम्, नव्यन्यायमतेहि प्रामाण्यग्रहाय ज्ञानान्तरमपेक्ष्यते, यत्र च कारणान्तरवशाद् अप्रामाण्यग्रहविघटनं तत्र ज्ञानग्रह एव प्रामाण्यग्रहः, तथैव च कारिका वक्ति। परं भाषणस्य दशमपृष्ठे बौद्धमतव्याजेनाप्यभ्यासदशायां व्याख्यातुंकामानामेषां स्फुटी भवति यत्र संवादेन प्रामाण्यग्रहणं समर्थ्यतेऽनवस्थाप्रदर्शनेन पुनरसन्माहितत्वेन च।

न्यूनताऽपि भाषणे भयावहैव सर्वदर्शनसंग्रहस्य सामान्यतः स्वतस्त्वपरतस्त्वयोः खण्डनाय संरम्भते परं तदभिमतं सौगतसरणिसिद्धं सामान्यतः प्रमात्वम् अप्रमात्वञ्च परिष्कर्तुं न यतते, प्रमात्वाप्रमात्वयोः स्वरूपनिर्णयं विनैव तयोः स्वतस्त्वपरतस्त्व-विचारणा कथं समुदियात् ? सर्वदर्शनसंग्रहकारः कीदृशे प्रमात्वाप्रमात्वे अभिप्रैतीति निर्णयं विना कथं तन्मतस्य खण्डनं संभवति ?, बहूनि वचनानि उद्धरतो बौद्धदर्शनस्योत्तरदायि वैदुष्यमावहतश्चास्य महाविदुषः सामान्यतः प्रमात्वाप्रमात्वनिर्वचनानुपलब्धिरपि कीदृशं व्यापि पाण्डित्यं विस्फोरयति ? तद्वृति तत्प्रकारकत्वस्य अबाधितार्थविषयकत्वा-देर्वा प्रमात्वादिनिर्वचनस्य सौगतदर्शनेऽसम्भवात्, न प्रसिद्धिव्यपदेशेनापि न्यूनता-परिहारः। सत्यमेव प्रामाण्यवादपरिचयलेखे नव्यन्यायदृष्टिमन्तरा पुस्तकेषु वर्तमाना अपि विषयास्तिरोभवन्तीति लिखितवानस्मि।

प्रामाण्यवादसमीक्षा लेखे उपालम्भच्छलेन महाविदुषाऽनेन मम एकदेशि पाण्डित्यं दर्शयितुम् असकृत्प्रयतितम्, तत्तत्रभवतो महाविदुषो वृथाश्रम इति खेदः, ममैकदेशित्वे को विवदते ?, न तादृशं स्वस्थं दीर्घञ्च जीवनम्, न च तीक्ष्णा प्रवीणा च धिषणा, नापि उत्साहप्रदायि सामयिकं वातावरणम्, न वा धनहीनस्य पुस्तकादिसुविधा, व्यापक-विलोकनं तेषामेव सर्वविधसौलभ्यभाजां शोभताम्, परं हन्त दृष्टिं विनैव। मामकी च प्रगतिर्मन्थरा गुरुप्रदत्तदृष्टिसहाया। सत्यन्त्विदं प्रतिभाति यद् धर्मोत्तरप्रदीपस्य सम्यक् परिशीलनमस्य महाविदुषः स्याच्चेन्नैवं सिद्धान्तविरुद्धं भाषणमिदं स्यात्; प्रकाशनञ्चास्य भाषणलेखाद् वर्षद्वयं प्रागेवासीत् बौद्धदर्शनस्य प्रामाण्यविषये व्युत्पादक-मिदं पुस्तकम्। यद्यपि सर्वविषयाणां निष्कर्षप्रदर्शनं कठिनम्, तथाऽपि परिशीलनम् एतादृशं भाषणमवश्यमेव अवरुन्धीत दृष्टोऽपि भवेत्परमापाततो न परिशीलितः। परिचित-सारल्यस्यापि महाविदुषोऽस्य प्रामाण्यवादसमीक्षालेखे महान् ग्रहग्रहः, प्रामाण्यवादपरिचय-लेखे 'धर्मोत्तरप्रदीपस्य एकोनविंशे पृष्ठे इतोऽपि स्फुटमस्ति' इति मया सूचितेऽपि तस्य चर्चां न विदधाति। इतः प्राचीनेषु प्रकाशितेषु प्रायोन्यायग्रन्थेषु बौद्धाचार्याणामुक्तिभिस्तु सौगतदर्शनसम्मतम् अनुगतं प्रमात्वमप्रमात्वञ्चापि परिष्कर्तुं दुर्घटम्। परं धर्मोत्तरप्रदीपस्तदर्थं यतते, एकां दृष्टिं ददाति, तदवलम्बेन व्युत्पन्ना नैयायिका अग्रेऽपि गन्तुं प्रभवन्ति।

## १४ संख्या १०।४।६२ ईशाब्दे प्रकाशिका

एतावत्यैव भाषणसमीक्षया भाषणपोषिकाः प्रामाण्यवादसमीक्षायुक्तयः खण्डिताः, कतिपयानि प्रामाण्यवादसमीक्षाविवेचनान्यपि उदाहृत्य विवेचितान्येव, कियल्लेखनीयं लेखकलेवरं वर्धते, प्रकाशकोऽपि उद्विजेत, समयाभावोऽपि अवरुन्धे, तथापि सङ्क्षेपेण निदर्शनदर्शनधिया कतिपयान्येव आलोच्य विरंस्यामि, स्वाप्यतां पुरः प्रामाण्यवादसमीक्षायाः प्रकाशनं प्रथमं पाठकैः, अवलोकयताञ्च मम खण्डनाभिनिवेशः,

पाश्चात्यदर्शनेऽपि अस्य प्रमातत्त्वस्य महता संरम्भेण वैतत्येन च विचारा दरीदृश्यन्त इत्यादि मम विरुद्धं लिखति, परं भारतीयप्रामाण्यवादेऽपि यथा दृष्टिरवलोकिता तथा-भूतया अन्यदर्शने दृष्ट्या को विश्वसेत्। नामूलं मम लेखनम्, तथा पश्यामि, अनेकान् तादृशो विदुषः पृष्टवांश्चास्मि।

न मम लेखे कुत्रापि प्रमात्वाप्रमात्वयोर्जातित्ववर्णनम्, वृथारोपः, ब्राह्मणत्व क्षत्रियत्वयोर्जातित्ववर्णनेन प्रमात्वाप्रमात्वयोः कथं तत् प्रसरेत्? प्रमात्वाप्रमात्वयोः सामानाधिकारण्यं नोपपद्यत इत्यादिना योहि मम खण्डनप्रयासः सोऽपि मम लेखे विद्यमानं विशेष्यावृत्त्यप्रकारकत्वं सर्वथा प्रमात्वं धर्मिणि प्रकारांशे च भ्रान्ते ज्ञानेऽवर्तमानं सप्तमे अष्टमे वा प्रकाशने प्रकाशितमनालोच्य प्रच्छाद्य वा वृथा विडम्बना, तद्वर्णितं प्रमात्वं कदापि अप्रमात्वसामानाधिकरण्यं न सहते, अप्रमात्वविरोधात्, तादृशानाञ्च न्यायनये सामानाधिकरण्यं नास्ति, यांशिकी प्रमा अप्रमा च भवति परं प्रामाण्यम-प्रामाण्यञ्च नैकतां भजते, वस्तुतस्तु न कुत्रापि प्रमात्वाप्रमात्वयोः सङ्करः प्रमात्वाप्रमात्वे हि विषयताविशेषनियन्त्रिते, एक विषयकं प्रमात्वम् अन्यविषयकञ्च अप्रमात्वमेकस्मिन् ज्ञाने वर्तेतां नाम, परमेकविषयकप्रमात्वाप्रमात्वे सर्वथा विरोधिनी नैकत्रावतिष्ठेते, तथा चैषा विडम्बना प्रमाप्रभृतितत्त्वानवबोधहेतोः, अग्रे जनिकेति प्रयोगे विप्रतिपद्यते, प्रयोजकार्थेऽपि जनकशब्दो न सर्वथा विपरीतः, अनित्योपाधिद्वारऽपि प्रमात्वाप्रमात्व-योर्निवचनं संभवति, विशेष्यताप्रकारताप्रभृतयोऽपि यदा ज्ञानस्वरूपास्तदा ज्ञानमिव जन्यतायाः पात्रतां बिभ्रत्यपि, चित्सुखादीनां समुद्धरणेन किं भवति? नहि सर्वत्र सर्वं लिखितं स्यात्, नहि चित्सुखादीनां निरुक्तमेव सर्वस्वम्, अन्यविधान्यपि निरुक्तयः संभवन्ति, तथा निर्वचनेऽपि दर्शनस्य सर्वतोमुखीं विद्वत्तां बिभ्रताऽनेन विदुषा वैशेषिकस्य अभावाधिकरणात्मकत्वं कथं विस्मर्यते?, तथा स्मृतौ च अभावाऽऽधिके अपि प्रमात्वा-प्रमात्वे अधिकरणज्ञानसमानयोगक्षेमे जन्यतां बिभृत एव आज्ञस्येनेति न किञ्चिदेयत। अन्यच्च प्रथमप्रकाशनस्य भाषणसमीक्षायामेवालोचितम्।

## १५ संख्या २४।४।६२ ईशाब्दे प्रकाशिता

अतः परं प्रामाण्यवादसमीक्षाया द्वितीयं प्रकाशनं समीक्षन्तां समीक्षाप्रणयिनः पाठकाः। तत्रत्यसमुद्धृतकारिकात्रयस्य भावार्थस्तेन सह विरोधपरिहारश्च प्रथममेव वर्णितः, परन्तु दोषास्त्वागन्तव इत्यसकृल्लिखति महाविद्वान्, तत्रैतावदेव वच्मि, बौद्धा-चार्यवचस्सु अनाद्यविद्यादोषवर्णनं गवेषयतु अयं न मिलिष्यति चेत् पश्चादेकदेशी पण्डितोऽहं निस्सार्य दर्शयिष्यामि, वस्तुतस्तु बौद्धनये द्विविधा दोषाः अनादय आगन्तुकाश्च। न सर्वदर्शनसंग्रहकारस्य अप्रामाण्यस्वतस्त्वनिरुक्तौ आश्चर्यं कार्यम्, इदमस्ति,

बौद्धदर्शनं यत्र नैकमपि प्रामाणज्ञानं समस्ति यद् ग्राह्यतया अवसेयतया वा आरोपितार्थं न प्रकाशयति, अतो ग्राह्यतया अवसेयतया वा सामान्यतः प्रामाण्यनिर्वचनं न संभवति, तेन प्रापणीयतारूपोऽपि विषयताविशेषोऽङ्गीकृतः, तदादायैव प्रामाण्यव्यवहारः सम्पादितः, अत एव अन्यदर्शनापेक्षया बौद्धदर्शनस्य प्रामाण्यवादः कठिनः, प्राचीनभाषया निबद्धं परिस्कृतभाषामनासादयद् बौद्धदर्शनमपि कठिनम्, कमपि विषयमादाय आङ्गल भाषायामनूद्य विशेषोपाधिधारिणः कतिपये वर्तन्ते परमन्यदर्शनपाण्डित्यमिव बौद्धदर्शन-पाण्डित्यं गवेषणीयं वर्तते ।

अतः परं प्रामाण्यवादसमीक्षायास्तृतीयं प्रकाशनं पश्यन्तु । 'प्रतिभासावसाय-योर्यथार्थत्व' मित्यादि तत्त्वसंग्रहपञ्जिकायाः समुद्धरणम्, तत्र प्रतिभासावसाययोः कीदृशं यथार्थत्वं तावन्निर्वचनीयमास्ते, यथार्थत्वस्यैव विचारप्रसङ्गे यथार्थत्वेन समुल्लिखितेन कथं निर्णयः?, कुत्र प्रतिभासावसाययोर्यार्थत्वमिति बौद्धदर्शनं निर्मथ्य निस्सारयतु, निर्विकल्पकप्रत्यक्षस्य परमार्थसतः स्वलक्षणस्य ग्राह्यत्वेऽपि अवसेयस्य सन्तानार्थस्य स्वीकारात् क्व अवसेयस्य यथार्थत्वम्?, अनुमानस्य ग्राह्यमवसेयञ्च आरोपितमेव, अनुमानस्य च सेयं स्वलक्षणमिति बन्धूनां भ्रमः, तत्त्वस्यग्रन्थे स्वलक्षणमध्यवसितं स्वलक्ष-णत्वेनाध्यवसितमित्यादिरीत्यैव वर्णितमास्ते? स्वलक्षणं सत् न तु अध्यवसितं स्वलक्षणं सत्, प्रापणीयारूपविषयतामादायैव यथार्थत्वनिर्वाहः, प्रापणशक्तेश्च प्रवृत्तिजनकत्व-योग्यतायां पर्यवसानम्, पञ्जिकावचनन्तु सम्यगेव, ज्ञानग्राह्यस्य प्रतिभासवशान्निर्णयः, अवसेयस्य प्रापणीयस्य वा निर्णयाय अर्थसम्वादादेरपेक्षा, ग्राह्यस्य तु न सम्वादादेरपेक्षा, इत्यर्थस्य स्फुटत्वात् । पञ्जिकायामन्यत्र वाचस्पतिवचने च आभ्यासिकज्ञाने प्रामाण्यग्रहे साजात्यलिङ्गस्य वर्णनमुपलभ्यते अतोऽनुमानेन आभ्यासिकज्ञानस्य प्रामाण्यवर्णनं विहितम्, तत्त्वसंग्रहादेः स्वतः प्रमाणमिति वचनं ज्ञानग्रहान्तरं प्रामाण्यग्रहाय ज्ञानान्तरस्य अपेक्षा नास्ति किन्तु ज्ञानग्रह एव तत्र प्रामाण्यग्रह इत्यभिप्रायकमिति विवेचितम्, ज्ञान-ग्रहसामग्रीभिन्न नुमानसामग्रीग्राह्यतया तु परतः प्रामाण्यमिति सिद्धान्तः समन्वयो नीत इति तत्त्वसंग्रहे इत्यादिना विरोधप्रदर्शनं मम समन्वयानवधानमूलकम् ।

यत्तु अप्रामाण्यव्यवच्छेदेत्यादिकारिकासमुद्धरणे प्रमादप्रदर्शनं तदपि न समञ्जसम्, पूर्वकारिकया प्रामाण्यनिश्चयेन च प्रामाण्यस्य अप्रामाण्यस्य संशयादिर्व्या-वर्त्यते तयापि सन्दर्भस्य अप्रामाण्यस्वतस्त्वनिरसारणे को विरोधः । प्रामाण्यनिश्चयेन च अप्रामाण्यव्यवच्छेदे स्वत इति वचनं कथं स्वारस्यमावहेत् ।

एवमितोऽग्रे 'नैयायिकानामुक्तिर्न सर्वेषां निस्तर्जिका' इत्यादिकमपि प्रविचार-णीयमेव, समेषां दार्शनिकानां गौरवलाघवतर्का अपेक्षिताः, व्यभिचारावारककारणविशेष-णस्य च वैयर्थ्यमभिप्रेतम्, अतो नेयं नैयायिकानामेवोक्तिः ।

## १६ संख्या ८।५।६२ ईशाब्दे प्रकाशिता

ततोऽग्रे च 'उपेयानिश्चये उपायनिश्चयाभावादित्यादि' तस्य संग्रहपञ्जिका-प्रदर्शनं तदपि विरोधमन्तरैव, कृषीवलादीनां कर्षणादिकं सस्यसाधनमिति प्रवृत्तिप्रयोजकज्ञाने उपेयस्य कथमनिश्चयः? कथञ्चान्यत्र प्रवृत्तौ उपेयनिश्चयो भवति। कृषीवलादीनां सकम्पा प्रवृत्तिः संशयात् भवतीति मम लेखे लिखितमेवास्ते परं कस्मिन्नंशे संशयः। स च संशयः कथं निष्कम्पां प्रवृत्तिं प्रतिबध्नाति न च सकम्पामिति सकारणं स्फुटं वर्णितमास्ते यन्नान्यत्र समुपलभ्येत।

अहो द्वितीयप्रकाशनस्यान्ते किञ्चिदवशिष्टमिति तत्रैव पश्यन्तु—सर्वसंशय-विनिवृत्तये "कारिकार्द्धमुपन्यसाम इत्यादि एतादृशानामन्येषां ग्रन्थानामपि भाव. पूर्वं वर्णित एव, तत एवास्यापि व्याख्यानमपरोयम्। न केवलमत्रैव कारिकाचतुष्टये अप्रामाण्यस्य स्वतस्त्वापादनमित्यादि तदुपरि इत्थं बोध्यम् भवतु नाम कुमारिलं प्रति स्वतस्त्वापादनपरमिदम्, परं परमते आपाद्यमानमिदं स्वमते नेष्यते इति कुत्र लिखितम्।

स्वमते तादृशापत्तेः कश्चित्परिहार उक्तो न वा? उक्तश्चेत् कीदृशः। परमते आपत्तेः प्रदानं स्वसिद्धान्तसंभवन्त्या युक्त्या वा स्वनिग्रहसम्पादिन्या युक्त्या? इत्यादि-प्रश्नानां समाधाने स्वयं मम प्रदर्शितं निस्सरिष्यतीति मुधा पौनःपुन्येन व्याख्यानम्। किमस्य उपन्यासस्य तात्पर्यमिति न बुध्यामहे इत्यादिना बहूनां विकल्पानां विधानम्—तत्र स्फुटं मम लेखेऽस्ति यत् अप्रमाणेन विकल्पेन निर्विकल्पस्य प्रामाण्यं व्यवस्थाप्यते गृहीत-प्रामाण्यकेनैव उत्तरज्ञानेन पूर्वज्ञानस्य प्रामाण्यव्यवस्थायां परतस्त्वपक्षेऽनवस्थादानाय नाग्रहीतव्यमिति, तथा च व्यर्थमिदं विकल्पप्रदर्शनम्।

वेदान्तिमतेऽपि महावाक्यजन्यम् इत्यादि प्रतिपादनम्, परमार्थदशायां वेदान्ते बौद्धे च दर्शने प्रमाणादिव्यवस्थैव नास्ति, अध्यासम् आरोपं वा अन्तरा न किमपि प्रमाणमुभयदर्शने, अखण्डार्थविषयकवृत्तिपर्यन्तं व्यवहारस्यैव दशा, व्यवहारदशायाञ्च सविकल्पकस्यापि प्रामाण्यं वेदान्तिनाम्। तदुभयबहिष्कृतम् असत् इत्युक्तं मया न तु इत्यादि प्रत्यक्षापलापः, 'स्वाङ्गमेव धारयितुमसमर्थम्' इत्यादि स्फुटं वचनं भाषणस्य मुद्रितम् अस्ति, ततोऽलीकता निस्सरति तदपि यावत्प्रामाण्यग्रहो न भवति तावत् ज्ञानं प्रकृतमादायोक्तं न तु सविद्वयभिन्नमादाय।

किन्तु उत्कटैककोटिकः सम्भावनापरपर्याय इत्यादिवर्णनमपि स्वकीयः न संशय-लक्षणे प्रामाणिका लक्षणकारा उत्कटशब्दं प्रयुञ्जते, कोटौ उत्कटत्वञ्च किमित्यनव-बोधविलसितञ्च तथा लेखनम्, रागादिनामदुक्तप्रकारेणैव तस्य व्याख्यानं भवति।

अतः परं चतुर्थप्रकाशनमुपस्थापयामि—दोषस्य शङ्कितनिपाते पूर्वज्ञानस्य प्रामाण्य-निश्चयो जातोऽपीत्यादिलेखनं कुत्राऽपि अपलपनम्—दोषादिप्रतिबन्धकात् प्रामाण्य-

निश्चयस्य नाशो भाषणे वर्णितः, प्रतिबन्धको न विनाशक इति रीत्या मया तद् दूषितम्, तदुपरि व्यर्थेयं विडम्बना, भाषणस्य नवमपृष्ठान्ते दशमपृष्ठस्यारम्भे च द्विर्नाशविनाशशब्द-स्वरूपतः शब्दयोः स्फुटं मुद्रणं विद्यते, प्रतिघातादिशब्दमादाय न किञ्चिन्मया लिखित-मस्ति। संशयसम्पादनाय धर्मिण आवश्यकतायां सम्भवन्त्यां धर्मिणो विनाशवर्णनं संशयाय इष्टविघातकृदित्येव, मया लिखितमस्ति तत्तु सम्यगेव, ततो व्यर्थ एव प्रलापः क्रियते न स्वकृतस्य समर्थनं सम्पाद्यते। किञ्चाप्रामाण्याज्ञानात् प्रवृत्तौ प्रामाण्यज्ञानात् निवृत्तिरित्यादिना तर्कताण्डवतत्त्वदीपिकाप्रदर्शनम्—तदपि वृथाताण्डवम्, प्रामाण्या-ज्ञानस्य केन निवर्तकत्वं कल्पितं येन तदापाद्यते इति मया पृष्टे समीक्षालेखे महाविदुषा समाहितव्यमासीत् तन्न कृतं किमन्यत् प्रोच्यते तस्य किं फलम्? निवृत्तिं प्रति प्रामाण्या-निश्चयस्य हेतुता नाङ्गीक्रियते तदा को दोष इत्युच्यताम्. प्रवृत्तिन्तु अन्यकारणाभावान्ना-पादयितुं शक्यते, सिद्धे हि कार्यकारणभावे अनिष्टापादनं संभवति, समाधानं विनाग्रन्थो-द्धरणं किं करिष्यति? ग्रन्थास्तु पूर्वोत्तरसन्दर्भेण तात्पर्यं व्यञ्जयन्तः संगमनीयाः, भव-दुक्तस्य का गतिः? भवता तु मात्रशब्दः प्रयुक्तः, अनयोः पुस्तकयोस्तु स नास्ति, भव-दुद्धृतग्रन्थे निष्कम्पप्रवृत्तेरापत्तिः भवता च प्रवृत्तिमात्रमापादितम्, कथं सहायावेतौ वृथा ताण्डवस्य?

## १७ संख्या २२।५।६२ ईशाब्दे प्रकाशिता

यत्तु अप्रामाण्यग्रहः स्वरूपसत्तयैव प्रामाण्यप्रतिबन्धको न ज्ञात इत्यादिना यद् मदुक्तस्य खण्डनं प्रति प्रयासः स तु दर्शनपाण्डित्यस्य परिहासः। सत्यम् अप्रमाण्यग्रहः स्वरूपसत्तयैव प्रतिबन्धको न तु ज्ञाततया। अप्रामाण्यं ज्ञाततयोपयुज्यते यतो वस्तु, अप्रामाण्यग्रहस्तु ज्ञानं पुनस्तस्य प्रतिबन्धाय ज्ञानं नापेक्षते। व्यभिचारस्तु वस्तु तस्य ज्ञातत्वेनैव प्रतिबन्धकत्वं न अज्ञाततया, व्यभिचारस्य प्रतिबन्धकत्वं न मया कुत्रापि लिखितम्। पश्यन्तु पाठका यत्र व्यभिचाराज्ञानेन व्याप्तिज्ञानस्य अन्यथासिद्धिर्वर्णिता भाषणे तत्र सहचारदर्शनं पक्षज्ञानं वा न लिखितम्। अधुना समीक्षायां लिख्यते तत्तु सम्यगेव।

इतोऽग्रे यदपि सुषुप्तौ ज्ञानमात्रप्रभावप्रदर्शनं क्रियते तेनापि स्वकर्तव्यं नाव-बुद्ध्यत इत्येवायाति। महता संरम्भेण भाषणे ज्ञानस्य अवश्यवेद्यत्वमागृहीतम्। तत्र मया सुषुप्त्यभावापत्तिर्दत्ता। तदुपरि समीक्षा लेखे मनसः पुरीतति प्रवेशेन ज्ञानाभावः प्रतिपाद्यते, परं सुषुप्तौ ज्ञानाभावेन साग्रहं भाषणे महता प्रयासेन पालितं परमप्रियमस्य ज्ञानस्यावश्यवेद्यत्वं मृतमिति नानुशोचतीति। अधुनाऽपि सुषुप्तिप्राक्कालीनस्य ज्ञानस्य कथं वेद्यतेति नानुसन्धत्ते।

इतोऽग्रे यद्यपि च ज्ञाने जात एव ज्ञानं वृत्तं न वेत्ति प्रभृति प्रतिपादनम्, तदपि, किञ्चिल्लेखनमात्रं न स्वारस्यमावहति। अयं हि अस्य संदर्भः—ज्ञानं वृत्तं न वेति संशयो भाषणे प्रतिपादितः। ज्ञाने जात एव धर्मिणमादाय अस्य संशयस्य समर्थनं संभवि, तथा च सति जातत्वनिश्चयेन बाधितोऽयं संशयो नोदेष्यति। विप विशेषनिवेशमन्तरा नास्य संशयस्योपपादनमिति मया दूषितमस्ति। तदुपरि एतत्समर्थनमस्य कीदृगिति पाठका विमृशन्तु। ज्ञाने ज्ञाते इति स्यात्तदापि ज्ञानस्य जातत्वमन्तरा कथं ज्ञातत्वं स्यात्? अतो जाते ज्ञाते वा भवेत् न संशयस्य समर्थनं संभवति। संवेदनपक्ष एव स्वहस्तितो भवेदित्यादिलेखनमपि वृथैव, न स्वसंवेदनस्य खण्डनं मया विहितमस्ति, प्रसङ्गात् एवन्तु घोषयामि यदस्य व्याख्यानं महाकठिनम्, अत्यल्पमेवास्य व्याख्यानं बौद्धग्रन्थेषु मिलति व्यापकश्चास्य क्षेत्रम्, एवञ्च अन्यदर्शनासंकीर्णबौद्धदर्शनसिद्धान्तव्यापि विस्तृतवर्णनमस्य अपेक्षितमस्ति।

पुनश्च तदग्र एव यदपि प्रेक्षावतां प्रवृत्तौ प्रामाण्यनिश्चयः कारणत्वेनेत्यादिना मम निन्दनम् तदपि दार्शनिकतानिन्दनम्, प्रेक्षावतां न समेषां निष्कम्पप्रवृत्तिं प्रत्येव न सर्वां प्रवृत्तिं प्रति प्रामाण्यनिश्चयस्य कारणत्वसिद्धावपि प्रवृत्तिमात्रकारणतायां कथं प्रामाण्यनिश्चयस्य प्रवेशः?, तथा च सामान्यविशेषकार्यकारणभावयोरैक्यारोप विलासमात्रमेतत्। प्रामाण्यवादसमीक्षाया उपसंहारस्य पञ्चमं प्रकाशनं किञ्चिदालंचयामि यद् विविदिषूणां मिथ्यापदार्थ ग्रहणाय प्रोत्साहनं दार्शनिकताया इदानीन्तन्याः स्फुटं चित्रम् एतादृशान् महादर्शनिकान् दृष्ट्वा दर्शनस्य भारतीयवैदुष्यस्य च विनाशहेतुमसवेदयतां व्युत्पन्नदर्शनविदुषां सातिशयखेदकरमुपस्थापयामि, अस्याशुद्धिबहुलतायाः किञ्चिदवलोकनं विदधतु विपश्चितः।

## २१ संख्या २४।२।६२ ईशाब्दे प्रकाशिता

बौद्धानां मतेऽप्रामाण्यस्य स्वतस्त्वमिति सर्वत्र विवेचितं मया च तत्प्रक्रिया वादपरिचयलेखे स्फुटं प्रदर्शिता, तथाऽपि बौद्धमते अप्रामाण्यस्य परतस्त्वं लिखितं तत्र किं पुनर्लेखनेनेति अग्रिमासु पंक्तिषु अस्य दार्शनिकतां विद्योतयामि, 'ज्ञानग्राहिका च सामग्री बौद्धमते स्वसंवेदनरूपा' इत्यशुद्धम्, स्वसंवेदनं ज्ञानस्य ग्रहो न तु ग्राहकम्, 'मुरारिमते अनुव्यवसायरूपा' इदमपि अशुद्धम् पूर्ववदेव अनुव्यवसायो विज्ञानस्य ग्रहो न तु ग्राहकः, इतोऽग्रे नैयायिकानामिति कृत्वा यदुक्तम्. तत् त्रिधाऽशुद्धम् प्रथमम् अनुव्यवसाये पूर्ववद् ग्राहकत्वविशेषणम्, द्वितीयम् अनुव्यवसायस्य सर्वथा प्रामाण्याग्राहकत्वमनीषया लेखनम् अनुव्यवसायो ज्ञानांशे लौकिकसन्निकर्षजन्मा, लौकिकसन्निकर्षश्च प्रत्यक्षे नैयायिकैर्गुण उच्यते, गुणात् प्रामाण्यम् गुणज्ञानाच्च प्रामाण्यस्य ज्ञानम्, यत्रापि अनुव्यवसायस्य अप्रामाण्यमुक्तं तत्तु बाह्यज्ञानीयबाह्यविषयघटितप्रामाण्यमपेक्ष्य, मयाऽपि प्रामाण्यवाद परिचयलेखे गुणादिविशेषसामग्रीसमवहिता अनुव्यवसायसामग्री प्रामाण्यं गृह्णातीति

लिखितमस्ति। वाचस्पतिमिश्रेणापि तात्पर्यटीकायां १३ पृष्ठे 'ज्ञानगततज्जातीयत्वग्राहिणश्च ज्ञानस्य मानसप्रत्यक्षस्यादृष्टव्यभिचारतया परितो निरस्तविभ्रमाशङ्कस्य स्वतः प्रामाण्यमिति नानवस्था' इत्यनेन मानसप्रत्यक्षस्य अनुव्यवसायस्य प्रामाण्यग्रहणमुपपादितम्, मयाऽपि च स्वलेखे प्रदर्शिताप्युक्तरीतिस्तथापि एवमशुद्धिः सिद्धान्तप्रदर्शने।

तृतीयन्तु 'अनुमानमेव' इत्यत्र एवकारोऽनर्थकरः, न्यायनये प्रत्यक्षमनुमानं शब्दश्च अवस्थाविशेषे प्रामाण्यग्राहकाणि, संशयोत्तरं समर्थप्रवृत्तिजनकत्वेन प्रामाण्यग्रहणे अनुमानमुपयोगीतिमन्ये।

स्वसम्वेदनस्य स्वतः प्रामाण्यमिति सत्यं बौद्धग्रन्थेषु आयाति किन्तु अनुव्यवसाय इव व्याख्यानं तदपेक्षते, २८,३४,३५,३६ तत्त्वसंग्रहकारिकासु भ्रमसाधारणस्वसंवेदनादनुभावात् प्रामाण्यग्रहः सर्वथा खण्डितः, प्राङ्मदुद्धृतधर्मोत्तरप्रदीपवाक्यान्यपि गुणे दोषाभावे वा परिज्ञात एवं संवेदनात् प्रामाण्यग्रह इति द्योतयन्ति। ज्ञानं विषयं प्रकाशयतीत्यशुद्धम्, ज्ञानं विषयस्य प्रकाश इति शुद्धम्, भाट्टन्यायादिभेदवर्णनमपि अशुद्धम्, भट्टमते ज्ञानं स्वांशेऽप्रत्यक्षं सदपि विषयस्य प्रकाश एव सर्वव्यवहारप्रवर्तकम्, ज्ञाततालिङ्गकमनुमानज्ञानन्तु ज्ञानस्य व्यवहारप्रवर्तकम्, अतीन्द्रियमेव ज्ञानं ज्ञाततालिङ्गानुमानमनपेक्ष्यैव स्वविषयव्यवहारप्रवर्तकम्, ज्ञानं द्विविधं साधारणतः संशय सामग्र्यभावे स्वकारणेभ्यो जायमानमेव जन्मना ज्ञानं निश्चयो भवति, न तु प्राक्संशयः पश्चात् कस्यापि साहाय्येन निश्चयतां धत्ते, भाट्टमते विषयनिश्चयः प्रत्यक्षानुमानशाब्दादीनि अनेकानि ज्ञानानि, प्रामाण्यनिश्चयस्तु अनुमानमेव, अस्य वर्णनन्तु सर्वथाऽशुद्धम्, अर्थनिश्चयः स्वरूपसत्ता ज्ञानेन संजन्यत इत्यपि तथैवाशुद्धम्, अर्थनिश्चयोऽपि ज्ञानं सः केन ज्ञानेन जन्यताम्, कियल्लिख्यताम्, अंग्रेतनं 'प्रामाण्यम् अज्ञातमेव निश्चायकम्' नव्यवेदान्तिनां ज्ञानाभासत्वात्' इत्यादि सर्वमनर्गलमेव।

वैदेशिकदर्शने यथा तथाऽवाऽस्तु तस्य ज्ञानं नास्ति मम, जिज्ञासा अवश्यं वर्तते, परं तद्दर्शनस्वरूपपरिज्ञानस्य साधनं नास्ति, एतादृशा लेखा यदि भारतीयमेव दर्शनं वस्तुतो न बिभ्रति तदा कः समाश्वासो विदेशीयदर्शने ?, अथापि विस्तृतो लेखो भवेत्तदा पूर्वापरानुसन्धानेन तत्तात्पर्यज्ञानं कथमपि सम्भवेत्। अस्त्वेतावदेवेति विरमामि। भाषणकर्तृमहोदयानां प्रामाण्यवादसमीक्षालेखे कानिचित् कटूक्तानि विलोक्य या काचित् कटूक्तिः सञ्जाता तां चञ्चलस्य मनसो दोषमेव मन्ये न कर्तव्यपालनम्, क्षमापयामि च, एषां लेखेन कार्याणान्तराणि अवरुद्धानि बौद्धप्रामाण्यवादविषयेऽध्ययनं मननञ्च जातं तेन बलादुपकृत एवास्मि, नैतावदेव, अपि तु बौद्धदर्शने नाधिकमधीत्यपि इदमित्थमेवेति लिखितुं यदपारयं तत्रैषां बौद्धदर्शननिष्णातानां विशेषाध्ययनस्य बलमादायैवेति।

दोषज्ञता वास्तविकी न विद्यते दोषान् प्रदातुं सहसा प्रवर्तितः।
तामक्षमां सैव गुरोः कृपा क्षमा प्रक्षालयेदाशुपदाऽभवन्दनात्॥



अयोध्या संस्कृत पत्र वर्ष ३३ संख्या ८ दि० ६।१।६२ ई० प्रकाशित संस्कृतमय की हिन्दी

# भाषणसमीक्षा

गत १९६१ ई० वाराणसेयसंस्कृतविश्वविद्यालय बौद्धदर्शनपरिषद् में नव-नालन्दा महाविहार के अध्यक्ष बड़े विद्वान् श्री सातकड़ी मुखोपाध्याय जी का मुद्रित अध्यक्ष का भाषण बहुतेरे विद्वद्वरों से पढ़ा गया होगा या सुना गया होगा ऐसा समझता हूं। उसी की कुछ समीक्षा पाठकों के सामने उपस्थित करता हूं। बहुत काल से परिश्रम किये हुए बहुत बड़े विद्वान् विशेषकर सौगत शास्त्र में विश्वास दृष्टि के लक्ष्य इन विद्वानों के भाषण में बौद्ध सिद्धान्त से विपरीत पदार्थों की सिद्धान्त रूप से व्यवस्था सह्य नहीं है इसलिये पाठक पण्डितों के दृष्टिपात के लिये उत्तेजना या अवसर देना उद्देश्य है। इस प्रकार के व्यक्तिक्रम में पहला कारण प्रामाण्यवाद का दुर्बोध होना और सूक्ष्म विषय होना जो नव्य न्याय की विहार भूमि है दूसरा कारण कि बौद्ध न्याय ग्रन्थ बहुत काल से भारतीय विद्वानों के चर्चा का विषय नहीं बना, प्रौढ़ व्याख्यानों से विधुर रहा, स्थूल अवस्था या बाल्य अवस्था में समय विताये हैं। जिससे वहां के सभी उदाहरण भी बौद्ध प्रक्रिया से समन्वय नहीं पाते। सरलता के लिये न्याय के ही उदाहरण रख दिये गये ऐसा मालूम पड़ता है।

यद्यपि पहले इसी पत्र में प्रकाशित 'प्रामाण्यवाद का सरल संक्षिप्त परिचय' लेख में कुछ इसकी आलोचना है, तो भी वहां दूसरे विषय सिद्धान्तों का वर्णन प्रधान है, गौण यह है यहां उसकी समीक्षा ही प्रधान है, और मेरे लेख के ऊपर उस विद्वान् से 'प्रामाण्यवाद समीक्षा' गत अङ्कों में प्रकाशित की गई है, उसमें भी अपसिद्धान्त प्रकाश का अति संक्षिप्त दिग्दर्शन रीति को प्रकाश में लाता हूं। विस्तारपूर्वक लिखने के लिये न समय अपने पास है न फल देखता हूं, क्योंकि कोई कुछ लिखेगा ही। इसलिये जो मेरे ऊपर आक्षेप हैं, व्याख्यान दूषित करने का जो दुष्प्रयास हैं, प्रकृत में उपयोगी नहीं

व्यर्थ वचनों के उद्धरण, और वचनों के दूसरा अभिप्राय प्रकट करना आदि सभी को छोड़ देता हूं। भाषण में प्रति ज्ञात अपने उद्देश्य की रक्षा भाषण नहीं किया, यह बौद्ध सिद्धान्त है यह अपसिद्धान्त है प्रायः इन्हीं को दिखाते हुए लेख को समाप्त करूंगा।

बौद्ध दर्शन में प्रकाश स्वभाव चितिशक्ति निरन्तर बहती हुई भी स्वभाव से ही विषयग्रहण रूप नहीं है, सुषुप्ति में आलय विज्ञान की धारा निर्विषयक मानी जाती है, चैतन्य धारा का विच्छेद सुषुप्ति में नहीं माना जाता, यद्यपि प्रमाणवार्तिक ८१ धर्म कीर्ति वचन के व्याख्यान में मनोरथ नदी ने स्वभाव से प्रकाश स्वभाव चित्त अपने भिन्न दोषों के सञ्चय वाला है, इत्यादि लिखा है, उससे आभास होता है कि दोषों का समूह हमेशा चित्त में लगा है, जिससे आलम्बन प्रत्यय तैयार होते हैं, उस लेख को वैसा मानने पर सुषुप्ति में भी विषयमान होने लगेगा, होता नहीं इसलिये दोषसमूहों को स्वाभाविक या प्रकृतिसिद्ध नहीं मानना चाहिये, उचित भी नहीं है, दोषों में विशेषण अनात्मभूत दिया गया है। जो अपने से भिन्न है वह स्वभाव कैसे हो सकता है, प्रकृति या स्वभाव विशेषण भास्वर के हैं दोषों के नहीं, कहीं वैसा शब्द मिलने पर भी अनादि सन्तान प्रवाहित दोष हैं यही अर्थ होगा, स्वाभाविक दोष होने पर मोक्ष में भी नहीं छूटेगा, स्वभाव का परिवर्तन नहीं होता, ये दोष विषय वासना रूप आन्तर हैं, समयानुसार भिन्न भिन्न सामग्री सम्पर्क से घटते बढ़ते बदलते रहते हैं, इसलिये आगन्तुक भी हैं, बीज रूप से अनादि काल से प्रवृत्त हैं अतः स्वाभाविक भी कहे जा सकते हैं। ये दोष विषयों आलम्बनों को चलाते हैं इसलिये ये विषय बोद्ध कहे जाते हैं, इन्हीं का वाह्य रूप से भान होता है, चित् सन्तान के साथ विषय वासना सन्तान चलता रहता है। दोनों साथ कारण बनकर साकार विज्ञान सन्तान पैदा करते हैं, सुषुप्ति सामग्री वासना सन्तान को कार्यकारी नहीं होने देती इसलिये वे लीन होते हैं। तत्त्वज्ञान से वासनासन्तानों का उच्छेद हो जाता है तब मोक्ष दशा में केवल चिति सन्तान चलता है, वासनाओं के उच्छेद से आलम्बन प्रत्यय नहीं मिलता इसलिये निरालम्बना चिति कही गई, आलम्बन ही आकार होते हैं। आलम्बन के बिना निराकारचिति होती है। कहीं आगन्तुक दोष से कांच कामलादि दोष ले सकते हैं किन्तु कहां पर ऐसा लिया गया है इसको ठीक स्मरण नहीं कर पाता हूं। विज्ञान का विषय ग्रहण स्वभाव मानने पर निराकार नहीं हो सकता, नैयायिकों का ज्ञान विषय ग्रहण स्वभाव वाला

कहा जा सकता है क्योंकि उनके यहां निर्विषयक ज्ञान होता ही नहीं। बौद्धमत में सभी विषयाकार ही है यह नहीं कहा जा सकता, इसीलिये बौद्धग्रन्थों में विषयों का मल शब्द से वर्णन है। ज्ञान में विषय का आकार तो योगाचार के मत में बाह्य विषयों को नहीं मानने से अनादि प्रवाह से उपस्थित विषयवासना से ही है, बाह्य सद्वादी के मत में तो प्रत्यक्ष स्थल में प्रत्यक्ष विज्ञान का कारण विषय विज्ञान में अपने आकार का समर्पण करता है। जिसका आलम्बन प्रत्यय शब्द से व्यवहार होता है। रूप के चाक्षुप विज्ञान में रूपाकारता या रूपसादृश्य अथवा रूपविषयकत्व जैसा व्यवहार करें उसका प्रयोजक रूप आलम्बन है। वैसे विज्ञान में विज्ञानता भी है, उसका प्रयोजक अव्यवहित पूर्व में रहने वाला विज्ञान है, जिसका समनन्तर प्रत्यय शब्द से व्यवहार है। विषयाकारता का तथा विज्ञानता का प्रयोजक परस्पर भिन्न है। इस प्रकार सामान्य ज्ञान सामग्री में आलम्बन प्रत्यय का प्रवेश नहीं है, क्योंकि आलम्बन प्रत्यय के अभाव में भी सुषुप्ति मुक्ति आदि में ज्ञान का प्रवाह रहता है। वह्नि के अनुमान ज्ञान में वह्नि के आकार का प्रयोजक वह्नि की व्याप्ति है, जिसको बौद्ध ग्रन्थों में प्रतिबन्ध शब्द से कहा गया है। विषय ग्रहण या मेय बोधक शक्ति विज्ञान का स्वभाव है यह बौद्ध सिद्धान्त नहीं है, उसको सिद्धान्त रूप से जिस किसी का प्रतिपादन अशुद्ध है। किन्तु आलम्बन प्रत्यय और समनन्तर प्रत्यय का स्वभाव है कि साकार विज्ञान पैदा करना, इसी को धर्मकीर्ति की कारिकाओं में स्वभाव रूप से वर्णन है कि विषय का स्वभाव है कि विज्ञान का ग्राह्य हो, विज्ञान का स्वभाव है कि विषय का ग्रहण हो, दोनों प्रत्ययों के रहने पर ऐसा साकार विज्ञान पैदा होना स्वाभाविक है। विज्ञान की साकारता ही मेय बोधिका शक्ति है, वह साकार विषय विज्ञान अपने कारणों से ही पैदा हुआ है, यह नहीं कि विज्ञान पैदा हो जाने पर उसमें साकारता दूसरे कारणों से आवें। साथ ही उत्पत्ति से ही साकारता होने से उसको स्वभाव शब्द से कहा गया है ? विज्ञानत्व का जो प्रयोजक है वही प्रामाण्य का प्रयोजक है यह बौद्ध सिद्धान्त नहीं है। क्योंकि प्रमाण ज्ञान साकार है उसका प्रयोजक आलम्बन प्रत्यय भी होगा। स्वतः प्रामाण्य प्रतिपादन की इच्छा से आग्रही किसी के प्रतिपादन से वैसा बौद्ध सिद्धान्त नहीं हो सकता, प्रयोजक भिन्न होने से प्रामाण्य की उत्पत्ति में स्वतस्त्व नहीं हो सकता। उत्पत्ति में स्वतस्त्व विज्ञान सामान्य सामग्री से होता है ? प्रामाण्य का प्रयोजक विशेष सामग्री है,

विज्ञान के प्रति विज्ञान कारण है घटाकारता के प्रति विज्ञान ही कारण नहीं है, तथा प्रत्यक्षता का प्रयोजक भी केवल विज्ञान नहीं है, विज्ञान समनन्तर प्रत्यय रहने पर भी घटाकार विज्ञान में घटाकारता का व्यभिचार है, सुषुप्ति विज्ञान में सभी आकारों का व्यभिचार है; परोक्षज्ञान में प्रत्यक्षता का व्यभिचार है घट आकार आलम्बन प्रत्यय घटाकार प्रत्यक्षता का प्रयोजक है केवल विज्ञानता का प्रयोजक नहीं, क्योंकि सुषुप्ति विज्ञान में विज्ञानता है किन्तु घटाकारता तथा प्रत्यक्षता का व्यभिचार है। ऐसा भाव है।

## इसके बाद वहीं पर २१।१।६२ ई० को ६ संख्या में प्रकाशित

इस प्रकार सर्वदर्शनसंग्रह विवरणप्रमेयसंग्रह और न्यायवार्तिक तात्पर्य टीका में वर्णित ही बौद्धाचार्यों के सम्मत बौद्ध सिद्धान्त है। वहां अप्रामाण्य का स्वतस्त्व सामान्यरूप से कहा गया है। उत्पत्ति और ज्ञप्ति दोनों में समझना चाहिये। यदि कहें कि अप्रामाण्य को दोष प्रयोज्य बौद्ध ग्रन्थों में कहा गया है, तब नैयायिकों का दोष प्रयोज्य अप्रामाण्य परतः है वैसा ही बौद्धों का भी परतः अप्रामाण्य होना चाहिये, सो ठीक नहीं है, नैयायिकों की समानता नहीं है, भ्रमस्थल में न्यायमत में दूरस्थ रजत का किसी प्रकार भान हो किन्तु बौद्धमत में सदा सन्निहित बुद्धिस्थ रजत का भान है, प्रमास्थल में भी बुद्धिस्थ प्रतिसन्निहित है बुद्धिस्थ ही का बाह्यरूप से भान होता है, सभी साकार विज्ञान में समनन्तरप्रत्यय और आलम्बन प्रत्यय अपेक्षित हैं। ज्ञानसामान्यसामग्री में समनन्तर प्रत्यय आलम्बन प्रत्यय आते हैं। उसमें ज्ञान पद से साकार ज्ञान लिया जायेगा। इस प्रकार सामान्यज्ञानसामग्री से ग्राह्य होने से अप्रामाण्य का स्वत उत्पाद है, बौद्धमत में रजत के आकार का प्रयोजक बुद्धिस्थ रजताकार आलम्बन प्रत्यय है, न्यायमत में रजताकार का प्रयोजक रजत स्मृति या रजत संस्कार है, वह रजत स्मृति या रजत संस्कार ज्ञानसामान्यसामग्री में नहीं है इसलिये न्यायमत में परतः अप्रामाण्य उत्पत्ति है। दोष रजत के आकार का प्रयोजक नहीं है किन्तु शुक्ति के आकार का प्रतिबन्धक है, इसीलिये शुक्ति आवृत्त होती है अथवा शुक्तिस्वरूप से शुक्ति का अज्ञान कारण है इत्यादि कहा जाता है, और भी बौद्धाचार्यों से कहीं पर स्फुट अप्रामाण्य का परतस्त्व कहा गया रहता तो उसको किसी प्रकार समन्वय का प्रयास किया जाता, वैसा मिलता नहीं इसलिये सर्वदर्शन संग्रह आदि का मार्ग ही सिद्धान्त है,

इसका उपपादन प्रामाण्यवाद लेख में किया गया है, दूसरे से उदाहृत अपने पक्ष के सम्वादकवचन अप्रामाण्य के स्वतस्त्व में समन्वित हो जाते हैं तो किसी के सिद्धान्त की असावधानी से उठे हुए विपरीत व्याख्यामात्र से बौद्धसिद्धान्त अप्रामाण्य के परतस्त्व में कैसे जाय ? मुझसे नहीं मिला भी स्फुट वचन प्रस्तुत विद्वान् से मिला हो यह आशा भी क्षीण हुई। जो कि कहीं कहीं बौद्धग्रन्थों में स्वतःप्रमाण लिखा हुआ मिला इससे स्वतः अप्रमाण नहीं हो सकता ऐसा कथन गहन प्रामाण्यवाद की गति में कैसे ठहरे, सांख्यदर्शन का स्वतःप्रामाण्य और स्वतः अप्रामाण्य सिद्धान्त है, इसका भाषण में भी निर्देश है तो भी ऐसा कथन हुआ। जो कि संस्कृतं पत्र प्रकाशित प्रामाण्यवादसमीक्षा लेख में प्रस्तुत विद्वद्वर का विरोधी दर्शन के खण्डन के लिये दूसरे मतों का आरोप करके सर्वदर्शन संग्रह आदि में उपपादन है ऐसा लिखना वह तो अपने शरीर में लगे पङ्क को दूसरे के उपर फेकने के सदृश है। जब वैदिक सांख्य दर्शन में भी स्वतः अप्रामाण्य लिखा गया तब उस पर ऐसा आरोप ऐसे ही बड़े विद्वानों को शोभता है। ऐसे मूर्धाभिषिक्त ग्रन्थ का असत्यमार्ग से दूसरे मत के खण्डन के लिये रचना नहीं है, किन्तु अग्रिम अपने सन्तानों में प्यार से अल्पश्रम द्वारा दार्शनिकता प्रचार के लिये रचना है, और भी यह कहना की बौद्धाचार्यों ने कण्ठतः स्वतः अप्रामाण्य नहीं कहा तो सोचना चाहता था कि परतः अप्रामाण्य कहां कहा गया ?, प्रामाण्य में स्वतः परतः दोनों अनेकान्तवाद है कहां कहा गया ?, जिसको आप सिद्धान्त बताते हैं। जो तत्त्व-संग्रहकारिका में स्फुट अप्रामाण्यपरिच्छेद। स्वत इत्यादि आया है उसपर इतने ही से प्रस्तुत विद्वान् सन्तोष का प्रयास करते हैं कि वह मीमांसकों के साथ विवाद में मीमांसकों के प्रति स्वतः अप्रामाण्य ग्रहण की आपत्ति दी गई है। किन्तु खोजना चाहिये कि अपने लिये शान्तिरक्षित क्या रखते हैं ?, यदि इष्टापत्ति करें तो बौद्धसिद्धान्त वह होगा, यदि अपने पक्ष में स्वतःअप्रामाण्यग्रहण का खण्डन करते हैं तो कहां किस प्रकार ? यह दिखाना चाहिये, अपने सिद्धान्त के विपरीत आपत्ति देंगे तो निगृहीत होंगे। मीमांसकों के खण्डन में उपयुक्त युक्तियों को अपने मत में कैसे हटाते हैं ?, स्वतः प्रामाण्यग्रहण मानने वाले मीमांसकों का जिस प्रकार खण्डन तत्त्व संग्रह करता है उस युक्ति से बौद्ध का स्वतःप्रामाण खण्डित होता है या नहीं ?। यह सब बिना सोचे विचारे कुछ कह देने से शास्त्र का सिद्धान्त निर्णीत नहीं होता। और भी बौद्धमत में

उस वाले में उसको विशेषण होना यह प्रामाण्य नहीं है कि विशेषण विशेष्य किसी के साथ सन्निकर्ष में कोई दोष अप्रामाण्य का प्रयोजक हो, क्योंकि निर्विकल्पक को प्रमा मानते हैं। अबाधित अर्थ का ज्ञान प्रमाण है यह भी नहीं मानते जिससे भ्रमस्थल में विषय का अभाव कल्पित हो, क्योंकि असत् सामान्य के ज्ञान अनुमान को प्रमा मानते हैं। किन्तु बाह्य का संवाद या बाह्य प्रापण का प्रायः जहां अभाव हो वहां अप्रामाण्य मानते हैं, वह ज्ञानोत्पत्ति के पहले नहीं होने वाला है, उस प्रकार बुद्धिस्थ विषय सभी जगह विषयाकारता का सम्पादक मालूम पड़ता है, बाह्य का प्रवृत्ति आदि के सम्पादक संवाद आदि में उपयोग है, जैसे कि प्रमाण का ग्राह्य और अवसेय दो प्रकार का विषय कहा गया है, प्रत्यक्षस्थल में ग्राह्य स्वलक्षण होता है, जो क्षणिक है, अवसेय तो ज्ञान में प्रापण शक्ति बताने के लिये सन्तान है, प्रापण या प्रापण की योग्यता दूसरी सामग्री के समवधान से लभ्य होने के कारण प्रामाण्य में परतस्त्व और बचे अप्रामाण्य का स्वतस्त्व आता है, अप्रमाज्ञान में ग्राह्य के प्रापण की योग्यता नहीं है यह स्फुट वर्णन है, प्रापणशक्ति का अभाव ही अप्रापणशक्ति है। वह कोई विशेष सामग्री की अपेक्षा नहीं करती इसलिये अप्रामाण्य का स्वतस्त्व फलित होता है। भाषण के द्वितीय पृष्ठ को पाठक देखें, जहां बौद्धदर्शन के प्रामाण्य की परीक्षा के लिये तथा सर्वदर्शन संग्रह का बौद्धग्रन्थों से विरोध दिखाने के लिये प्रतिज्ञा करते हैं और क्या लिखते हैं ?। अप्रामाण्य की उत्पत्ति और ज्ञप्ति के परतस्त्व में कोई स्फुट वचन नहीं दिखाया गया, तो उसका विरोध कैसे आता है ?।

( २ ) जो तत्त्वसंग्रह पञ्जिका के वचन उद्धृत किये गये हैं वे ज्ञप्ति पक्ष के हैं उत्पत्ति पक्ष को नहीं छूते। उसमें भी प्रामाण्य ही की अप्रामाण्य की चर्चा नहीं है, तब कैसे अप्रामाण्य के स्वतस्त्व में विरुद्ध जाते हैं ? पाठक खोजे।

( ३ ) प्रामाण्य की स्वतः उत्पत्ति में स्फुट वचन नहीं दिया गया, तात्पर्य वर्णन द्वारा निकालते हैं, किन्तु वह निस्सार अशुद्ध और बौद्धों की प्रधान प्रक्रिया से विरुद्ध है, उसको स्फुट करूंगा और प्रामाण्यवाद के परतस्त्व में स्फुट वचन भी दूंगा।

( ४ ) १५वें पृष्ट पर भाषण में जो प्रमाण वचन उदाहृत है वे न्यायमत के ऐसा ज्ञप्ति में प्रामाण्य का परतस्त्व बताते हैं, अप्रामाण्य के स्वतस्त्व में बाधा नहीं डालते, प्रामाण्य के परतः ग्रहण में न्याय सरणि से नयी सरणि का अन्वेषण नहीं हुआ है।

( ५ ) चतुर्थ पृष्ठ पर प्रामाण्य का स्वतस्त्व वर्णन दार्शनिकता की दिल्गी है। और मेय बोधक शक्ति अपने कारणों से उत्पन्न हुई है इत्यादि कारिका से क्या कहते है ? प्रामाण्य के परतस्त्वादि नैयायिकों के यहां भी प्रमा और उसमें मेय बोधक शक्ति साथ ही प्रमाणज्ञान के कारणों से ही पैदा होते हैं, ऐसा नहीं होता कि प्रमा पहले प्रमा कारणों से ही और दूसरे कारणों से उसमें मेयबोधक शक्ति पीछे हो, न्यायसम्मत प्रामाण्यप्रयोजक गुण भी प्रमा ज्ञान की सामग्री में ही आ जाते हैं। वे गुण भी प्रमा ज्ञान के कारण हैं। यहां का वर्णन परतस्त्व में भी घटता है स्वतस्त्व को कैसे बतावे ? अप्रमाज्ञान की विपरीत आकार के ग्रहण शक्ति भी अप्रमाज्ञान के कारणों से ही पैदा होती है, दोष भी अप्रमाज्ञान की साम्ग्री में है, इस अप्रमाज्ञान में समन्वित होने वाला उपपादन प्रामाण्य के स्वतस्त्व को कैसे सिद्ध करेगा ?।

कोई उपयोगी वस्तु नहीं लिखते ज्ञानत्वेन ज्ञान के प्रति क्या कारण है ?, ज्ञान-सामान्य की सामग्री क्या है ?, ज्ञानत्व का प्रयोजक क्या है ? किस प्रकार वही प्रमात्व का प्रयोजक है ?, इत्यादि का वर्णन नहीं किया गया है तो भी प्रामाण्यवाद की परीक्षा है। यही चौथे पृष्ठ पर ज्ञान की मेयबोधकशक्ति स्वाभाविक है, यह अभिप्राय लिखा है, वह अशुद्ध पहले हमसे उपेक्षित था। किन्तु ३१।१०।६१ दिन के संस्कृतं पत्र में समीक्षा लेख में उस पर दुराग्रह देखा जाता है, इतना ही नहीं, बौद्धाचार्यों के वचन वहां उदाहृत तथा व्याख्यात हैं। उसके ऊपर हा दार्शनिकता मरी, इत्यादि खेद प्रकाशन से भिन्न मुझे क्या करना चाहिये ?। विज्ञान की विषय प्रकाशन शक्ति स्वाभाविक है यह बौद्ध दर्शन नहीं है क्योंकि निराकार शुद्ध चित्सन्तति का स्वीकार है इत्यादि पहले कहे हुए को याद कराता हूं। बौद्ध दर्शन में है इसीलिये बड़े विद्वान् से प्रमाणरूप से वचन दिखाये गये हैं। ऐसा कहें तो भी वही उत्तर है कि वैसा बौद्धदर्शन नहीं है; कैसे दीख पड़ते हैं इस प्रश्न पर भी नहीं दीखते यही उत्तर है, उन्होंने कैसे देखा ? यह पूछने पर सिद्धान्त पर सावधानी न होने से दिखाया यह उत्तर है, दूसरा अथवा जो सिद्धान्त पर सावधान होगा वह नहीं पायेगा।

इसके बाद वहीं पर ६।२।६२ ई० को १० संख्या में प्रकाशित है।

विषय ग्रहणम् इत्यादि पद्य का यह अर्थ है—विज्ञान का जनक विद्यमान विषय जो आलम्बन प्रत्यक्ष है उसका ग्रहण विज्ञान है, इस प्रकार विज्ञान का विषयाकार

पृष्ठ १०-११ का व्यतिक्रमण हो गया है। अतः पाठक कृपया ध्यान दें [ सं. ]

चाहने वालों को १९ पृ० पर मिले इसलिये प्रापणशक्ति ही ज्ञान का प्रामाण्य है, वह प्राप्य अर्थ से उत्पन्न होने के कारण है, क्योंकि जिससे प्रवृत्त होता है वह भी प्रापण योग्य ही है। शक्ति निश्चय तो सभी अर्थक्रिया का ज्ञान और अनुमान का स्वतः है। किसी प्रवृत्तिकारण प्रत्यक्ष का भी प्रामाण्य स्वतः ज्ञात होता है। (१) जिसका अभ्यास से सभी प्रकार के भ्रमशङ्कायें हट गई हो ऐसा ज्ञान, (२) जो निद्रा आदि दोषों से व्याप्त न हो और उसका विषय समीप हो ऐसा ज्ञान, (३) व्यञ्जकों से जिसकी विपरीत अभिव्यक्ति की आशङ्का न हो, ऐसे विषय को ग्रहण करता है जो ज्ञान, इनके प्रामाण्य स्वतो ग्राह्य हैं। उस ज्ञान के स्वरूपज्ञान से ही उसका प्रामाण्य निश्चित हो जाता है। किसी ज्ञान का परतः प्रामाण्य निश्चय होता है, जिसके मध्यवर्ती अप्रामाण्यशङ्का को हटाने से प्रामाण्यनिश्चय होता है। इतना मूलप्रदीप है। इस प्रकार प्राप्य अर्थ आलम्बन प्रत्यय से प्रमाज्ञान की आत्मलाभ=उत्पत्ति होने के कारण प्रामाण्य है ऐसा शब्दानुवाद रूप से अर्थ है। ज्ञान सामान्य कारण से भिन्न प्राप्ति योग्य अर्थ रूप का कारण विशेष से प्रयोज्य प्रमा की उत्पत्ति में परतः प्रामाण्य हुआ, यह निष्कर्ष है। योग्यमेव शब्द से शक्तिशब्द का योग्यता अर्थ दिखाता है। प्रापण शक्तिरूप प्रामाण्य के निश्चय की प्रक्रिया शक्ति निश्चयस्तु से शुरू करके दीखाते हैं। यहाँ अर्थक्रिया का निर्यास वाचस्पति मिश्र की भाषा से फल ज्ञान है, उसी में सभी यह विशेषण है। सभी यह विशेषण अनुमान का नहीं मालूम पड़ता, उसमें तीन कारण हो सकते हैं। (१) यदि सभी विशेषण अनुमान का होता तो प्रदीप में च शब्द सर्वस्य शब्द के बाद शोभा देता, (२) वाचस्पति बौद्धमत व्याख्यान के समय अनुमान का प्रामाण्य परतः वर्णन करते हैं, सम्वादक होना तथा प्रमाता का आशय कारण बताते हैं। धर्मोत्तरप्रदीप अथवा तत्त्वसंग्रह पञ्जिका में प्रामाण्यवाद पर वाचस्पति का ही शब्द और अर्थ द्वारा सम्बन्ध मालूम पड़ता है, उनके बाद के नैयायिकों का सम्बन्ध नही मालूम पड़ता, (३) प्रदीप भी नान्तरीयक अर्थ दर्शन से परतः प्रामाण्य बताता है। अनुमान में भी नान्तरीयक अर्थ का दर्शन कारण है, नान्तरीयक व्याप्य हुआ, इस प्रकार यहाँ का अनुमान प्रमात्व का अनुमान समझना चाहिये।

प्रामाण्यवाद परिचय लेख में लिख आया हूँ फिर यहाँ स्मरणार्थ लिखता हूँ कि बौद्ध ग्रन्थों में तथा कुछ वाचस्पति ग्रन्थ में स्वतः प्रमाणशब्द का प्रयोग 'जिस ज्ञान

आलम्बन प्रत्यय से प्रयुक्त है ऐसा कहा जाता है, प्रामाण्य के स्वतस्त्व में इससे क्या हुआ ? न्यायनय में भी प्रत्यक्ष विज्ञान के प्रति विषय कारण होता है, इससे क्या प्रत्यक्ष के प्रामाण्य में स्वतस्त्व आगया।

एषा प्रकृति इत्यादि का भी न्यायमत के ऐसा ही अर्थ है, विद्यमान विषयों का ग्रहण विज्ञान स्वभाव है, दोष आने पर कहीं उससे विपरीत हो जाता है, कार्यकारणभाव दिखाये बिना प्रकृति या स्वभाव पद का स्वारस्य स्फुट नहीं होता, दोष आदि प्रतिबन्धक से रहित वस्तु अपने प्रत्यक्ष विज्ञान का जनक होता है, यह इसका निष्कर्ष है ? भामती में दिये हुए धर्मकीर्ति के वचन का यही भाव है।

विद्यमान के ग्रहण का प्रतिबन्धक दोष रहने पर विज्ञान में अविद्यमान विषय के आकार का प्रयोजक क्या है ? इसको खोजना चाहिये। यदि वह बुद्धिस्थत्व है तो प्रमाज्ञान के लिये भी है। भ्रमप्रमा साधारण हुआ, सामान्यज्ञान सामग्री से होने के कारण अप्रामाण्य का स्वतस्त्व आगया, दूसरे से क्या काम ?।

प्रभास्वरम् इत्यादि तत्त्वसंग्रह, वैसा ही प्रमाणवार्तिक, और मनोरथ नन्दी का व्याख्यान, शुद्ध प्रकाश स्वरूपविज्ञान और विषयवासना से बढ़ा चढ़ा साकारता रूप अशुद्धिकर प्रयोजक दोष का वर्णन करते हैं। उससे यहाँ कुछ फरक नहीं पड़ता, विज्ञान की स्वप्रकाशता और विषयप्रकाशता भिन्न है।

संस्कृतं पत्र समीक्षा लेख में ज्ञप्ति में परतः प्रामाण्य के प्रतिवादक वचन उदाहृत हैं। उनमें 'न स्वस्या आधानाय विषयादिवत्' और 'स्थितेहितस्य मानत्वे' इत्यादि दोनों अंश प्रामाण्य के स्वतः उत्पाद को बताते हैं ऐसा व्याख्यान करते हैं। किन्तु वह ठीक नहीं है। आलम्बन प्रत्यय से पैदा हुई प्रमा उत्पत्ति के साथ ही वर्तमान प्रामाण्यशक्ति अर्थक्रिया ज्ञान से पैदा नहीं होती किन्तु ज्ञापित होती है। यह इनका अर्थ स्पष्ट है, इस प्रकार ये वचन ज्ञानसामान्यसामग्री से प्रयोज्य अप्रामाण्य को नहीं दिखाते ऐसा ध्यान देना चाहिये।

परतः प्रामाण्य के उत्पाद के सूचक बहुत बौद्धाचार्यों के वचन मेरे प्रामाण्य परिचय लेख में दिखाये गये हैं, और भी हैं, विस्तार भय से उनका उल्लेख नहीं करता, किन्तु प्रामाण्यपरिचय लेख में जिसकी सूचनामात्र है, ऐसे धर्मोत्तरप्रदीप का वचन दीखाते हैं, जो औरों की अपेक्षा अधिक स्फुट प्रामाण्य का परत उत्पाद कहता है, साक्षात् देखना

के ज्ञान के वाद उस ज्ञान में अप्रामाण्य का संशय नहीं होता, उसको स्वतःप्रमाण कहा गया है, अप्रामाण्य संशय का विरोधी विशेष कारण ज्ञान की सामग्री में अथवा ज्ञान के ज्ञान की सामग्री में आ गया है उससे अप्रामाण्य संशय नहीं होता, उस अप्रामाण्य शङ्का विरोधी कारण का निर्देश दोनों ग्रन्थों में दिया गया है। परतः प्रमाण वहां कहा गया जहां ज्ञान के ज्ञान के वाद अप्रामाण्य शङ्का को हटाकर प्रामाण्य का निश्चय किया जाता है। वाचस्पतिमिश्र के वाद नैयायिकों ने उनके ग्रन्थ का सारांश निकाला कि ज्ञान की सामान्यसामग्री से होने वाला स्वतः है, और ज्ञान सामान्य सामग्री से भिन्न सामग्री से होनेवाला परतः है। इसी सारांश का प्रचार मीमांसा-वेदान्त और आगे के न्यायग्रन्थों में चला, बौद्ध ग्रन्थों में नहीं आ पाया, उसी प्रचलित सारांश की शैली से सर्वदर्शन संग्रह तथा विवरण प्रमेय संग्रह आदि में वर्णन किया गया बौद्ध सिद्धान्त बौद्ध ग्रन्थों के अनुसार है। न्यायग्रन्थों में प्रचलित स्वतः परतः का लक्षण वाचस्पति वचनों का सार कैसे है? यह समझ लेने पर वह लक्षण बौद्ध ग्रन्थों का भी सार मालूम पड़ जायेगा।

## इसके वाद १३।२।६२ ई० को वहीं पर ११ संख्या से प्रकाशित

अनुपप्लुतम् अनाशङ्का आदि से दोषाभाव वताया गया, आसन्न देश इत्यादि से योग्यसन्निकर्षरूप गुण का ज्ञान मादि प्रामाण्य ग्रहण के उपयोगी न्यायमत के ऐसा सूचित करता है। तत्सम्वेदनाद् इससे उस ज्ञान का ज्ञान ही उसके प्रमात्व का निश्चय है, इस प्रकार अपने कहे हुए स्वतो ग्रहण का व्याख्यान करता है।

## इसके वाद ज्ञप्तिपक्ष

इस भाषण में प्रामाण्य ही का स्वतः और परतः ग्रहण वर्णन किया गया है। अप्रामाण्य का स्वतः या परतः ग्रहण के निर्णय का उपयोगी कोई वचन नहीं दिखाया गया। मेरे द्वारा प्रदर्शित धर्मोत्तर प्रदीप में अप्रामाण्य की चर्चा नहीं है, ऐसा मालूम पड़ता है कि जब तक प्रामाण्य ज्ञान की सामग्री नहीं सम्पन्न होती तब तक ज्ञान का ज्ञान होने पर अप्रामाण्य का ही ज्ञान होता है, वह ज्ञान अपनी सामग्री के अनुसार संशय या निश्चय हो, सर्व दर्शन संग्रह कारिका में सामान्यरूप से अप्रामाण्य का स्वतस्त्व कहा गया है, उसको बौद्धमत मानता हूं। मेरे द्वारा प्रामाण्यवाद परिचय लेख में

